# प्रथमोध्यायः

**अस1.1**
रागादिरोगाः सहजाः समूला येनाऽशुसर्वे जगतोऽप्यपास्ताः।
तमेकवैद्यं शिरसा नमामि वैद्यागमज्ञांश्च पितामहादीन्॥

**अस1.2**
अथात आयुष्कामीयं नामाध्यायं व्याख्यास्यामः इति ह स्मा+आहुरात्रेयादयो महर्षयः॥

**अस1.3**
आयुः कामयमानेन धर्मार्थसुखसाधनम्।
आयुर्वेदोपदेशेषु विधेयः परमादरः॥

**अस1.4**
आयुर्वेदामृतं सार्वं ब्रह्मा सनातनम्।
ददौ दक्षाय सोऽश्विभ्यां तौ शतक्रतवे ततः॥

**अस1.5**
धर्मार्थकाममोक्षाणां विघ्नकारिभिरामयैः।
नरेषु पीड्यमानेषु पुरस्कृत्य पुनर्वसुम्॥

**अस1.6**
धन्वन्तरिभरद्वाजनिमिकाश्यपकश्यपाः।
महर्धयो महात्मानस्तथा लम्बायनादयः॥

**अस1.7**
शतक्रतुमुपाजग्मुः शरण्यममरेश्वरम्।
तान्दृष्ट्वैव सहस्राक्षो निजगाद यथागमम्॥

**अस1.8**
आयुषः पालनं वेदमुपवेदमथर्वणः।
कायबालग्रहोर्ध्वाङ्गशल्यदंष्ट्राजरावृषैः॥

**अस1.9**
गतमष्टाङ्गतां पुण्यं बुबुधे यं पितामहः।
गृहीत्वा ते तमाम्नायं प्रकाश्य च परस्परम्॥

**अस1.10**
आययुर्मानुषं लोकं मुदिताः परमर्षयः।
स्थित्यर्थमायुर्वेदस्य तेऽथ तन्त्राणि चक्रिरे॥

**अस1.11**
कृत्वाऽग्निवेशहारीतभेडमाण्डव्यसुश्रुतान्।
करालादींश्च तच्छिष्यान् ग्राहयामासुरादृताः॥

**अस1.12**
स्वं स्वं तन्त्रं ततस्तेऽपि चक्रुस्तानि कृतानि च।
गुरून् संश्रावयामासुः सर्षिसङ्घान्सुमेधसः॥

**अस1.13**
तैः प्रशस्तानि तान्येषां प्रतिष्ठां भुवि लेभिरे।
तेषामेकैकमव्यापि समस्तव्याधिसाधने॥

**अस1.14**
प्रतितन्त्राभियोगे तु पुरुषायुषसंक्षयः।
भवत्यध्ययनेनैव यस्मात् प्रोक्तः पुनः पुनः॥

**अस1.15**
तन्त्रकारैः स एवऽर्थः क्वचित् क्श्चिद्विशेषतः।
तेऽर्थप्रत्यायनपरा वचने यच्च नादृताः॥

**अस1.16**
सर्वतन्त्राण्यतः प्रायः संहृत्याऽष्टाङ्गसङ्ग्रहः।
अस्थानविस्तराक्षेपपुनरुक्तादिवर्जितः॥

**अस1.17**
हेतुलिङ्गौषधस्कन्धत्रयमात्रनिबन्धनः।
विनिगूढार्थतत्वानां प्रदेशानां प्रकाशकः॥

**अस1.18**
स्वान्यतन्त्रविरोधानां भूयिष्ठं विनिवर्तकः।
युगानुरूपसन्दर्भो विभागेन करिष्यते॥

**अस1.19**
नित्योपयोगि दुर्बोधं सर्वाङ्गव्यापि भावतः।
सङ्गृहीतं विशेषेण यत्र कायचिकित्सितम्॥

**अस1.20**
न मात्रामात्रमप्यत्र किच्चिदागमवर्जितम्।
तेऽर्थाःस ग्रन्थबन्धश्च सङ्क्षेपाय क्रमोऽन्यथा॥

**अस1.21**
वायुः पित्तं कफश्चेति त्रयो दोषाः समासतः।
प्रत्येकं ते त्रिधा वृद्धिक्षयसाम्यविभेदयः॥

**अस1.22**
उत्कृष्टमध्याल्पतया त्रिधा वृद्धिक्षयावपि।
विकृताऽविकृता देहं घ्नन्ति ते वर्त्तयन्ति च॥

**अस1.23**
ते व्यापिनोऽपि हृन्नाभ्योरधोमध्योर्ध्वसंश्रयाः।
वयोहोरात्रिभुक्तानां तेऽन्तमध्यादिगाः क्रमात्॥

**अस1.24**
तैर्भवेद्विषमस्तीक्ष्णो मन्दश्चाग्निः समैः समः।
कोष्ठः क्रूरो मृदुर्मध्यो मध्यः स्यात्तैः समैरपि॥

**अस1.25**
शुक्रार्तवस्थैर्जन्मादौ विषेणेव विषक्रिमेः।
तैश्च तिस्रः प्रकृतयो हीनमध्योत्तमाः पृथक्॥

**अस1.26**
समधातुः समस्तासु श्रेष्ठा निन्द्या द्विदोषजाः।
तत्र रूक्षो लघु शीतः खरः सूक्ष्मश्चलोऽनिलः॥

**अस1.27**
पित्तं सस्नेहतीक्ष्णोष्णं लघु विस्रं सरं द्रवम्।
स्निग्धः शीतो गुरुर्मन्दः श्लक्ष्णो मृत्स्नः स्थिरः॥

**अस1.28**
संसर्गः सन्निपातश्च तद्वित्रिक्षयकोपतः।
तौ षोढा दशधा चोक्तावुत्कर्षादिविकल्पनात्॥

**अस1.29**
रसासृङ्मांसमेदोस्थिमज्जशुक्राणि धातवः।
सप्त दूष्या मला मूत्रशकृत्स्वेदादयोऽपि च॥

**अस1.30**
रसादिस्थेषु दोषेषु व्याधयः सम्भवन्ति ये।
तज्जानित्युपचारेण तानाहुर्घृतदाहवत्॥

**अस1.31**
प्रीणनं जीवनं लेपः स्नेहो धारणपूरणे।
गर्भोत्पादश्च कर्माणि धातूनां क्रमशो विदुः॥

**अस1.32**
शरीरं धारयन्त्येते धात्वाहारश्च सर्वदा।
वृद्धिः समानैः सर्वेषां विपरीतैर्विपर्ययः॥

**अस1.33**
रसाः स्वाद्वम्ललवणतिक्तोषणकषायकाः।
षड् द्रव्यमाश्रितास्ते च यथापूर्वं बलावहाः॥

**अस1.34**
तत्राद्या मारुतं घ्नन्ति त्रयस्तिक्तादयः कफम्।
कषायतिक्तमधुराः पित्तमन्ये तु कुर्वते॥

**अस1.35**
शमनं कोपनं स्वस्थहितं द्रव्यमिति त्रिधा।
उष्णशीतगुणोत्कर्षात्तत्र वीर्यं द्विधा स्मृतम्॥

**अस1.36**
त्रिधा विपाको द्रव्यस्य स्वाद्वम्लकटुकात्मकः।
गुरुमन्दहिमस्निग्धश्लक्ष्णसान्द्रमृदुस्थिराः॥

**अस1.37**
गुणाः ससूक्ष्मविशदा विंशतिः सविपर्ययाः।
इन्द्रियार्था व्यवायी च विकाषी चापरे गुणाः॥

**अस1.38**
व्यवायी देहमखिलं व्याप्य पाकाय कल्पते।
विकाषी विकषन् धातून् सन्धिबन्धान् विमुञ्चति॥

**अस1.39**
सरतीक्ष्णप्रकर्षौ तु कैश्चित्तौ परिकीर्तितौ।
सत्त्वं रजस्तमश्चेति त्रयः प्रोक्ता महागुणाः॥

**अस1.40**
कालार्थकर्मणां योगो हीनमिथ्यातिमात्रकः।
सम्यग्योगश्च विज्ञेयो रोगारोग्यैककारणम्॥

**अस1.41**
रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता।
निजागन्तुविभागेन रोगाश्च द्विविधा मताः॥

**अस1.42**
तेषां कायमनोभेदादधिष्ठानमपि द्विधा।
रजस्तमश्च मनसो द्वौ च दोषवुदाहृतौ॥

**अस1.43**
दर्शनस्पर्शनप्रश्नैः परीक्षेत च रोगिणम्।
रोगं निदानप्राग्रूपलक्षणोपशयाप्तिभिः॥

**अस1.44**
भूमिदेहप्रभेदेन देशमाहुरिह द्विधा।
जाङ्गलं वातभूयिष्ठमानूपं तु कफोल्बणम्।

**अस1.45**
साधारणं सममलं त्रिधा भूदेशमादिशेत्।
क्षणादिव्याध्यवस्था च कालो भैषज्ययोगकृत्॥

**अस1.46**
शोधनं शमनं चेति समासादौषधं द्विधा।
शरीरजानां दोषाणां क्रमेण परमौषधम्॥

**अस1.47**
वस्तिर्विरेको वमनं तथा तैलं घृतं मधु।
धीधैर्यात्मादिविज्ञानं मनोदोषौषधं परम्॥

**अस1.48**
तन्त्रस्यास्य परं चातो वक्ष्यतेऽध्यायसङ्ग्रहः।
आयुष्कामीयशिष्यार्थदिनर्तुव्याध्यसम्भवाः॥

**अस1.49**
द्रवान्नज्ञानसंरक्षाविरुद्धान्नान्नपानिकाः।
मात्राशितौषधज्ञानश्रेष्ठशुध्यादिसङ्ग्रहाः॥

**अस1.50**
महाकषायविविधद्रव्यादिरसभेदकाः।
दोषादिज्ञानतद्भेदतत्क्रिया रोगभेषजम्॥

**अस1.51**
व्द्यैषधस्नेहनस्वेदशुध्यास्थापननावनम्।
धूमगण्डूषदृक्सेकतृप्तियन्त्रजलौकसः॥

**अस1.52**
सिराविधिः शल्यविधिः शस्त्रक्षाराग्निकर्मकाः।
चत्वारिंशदिमेऽध्यायः सूत्रम् शारीरमुच्यते॥

**अस1.53**
पुत्रार्थगर्भावक्रान्तिचर्याव्यापच्छरीरजाः।
सिरामर्मप्रकृत्याख्या विकृताङ्गेहितामयाः॥

**अस1.54**
सदूता द्वादशाध्यायाः निदानं सार्वरौगिकम्।
ज्वरासृक्श्वासयक्ष्मादिमदाद्यर्शोतिसारिणाम्॥

**अस1.55**
मूत्राघातप्रमेहाणां विद्रध्याद्युदरस्य च।
पाण्डुकुष्ठानिलार्त्तानां वातास्रस्य च षोडश॥

**अस1.56**
चिकित्साज्वरयोरस्रकासयोः श्वासयक्ष्मणोः।
वमौ मदात्ययेऽर्शस्सु विशि द्वौ द्वौ च मूत्रिते॥

**अस1.57**
विद्रधौ गुल्मजठरपाण्डुशोफविसर्पिषु।
कुष्टश्वित्रानिलव्याधिवातास्रेषु चिकित्सितम्॥

**अस1.58**
चतुर्विंशतिरध्यायाः कल्पसिद्धिरतःपरम्।
कल्पो वमेर्विरेकस्य तत्सिद्धिर्बास्तिकल्पना॥

**अस1.59**
कल्पश्च सिद्धबस्तीनां सिद्धिर्बस्त्यनुवासयोः।
द्रव्यकल्पोऽष्टमः स्थानमत उत्तरमुत्तरम्॥

**अस1.60**
बालोपचरणे व्याधिग्रहज्ञाननिषेधने।
स्नाने पृथग्ग्रहे भूते द्वावुन्मादे स्मृतिक्षये॥

**अस1.61**
वर्त्मसन्धिगतौ द्वौ द्वौ दृक्तमोलिङ्गनाशिषु।
सर्वदृक्स्यन्ददृक्पाके कर्णनासामुखेषु च॥

**अस1.62**
मूर्ध्नि व्रणे तथा द्वौ द्वौ सद्योभङ्गे भगन्दरे।
ग्रन्थ्यादौ क्षुद्ररोगेषु गुह्यरोगे पृथग्द्वयम्॥

**अस1.63**
विषे द्वौ भुजगे कीटे द्वौ च लूतासु मूषिके।
विषे विषोपयोगे च तथाऽध्यायो रसायने॥

**अस1.64**
वाजीकरणमुद्दिश्य पञ्चाशोऽष्टाङ्गपूरणः।
पञ्चाशदध्यायशतं षड्भिः स्थानैः समीरितम्॥
इति प्रथमोऽध्यायः

# द्वितीयोऽध्यायः

**अस2.1**
अथातः शिष्योपनयनीयमध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अस2.2**
गुरुभक्तोऽभियुक्तोऽतियुक्तो धीस्मृतिपाटवैः।
ऋज्वास्यनासानयनस्तनुस्निग्धनखच्छविः॥

**अस2.3**
ब्रह्मचारी जितद्वन्द्वो धीरः सुचरितः स्थिरः।
षण्मासानुषितः शक्लो लज्जाशौचकुलान्वितः॥

**अस2.4**
शिष्योऽध्याप्यो गतो यावदन्तं तन्त्रार्थकर्मणाम्।
नाऽकालविद्युत्स्तनिते भूकम्पे राहुदर्शने॥

**अस2.5**
पञ्चदश्यामचन्द्रायां परोक्षे वा गुरोः पठेत्।
नातिच्छिन्नपदं नातिमन्दं नात्युच्चनीचकैः॥

**अस2.6**
हीनान्यवेष आचार्यं पर्युपासीत राजवत्।
शयीत सुप्त एवास्मिन्नुत्तिष्ठेतास्य पूर्वतः॥

**अस2.7**
न ब्रूयात् केवलं नाम नाऽसाध्वपि विनाटयेत्।
अभेद्योऽनुद्धतः स्तब्धः सूनृतः प्रियदर्शनः॥

**अस2.8**
बहुश्रुतः कालवेदी ज्ञातग्रन्थोऽर्थशास्त्रवित्।
अनाथान् रोगिणो यश्च पुत्रवत् समुपाचरेत्॥

**अस2.9**
गुरुणा समनुज्ञातः स भिषक्छब्दमश्नुते।
यस्तु केवलशास्त्रज्ञः कर्मस्वपरिनिष्ठितः॥

**अस2.10**
स मुह्यत्यातुरं प्राप्य प्राप्य भीरुरिवाहवम्।
यः पुनः कुरुते कर्म धार्ष्ट्याच्छास्त्रविवर्ज्जितः॥

**अस2.11**
स सत्सु गर्हामाप्नेति वधं चर्च्छति राजतः।
हेतौ लिङ्गे प्रशमने रोगाणामपुनर्भवे॥

**अस2.12**
ज्ञानं चतुर्विधं यस्य स राजार्हो भिषक्तमः।
शस्त्रं शास्त्राणि सलिलं गुणदोषप्रवृत्तये॥

**अस2.13**
पात्रापेक्षीण्यतः प्रज्ञां बाहुश्रुत्येन बृंहयेत्।
प्रदीपभूतं शास्त्रं हि दर्शनं विपुला मतिः॥

**अस2.14**
ताभ्यां भिषक् सुयुक्ताभ्यां चिकित्सन्नापराध्यति।
आहूत एव यो याति सुवेषः सुनिमित्ततः॥

**अस2.15**
गत्वाऽतुरार्थादन्यत्र न निधत्ते मनः क्वचित्।
व्याधीन् परीक्षते सम्यङ्निदानादिविशेषतः॥

**अस2.16**
ह्रेपणीयां च तद्वाअर्त्तां न प्रकाशयते बहिः।
सहसा न च तस्यापि क्रियाकालमहापयन्॥

**अस2.17**
जानाति चोपचरितुं स वैद्यः सिद्धिमश्नुते।
नाददीताऽमिषं स्त्रीभ्यस्तदध्यक्षे पराङ्मुखे॥

**अस2.18**
ताभिश्च रहसि स्थानं परिहासं च वर्जयेत्।
आर्त्तं च नृपसद्वैद्यैर्द्विष्टं तद्वेषिणं द्विषम्॥

**अस2.19**
चण्डं शोकातुरं भीरुं कृतघ्नं वैद्यमानिनम्।
हीनोपकरणं व्यग्रमविधेयं गतायुषम्॥

**अस2.20**
जिजीविषुर्व्याधितोऽपि पूर्वोक्तगुणवर्जितान्।
क्रियाविक्रयिणो वैद्यान् मृत्योरग्रेसरा हि ते॥

**अस2.21**
भिषग्द्रव्याण्युपस्थाता रोगी पादचतुष्टयम्।
चिकित्सितस्य निर्दिष्टं प्रत्येकं तच्चतुर्गुणम्॥

**अस2.22**
दक्षस्तीर्थात्तशास्त्रार्थो दृष्टकर्मा शुचिर्भिषक्।
बहुकल्पं बहुगुणं सम्पन्नं योग्यमौषधम्॥

**अस2.23**
अनुरक्तः शुचिर्दक्षो बुद्धिमान् परिचारकः।
आढ्यो रोगी भिषग्वश्यो ज्ञापकः सत्ववानपि॥

**अस2.24**
यद्वैद्ये विगुणे पादा गुणवन्तोऽप्यनर्थकाः।
स पादहीनानप्यार्तान् गुणवान् यच्च यापयेत्॥

**अस2.25**
चिकित्सायास्तमेवातः प्रधानं कारणं विदुः।
साध्योऽसाध्य इति व्याधिर्द्विधा तौ तु पुनर्द्विधा॥

**अस2.26**
सुसाध्यः कृच्छ्रसाध्यश्च याप्यो यश्चानुपक्रमः।
सर्वौषधमे देहे यूनः पुंसो जितात्मनः॥

**अस2.27**
अमर्मगोऽल्पहेत्वग्ररूपरूपोऽनुपद्रवः।
अतुल्यदूष्यदेशर्तुप्रकृतिः पादसम्पदि॥

**अस2.28**
ग्रहेष्वनुगुणेष्वेकदोषमार्गो नवः सुखः।
सुखसाध्यः सुखोपायः कालेनाल्पेन साध्यते॥

**अस2.29**
कृच्छ्रैरुपायैः कृच्छ्रस्तु महद्भिश्च चिरेण च।
असाध्यलिङ्गसङ्कीर्णस्तथा शस्त्रादिसाधनः॥

**अस2.30**
शेषत्वादायुषः पथ्यैर्याप्यः प्रायो विपर्यये।
दत्वाऽल्पं सुखमल्पेन हेतुना स प्रतन्यते॥

**अस2.31**
याति नाशेषतां रोगः कर्मणो नियतायुषः।
प्रपतन्निव विष्कम्भैर्धार्यतेऽत्रातुरो हितैः॥

**अस2.32**
परोऽसाध्यः क्रियाः सर्वाः प्रत्याख्येयोऽतिवर्तते।
तस्मादुपेक्ष्य एवासौ स्थितोऽत्यन्तविपर्यये॥

**अस2.33**
भ्रममोहारतिकरो दृष्टरिष्टोऽक्षनाशनः।
व्याधीन् पुरा परीक्ष्यैवमारभेत ततः क्रियाम्॥

**अस2.34**
स्वार्थविद्यायशोहानिमन्यथा ध्रुवमाप्नुयात्।
साध्ययोरपि संयोगो बलिनोर्यात्यसाध्यताम्॥

**अस2.35**
विद्यादसाध्यमेवातः साध्यासाध्यसमागमम्।
नासाध्यः साध्यतां याति साध्यो यातित्वसाध्यताम्॥

**अस2.36**
पादापचाराद्दैवाच्च यान्त्यवस्थान्तरं गदाः।
वरमाशीविषविषं दीप्तमग्निमयोऽपि वा॥

**अस2.37**
उपयुञ्जीत न त्वार्त्तादामिषं कृपणाज्जनात्।
वरो भूतदया धर्म इत्यार्त्तेषु भिषग्वरः॥

**अस2.38**
वर्त्तते यस्तु सिद्धार्थः स सर्वमतिवर्त्तते॥
इति द्वितीयोऽध्यायः

# तृतीयोऽध्यायः

**अस3.1**
अथातो दिनचर्यां नामाध्यायं व्याख्यास्यामः।
इति ह स्माऽहुरात्रेयादयो महर्षयः॥

**अस3.2**
ब्राह्मे मुहूर्ते उत्तिष्ठेज्जीर्णाजीर्णं निरूपयन्।
रक्षार्थमायुषः स्वस्थो जातवेगः समुत्सृजेत्॥

**अस3.3**
उदङ्मुखो मूत्रशकृद्दक्षिणाभिमुखो निशि।
वाचं नियम्य प्रयतः संवीताङ्गोऽवगुण्ठितः॥

**अस3.4**
प्रवर्त्तयेत् प्रचलितं न तु यत्नादुदीरयेत्।
नामेध्यमार्गमृत्भस्मगोस्थानाकीर्णगोमये॥

**अस3.5**
पुरान्तिकाग्निवल्मीकरम्योत्कृष्टचितिद्रुमे।
न नारीपूज्यगोर्केन्दुवाय्वन्नाग्निजलं प्रति॥

**अस3.6**
न चातिरस्कृत्य महीं भयाशक्त्योस्तु कामतः।
नवेगितोऽन्यकार्यः स्यान्नाजित्वासाध्यमामयम्॥

**अस3.7**
निःशल्यादुष्टमृत्पिण्डीपरिमृष्टमलायनः।
अभ्युद्धृताभिः शुचिभिरद्भिर्मृद्भिश्च योजयेत्॥

**अस3.8**
लेपगन्धापहं शौचमनुत्पतिताबिन्दुभिः।
स्पृष्ट्वा धातून् मलानश्रुवसाकेशनखांश्युच्तान्॥

**अस3.9**
स्नात्वा भोक्तुमना भुक्त्वा सुप्त्वा क्षुत्वा सुरार्च्चने।
रथ्यामाक्रम्य चाचामेदुपविष्ट उदङ्मुखः॥

**अस3.10**
प्राङ्मुखो वा विविक्तस्थो न बहिर्जानु नान्यदृक्।
अजल्पन्नुत्तरासङ्गी स्वच्छैरङ्गुष्ठमूलगैः॥

**अस3.11**
नोद्धृतैर्नानतो नोर्ध्वं नाग्निपक्वैर्न्न पूतिभिः।
न फेनबुल्बुदक्षारैर्नैकहस्तार्पितैर्जलैः॥

**अस3.12**
नार्द्रैकपाणिर्न्नामेध्यहस्तपादो न शब्दवत्।
वटासनार्कखदिरकरञ्जकरवीरजम्॥

**अस3.13**
सर्जारिमेदापामार्गमालतीककुभोद्भवम्।
कषायतिक्तकटुकं मूलमन्यदपीदृशम्॥

**अस3.14**
विज्ञातवृक्षं क्षुण्णाग्रमृज्वग्रन्थि सुभूमिजम्।
कनीन्यग्रसमस्थौल्यं सुकूर्च्चं द्वादशाङ्गुलम्॥

**अस3.15**
प्रातर्भुक्त्वा च यतवाग्भक्षयेद्दन्तधावनम्।
वाप्यत्रिवर्गत्रितयक्षौद्राक्तेन च घर्षयेत्॥

**अस3.16**
शनैस्तेन ततो दन्तान् दन्तमांसान्यबाधयन्।
लिखेदनुसुखं जिह्वां जिह्वानिर्लेखनेन च॥

**अस3.17**
तथास्यमलवैरस्यगन्धा जिह्वास्यदन्तजाः।
रुचिवैशद्यलघुता न भवन्ति भवन्ति च॥

**अस3.18**
नाद्यादजीर्णवमथुश्वासकासज्वरार्दिती।
तृष्णास्यपाकहृन्नेत्रशिरःकर्णामयी च तत्॥

**अस3.19**
नैव श्लेष्मातकारिष्टबिभीतधवधन्वजान्।
बिल्ववञ्चुलनिर्गुण्डीशिग्रुतिल्वकतिन्दुकान्॥

**अस3.20**
कोविदारशमीपीलुपिप्पलेङ्गुदगुल्गुलून्।
पारिभद्रकमम्लीकामोचक्यौ शाल्मलीं शणम्॥

**अस3.21**
स्वाद्वम्ललवणं शुष्कं सुषिरं पूति पिच्छिलम्।
पालाशमासनं दन्तधावनं पादुके त्यजेत्॥

**अस3.22**
दन्तान् पूर्वमधो घर्षेत् प्रातः सिञ्चेच्च लोचनं।
तोयपूर्णमुखो ग्रीष्मशरदोः शीतवारिणा॥

**अस3.23**
प्रणम्य देवान् वृद्धांश्च मङ्गलाष्टशतं शुभम्।
शृण्वन् काञ्चनविन्यस्तं सर्पिः पश्येदनन्तरम्॥

**अस3.24**
सौवीरमञ्जनं नित्यं हितमक्ष्णोस्ततो भजेत्।
लोचने तेन भवतो मनोज्ञे सूक्ष्मदर्शने॥

**अस3.25**
व्यक्तत्रिवर्णे विमले सुस्निग्धघनपक्ष्मणी।
चक्षुस्तेजोमयं तस्य विशेषात्च्छ्लेष्मतो भयम्॥

**अस3.26**
योजयेत्सप्तरात्रेऽस्मात् स्रावणाथ रसाञ्जनम्।
अणुतैलं ततो नस्यं ततो गण्डूषधारणम्॥

**अस3.27**
घनोन्नतप्रसन्नत्वक्स्कन्धग्रीवास्यवक्षसः।
सुगन्धिवदनाः स्निग्धनिस्वना विमलेन्द्रियाः॥

**अस3.28**
निर्वलीपलितव्यङ्गा भवेयुर्नस्यशीलिनः।
ओष्ठस्फुटनपारुष्यमुखशोषद्विजामयाः॥

**अस3.29**
न स्युः स्वरोपघाताश्च स्नेहगण्डूषधारणात्।
खदिरक्षीरिवृक्षारिमेदाम्बुकवलग्रहः॥

**अस3.30**
अरोचकास्यवैरस्यमलपूतिप्रसेकजित्।
सुखोष्णोदकगण्डूषैर्जायते वक्त्रलाघवम्॥

**अस3.31**
प्रायोगिकं ततो धूमं गन्धमाल्यादि चाचरेत्।
धूमादस्योर्ध्वजत्रूत्था न स्युर्वातकफामयाः॥

**अस3.32**
अञ्जनोत्क्लेशितं नस्यैः कवलैर्नावनेरितम्।
धूमेन कवलोत्क्लिष्टं क्रमाद्वातकफं जयेत्॥

**अस3.33**
गन्धमाल्यादिकं वृष्यमलक्ष्मीघ्नं प्रसाधनम्।
वासो न धारयेज्जीर्णं मलिनं रक्तमुल्बणम्॥

**अस3.34**
माल्यं न लम्बं न बहिर्न रक्तं जलजाद्दते।
नैव चान्येन विधृतं वस्त्रं पुष्पमुपानहौ॥

**अस3.35**
रुचिवैशद्यसौगन्ध्यमिच्छन्वक्त्रेण धारयेत्।
जातीलवङ्गकर्पूरकङ्कोलकटुकैः सह॥

**अस3.36**
ताम्बूलीनां किसलयं हृद्यं पूगफलान्वितम्।
रक्तपित्तक्षतक्षीणरूक्षोत्कुपितचक्षुषाम्।

**अस3.37**
विषमूर्च्छामदार्तानामपथ्यं शोषिणां च तत्।
पथ्यं सुप्तोत्थिते भुक्ते स्नाते वान्ते च मानवे॥

**अस3.38**
द्विपत्रंएकं पूगं च सचूर्णखदिरं च तत्।
उत्तिष्ठेत ततोत्यर्थमर्थेष्वर्थानुबन्धिषु॥

**अस3.39**
निन्दितं दीर्घमप्यायुरसन्निहितसाधनम्।
कृषिं वाणिज्यां गोरक्षामुपायैर्गुणिनं नृपम्॥

**अस3.40**
लोकद्वयाविरुद्धां च धनार्थी संश्रयेत् क्रियाम्।
मुक्तवेगश्च गमनस्वप्नाहारसभास्त्रियः॥

**अस3.41**
पाणिनाऽलभ्य निष्क्रामेद्रत्नपूज्याज्यमङ्गलम्।
सातपत्रपदत्राणो विचरेद्युगमात्रदृक्॥

**अस3.42**
निशि चात्ययिके कार्ये दण्डी मौली सहायवान्।
प्रावृत्य पर्यटेद्रात्रौ न प्रावृत्य शिरोऽहनि॥

**अस3.43**
चैत्यपूज्यध्वजाशस्तच्चायाभस्मतुषाशुचीन्।
नाक्रामेच्छर्करालोष्टबलिस्नानभुवो न च॥

**अस3.44**
मध्याह्ने सन्ध्ययो रात्रावर्धरात्रे चतुष्पथम्।
न सेवेत न शर्वर्यां वृक्षचैत्यं न चत्वरम्॥

**अस3.45**
सूनाटवीशून्यगृहश्मशानानि दिवाऽपि न।
न हुंकुर्याच्छवं पूज्यं प्रशस्तान्मङ्गलानि च॥

**अस3.46**
नापसव्यं परिक्रामेन्नेतराण्यनुदक्षिणम्।
चतुष्पथं नमस्कुर्यात् प्रज्ञातांश्च वनस्पतीन्॥

**अस3.47**
न व्यालव्याधिताशस्तैर्नादान्दक्षुत्पिपासितैः।
न च्छिन्नपुच्छैर्नैकाक्षैगापृष्ठेन च न व्रजेत्॥

**अस3.48**
नाऽतिप्रगेऽतिसायं वा न नभोमध्यगे रवौ।
नासन्निहितपानीयो नातितूर्णं न सन्ततम्॥

**अस3.49**
न शत्रुणा नाविदितैर्नैको नाधार्मिकैः सह।
दद्याद्वर्त्माऽर्तवृद्धस्त्रीभारिचक्रद्विजन्मने॥

**अस3.50**
स्नानभोजनपानानि वाहेभ्यो न+आचरेत् पुरः।
नदीं तरेन्न बाहुभ्यां नाग्निस्कन्धमभिव्रजेत्॥

**अस3.51**
नाऽरोहोद्विषमं शैलं नावं संशयितां तरुम्।
निपातयेन्न लोष्टेन न फलेन फलं द्रुमात्॥

**अस3.52**
न वार्यमाणः प्रविशेन्नाद्वारेण ना च+आसने।
स्वयं तिष्ठेत् परगृहे युक्तनिंद्रं न बोधयेत्॥

**अस3.53**
न+आचरेत् पाणिवाक्पादद्दङ्मेढ्रेदरचापलम्।
त्रिः पक्षस्य कचश्मश्रुनखरोमाणि वर्धयेत्॥

**अस3.54**
न स्वहस्तेन दन्तैर्वा स्नानं चानु समाचरेत्।
अथ जातान्नपानेच्छो मारुतघ्नैः सुगन्धिभिः॥

**अस3.55**
यथर्तुसंस्पर्शसुखैस्तैलैरभ्यङ्गमाचरेत्।
अभ्यङ्गो वातहा पुष्टिस्वप्नदार्ढ्यबृहत्वकृत्॥

**अस3.56**
दग्धभग्नक्षतरुजाक्लमश्रमजरापहः।
रथाक्षचर्मघटवत् भवन्त्यभ्यङ्गतो गुणाः॥

**अस3.57**
स्पर्शनेऽभ्याधिको वायुःस्पर्शनं च त्वगाश्रयम्।
त्वच्यश्च परमभ्यङ्गो यस्मात्तं शीलयेदतः॥

**अस3.58**
शिरः श्रवणपादेषु तं विशेषेण शीलयेत्।
स केश्यः शीलितो मूर्ध्नि कपालेन्दिर्यतर्पणः॥

**अस3.59**
हनुमन्याशिरः कर्णशूलघ्नं कर्णपूरणम्।
पादाभ्यङ्गस्तु तत्स्थैर्यनिद्राद्दष्टि प्रसादकृत्॥

**अस3.60**
पादसुप्तिश्रमस्तम्भसङ्कोचस्फुटनप्रणुत्।
वर्ज्योभ्यङ्गः कफग्रस्तक्तसंशुद्ध्यजीर्णिभिः॥

**अस3.61**
शरीरायासजननं कर्म व्यायाम उच्यते।
लाघवं कर्मसामर्थ्यं दीप्तोऽग्निर्मेदसः क्षयः॥

**अस3.62**
विभक्तघनगात्रत्वं व्यायामादुपजायते।
वातपित्तामयी बालो वृद्धोऽजीर्णी च तं त्यजेत्॥

**अस3.63**
अर्द्धशक्त्यानिषेव्यस्तु बलिभिः स्निग्धभोजिभिः।
शीतकाले वसन्ते च मन्दमेव ततोऽन्यदा॥

**अस3.64**
तं कृत्वाऽनुसुखं देहं मर्द्दयेच्च समन्ततः।
तृष्णा क्षयः प्रतमको रक्तपित्तं श्रमः क्लमः॥

**अस3.65**
अतिव्यायामतः कासो ज्वरश्च्छर्दिश्च जायते।
व्यायामजागराध्वस्त्रीहास्यभाष्यादि साहसं॥

**अस3.66**
गजं सिंह इव+आकर्षन् भजन्नति विनश्यति।
उद्वर्त्तनं कफहरं मेदसः प्रविलायनम्॥

**अस3.67**
स्थिरीकरणमङ्गानां त्वक्प्रसादकरं परम्।
दीपनं वृष्यमायुष्यं स्नानमूर्जाबलप्रदम्॥

**अस3.68**
कण्डूमलश्रमस्वेदतन्द्रातृड्दाहपाप्मजित्।
उष्णाम्बुनाऽधःकायस्य परिषेको बलावहः॥

**अस3.69**
तेनैव तूत्तमाङ्गस्य बलहृत् केशचक्षुषाम्।
नाऽनाप्लुत्य शिरः स्नायान्न जलेऽल्पे न शीतले॥

**अस3.70**
नोदकावतरणस्वप्नान् नग्नो न च+आचरेत्।
पञ्चपिण्डाननुद्धृत्य न स्नायात् परवारिणि॥

**अस3.71**
नात्मानमीक्षेत जले न तटस्थो जलाशयम्।
न प्रतिस्फालयेदम्बु पाणिना चरणेन वा॥

**अस3.72**
स्नात्वा न मृज्यात् गात्राणि धुनुयान्न शिरोरुहान्।
निवसीताऽर्द्रे एव+आशु सोष्णीषे धौतवाससी॥

**अस3.73**
न त्वम्बरं पूर्वधृतं न च तैलवसे स्पृशेत्।
वासोऽन्यदन्यच्छयने निर्गमे देवतार्च्चने॥

**अस3.74**
स्नानमर्दितनेत्रास्यकर्णरोगातिसारिषु।
आध्मानपीनसाजीर्णभुक्तवत्सु च गर्हितम्॥

**अस3.75**
अन्नपानविधानेन भुञ्जीतान्नं विनाऽत्ययात्।
अभिनन्द्य प्रसन्नात्मा हुत्वा दत्वा च शक्तितः॥

**अस3.76**
पाकं सजलमेकान्ते यथासुखमितिश्रुवन्।
प्रयच्छेत्सर्वमुद्दिश्य पाचयेन्नाऽन्नमात्मने॥

**अस3.77**
नाऽन्नमद्यान्मुमूर्षूणां मृतानां दुःखजीविनां।
स्त्रीजितक्लीबपतितक्रूरदुष्कृतकारिणां॥

**अस3.78**
गणारिगणिकासत्रधूर्त्तान्नापणिकञ्च न।
नोत्सङ्गे भक्षयेत् भक्ष्यान् जलं नाञ्जलिना पिबेत्॥

**अस3.79**
सर्वञ्च तिलसम्बद्धं नाऽद्यादस्तमिते रवौ।
न भुक्तमात्र आस्येन्न निषिद्धं भजेत्सुखं॥

**अस3.80**
धर्मोत्तराभिरर्थ्याभिः कथाभिस्त्रिगुणात्मभिः।
मध्यं दिनस्य गमयेदिष्टशिष्टसहायवान्॥

**अस3.81**
न लोकभूपविद्विष्टैर्न सङ्गच्छेत नास्तिकैः।
कलिवैररुचिर्न स्यात् धीरः सम्पद्विपत्तिषु॥

**अस3.82**
श्रुतादन्यत्र सन्तुष्टस्तत्रैव च कुतूहली।
क्षान्तिमान् दक्षिणो दक्षः सुसमीक्षितकार्यकृत्॥

**अस3.83**
ह्रीमान् धीमान् महोत्साहः संविभागी प्रियातिथिः।
अक्षुद्रवृत्तिर्गम्भीरः साधुराश्रितवत्सलः॥

**अस3.84**
दाता पितृभ्यः पिण्डस्य यष्टा होता कृपात्मकः।
अनुज्ञाता सुवार्तानां दीनानामनुकम्पकः॥

**अस3.85**
आश्वासकारी भीतानां क्रुद्धानामनुनायकः।
पूर्वाभिभाषी सुमुखः सुशीलः पूज्यपूजकः॥

**अस3.86**
वित्तबन्धुवयोविद्यावृत्तैः पूज्या यथोत्तरम्।
आत्मद्रुहममर्यादं मूढमुज्झितसत्पथम्॥

**अस3.87**
सुतरामनुकम्पेत नरकार्चिष्मदिन्धनम्।
धर्म्यमर्थ्यं प्रियं तथ्यं मितं पथ्यं वदेद्वचः॥

**अस3.88**
ना+आत्मानमवजानीयान्न स्तूयान्न च पीडयेत्।
न हीनानवमन्येत् वृत्तार्थाङ्गबलश्रुतैः॥

**अस3.89**
नाऽरुन्तुदः स्यान्न क्रूरो न तीक्ष्णो नोऽपतापवान्।
हेतावीर्ष्येन्न तु फले पापं पापेऽपि नाचरेत्॥

**अस3.90**
परस्य दण्डं नोद्यच्छेत् क्रुद्धो नैनं निपातयेत्।
अन्यत्रपुत्राच्छिष्याद्वा शासनार्हाद्धिताशयः॥

**अस3.91**
नृत्यवादित्रगीतादि नोल्बणामाचरेत् क्रियाम्।
प्रसिद्धकेशवाग्वेषशमसान्त्वपरायणः॥

**अस3.92**
ऊर्ध्वं नाभेः शरीरस्य स्पृशोन्नाऽधरवाससा।
न कुर्यान्मिथुनीभूय शौचं प्रति विलम्बनम्॥

**अस3.93**
नाऽसंवृतमुखो हास्यक्षवोत्गारविजृम्भणम्।
पाणिद्वयेन युगपत् कण्डूयेन्नात्मनः शिरः॥

**अस3.94**
वहेन्न भारं शिरसा युगपच्चाग्निवाहिणी।
नासिकां न विकुष्णीयाद्दशनान्न विघट्टयेत्॥

**अस3.95**
कुर्याद्विलेखनच्छेदभेदास्फोटनमर्दनम्।
पादं पादेन नाऽक्रामेन्न कण्डूयेन्न शौचयेत्॥

**अस3.96**
न कांस्यभाजने तौ च नोपविष्टः प्रसाधयेत्।
अभीक्ष्णं निर्मलान् दध्यान्नखपादमलाशयान्॥

**अस3.97**
नाऽसमिद्धमुपासीत हुताशं नैव चाशुचिः।
नाऽनुवातं न विवृतो न क्लान्तो नाऽन्यमानसः॥

**अस3.98**
धमेन्नाऽस्येन न स्कन्देन्नाऽधः कुर्यान्न पादतः।
सततं न निरीक्षेत चलसूक्ष्माप्रियाणि च॥

**अस3.99**
नाप्रशस्तं न विण्मूत्रं न दर्पणममार्जितम्।
उद्यन्तमस्तमायान्तं तपन्तं प्रतिमागतम्॥

**अस3.100**
उपरक्तं च भास्वन्तं वाससा वा तिरोहितम्।
नाऽन्यदप्यतितेजस्वि न क्रुद्धभ्य गुरोर्मुखम्॥

**अस3.101**
स्त्रियं स्त्रवन्तीं नोदक्यां न नग्नां नाऽन्यसङ्गताम्।
न पत्नीं भोजनस्वप्नक्षुतजृम्भादुरासने॥

**अस3.102**
शयीत नैकशयने न चाश्नीयास्तया सह।
तामनीर्ष्यश्च गोपायेत् स्वैरिणीं नाधिवासयेत्॥

**अस3.103**
नोच्छिष्टस्तारकाराहुतुहिनाशुदिवाकरान्।
पश्येन्न यायान्न पठेन्न स्वप्यान्न स्पृशेच्छिरः॥

**अस3.104**
पाययन्तीं चरन्तीं वा नान्यस्मै गां निवेदयेत्।
अर्केन्दुपरिवेषोल्काशतक्रतुधनूंषि च॥

**अस3.105**
नान्यद्देवार्चने कर्म कुर्याद्धावेन्न वर्षति।
तिथिं पक्षस्य न ब्रूयात् नक्षत्राणि न निर्दिशेत्॥

**अस3.106**
न+आत्मनो जन्मलग्नर्क्षधनसारं गृहे मलम्।
प्रकाशयेन्नावमानं न च निःस्नेअतां प्रभोः॥

**अस3.107**
पुरोवातातपरजस्तुषारपरुषानिलान्।
अनृजुः क्षवथूद्गारकासस्वप्नान्नमैथुनम्॥

**अस3.108**
सशब्दमलिनं हस्तभ्रूनेत्रोत्क्षेपवादिताम्।
कूलच्छायां सुरापानं व्यालदंष्ट्रिविषाणिनः॥

**अस3.109**
हीनानार्यातिनिपुणसेवां विग्रहमुत्तमैः।
सन्ध्यास्वभ्यवहारस्त्रीस्वप्नाध्ययनचिन्तनम्॥

**अस3.110**
आरोग्यजीवितैश्वर्यविद्यासु स्थिरमानिताम्।
तोयाग्नि पूज्यमध्येन यानं धूमं शवाश्रयम्॥

**अस3.111**
मद्यातिसक्तिं विस्त्रंभस्वातन्त्र्ये स्त्रीषु च त्यजेत्।
नैकाहमप्यधिवसेद्वास्तु तच्छास्त्रगर्हितम्॥

**अस3.112**
न देशं व्याधिबहुलं नावैद्यं नाप्यनायकम्।
नाधर्मिजनभूयिष्ठं नोपसृष्टं न पर्वतम्॥

**अस3.113**
वसेत् प्राज्याम्बुभैषज्यसमित् पुष्पतृणेन्धने।
सुभिक्षक्षेमरम्यान्ते पण्डितैर्मण्डिते पुरे॥

**अस3.114**
नरामराणां सिद्धानां शास्त्राणाञ्चाजुगुप्सकः।
आधारकस्त्रिवर्गस्य यथायोग्यं जनस्य च॥

**अस3.115**
दश कर्मपतान्रक्षन् जयन्नभ्यन्तरानरीन्।
हिंसास्तेयान्यथाकामं पैशुन्यं परुषानृतम्॥

**अस3.116**
संभिन्नलापं व्यापादमभिध्यां दृग्विपर्ययम्।
पापं कर्मेतिदशधा कायवाङ्मानसैस्त्ययेत्॥

**अस3.117**
परोपघातक्रियया वर्जयेदार्जनं श्रियः।
अर्थानां धर्मलब्धानामदाताऽपिहृयसम्भवात्॥

**अस3.118**
स्वर्गापवर्गविभवानयत्नेनाधितिष्ठति।
सायं भुक्त्वा लघु हितं समाहितमनाः शुचिः॥

**अस3.119**
शास्तारमनुसंस्मृत्य स्वचर्यां चाथ संविशेत्।
देशे शुचावनाकीर्णे द्वित्राप्तपरिचारकः॥

**अस3.120**
युक्तोपधानं स्वास्तीर्णं विस्तीर्णाविषमं सुखम्।
जानुतुल्यं मृदु शुभं सेवेत शयनासनम्॥

**अस3.121**
प्राग्दक्षिणशिराः पादावकुर्वाणो गुरून् प्रति।
पूर्वापरदिशो भागे धर्ममेवानुचिन्तयन्॥

**अस3.122**
आददीत सदा देहादित्थं सारमसारतः।
बिभ्यत् प्रतिक्षणं मृत्योरयथातथचेष्टितात्॥

**अस3.123**
आरोग्यविभवप्रज्ञावयोधर्मक्रियावतः।
सुखमायुर्हितं चोक्तं विपरीतं विपर्यये॥

**अस3.124**
सर्वतेजोनिधानं हि नृप इत्युच्यते भुवि।
अदूषयन्मनस्तस्मात् भक्तिमांस्तमुपाचरेत्॥

**अस3.125**
पर्यस्तिकोपाश्रयकोपहासविवादनिष्ठीवनजृम्भणानि।
सर्वाः प्रकृत्यभ्यधिकाश्च चेष्टास्तत्सन्निधाने परिवर्जयेत्तु॥

**अस3.126**
सत्वाद्यवस्था विविधाश्च तास्ताः सम्यक् समीक्ष्या+आत्महितं विदध्यात्।
अन्योऽपि यः कश्चिदिहाऽस्ति मार्गो हितोपदेशेषु भजेत तं च॥

**अस3.127**
इति चरितमुपेतः सर्वजीवोपजीव्यं प्रथितपृथुगुणौधो रक्षितो देवताभिः।
समधिकशतजीवी निर्वृतः पुण्यकर्मा व्रजति सुगतिनिम्नो देहभेदेऽपि तुष्टिम्॥
इति तृतीयोऽध्यायः

# चतुर्थोऽध्यायः

**अस4.1**
अथात ऋतुचर्यां व्याख्यास्यामः।
इति हस्माहुरात्रेयादयो महर्षयः॥

**अस4.2**
कालो हि नाम भगवाननादिनिधनो यथोपचितकर्मानुसारी।
यदनुरोधादादित्यादयः खादयश्च महाभूतविशेषास्तथा तथा विपरिणमन्तो जन्मवतां जन्ममरणस्यर्तुरसवीर्यदोपदेहबलव्यापत्सं पदां च कारणत्वं पत्ययतां प्रतिपद्यन्ते॥

**अस4.3**
स मात्राकाष्ठाकलानाडिकामुहूर्तयामाहोरात्रपक्षमासर्त्वयनवर्षभेदेन द्वादशधा विभज्यते॥

**अस4.4**
तत्राक्षिनिमेषो मान्त्रा। ताः पञ्चदश काष्ठा तास्त्रिंशत् कला। ताः सदशभागा विंशतिर्नाडिका। नाडिकाद्वयं मुहूर्तश्च। ते तुल्यरात्रिन्दिवे राशिभागे चत्वारः पादोना यामः। तैश्चतुर्भिरहो रात्रिश्च। पञ्चदशाहोरात्राः पक्षः। पक्षद्वयं मासः स शुक्लान्तः। तैर्मार्गशीर्षादिभिर्द्विसंख्यैः क्रमाद्धेमन्तशिशिरवसन्तग्रीष्मवर्षशरदाख्याः षड्तवो भवन्ति। तेषु शिशिरादयस्त्रयो रवेरुदगयनमादानञ्च शेषा दक्षिणायनं विसर्गश्च। तावादानविसर्गौ वर्षम्॥

**अस4.5**
तयोरादानमाग्नेयम्। तस्मिन् खलु कालस्वभावमार्गपरिगृहीतोऽत्यर्थोष्णगभस्तिजालमण्डलोऽर्कस्तत्संपर्काद्वायवश्च तीव्ररूक्षाः सोमजं गुणमुपशोषयन्तो जगतः स्नेहमाददाना ऋतुक्रमेणो पजनितरौक्ष्या रूक्षान् रसांस्तिक्तकषायकटुकानभिप्रबलयन्तो नृणां दौर्बल्यमावहन्ति॥

**अस4.6**
वसर्गस्तु सौम्यः। तस्मिन्नपि कालमार्गमेघवातवर्षाभिहतप्रभावे दक्षिणायनगेऽर्के शशिनि चाव्याहतबले शिशिराभिर्भाभिः शश्वदाप्यायमाने माहेन्द्रसलिल प्रशान्त सन्तापे जगत्यरूक्षा रसाः प्रवर्धन्तेऽम्ललवणमधुरा यथाक्रमं बलं चोपचीयते नृणामिति॥

**अस4.7**
भवति चात्र हेमन्ते शिशिरे चाग्र्यं विसर्गादानयोर्बलम्। शरद्वसन्तयोर्मध्यं हीनं वर्षानिदाघयोः॥

**अस4.8**
धूमधूम्ररजोमन्दास्तुषाराविलमण्डलाः।
दिगादित्या मरुच्छैत्यादुत्तरो रोमहर्षणः॥

**अस4.9**
लोध्रप्रियङ्गुपुन्नागलवल्यः कुसुमोज्वलाः।
दृप्ता गजाजमहिषवाजिवायससूकराः॥

**अस4.10**
हिमानीपटलच्छन्ना लीनमीनविहङ्गमाः।
नद्यः सबाष्पाः सोष्माणः कूपापश्च हिमागमे॥

**अस4.11**
देहोष्माणो विशन्तोऽन्तः शीते शीतानिलाहताः।
जठरे पिण्डितोष्माणं प्रबलं कुर्वतेऽनलम्॥

**अस4.12**
विसर्गे बलिनां प्रायः स्वभावादिगुरुक्षमम्।
बृंहणान्यन्नपानानि योजयेत्तस्य युक्तये॥

**अस4.13**
अनिन्धनोऽन्यथा सीदेदत्युदीर्णतयाऽथवा।
धातूनपि पचेदस्य ततस्तेषां क्षयान्मरुत्॥

**अस4.14**
तेजः सहचरः कुप्येच्छीतः शीते विशेषतः।
अतो हिमे भजेत्स्निग्धान् स्वाद्वम्ललवणान्रसान्॥

**अस4.15**
बिलेशयौदकानूपप्रसहानां भृतानि च।
मांसानि गुडपिष्टोत्थमद्यान्यभिनवानि च॥

**अस4.16**
माषेक्षुक्षीरविकृतिवसातैलनवौदनान्।
व्यायामोद्वर्तनाभ्यङ्गस्वेदधूमाञ्जनातपान्॥

**अस4.17**
सुखोदकं शौचविधौ भूमिगर्भगृहाणि च।
साङ्गारयानां शय्यां च कुथकम्बलसंस्कृताम्॥

**अस4.18**
कुङ्कुमेनानुलिप्ताङ्गो गुरुणाऽगरुणाऽपि वा।
लघूष्णैः प्रावृतः स्वप्यात् काले धूपाधिवासितः॥

**अस4.19**
पीनाङ्गनाङ्गसंसङ्गनिवारितहिमानिलः।
शिशिरे शीतमधिकं मेघमाउतवर्षजम्॥

**अस4.20**
रौक्ष्यं च+आदानजं तस्मात् कार्यः पूर्वोऽधिकं विधिः।
वसन्ते दक्षिणो वायुराताम्रकिरणो रविः॥

**अस4.21**
नवप्रवालत्वक्पत्राः पादपाः ककुभोऽमलाः।
किंशुकाशोकचूतादिवनराजिविराजिताः॥

अस4.22। कोकिलालिकुलालापकलकोलाहलाकुलाः।
शिशिरे सञ्चितः श्लेष्मा दिनकृद्भाभिरीरितः॥

**अस4.23**
तदा प्रबाधमानोऽग्निं रोगान् प्रकुरुते बहून्।
अतोऽस्मिंस्तीक्ष्णवमनधूमगण्डूषनावनम्॥

**अस4.24**
व्यायामोद्वर्त्तनक्षौद्रयवगोधूमजाङ्गलान्।
सेवेत सुहृदुद्यानयुवतीश्च मनोरमाः॥

**अस4.25**
स्नातः स्वलङ्कृतः स्रग्वी चन्दनागरुरूषितः।
विचित्रामत्रविन्यस्तान् सहकारोत्पलाङ्कितान्॥

**अस4.26**
निगदांश्च+आसवारिष्टशीधुमार्द्वीकमाधवान्।
क्वथितं मुस्तशुण्ठ्यम्बु साराम्भः क्षौद्रवारि वा॥

**अस4.27**
गुरुशीतदिवास्वप्नस्निग्धाम्लमधुरांस्त्यजेत्।
ग्रीष्मेऽतसीपुष्पनिभस्तीक्ष्णांशुर्दावदीपिताः॥

**अस4.28**
दिशो ज्वलन्ति भूमिश्च मारुतो नैरृतः सुखः।
पवनातपसंस्वेदैर्जन्तवो ज्वरिता इव॥

**अस4.29**
तापार्ततुङ्गमातङ्गमहिषैः कलुषीकृताः।
दिवाकरकराङ्गारनिकरक्षपिताम्भसः॥

**अस4.30**
प्रवृद्धरोधसो नद्यः च्छायाहीना महीरुहाः।
विशीर्णजीर्णपर्णाश्च शुष्कवल्कलताङ्किताः॥

**अस4.31**
आदत्ते जगतस्तेजस्तद+आदित्यो भृशं यतः।
व्यायामातपकट्वम्ललवणोष्णं त्यजेदतः॥

**अस4.32**
मद्यं न सेव्यं स्वल्पं वा सेव्यं सुबहुवारि वा।
अन्यथा शोफशैथिल्यदाहमोहान् करोति तत्॥

**अस4.33**
नवमृद्भाजनस्थानि हृद्यानि सुरभीणि च।
पानकानि समन्थानि सिताढ्यानि हिमानि च॥

**अस4.34**
स्वादु शीतं द्रवं चान्नं जाङ्गलान्मृगपक्षिणः।
शालिक्षीरघृतद्राक्षानालिकेराम्बुशर्कराः॥

**अस4.35**
तालवृन्तानिलान् हारान् स्रजः सकमलोत्पलाः।
तन्वीर्मृणालवलयाः कान्ताश्चन्दनरूषिताः॥

**अस4.36**
सरांसि वापिः सरितः काननानि हिमानि च।
सुरभीणि निषेवेत वासांसि सुलघूनि च॥

**अस4.37**
निष्पतद्यन्त्रसलिले स्वप्याद्धारागृहे दिवा।
रात्रौ च+आकाशतलके सुगन्धिकुसुमास्तृते॥

**अस4.38**
कर्पूरचन्दनार्द्राङ्गो विरलानङ्गसङ्गमः।
वर्षासु वारुणो वायुः सर्वसस्यसमुद्गमः॥

**अस4.39**
भिन्नेन्द्रनीलनीलाभ्रवृन्दमन्दाविलं नभः।
दीर्घिकानववार्यौघमग्नसोपानपङ्क्तयः॥

**अस4.40**
वारिधाराभृशाघातविकासितसरोरुहाः।
सरितः सागराकारा भूरव्यक्तजलस्थला॥

**अस4.41**
मन्द्रस्तनितजीमूतशिखिदर्दुरनादिता।
इन्द्रगोपधनुःखण्डविद्युदुद्योतदीपिता॥

**अस4.42**
परितः श्यामलतृणा सिलिन्ध्रकुटजोज्वला।
तदादानाबले देहे मन्देऽग्नौ बाधिते पुनः॥

**अस4.43**
वृष्टिभूबाष्पतोयाम्लपाकदुष्टैश्चलादिभिः।
बस्तिकर्म निषेवेत कृतसंशोधनक्रमः॥

**अस4.44**
पुराणाशालिगोधूमयवान् यूषरसैः कृतैः।
निगदं मदिरारिष्टमार्द्वीकं स्वल्पमम्बु वा॥

**अस4.45**
दिव्यं क्वथितकूपोत्थं चौण्डं सारसमेव वा।
वृष्टिवाताकुलेत्वन्हि भोजनं क्लेदवातजित्॥

**अस4.46**
परिशुष्कं लघुस्निग्धमुष्पाम्ललवणं भजेत्।
प्रायोऽन्नपानं सक्षौद्रं संस्कृतं च घनोदये॥

**अस4.47**
असरीसृपभूबाष्पशीतमारुतशीकरम्।
साग्नियानं च भवनं निर्दंशमशकोन्दुरम्॥

**अस4.48**
प्रघर्षोद्वर्तनस्नानधूमगन्धागरुप्रियः।
यायात् करेणुमुख्याभिश्चित्रस्रग्वस्त्रभूषितः॥

**अस4.49**
नदीजलोदमन्थाहः स्वप्नातिद्रवमैथुनम्।
तुषारपादचरणव्यायामार्ककरांस्त्यजेत्॥

**अस4.50**
शरदि व्योम शुभ्राभ्रं किञ्चित् पङ्काङ्किता मही।
प्रकाशकाशसप्ताह्वकुमुदा शालिशालिनी॥

**अस4.51**
विक्षिप्ततीक्ष्णकिरणो मेघौघविगमाद्रविः।
बभ्रुवर्णोऽतिविमलाः क्रौञ्चमालाकुला दिशः॥

**अस4.52**
कमलान्तरसंलीनमीनहंसांसघट्टनैः।
तरङ्गभङ्गानि सरांसि विमलानि च॥

**अस4.53**
वर्षाशीतोचिताङ्गानां सहसैवार्करश्मिभिः।
तप्तानां सञ्चितं पूर्वं तदा पित्तं प्रकुप्यति॥

**अस4.54**
शस्तं तिक्तहविःपानं विरेकोऽस्रस्रुतिः सदा।
शीतं लघ्वन्नपानं च कषायस्वादुतिक्तकम्॥

**अस4.55**
शालिषष्टिकगोधूमयवमुद्गसितामधु।
पटोलामलकं द्राक्षा जाङ्गलं क्षुद्वतां भृशम्॥

**अस4.56**
दिवा दिवाकरकरैर्निशाकरकरौर्नीशि।
सन्तप्तं ह्लादितं तोयमगस्त्येनाविषीकृतम्॥

**अस4.57**
निर्मलं शुचि कालेन पक्वं पानेऽमृतोपमम्।
हंसौघपक्षविक्षेपभ्रमत्भ्रमरपङ्क्तिषु॥

**अस4.58**
सुसरोरुहसेव्यासु सरसीषु प्लवेत च।
लघुशुद्धाम्बरः स्रग्वी शीतोशीरविलेपनः॥

**अस4.59**
सेवेत चन्द्रकिरणान् प्रदोषे सौधमाश्रितः।
तृप्तिदध्यातपक्षारवसातैलपुरोनिलान्॥

**अस4.60**
तीक्ष्णमद्यदिवास्वप्नतुषारांश्च विवर्जयेत्।
नित्यं सर्वरसाभ्यासः स्वस्वाधिक्यमृतावृतौ॥

**अस4.61**
र्त्वोरन्तादिसप्ताहावृतुसन्धिरिति स्मृतः।
तत्र पूर्वो विधिस्त्याज्यः सेवनीयोऽपरः क्रमात्॥

**अस4.62**
असात्म्यजा हि रोगाः स्युः सहसा त्यागशीलनात्।
र्तुष्वेवंविधेष्वेष विधिः स्वास्थ्ये च देहिनां॥

**अस4.63**
निर्दिश्यतेऽन्यरूपेषु विरुद्धाज्ञानिको विधिः।
मासराशिस्वरूपाख्यमृतोर्यल्लक्षणत्रयम्॥

**अस4.64**
यथोत्तरंभजेच्चर्यां तत्र तस्य बलादिति॥
इति चतुर्थोऽध्यायः

# पञ्चमोऽध्यायः

**अस5.1**
अथातो रोगानुत्पादनीयं नामाध्ययं व्याख्यास्यामः।
इतिहस्माहुरात्रेयादयो महर्षयः॥

**अस5.2**
वेगान् नधारयेद्वातविण्मूत्रक्षवतृट्क्षुधाम्।
निद्राकासश्रमश्वासजृम्भाश्रुच्छर्दिरेतसाम्॥

**अस5.3**
अधोवातस्य रोधेन गुल्मोदावर्तरुक्क्लमाः।
वातमूत्रशकृत्सङ्गदृष्ट्यग्निवधहृद्गदाः॥

**अस5.4**
शकृतः पिण्डिकोद्वेष्टप्रतिश्यायशिरोरुजः।
ऊर्ध्ववायुः परीकर्तो हृदयस्योपरोधनम्॥

**अस5.5**
मुखेन विट्प्रवृत्तिश्च पूर्वोक्ताश्चामयाः स्मृताः।
अङ्गभङ्गाश्मरीबस्तिमेढ्रवंक्षणवेदनाः॥

**अस5.6**
मूत्रस्य रोधात् पूर्वे च प्रायो रोगाः तदौषधम्।
वर्त्यभ्यङ्गवगाहाश्च स्वेदनं बस्तिकर्म च॥

**अस5.7**
अन्नपानं च विड्भेदि विड्रोधोत्थेषु यक्ष्मसु।
मूत्रजेषु तु पाने च प्राग्भक्तं शस्येत घृतम्॥

**अस5.8**
जीर्णान्तिकं चोत्तमया मात्रया योजनाद्वयम्।
अवपीडकमेतच्च संज्ञितं धारणात् पुनः॥

**अस5.9**
उद्गारस्यारुचिः कम्पो विबन्धो हृदयोरसोः।
आध्मानकासहिध्माश्च हिध्मावत्तत्र भेषजम्॥

**अस5.10**
शिरोर्तीन्द्रियदौर्बल्यमन्यास्तम्भार्दितं क्षुतेः।
तीक्ष्णधूमाञ्जनाघ्राणनावनार्कविलोकनैः॥

**अस5.11**
प्रवर्तयेत् क्षुतिं सक्तां स्वेदाभ्यङ्गौ च शीलयेत्।
योज्यं वातघ्नमन्नं च घृतं चौत्तरभक्तिकम्॥

**अस5.12**
शोषाङ्गसादबधिर्यसम्मोहभ्रमहृद्गदाः।
तृष्णाया निग्रहात्तत्र शीतः सर्वो विधिर्हितः॥

**अस5.13**
अङ्गभङ्गारुचिग्लानिकार्श्यशूलभ्रमाः क्षुधः।
तत्र योज्यं लघु स्निग्धमुष्णमल्पं च भोजनम्॥

**अस5.14**
निद्राया मोहमूर्धाक्षिगौरवालस्यजृम्भिकाः।
अङ्गमर्दश्च तत्रेष्टः स्वप्नः संवाहनानि च॥

**अस5.15**
कासस्य रोधात्तद्वृद्धिः श्वासारुचिहृदामयाः।
शोषो हिध्मा च कार्योऽत्र कासहा सुतरां विधिः॥

**अस5.16**
गुल्महृद्रोगसम्मोहाः श्रमश्वासाद्विधारितात्।
हितं विश्रमणं तत्र वातघ्नश्च क्रियाक्रमः॥

**अस5.17**
जृम्भायाः क्षववद्रोगाः सर्वश्चानिलजिद्विधिः।
पीनसाक्षिशिरोहृद्रुङ्मन्यास्तम्भारुचिभ्रमाः॥

**अस5.18**
सगुल्मा बाष्पतस्तत्र स्वप्नो मद्यं प्रियाः कथाः।
विसर्पकोठकुष्ठाक्षिकण्डूपाण्ड्वामयज्वराः॥

**अस5.19**
सकासश्वसहृल्लासव्यङ्गश्वयथवो वमेः।
गण्डूषधूमानाहारं रुक्षं भुक्त्वा तदुद्वमः॥

**अस5.20**
व्यायामः स्रुतिरस्रस्य शस्तं चात्र विरेचनम्।
सक्षारलवणं तैलमभ्यङ्गार्थे च शस्यते॥

**अस5.21**
शुक्रात्तत्स्रवणं गुह्यवेदनाश्वयथुज्वराः।
हृद्व्यथा मूत्रसङ्गाङ्गभङ्गवर्ध्माश्मषण्ढताः॥

**अस5.22**
ताम्रचूडसुराशलिबस्त्यभ्यङ्गावगाहनम्।
बस्तिशुद्धिकरैः सिद्धं भजेत् क्षीरं प्रियाः स्त्रियः॥

**अस5.23**
तत्र सेवेत सर्वं च वर्जयेद्वेगधारिणम्।
विड्वामिनं परिक्लिष्टं क्षीणं तृट्छूलपीडितम्॥

**अस5.24**
रोगाः सर्वेऽपि जायन्ते वेगोदीरणधारणैः।
निर्दिष्टं साधनं तत्र भूयिष्ठं ये तु तान् प्रति॥

**अस5.25**
ततश्चानेकधा प्रायः पवनो यत् प्रकुप्यति।
अन्नपानौषधं तस्य युञ्जीतातोऽनुलोमनम्॥

**अस5.26**
क्रमादपामपि मणौ पङ्कोऽवश्यंभवत्यतः।
उत्तिष्ठेत यथाकालं मलानां शोधनं प्रति॥

**अस5.27**
चयकाष्ठामुपारुह्य कुर्वते ते ह्युपेक्षिताः।
प्रायशः सुचिरेणापि भेषजद्वेषिणोगदान्॥

**अस5.28**
अतिस्थौल्याग्निसदनमेहकुष्ठहृतौजसः।
स्रोतोरोधाक्षविभ्रंशश्वासश्वयथुपाण्डुताः॥

**अस5.29**
आमोरुस्तम्भजठरकृच्छ्रालसकदण्डकान्।
च्छर्दिगण्डकृमिग्रन्थितन्द्रादुःस्वप्नदर्शनम्॥

**अस5.30**
कण्ठामयान् मूर्द्धरुजं प्रणाशं बुद्धिनिद्रयोः।
तेजोवर्णबलानां च तृप्यतो बृंहणैरपि॥

**अस5.31**
उचितैरपि चाहारैर्यस्मादस्य वहन्ति न।
दोषोपलिप्तवदना रसं रसवहाः सिराः॥

**अस5.32**
वमनादीनतो युञ्ज्यात् स्वस्थस्यैव यथाविधि।
दोषाः कदाचित् कुप्यन्ति जिता लङ्घनपाचनैः॥

**अस5.33**
ये तु संशोधनैः शुद्धा न तेषां पुनरुद्भवः।
यथाक्रमं यथायोगमत ऊर्ध्वं प्रयोजयेत्॥

**अस5.34**
रसायनानि सिद्धानि वृष्ययोगांश्च कालवित्।
भेषजक्षपिते पथ्यमाहारैर्बृंहणं क्रमात्॥

**अस5.35**
शालिषष्टिकगोधूममांसक्षीरघृतादिभिः।
हृद्यदीपनभैषज्यसंयोगाद्रुचिपक्तिदैः॥

**अस5.36**
साभ्यङ्गोद्वर्तनस्नाननिरूहस्नेहबस्तिभिः।
तथा स लभते शर्म सर्वपावकपाटवम्॥

**अस5.37**
धीवर्णेन्द्रियवैमल्यं वृषतां दैर्घ्यमायुषः।
ये भूतविषवाय्वग्निक्षतभङ्गादिसम्भवाः॥

**अस5.58**
कामक्रोधभयाद्याश्च ते स्युरागन्तवो गदाः।
त्यागः प्रज्ञापराधानामिन्द्रियोपशमः स्मृतिः॥

**अस5.59**
देशकालात्मविज्ञानं सद्वृत्तस्यानुवर्तनम्।
अथर्वविहिता शान्तिः प्रतिकूलग्रहार्चनम्॥

**अस5.60**
भूताद्यस्पर्शनोपायो निर्दिष्टश्च पृथक् पृथक्।
अनुत्पत्यै समासेन विधिरेष प्रदर्शितः॥

**अस5.61**
निजागन्तुविकाराणामुत्पन्नानां च शान्तये॥

**अस5.62**
शीतोद्भवं दोषचयं वसन्ते विशोधयन् ग्रीष्मजमभ्रकाले।
घनात्यये वार्षिकमाशु सम्यक् प्राप्नोति रोगानृतुजान् न जातु॥

**अस5.63**
नित्यं हिताहारविहारसेवी समीक्ष्यकारी विषयेष्वसक्तः।
दाता समः सत्यपरः क्षमावानाप्तोपसेवी च भवत्यरोगः॥

**अस5.64**
अर्थेष्वलभ्येष्वकृतप्रयत्नं कृतादरं नित्यमपायवत्सु।
जितेन्द्रियं नानुपतान्ति रोगास्तत्कालयुक्तं यदि नास्ति दैवम्॥

**अस5.65**
कालेऽनुकूलो विषया मनोज्ञा धर्म्याः क्रियाः कर्म सुखानुबन्धि।
सत्त्वं विधेयं विशदा च बुद्धिर्भवन्ति धीरस्य सदा सुखाय॥

इति पञ्चमोऽध्यायः

# षष्ठोऽध्यायः

**अस6.1**
अथातोद्रवद्रव्यविज्ञानीयं नामाध्यायं व्याख्यास्यामः।
इति हस्माहुरात्रेयादयो महर्षयः॥

**अस6.2**
जीवनं तर्पणं हृद्यं ह्लादि बुद्धिप्रबोधनम्।
तन्वव्यक्तरसं मृष्टं शीतं शुच्यमृतोपमम्॥

**अस6.3**
सूर्योध्दृतप्रमुक्तत्वाल्लघु वातकंफापहम्।
शैत्यजीवनसौम्यत्वैः पित्तरक्तविषार्तिजित्॥

**अस6.4**
गङ्गाम्बु नभसो भ्रष्टं त्वर्केन्दुमारुतैः।
हिताहितत्वे तत् भूयो देशकालावपेक्षते॥

**अस6.5**
येनाभिवृष्टममलं शाल्यन्नं राजतस्थितम्।
अक्लिन्नमविवर्णं वा तत् पेयं गाङ्गमन्यथा॥

**अस6.6**
सामुद्रं तन्न पातव्यं मासादाश्वयुजाद्विना।
खातधौतशिलापृष्ठवस्त्रादिभ्यश्च्युतं जलम्॥

**अस6.7**
हेममृन्मयपात्रस्थमविपन्नं सदा पिबेत्।
तदभावे च भूमिष्ठमान्तरिक्षानुकारि यत्॥

**अस6.8**
श्वेते कषायं तत्स्वादु कृष्णे तिक्तं च पाण्डुरे।
नीले कषायमधुरं देशे लवणमूषरे॥

**अस6.9**
सक्षारं कपिले मिश्रं मिश्रेऽथाम्बुगुणाधिके।
मधुरं लवणाम्लं तु भवेत्भूमिगुणाधिके॥

**अस6.10**
तेजोधिके तिक्तकटु कषायं पवनाधिके।
दिव्यानुकारि त्वव्यक्तरसत्वात् खगुणाधिके॥

**अस6.11**
शुचिपृथ्वसितश्वेते देशे चार्कानिलाहतम्।
कौपसारसताटाकचौण्डप्रास्रवणौद्भिदम्॥

**अस6.12**
वापीनदीतोयमिति तत् पुनः स्मृतमष्टधा।
सक्षारं पित्तकृत् कौपं दीपनान्नातिवातलम्॥

**अस6.13**
सारसं स्वादु लघु च ताटाकं गुरु वातलम्।
चौण्डं तु पित्तलं दोषहरं प्रास्रवणोदकम्॥

**अस6.14**
औद्भिदं स्वादु पित्तघ्नं स्वादु वापीजलं गघु।
नादेयं वातलं रूक्षं कटुकं च तदादिशेत्॥

**अस6.15**
धन्वानूपमहीध्राणां सामीप्यात् गुरुलाघवम्।
पश्चिमोदधिगाः शीघ्रवहा याश्चामलोदकाः॥

**अस6.16**
पथ्याः समासात्ता नद्यो विपरीतास्ततोऽन्यथा।
उपलास्फालनाक्षेपविच्छेदैः खेदितोदकाः॥

**अस6.17**
हिमवन्मलयोद्भूताः पथ्यास्ता एव च स्थिताः।
क्रिमिश्लीपदहृत्कण्ठशिरोरोगान् प्रकुर्वते॥

**अस6.18**
प्राच्यावन्त्यपरान्तोत्था दुर्नामानि महेन्द्रजाः।
उदरश्लीपदातङ्कान् सह्यविन्ध्यभवाः पुनः॥

**अस6.19**
कुष्ठपाण्डुशिरोरोगान् दोषघ्न्यः पारियात्रजाः।
बलपौरुषकारिण्यः सागराम्भस्त्रिदोषकृत्॥

अस6.20। कीटाहिमूत्रविट्कोथतृणजालोत्कराविलम्।
पङ्कपङ्कजशैवालहठपर्णादिसंस्तृतम्॥

**अस6.21**
सूर्येन्दुपवनादृष्टं जुष्टं च क्षुद्रजन्तुभिः।
अभिवृष्टं विवर्णं च कलुषं स्थूलफेनिलम्॥

**अस6.22**
विरसं गन्धवत्तप्तं दन्तग्राह्यतिशैत्यतः।
अनार्तवं च यद्दिव्यमार्तवं प्रथमं च यत्॥

**अस6.23**
लूतादितन्तुविण्मूत्रविषसंश्लेषदूषितम्।
तत् कुर्यात् स्नानपानाभ्यां तृष्णाध्मानोदरज्वरान्॥

**अस6.24**
कासाग्निसादाभिष्यन्दकण्डूगण्डादिकानतः।
तद्वर्जयेदभवे वा तोयस्यान्यस्य शस्यते॥

**अस6.25**
घनवस्त्रपरिस्रावैः क्षुद्रजन्त्वभिरक्षणम्।
व्यापन्नस्यास्य तपनमग्न्यर्कायसपिण्डकैः॥

**अस6.26**
पर्णीमूलबिसग्रन्थिमुक्ताकतकशैवलैः।
वस्त्रगोमेदकाभ्यां वा कारयेत्तत्प्रसादनम्॥

**अस6.27**
पाटलाकरवीरादिकुसुमैर्गन्धनाशनम्।
पानीयं न तु पानीयं पानीयेऽन्यप्रदेशजे॥

**अस6.28**
अजीर्णे क्वथितं चा++आमे पक्वे जीर्णेऽपि नेतरत्।
शीते विधिरयं तप्ते त्वजीर्णे शिशिरं त्यजेत्॥

**अस6.29**
पानीयं प्राणिनां प्राणा विश्वमेव च तन्मयम्।
अतोऽत्यन्तनिषेधेन न क्वचिद्वारि वार्यते॥

**अस6.30**
आस्यशोषाङ्गसादाद्या मृत्युर्वा तदलाभतः।
न हि तोयाद्विना वृत्तिः स्वस्थस्य व्याधितस्य वा॥

**अस6.31**
केवलं सौषधं पक्वमाममुष्णं हितं च तत्।
समीक्ष्य मात्रया युक्तममृतं विषमन्यया॥

**अस6.32**
अतियोगेन सलिलं तृष्यतोऽपि प्रयोजितम्।
प्रयाति श्लेष्मपित्तत्वं ज्वरितस्य विशेषतः॥

**अस6.33**
वर्धयत्यामतृण्निद्रातन्द्राध्मानाङ्गगौरवम्।
कासाग्निसादहृल्लासप्रसेकश्वासपीनसान्॥

**अस6.34**
पाके स्वादु हिमं वीर्ये तदुष्णमपि योजितम्।
तस्मादयोगपानेन लाघवान्न वियोजयेत्॥

**अस6.35**
आमविष्टब्धयोः कोष्णं निष्पिपासोऽप्यपः पिबेत्।
यावत्यः क्लेदयन्त्यन्नमतिक्लेदोऽग्निनाशनः॥

**अस6.36**
विबद्धः कफवाताभ्यां मुक्तामाशयबन्धनः।
पच्यते क्षिप्रमाहारः कोष्णतोयद्रवीकृतः॥

**अस6.37**
अनव्बस्थितदोषाग्नेर्व्याधिक्षीणबलस्य च।
नाल्पमप्याममुदकं हितं तद्धि त्रिदोषकृत्॥

**अस6.38**
तेजसः प्रतिपक्षत्वान्मन्दाग्निर्वर्जयेज्जलम्।
सर्वमेव तथा स्यन्दप्लीहविद्रधिगुल्मिनः॥

**अस6.39**
पाण्डूदरातिसारार्शोग्रहणीशोषशोफिनः।
काममल्पमशक्तौ तु पेयमौषधसंस्कृतम्॥

**अस6.40**
ऋते शरन्निदाघाभ्यां पिबेत्स्वस्थोऽपि चाल्पशः।
भक्तस्यादौ जलं पीतमग्निसादं कृशाङ्गताम्॥

**अस6.41**
अन्ते करोति स्थूलत्वमूर्ध्वं चामाशयात् कफम्।
मध्ये मध्याङ्गतां साम्यं धातूनां जरणं सुखम्॥

**अस6.42**
शीतं मदात्ययग्लानिमूर्छाछर्दिश्रमभ्रमान्।
तृष्णोष्णदाहपित्तासृग्विषाणि च निहन्ति तत्॥

**अस6.43**
क्षीणपादत्रिभागार्धं देशर्तुगुरुलाघवात्।
क्वथितं फेनरहितमवेगममलं हितम्॥

**अस6.44**
हिध्माध्मानानिलश्लेष्मतृट्कासश्वासपीनसे।
पार्श्वशूलाममेदस्सु सद्यःशुद्धौ नवज्वरे॥

**अस6.45**
दीपनं पाचनं कण्ठ्यं लघु बस्तिविशोधनम्।
पाषाणरूप्यमृद्धेमजतुतापार्कतापितम्॥

**अस6.46**
पानीयमुष्णं शीतं वा त्रिदोषघ्नं तृडरितिजित्।
लघ्वरूक्षं क्लमघ्नञ्च तोयंक्वथितशीतलम्॥

**अस6.47**
संसर्गे पित्तकफयोः सन्निपाते च शस्यते।
तोयं वन्हिगुणभ्रष्टं पाकेऽम्लं सर्वदोषकृत्॥

**अस6.48**
भवेत् पर्युषितं तच्च तोयं हिमकरोद्भवम्।
अतिशैत्यगुरुस्थैर्यङ्घातैः कफवातकृत्॥

**अस6.49**
चन्द्रकान्तभवं रक्षोविषपित्तज्वरापहम्।
दृष्टिमेधावपुस्थैर्यकरं स्वादु हिमं लघु॥

**अस6.50**
नालिकेरोदकं स्निग्धं स्वादु वृष्यं हिमं लघु।
तृष्णापित्तानिलहरं दीपनं बस्तिशोधनम्।
दिव्यं वारि वरं वर्षे नादेयमवरं॥
इति तोयवर्गः।

**अस6.51**
स्वादुपाकरसं स्निग्धमोजस्यं धातुवर्धनम्।
वातपित्तहरं वृष्यं श्लेष्मलं गुरु शीतलं॥

**अस6.52**
प्रायः पयः अत्र गव्यं तु जीवनीयं रसायनम्।
क्षतक्षीणहितं मेध्यं बल्यं स्तन्यकरं सरम्॥

**अस6.53**
श्रमभ्रममदालक्ष्मीश्वासकासातितृट्क्षुधः।
जीर्णज्वरं मूत्रकृच्छ्रं रक्तपित्तं च नाशयेत्॥

**अस6.54**
हितमत्यग्न्यनिद्रेभ्यो गरीयो माहिषं हिमम्।
अल्पाम्बुपानव्यायामकटुतिक्ताशनैर्लघु॥

**अस6.55**
आजं शोषज्वरश्वासरक्तपित्तातिसारजित्।
ईषद्रूक्षोष्णलवणमौष्ट्रकं दीपनं लघु॥

**अस6.56**
शस्तं वातकफानाहक्रिमिशोफोदरार्शसाम्।
मानुषं वातपित्तासृग्भिघाताक्षिरोगजित्॥

**अस6.57**
तर्पणाश्च्योतनैर्नस्यैः अहृद्यं तूष्णमाविकम्।
वातव्याधिहरं हिध्माश्वासपित्तकफप्रदम्॥

**अस6.58**
हस्तिन्याः स्थैर्यकृत् बाढं उष्णं त्वैकशफं लघु।
शाखावातहरं साम्ललवणं जडताकरम्॥

**अस6.59**
पयोऽभिष्यन्दि गुर्वामं युक्त्या शृतमतोऽन्यथा।
भवेत् गरीयोऽतिशृतं धारोष्णममृतोपमम्॥

**अस6.60**
पिण्याकाम्लाशिनीनां तु गुर्वभिष्यन्दि तत् भृशम्।
अचेष्टया च प्रादोषात् गरीयः स्मृतमौषसम्॥

**अस6.61**
व्याख्यातस्तेन लघिमा चेष्टावत्प्रकृतिष्वपि।
ह्रस्वेषु चातिदेहेभ्यो मांसेष्वप्येवमादिशेत्॥

**अस6.62**
अम्लपाकरसं ग्राहि गुरूष्णं दधि वातजित्।
मेदःशुक्रबलश्लेष्मपित्तरक्ताग्निशोफकृत्॥

**अस6.63**
रोचिष्णु शस्तमरुचौ शीतके विषमज्वरे।
पीनसे मूत्रकुच्छ्रे च रूक्षं तु ग्रहणीगदे॥

**अस6.64**
नैवाद्यान्निशि नैवोष्णं वसन्तोष्णशरत्सु न।
नामुद्गसूपं नाक्षौद्रं नाघृतं नासितोपलम्॥

**अस6.65**
न चानामलकं नापि नित्यं नो मन्दमन्यथा।
ज्वरासृक्पित्तवीसर्पकुष्ठपाण्ड्वामयप्रदम्॥

अस6.65?। तक्रं लघु कषायाम्लं दीपनं कफवातजित्।
शोफोदरार्शोग्रहणीदोषमूत्रग्रहारुचीः॥

**अस6.66**
गुल्मप्लीहघृतव्यापद्गरपाण्ड्वामयान् जयेत्।
तद्वन्मस्तु सरं स्रोतश्शोधि विष्टम्भजिल्लघु॥

**अस6.67**
शीतं स्वादु कषायाम्लं नवनीतं नवोद्धृतं।
यक्ष्मार्शोर्द्दितपित्तासृग्वातजिद् ग्राहि दीपनम्॥

**अस6.68**
क्षीरोद्भवं तु सङ्ग्राहि रक्तपित्ताक्षिरोगजित्।
शस्तं धीस्मृतिमेधाग्निबलायुःशुक्रचक्षुषाम्॥

**अस6.69**
बालवृद्धप्रजाकान्तिसौकुमार्यस्वरार्थिनाम्।
क्षतक्षीणपरीसर्पशस्त्राग्निग्लपितात्मनाम्॥

**अस6.70**
वातपित्तविषोन्मादशोषालक्ष्मीज्वरापहम्।
स्नेहानामुत्तमं शीतं वयसः स्थापनं घृतम्॥

**अस6.71**
सहस्रवीर्यं विधिभिः शृतं कर्मसहस्रकृत्।
मदापस्मारमूर्छायशिरःकर्णाक्षियोनिजान्॥

**अस6.72**
पुराणं जयति व्याधीन् व्रणशोधनरोपणम्। पूर्वोक्तांश्चाधिकान् कुर्यात् गुणांस्तदमृतोपमम्॥

**अस6.73**
तद्वच्च घृतमण्डोऽपि रुक्षस्तीक्ष्णस्तनुश्च सः।
कीलाटदधिकूचीकातक्रपिण्डकमोरटाः॥

**अस6.74**
सक्षीरशाकपीयूषा रोचना वह्निसादनाः।
शुक्रनिद्राकफकरा विष्टम्भिगुरुदोषलाः॥

**अस6.75**
विद्याद्दधिघृतादीनां गुणदोषान् यथा पयः।
गव्ये क्षीरघृते श्रेष्ठे निन्दिते चाविसम्भवे॥
इति क्षीरवर्गः।

**अस6.76**
इक्षोः सरो गुरुः स्निग्धो वृंहणः कफमूत्रकृत्॥

**अस6.77**
वृष्यः शीतः पवनजित् भुक्ते वातप्रकोपनः।
रक्तपित्तप्रशमनः स्वादुपाकरसो रसः॥

**अस6.78**
सोऽग्रे सलवणो दन्तपीडितः शर्करासमः।
मूलाग्रजन्तुजग्धादिपीडनान्मलसङ्करात्॥

**अस6.79**
किञ्चित् कालविधृत्या च विकृतिं याति यान्त्रिकः।
विदाही गुरु विष्टम्भी तेनासौतत्र पौण्ड्रकः।

शैत्यप्रसादमाधुर्याद्वरस्तमनुवांशिकः॥

**अस6.80**
शातपर्वककान्तारनैपालाद्यास्ततः क्रमात्।
सक्षाराः सकषायाश्च सोष्णाः किञ्चिद्विदाहिनः॥

**अस6.81**
फाणितं गुर्वभिष्यन्दि चयकृन्मूत्रशोधनम्।
नातिश्लेष्मकरो धौतः सृष्टमूत्रशकृत् गुडः॥

**अस6.82**
प्रभूतक्रिमिमज्जासृङ्भेदोमांसकफोऽपरः।
हृद्यः पुराणः पथ्यश्च नवः श्लेष्माग्निसादकृत्॥

**अस6.83**
वृष्याः क्षीणक्षतहिता रक्तपित्तानिलापहाः।
मत्स्यण्डिकाखण्डसिताः क्रमेण गुणवत्तमाः॥

**अस6.84**
तद्गुणा तिक्तमधुरा कषाया याषशर्करा।
त्रिदोषघ्नी सिता काशेषुदर्भच्छदसम्भवा॥

**अस6.85**
दाहतृट्च्छर्दिमूर्च्छासृक्तिपत्तघ्नः सर्वशर्कराः।
शर्करेक्षुविकाराणां फाणितं च वरावरे॥

**अस6.86**
चक्षुष्यं च्छेदि तृट्श्लेष्मविषहिध्मास्रपित्तनुत्।
कुष्ठमेहकृमिच्छर्दिश्वासकासातिसारजित्॥

**अस6.87**
व्रणशोधनसन्धानरोपणं वातलं मधु।
रूक्षं कषायमधुरम् तत्तुल्या मधुशर्करा॥

**अस6.88**
उष्णमुष्णार्तमुष्णे च युक्तं चोष्णैर्निहन्ति तत्।
विषान्वयत्वेन विषपुष्पेभ्योऽपि यतो मधु॥

**अस6.89**
कुर्वते ते स्वयं यच्च सविषा भ्रमरादयः।
प्रच्छर्दने निरूहे च मधूष्णं न निवार्यते॥

**अस6.90**
अलब्धपाकमाश्वेव तयोर्यस्मान्निवर्तते।
गुरुरूक्षकषायत्वाच्छैत्याच्चाल्पं हितं मधु॥

**अस6.91**
न हि कष्टतमं किञ्चित्तदजीर्णाद्यतो नरम्।
उपक्रमविरोधित्वात् सद्यो हन्याद्यथा विषम्॥

**अस6.92**
नानाद्रव्यात्मकत्वाच्च्च योगवाहि परं मधु।
वृष्ययोगैरतो युक्तं वृषतामनुवर्तते॥

**अस6.93**
भ्रामरं पौष्पिकं क्षौद्रं माक्षिकं च यथोत्तरम्।
वरं जीर्णं च तेष्वन्त्ये द्वे एव ह्युपयोजयेत्॥
इति इक्षु वर्गः।

**अस6.94**
तैलं स्वयोनिवत्तत्र मुख्यं तीक्ष्णं व्यवायि च।
त्वग्दोषकृदचक्षुष्यं सूक्ष्मोष्णं कफकृन्न च॥

**अस6.95**
कृशानां बृंहणायालं स्थूलानां कर्शनाय च।
बद्धविट्कं क्रिमिघ्नं च संस्कारात्सर्वरोगजित्॥

**अस6.96**
तैलप्रयोगादजरा निर्विकारा जितश्रमाः।
आसन्नतिबला युद्धे दैत्याधिपतयः पुरा॥

**अस6.97**
सतिक्तोषणमैरण्डं तैलं स्वादु सरं गुरु।
वर्ध्मगुल्मानिलकफानुदरं विषमज्वरम्॥

**अस6.98**
रुक्छोफौ च कटीगुह्यकोष्ठपृष्ठाश्रयौ जयेत्।
तीक्ष्णोष्णं पिच्छिलं विस्रं रक्तैरण्डोद्भवं त्वति॥

**अस6.99**
उमाकुसुम्भजं चोष्णं त्वग्दोषकफपित्तकृत्।
दन्तीमूलकरक्षोघ्नकरञ्जारिष्टशिग्रुजम्॥

**अस6.100**
सुवर्चलेङ्गुदीपीलुशाङ्खिनीनीपसम्भवम्।
सरलागरुदेवाह्वशिंशपासारजन्म च॥

**अस6.101**
तुवरारुष्करोत्थं च तीक्ष्णं कट्वस्रपित्तकृत्।
अर्शःकुष्ठक्रिमिश्लेष्मशुक्रमेदोनिलापहम्॥

**अस6.102**
करञ्जनिम्बजे तिक्ते नात्युष्णे तत्र निर्दिशेत्।
कषायतिक्तकटुकं सारलं व्रणशोधनम्॥

**अस6.103**
भृशोष्णतीक्ष्णकटुके तुवरारुष्करोद्भवे।
विशेषात् क्रिमिकुष्ठघ्ने तथोर्ध्वाधोविरेचने॥

**अस6.104**
अक्षातिमुक्तकाक्षोडनालिकेरमधूकजम्।
त्रपुसोर्वारुकूष्माण्डश्लेष्मातकप्रियालजम्॥

**अस6.105**
वातपित्तहरं केश्यं श्लेष्मलं गुरु शीतलम्।
पित्तश्लेष्मप्रशमनं श्रीपर्णीकिंशुकोद्भवम्॥

**अस6.106**
तिलतैलं वरं तेषु कौसुम्भमवरं परम्।
वसा मज्जा च वातघ्नौ बलपित्तकफप्रदौ॥

**अस6.107**
मांसानुगस्वरूपौ च विद्यान्मेदोपि ताविव।
बौलूकी सौकरी पाकहंसजा कुक्कुटोद्भवा॥

**अस6.108**
वसा श्रेष्ठा स्ववर्गेषु कुम्भीरमहिषोद्भवा।
काकमद्गु वसा तद्वत् कारण्डोत्था च निन्दिता॥

**अस6.109**
दीपनं रोचनं मद्यं तीक्ष्णोक्ष्णं तुष्टिपुष्टिदम्।
सत्वादुतिक्तकटुकमम्लपाकरसं सरम्॥

**अस6.110**
सकषायं स्वरारोग्यप्रतिभावर्णकृल्लघु।
नष्टनिद्रातिनिद्रेभ्यो हितं पित्तास्रदूषणम्॥

**अस6.111**
कृशस्थूलहितं रूक्षं सूक्ष्मं स्रोतोविशोधनम्।
वातश्लेष्महरं युक्त्या पीतं विषवदन्यथा॥

**अस6.112**
गुरु तद्दोषजननं नवं जीर्णमतोऽन्यथा।
पेयं नोष्णोपचरेण न विरिक्तक्षुधातुरैः॥

**अस6.113**
नातितीक्ष्णमृदुस्वच्छघनं व्यापन्नमेव वा।
गुल्मोदरार्शोग्रहणीशोषहृत् स्नेहनी गुरुः॥

**अस6.114**
सुरनिलघ्नी मेदोसृक्स्तन्यमूत्रकफावहा।
तद्गुणा वारुणी हृद्या लघुस्तीक्ष्णा निहन्ति च॥

**अस6.115**
शूलकासवमिश्वासविबन्धाध्मानपीनसान्।
शूलप्रवाहिकाटोपतृष्णाशोफार्शसां हितः॥

**अस6.116**
जगलः पाचनो ग्राही रूक्षस्तद्वच्च मेदकः।
बक्कसो हृतसारत्वाद्विष्टम्भी दोषकोपनः॥

**अस6.117**
नातितीव्रमदा लघ्वी पथ्या बैभीतकी सुरा।
व्रणे पाण्ड्वामये कुष्ठे न चात्यर्थं विरुध्यते॥

**अस6.118**
विष्टम्भिनी यवसुरा गुर्वी रूक्षा त्रिदोषला।
कौहली बृंहणी गुर्वी श्लेष्मलस्तु मधूलकः॥

**अस6.119**
यथाद्रव्यगुणोऽरिष्टः सर्वमद्यगुणाधिकः।
ग्रहणीपाण्डुकुष्ठार्शः शोषशोफोदरज्वरान्॥

**अस6.120**
हन्ति गुल्माक्रिमिफीहः कषायकटुवातलः।
मार्द्विकं लेखनं हृद्यं नात्युष्णं मधुरं सरम्॥

**अस6.121**
अल्पपित्तानिलं पाण्डुमेहार्शःक्रिमिनाशनम्।
अस्मादल्पान्तरगुणं खार्जूरं वातलं गुरु॥

**अस6.122**
शार्करः सुरभिः त्वादुर्हृद्यो नातिमदो मघुः।
सृष्टमूत्रशकृद्वातो गौडस्तर्पणदीपनः॥

**अस6.123**
वातपित्तकरः शीधुः स्नेहश्लेष्मविकारहा।
मेदःशोफोदरार्शोघ्नस्तत्र पक्वरसो वरः॥

**अस6.124**
च्छेदि मध्वासवस्तीक्ष्णो मेहपीनसकासजित्।
सुरासवस्तीक्ष्णमदः स्वादुस्तीक्ष्णोऽनिलापहः॥

**अस6.125**
मैरेयो मधुरो हृष्यः सरः सन्तर्पणो गुरुः।
धातक्यभिषुतो जीर्णो रूक्षो रोचनदीपनः॥

**अस6.126**
द्राक्षासवो मधुसमः परमं स तु दीपनः।
मार्द्वीकसदृशः प्रोक्तो मृद्वीकेक्षुरसासवः॥

**अस6.127**
समासादासवो हृद्यो वातलः सौषधानुगः।
द्राक्षेक्षुमाक्षिकं शालिरुत्तमा व्रीहिपञ्चमाः॥

**अस6.128**
मद्याकरा यत्तेभ्योऽन्यत्तन्मद्यप्रतिरूपकम्।
गुणैर्यथोद्बणैर्विद्यान्मद्यमाकरसङ्करात्॥

**अस6.129**
रक्तपित्तकफोत्क्लेदि शुक्तं वातानुलोमनम्।
विदाहि भृशतीक्ष्णोक्ष्णं हृद्यं रुचिकरं सरम्॥

**अस6.130**
दीपनं शिशिरस्पर्शं पाण्डुदृक्कृमिनाशनम्।
गुडेक्षुमद्यमार्द्वीकशुक्तं लघु यथोत्तरम्॥

**अस6.131**
कन्दमूलफलाद्यांश्च तद्वद्विद्यात्तदासुतान्।
शाण्डाकी चाऽसुतं चान्यत् कालाम्लं रोचनं लघु॥

**अस6.132**
धान्याम्लं भेदि तीक्ष्णोष्णं पित्तकृत् स्पर्शशीतलम्।
श्रमक्लमहरं रुच्यं दीपनं बस्तिशूलनुत्॥

**अस6.133**
शस्तमास्थापने हृद्यं लघु वातकफापहम्।
एभिरेव गुणैर्युक्ते सौवीरकतुषोदके॥

**अस6.134**
क्रिमिहृद्रोगगुल्मार्शःपाण्डुरोगनिबर्हणे।
ते क्रमाद्वितुषैर्विद्यात्सतुषैश्च यवैः कृते॥
इति मद्यवर्गः।

**अस6.135**
मूत्रं गोजाविमहिषीगजाश्वोष्ट्रखरोद्भवम्।
पित्तलं रूक्षतीक्ष्णोष्णं लवणानुरसं कटु॥

**अस6.136**
क्रिमिशोफोदरानाहशूलपाण्डुकफानिलान्।
गुल्मारुचिविषश्वित्रकुष्ठार्शांसि जयेल्लघु॥

**अस6.137**
विरेकास्थापनालेपस्वेदादिषु च पूजितम्।
दीपनं पाचनं भेदि तेषु गोमूत्रमुत्तमम्॥

**अस6.138**
श्वासकासहरं च्छागं पूरणात् कर्णशूलजित्।
दद्यात् क्षारे किलासे च गजवाजिसमुद्भवम्॥

**अस6.139**
हन्त्युन्मादमपस्मारं क्रिमीन्मेहञ्च रासभम्।
कषायतिक्तमेतेषां हिध्माश्वासहरं शकृत्॥

**अस6.140**
मार्गमोजःक्षयहरं वैष्किरं वातरोगनुत्।
प्रसहानामपस्मारमुन्मादञ्च नियच्छति॥

**अस6.141**
महामृगसमुद्भूतं कुष्ठहृज्जलचारिणाम्।
नेत्ररोगहरं पित्तं प्रवृद्धं च नियच्छति॥

**अस6.142**
पित्तं तिक्तं विषहरं रोचना कफवातजित्।
तिक्ता पाप्माहरामूत्रं मानुषं तु विषापहम्॥

**अस6.143**
तोयक्षीरेक्षुतैलानां वर्गैर्मद्यस्य च क्रमात्।
इति द्रवैकदेशोऽयं यथास्थूलमुदाहृतः॥
इति षष्ठोऽध्यायः

# सप्तमोऽध्यायः

**अस7.1**
अथात अन्नस्वरूपविज्ञानीयं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अस7.2**
रक्तो महान् सकलमस्तूर्णकः शकुनाहृतः।
शारामुखो दीर्घशूको लोध्रशूकः सुगन्धिकः॥

**अस7.3**
पुण्ड्रः पाण्डुः पुण्डरीकः प्रमोदो गौरशारिवौ।
काञ्चनो महिषः शूको दूषकः कुसुमाण्डकः॥

**अस7.4**
लाङ्गला लोहवालाख्याः कर्दमाः शीतभीरुकाः।
पतङ्गास्तपनीयाश्च ये चान्ये शालयः शुभाः॥

**अस7.5**
स्वादुपाकरसाः स्निग्धा वृष्या बद्धाल्पवर्चसः।
कषायानुरसाः पथ्या लघवो मूत्रला हिमाः॥

**अस7.6**
शूकजेषु वरस्तत्र रक्तस्तृष्णात्रिदोषहा।
महांस्तं चानु कलमस्तं चाप्यनु ततः परे॥

**अस7.7**
यवका हायनाः पांसुवाप्यनैषधकादयः।
स्वादूष्णा गुरवः स्निग्धाः पाकेऽम्लाः श्लेष्मपित्तलाः॥

**अस7.8**
सृष्टमूत्रपुरीषाश्च पूर्वं पूर्वं च निन्दिताः।
स्निग्धो ग्राही लघुः स्वादुस्त्रिदोषघ्नः स्थिरो हिमः॥

**अस7.9**
षष्टिको व्रीहिषु श्रेष्ठो गौरश्चासितगौरतः।
ततः क्रमान्महाव्रीहिकृष्णव्रीहिजतूमुखाः॥

**अस7.10**
कुक्कुटाण्डकलाबाक्षपारावतकसूकराः।
वरकोद्दालकोज्जालचीनशारददर्दुराः॥

**अस7.11**
गन्धनाः कुरुविन्दाश्च गुणैरल्पान्तराः स्मृताः।
स्वादुरम्लविपाकोऽन्यो व्रीहिः पित्तकरो गुरुः॥

**अस7.12**
बहुमूत्रपुरीषोष्मा त्रिदोषस्त्वेव पाटलः।
कङ्गुकोद्रवजूर्णाह्वगदीवरुणपादिकाः॥

**अस7.13**
श्यामाकतोयश्यामाकहस्तिश्यामाकशिल्बिकाः।
शिशिरोद्दालनीवारवरूकबरकोत्कटाः॥

**अस7.14**
मधूलिकान्तनिर्गण्डीवेणुपर्णीप्रशान्तिकाः।
गवेथुकाण्डलौहित्यतोयपर्णीमुकुन्दराः॥

**अस7.15**
कफपित्तहरा रूक्साः कषायमधुरा हिमाः।
वातला बद्धविण्मूत्रा लघवो लेखनात्मकाः॥

**अस7.16**
भग्नसन्धानकृत्तत्र प्रियङ्गुबृंहणी गुरुः।
कोरदूषः परं ग्राई स्पर्शे शीतो विषापहः॥

**अस7.17**
उद्दालकस्तु वीर्योष्णो नीवारः श्लेष्मवर्धनः।
शीतवीर्या विशेषेण स्निग्धा वृष्या मधूलिका॥

**अस7.18**
रूक्षः शीतो गुरुः स्वादुः सरो विड्वातकृद्यवः।
वृष्यः स्थैर्यकरो मूत्रमेदःपित्तकफान् जयेत्॥

**अस7.19**
पीनसश्वासकासोरुस्तम्भकण्ठत्वगामयान्।
गुणैर्न्यूनतरा ज्ञेया यवादनुयवाह्वयाः॥

**अस7.20**
ऊष्णाः सरा वेणुयवाः कषाया वातपित्तलाः।
वृष्यः शीतो गुरुः स्निग्धो जीवनो वातपित्तहा॥

**अस7.21**
सन्धानकरी मधुरो गोधूमः स्थैर्यकृत् सरः।
पथ्या नन्दीमुखी शीता कषाया मधुरा लघुः॥
इति शूकधान्यवर्गः।

**अस7.22**
शिम्बिजा मुद्गमङ्गल्यवनमुद्गमकुष्ठकाः।
मसूरकफलाढक्यश्चणकाश्चपृथग्विधाः॥

**अस7.23**
कषायस्वादुलघवो विबन्धाध्मानकारिणः।
रूक्षा बद्धमलाः शीता विपाके कटुका हिताः॥

**अस7.24**
पित्तासृक्कफमेदस्सु सूपालेपादियोजनात्।
सूप्यानामुत्तमा मुद्गा लघीयांशोऽल्पमारुताः॥

**अस7.25**
हरितास्तेष्वपि वरा मकुष्ठाः क्रिमिकारिणः।
वर्ण्याः परं प्रलेपाद्यैर्मसूरा ग्राहिणो भृशम्॥

**अस7.26**
राजमाषो गुरुर्भूरिशकृद्रूक्सोऽतिवातलः।
कषायस्वादुरूक्षोष्णाः कुलत्था रक्तपित्तलाः॥

**अस7.27**
पीनसश्वासकासार्शोहिध्मानाहकफानिलान्।
घ्नन्ति शुक्राश्मरीं शुक्रं दृष्टिं शोफं तथोदरम्॥

**अस7.28**
ग्राहिणो लघवस्तीक्ष्णा विपाकेऽम्ला विदाहिनः।
निष्पावस्तु सरो रूक्षः कषायमधुरो गुरुः॥

**अस7.29**
पाकेऽम्लो वातविष्टम्भी स्तन्यमूत्रास्रपित्तकृत्।
उष्णो विदाही दृक्च्छुक्रकफशोफविशापहः॥

**अस7.30**
माषः स्निग्धो बलश्लेष्ममलपित्तकरः सरः।
गुरूष्णोऽनिलहा स्वादुः शुक्रवृद्धिविरेककृत्॥

**अस7.31**
फलानि गुणवद्विद्यात् काकाण्डोलात्मगुप्तयोः।
कुशाम्रशिम्बी मधुरा वातपित्तहरा हिमा॥

**अस7.32**
मधुराः शीतला गुर्व्यो बलघ्न्यो रूक्षणात्मिकाः।
स्नेहाढ्या बलिभिर्भोज्या विविधाः शिम्बिजातयः॥

**अस7.33**
स्निग्धोष्णतिक्तकटुकः कषायमधुरस्तिलः।
मेध्यः केश्यो गुरुर्वर्ण्यः स्पर्शशीतोऽनिलापहः॥

**अस7.34**
अल्पमूत्रः कटुः पाके मेधाग्निकफपित्तकृत्।
कृष्णः प्रशस्तस्तमनु शुक्लस्तमनु चारुण॥

**अस7.35**
स्निग्धोमा स्वादुतिक्तोष्णा कफपित्तकरी गुरुः।
दृक्च्छुक्रहृत् कटुः पाके तद्वत् बीजं कुसुम्भजम्॥

**अस7.36**
माषोऽत्र सर्वेष्ववरो यवकः शूकजेषु च।
नवं धान्यमभिष्यन्दि सेक्यं केदारजं च यत्॥

**अस7.37**
लघु वर्षोषितं दग्धभूमिजं स्थलसम्भवम्।
शीघ्रजन्म तथा सूप्यं निस्तुषं युक्तिभर्जितम्॥
इति शिम्बिधान्यवर्गः।

**अस7.38**
मण्डपेयाविलेपीनामोदनस्य च लाघवम्।
यथापूर्वं शिवस्तत्र मण्डो वातानुलोमनः॥

**अस7.39**
तृड्ग्लानिदोषशेषघ्नः पाचनो धातुसाम्यकृत्।
स्रोतोमार्दवकृत् स्वेदी सन्धुक्षयति चानलम्॥

**अस7.40**
क्षुत्तृष्णाग्लानिदौर्बल्यकुक्षिरोगज्वरापहा।
मलानुलोमनी पथ्या पेया दीपनपाचनी॥

**अस7.41**
विलेपी ग्राहिणी हृद्या तृष्णाघ्नी दीपनी हिता।
व्रणाक्षिरोगसंशुद्धदुर्बलस्नेहपायिताम्॥

**अस7.42**
सुधौतः प्रस्रुतः स्विन्नस्त्यक्तोष्मा चौदनो लघुः।
यश्चाग्नेयौषधक्वाथसाधितो भृष्टतण्डुलः॥

**अस7.43**
विपरीतो गुरुः क्षीरमांसाद्यैर्यश्च साधितः।
इति द्रव्यक्रियायोगमानाद्यैः सर्वमादिशेत्॥

**अस7.44**
शुष्यतां व्याधिमुक्तानां शुद्धानां शुद्धिकाङ्क्षिणाम्।
कृशक्षामक्षतोरस्कक्षीणधात्विन्द्रियौजसाम्॥

**अस7.45**
दृष्टिश्रवणवह्न्यायुर्बलवर्णस्वरार्थिनाम्।
भग्नाविश्लिष्टसन्धीनां व्रणिनां वातरोगिणाम्॥

**अस7.46**
हृद्यः पथ्यः परं वृष्यो बृंहणः प्रीणनो रसः।
मौद्गस्तु पथ्यः संशुद्धव्रणकण्ठाक्षिरोगिणाम्॥

**अस7.47**
वातानुलोमी कौलत्थो गुल्मतूनिप्रतूनिजित्।
प्रभूताभ्यन्तरमलो माषसूपः परं स्मृतः॥

**अस7.48**
खलकाम्बलिकौ हृद्यौ च्छेदिनौ स्वौषधानुगौ।
पिशितेन रसस्तत्र यूषो धान्यैः खलः फलैः॥

**अस7.49**
मूलैश्च तिलकल्काम्लप्रायः काम्बलिकः स्मृतः।
ज्ञेयाः कृताकृतास्ते तु स्नेहादियुतवर्जिताः॥

**अस7.50**
अल्पमांसादयः स्वच्छा दकलावणिकाः स्मृताः।
विद्याद्यूषे रसे सूपे शाके चैवोत्तरोत्तरम्॥

**अस7.51**
गौरवं तनुसान्द्राम्लस्वादुष्वेषु पृथक् तथा।
तिलपिण्याकविकृतिः शुष्कशाकं विरूढकम्॥

**अस7.52**
चाण्डाकीवटकं दृघ्नं दोषलं ग्लपनं गुरु।
पर्पटा लघवो रुच्या लघीयान् क्षारपर्पटः॥

**अस7.53**
हृद्या वृष्या रुचिकरा गुरुवो रागषाडवाः।
प्रीणना भ्रमतृट्च्छरिदिमेदमूर्छाश्रमच्छिदः॥

**अस7.54**
तृट्च्छर्दिश्रमनुन्मन्थः शीतः सद्योबलप्रदः।
प्रमेहक्षयकुष्ठानि न च स्युर्मन्थपायिनः॥

**अस7.55**
रसाला बृंहणी वृष्या स्निग्धा बलय रुचिप्रदा।
श्रमक्षुत्तृट्क्लमहरं पानकं प्रीणनं गुरु॥

**अस7.56**
विष्टम्भि मूत्रलं हृद्यं यथाद्रव्यगुणं च तत्।
लाजास्तृट्च्छर्द्यतीसारमेहमेदःकफच्छिदः॥

**अस7.57**
कासपित्तोपशमना दीपना लघवो हिमाः।
पृथुका गुरवो बल्याः कफविष्टम्भकारिणः॥

**अस7.58**
धान विष्टम्भिनी रूक्षा तर्पणी लेखनी गुरुः।
कण्ठनेत्रमयक्षुत्तृट्श्रमछर्दिव्रणापहा॥

**अस7.59**
सक्तवो लघवः पानात् सद्य एव बलप्रदाः।
निचयात् कठिना गुर्वी प्रोक्ता पिण्डी मृदुर्लघुः॥

**अस7.60**
सक्तूनां द्रवतायोगाल्लघीयस्यवलेहिका।
शष्कुलीमोदकादीनां व्याख्यातैवं च कल्पना॥

**अस7.61**
नोदकान्तरितान्न द्विर्न निशायां न केवलान्।
न भुक्त्वा न द्विजैश्छित्वा सक्तूनद्यान्न वा बहून्॥

**अस7.62**
कर्कन्धुबदरदीनां श्रमतृष्णाक्लमच्छिदः।
सक्तवोऽम्लरसा हृद्या यथाद्रव्यगुणाश्च ते॥

**अस7.63**
पिण्याको ग्लपनो रूक्षो विष्टम्भी दृष्टिदूषणः।
वेशवारो गुरुः स्निग्धो बलोपचयवर्धनः॥

**अस7.64**
मुद्गदिजास्तु गुरवो यथाद्रव्यगुणानुगाः।
कुकूलकर्परभ्राष्टकन्द्वङ्गारविपाचितान्।
एकयोनीन् लघून्विद्यादपूपानुत्तरोत्तरम्॥
इति कृतान्नवर्गः।

**अस7.65**
हरिणैणकुरङ्गर्श्यगोकर्णमृगमातृकाः।
कालपुच्छकचारुष्कवरपोतशशोरणाः॥

**अस7.66**
श्वदंष्ट्रामशरभकोहकारकशम्बराः।
करालकृतमालौ च पृषतश्च मृगाः स्मृताः॥

**अस7.67**
लाववातिकवर्तीररक्तवर्त्मककर्कराः।
कपिञ्जलोपचक्राख्यचकोररुरुबाहवः॥

**अस7.68**
वर्तको वर्तिका चेति तित्तिरिः क्रकरः शिखी।
तारचूडाख्यवरकगोनर्दगिरिवर्तिकाः॥

**अस7.69**
तथा शारपदेन्द्राहववारटाश्चेति विष्किराः।
शतपत्रो भृङ्गराजः कोयष्टी जीवजीवकः॥

**अस7.70**
खञ्जरीटकहारीतदुर्नामारिकृशाग्रहाः।
लट्वा लडूषो वटहा रोक्ष्वेलो डिण्डिमाणवः॥

**अस7.71**
जटी दुन्दुभिपार्कारलोहपृष्ठकुलिङ्गकाः।
शारिकाशुकशार्ङ्गाख्यचिरीटीककुयष्टिकाः॥

**अस7.72**
मञ्जरीयकदात्यूहगोधापुत्रप्रियात्मजाः।
कलविङ्कः परभृतः कपोतोऽङ्गारचूडकः॥

**अस7.73**
पारावतः पाणविक इत्युक्ताः प्रतुदा द्विजाः।
श्वेतः श्यामश्चित्रपृष्ठः कालकः काकुली मृगः॥

**अस7.74**
भेकचिल्लटकूचीका गोधाशल्यकशाण्डकाः।
वृषाहिकदलीश्वाविन्नकुलाद्या बिलेशयाः॥

**अस7.75**
गोखराश्वतरोष्ट्राश्वद्वीपिसिंहर्क्षवानराः।
मार्जारमूषिकव्याघ्रवृकबभ्रुतरक्षवः॥

**अस7.76**
लोपाकजम्बुकश्येनचाषोलूकश्ववायसाः।
शशघ्नीभासकुररगृध्रवेश्यकुलिङ्गकाः॥

**अस7.77**
धूमिका मधुहा चेति प्रसहा मृगपक्षिणः।
महिषन्यङ्कुरोहीतवराहरुरुवारणाः॥

**अस7.78**
सृमरश्चमरः खड्गो गवयश्च महामृगाः।
हंससारसकादम्बबककारण्डवप्लवाः॥

**अस7.79**
मृणालकण्ठचक्राह्वबलाका रक्तशीर्षकाः।
उत्क्रोशपुण्डरीकाक्षशरारीमणितुण्डकाः॥

**अस7.80**
काकतुण्डघनारावमद्गुक्रौञ्चाम्बुकुक्कुटाः।
नद्यास्योमल्लिकाद्याश्च पक्षिणो जलचारिणः॥

**अस7.81**
मत्स्या रोहितपाठीनकूर्मकुम्भीरकर्कटाः।
शुक्तिशङ्खोद्रुशम्बूकशफरीवर्त्मिचन्द्रिकाः॥

**अस7.82**
बुलूकीनक्रमकरशिंशुमारतिमिङ्गलाः।
राजी चिलिचिमाद्यश्च मांसमित्याहुरष्टधा॥

**अस7.83**
योनिष्वजावी व्यामिश्रगोचरत्वादनिश्चिते।
आद्यान्त्या जाङ्गलानूपा मध्यौ साधारणौ स्मृतौ॥

**अस7.84**
विकीर्यादिक्रियायोगैर्भक्षणाद्विष्किरादयः।
तत्र बद्धमला रुच्या मांसानामुत्तमाः हिमाः॥

**अस7.85**
कषायस्वादुविशदा लघवो जाङ्गला हिताः।
पित्तोत्तरे वातमध्ये सन्निपाते कफानुगे॥

**अस7.86**
ताम्रोऽत्र हरिणः कृष्णस्त्वेणो हृद्यस्त्रिदोषजित्।
लघीयान् षड्रसश्चासौ ग्राही रूक्षो हिमः शशः॥

**अस7.87**
कटुपाकोऽग्निकृत् पथ्यः सन्निपातेऽनिलावरे।
तद्वल्लावोऽप्यरूक्षस्तुं किञ्चिद्रूक्षः कपिञ्जलः॥

**अस7.88**
पारावताः कपोताश्चृअ तद्वद्वन्याः सुपूजिताः।
ईषदुष्णगुरुस्निग्धा बृंहणा वर्तकादयः॥

**अस7.89**
तित्तिरिस्तेष्वपि वरो मेधाग्निबलशुक्रकृत्।
ग्राही वर्ण्योऽनिलोद्रिक्तसन्निपातहरः परम्॥

**अस7.90**
धन्वानूपविचारित्वात् स्निग्धोष्णगुरुबृंहणः।
नातिपथ्यः शिखी पथ्यः श्रोत्रस्वरवयोदृशाम्॥

**अस7.91**
तद्वच्च कुक्कुटो वृष्यो ग्राम्यस्तु श्लेष्मलो गुरुः।
मेधानलकरा हृद्याः करकराः सोपचक्रकाः॥

**अस7.92**
गुरुः सलवणः काणकपोतः सर्वदोषकृत्।
गुरूष्णस्निग्धमधुरा वर्गाश्चातो यथोत्तरम्॥

**अस7.93**
मूत्रशुक्रकृतो बल्या वातघ्नाः कफपित्तलाः।
शीता महामृगास्तेषु क्रव्यादाः प्रसहाः पुनः॥

**अस7.94**
चक्षुष्याः सृष्टविण्मूत्रा मांसलाः कटुपाकिनः।
जीर्णार्शोग्रहणीदोषशोषार्तानां परं हिताः॥

**अस7.95**
गोधा नियच्छति विषं मूषिकः शुक्रवर्धनः।
शुष्ककासश्रमात्यग्निविषमज्वरपीनसान्॥

**अस7.96**
कार्श्यकेवलवातांश्च गोमांसं सन्नियच्छति।
चटकाः श्लेष्मलाः स्निग्धा वातघ्नाः शुक्रलाः परम्॥

**अस7.97**
गुरूष्णो महिषः स्निग्धः स्वप्नदार्ढ्यबृहत्वकृत्।
तद्वद्वराहः श्रमहा रुचिशुक्रबलप्रदः॥

**अस7.98**
हंसः स्वरकरः पित्तरक्तजिन्मेदुरो हिमः।
कफपित्तकरा मत्स्याः परं पवननाशनाः॥

**अस7.99**
प्रतिस्रोतोविचारित्वादाकाशप्लवनेन च।
रोहितः प्रवरस्तेषां परं चिलिचिमोऽवरः॥

**अस7.100**
अगोचरविचारित्वात् सर्वदोषकरो हि सः।
कुलीरः परमं वृष्यो बृंहणः प्रीणनो गुरुः॥

**अस7.101**
नातिशीतगुरुस्निग्धं मांसमाजमदोषलम्।
शरीरधातुसामान्यादनभिष्यन्दि बृंहणम्॥

**अस7.102**
विपरीतमतो ज्ञेयमाविकं बृंहणं तु तत्।
अतिमेद्यं त्यजेन्मांसं हतं व्याधिविषोदकैः॥

**अस7.103**
स्वयं मृतं धूमपूर्णमगोचरभृतं कृशम्।
सद्योहतं वयस्थं च शुद्धं सुरभि शस्यते॥

**अस7.104**
एणः कुरङ्गो हरिणः शशो लावः कपिञ्जलः।
तित्तिरिः क्रकरो गोधा श्वाविड्गृध्रो मृगाधिपः॥

**अस7.105**
तथैव शारिका न्यङ्कुर्हंसो रोहितकच्छपौ।
वर्त्मी चाग्र्याः स्ववर्गेषु प्रवरास्तेष्वपि स्मृताः॥

**अस7.106**
लावैणगोधाः सिंहाश्च निन्दितो गौः सदर्दुरः।
ऋश्यः काणकपोतश्च शेषमुक्तं यथायथम्॥

**अस7.107**
गुरूण्यण्डानि बालानां कषायमधुरं पलम्।
वृद्धानां स्नायुभूयिष्ठमबल्यं गुरुदोषलम्॥

**अस7.108**
पुंस्त्रियोः पूर्वपश्चार्धे गुरुणी गर्भिणी गुरुः।
लघुर्योषिच्चतुष्पात्सु विहङ्गेषु पुनः पुमान्॥

**अस7.109**
शिरस्कन्धोरुपृष्ठस्य कट्याः सक्थ्योश्च गौरवम्।
तथामपक्वाशययोर्यथापूर्वं विनिर्दिशेत्॥

**अस7.110**
शोणितप्रभृतीनां च धातूनामुत्तरोत्तरम्।
मांसात् गरीयो बृषणमेढ्रवृक्कयकृत्गुदम्॥
इति मांसवर्गः।

**अस7.111**
शाकं पाठाशटीश्रूषासुनिषण्डसतीनजम्।
त्रिदोषघ्नं लघु ग्राहि सराजक्षववास्तुकम्॥

**अस7.112**
सुनिषण्डोऽग्निकृद्वृष्यस्तेषु राजक्षवः परम्।
ग्रहण्यर्शोविकारघ्नो वर्चोभेदी तु वास्तुकः॥

**अस7.113**
हन्ति दोषत्रयं कुष्ठं वृष्या सोष्णा रसायनी।
काकमाची सरा स्वर्या चाङ्गेर्यम्लाऽग्निदीपनी॥

**अस7.114**
ग्रहण्यर्शोऽनिलश्लेष्महितोष्णा ग्राहिणी लघुः।
पटोलसप्तलारिष्टशार्ङ्गाष्ठावल्गुजामृताः॥

**अस7.115**
वेत्राग्रबृहतीवाशाकुन्तलीतिलपर्णिकाः।
मण्डूकपर्णीकर्क्कोटकारवेल्लकपर्पटाः॥

**अस7.116**
नाडीकलायगोजिह्वावार्त्ताकवनतिक्तकम्।
करीरं कूलकं नन्दी कुवेला शकुलादनी॥

**अस7.117**
कठिल्लं केम्बुकं शीतं सकोशातककर्क्कशम्।
तिक्तं पाके कटु ग्राहि वातलं कफपित्तजित्॥

**अस7.118**
हृद्यं पटोलं क्रिमिनुत् स्वादुपाकं रुचिप्रदम्।
पित्तलं दीपन भेदि वातघ्नं बृहतीद्वयम्॥

**अस7.119**
वृषं तु वमिकासघ्नं रक्तपित्तहरं परम्।
कारवेल्लं सकटुकं दीपनं कफपित्तजित्॥

**अस7.120**
वार्त्ताकं कटुतिक्तोष्णं मधुरं कफवातजित्।
सक्षारमग्निजननं हृद्यं रुच्यमपित्तलम्॥

**अस7.121**
करीरमाध्मानकरं कषायं स्वादुतिक्तकम्।
कोशातकावल्गुजकौ भेदिनावग्निदीपनौ॥

**अस7.122**
श्यामाशाल्मलिकाश्मर्यभञ्जकीर्णकयूथिकाः।
वृक्षादिनीक्षीरवृक्षबिम्बीतनिकवृक्षकाः॥

**अस7.123**
लोध्रः शणः कच्छुदारः सशेलुर्वृषमुष्टिका।
भल्लातकः कोविदारः कमलोत्पलकिंशुकम्॥

**अस7.124**
पटोलादिगुणं स्वादु कषायं पित्तजित् परम्।
बद्धमूत्रा सरा भञ्जी करीरं स्यादभीरुजम्॥

**अस7.125**
सतिक्तं लघु चक्षुष्यं वृष्यं दोषत्रयप्रणुत्।
तण्डुलीयो हिमो रूक्षः स्वादुपाकरसो लघु॥

**अस7.126**
मदपित्तविषास्रघ्नो मुञ्जातं वातपित्तजित्।
स्निग्धं शीतं गुरु स्वादु बृंहणं शुक्रकृत् परम्॥

**अस7.127**
पालक्या पिछिला गुर्वी श्लेष्मला भेदिनी हिमा।
मदघ्न्युपोदका चुञ्चुर्ग्राही तौ पूर्ववत्तथा॥

**अस7.128**
विदारी वातपित्तघ्नी मूत्रला स्वादुशीतला।
जीवनी बृंहणी कण्ठ्या गुर्वीवृष्या रसायनी॥

**अस7.129**
चक्षुष्या सर्वदोषघ्नी जीवन्ती मधुरा हिमा।
शाकानां प्रवरा न्यूना द्वितीया किञ्चिदेव तु॥

**अस7.130**
वातपित्तहरा भण्डी पर्वणी पर्वपुष्पिका।
कूष्माण्डतुम्बकालिङ्गकर्कारूर्वारुतिण्डिशम्॥

**अस7.131**
तथा त्रपुसचीनाकचिर्भिटं कफवातकृत्।
भेदि विष्टम्भ्यभिष्यन्दि स्वादुपाकरसं गुरु॥

**अस7.132**
वल्लीफलानां प्रवरं कूष्माण्डं वातपित्तजित्।
बस्तिशुद्धिकरं वृषं त्रपुसं त्वतिमूत्रलम्॥

**अस7.133**
तुम्बं रूक्षतरं ग्राहि कालिङ्गोर्वारुचिर्भिटम्।
बालं पित्तहरं शीतं विद्यात् पक्वमतोऽन्यथा॥

**अस7.134**
शीर्णवृन्तं तु सक्षारं पित्तलं कफवातजित्।
रोचनं दीपनं हृद्यमष्ठीलानाहनुल्लघु॥

**अस7.135**
मृणालबिसशालूकशृङ्गाटककशेरुकाः।
नन्दीमाषककेलूटक्रौञ्चादनकलोड्यकम्॥

**अस7.136**
सतरूढं कदम्बं च रूक्षं ग्राहि हिमं गुरु।
कलम्बुनालिकामाषकठिञ्जरकुतुम्बकम्॥

**अस7.137**
चिल्लीलट्वाकनिष्पावकुरूटकगवेधुकाः।
यातुका सालकल्याणी श्रीपर्णी पीलुपर्णिका॥

**अस7.138**
कुमारी जीवलोणीका यवशाकसुवर्चलाः।
कुष्माण्डनीलिनी स्वर्चा वृकधूमकलक्ष्मणा॥

**अस7.139**
आलूपानि च सर्वाणि तथा सूप्यानि लक्ष्मणा।
जीवन्तिकश्चुञ्चुपर्णीप्रपुन्नाटकुबेरकम्॥

**अस7.140**
स्वादु रूक्षं सलवणं वातश्लेष्मकरं गुरु।
शीतलं सृष्टविण्मूत्रं प्रायो विष्टभ्य जीर्यति॥

**अस7.141**
स्विन्नं निष्पीडितरसं स्नेहाढ्यं नातिदोषलम्।
लघुपत्रा तु या चिल्ली सा वास्तुकसमा मता॥

**अस7.142**
तक्कारी वरणं स्वादु सतिक्तं कफवातजित्।
वर्षाभ्वौ कालशाकं च सक्षारं कटुतिक्तकम्॥

**अस7.143**
दीपनं भेदनं हन्ति गरशोफकफानिलान्।
दीपनाः कफवातघ्नाश्चिरिबिल्वाङ्कुराः सराः॥

**अस7.144**
लघुरुष्णा सरा तिक्ता सोरुपूका च लाङ्गली।
वातलौ कटुतिक्ताम्लौ भेदिनौ तिलवेतसौ॥

**अस7.145**
तद्वत् पञ्चाङ्गुलो वंशकरीरास्तु विदाहिनः।
वातपित्तकरा रूक्षाः कटुपाकाः कफापहाः॥

**अस7.146**
बिल्वरास्नाबलाशाकं वातघ्नमतिसारजित्।
वायुं वत्सादनी हन्यात् कफं गण्डीरचित्रकौ॥

**अस7.147**
पत्तूरो दीपनस्तिक्तः प्लीहार्शःकफवातजित्।
क्रिमिकासकफोत्क्लेदान् कासमर्दो जयेत् सरः॥

**अस7.148**
रूक्षोष्णमम्लं कौसुम्भं गुरु पित्तकरं सरम्।
सक्षारं मधुरं स्निग्धमुष्णं गुरु च सार्षपम्॥

**अस7.149**
शाकानामवरं बद्धविण्मूत्रं सर्वदोषकृत्।
यद्बालमव्यक्तरसं किंचित्क्षारं सतिक्तकम्॥

**अस7.150**
तन्मूलकं दोषहरं लघु सोष्णं नियच्छति।
गुल्मकासक्षयश्वासव्रणनेत्रगलामयान्॥

**अस7.151**
स्वरग्निसादोदावर्तपीनसांश्च महत् पुनः।
गुरूष्णकटुकं स्वादुविपाकं सर्वदोषकृत्॥

**अस7.152**
गुर्वभिष्यन्दि च स्निग्धसिद्धं तदपि वातजित्।
वातश्लेष्महरं शुष्कं सर्वमामं तु दोषलम्॥

**अस7.153**
कटूष्णो वातकफहा पिण्डालुः पित्तवर्धनः।
कुठेरशिग्रुसुरससुमुखासुरिभूस्तृणाः॥

**अस7.154**
धान्यतुम्बुरुशैलेययवानीशृङ्गिवेरकाः।
पर्णासो गृञ्जनोऽजाजी जीरकं गजपिप्पली॥

**अस7.155**
फणिर्जार्जकजम्बीरखराह्वाकालमालिकाः।
दीप्यकः क्षवकद्वीपिबस्तगन्धादि बद्धविट्॥

**अस7.156**
रसे पाके च कटुकं दोषोत्क्लेशकरं लघु।
विदाहि रूक्षतीक्ष्णोष्णं दृक्शुक्रक्रिमिनाशनम्॥

**अस7.157**
वर्गो हरितकाख्योऽयमुपदंशेषु युज्यते।
वासनो व्यञ्जनानां च हृद्यो दीपनरोचनः॥

**अस7.158**
हिध्माकासविषश्वासपार्श्वरुक्पूतिगन्धहा।
सुरसः सुमुखः शोफगन्धहा धानका पुनः॥

**अस7.159**
कषायतिक्तमधुरा मूत्रला न च पित्तकृत्।
खराह्वा बस्तिशूलघ्नी चित्रको दीपनः परम्॥

**अस7.160**
पत्रे सक्षारमधुरो मध्ये मधुरपिच्छिलः।
तीक्ष्णोष्णो लशुनः कन्दे कटुपाकरसः सरः॥

**अस7.161**
हृद्यः केश्यो गुरुर्वृष्यः स्निग्धो रोचनदीपनः।
भग्नसन्धानकृत् बल्यो रक्तपित्तप्रदूषणः॥

**अस7.162**
किलासकुष्ठगुल्मार्शोमेहक्रिमिकफानिलान्।
सहिध्मापीनसश्वासकासान् हन्ति रसायनम्॥

**अस7.163**
पलाण्डुस्तद्गुणैर्न्यूनो विपाके मधुरस्तु सः।
कफं करोति नो पित्तं केवलानिलनाशनः॥

**अस7.164**
दीपनः सूरणो रुच्यः कफघ्नो विशदो लघुः।
विशेषादर्शसां पथ्यो भूकन्दस्त्वतिदोषलः॥

**अस7.165**
पत्रे पुष्पे फले कन्दे च गुरुता क्रमात्।
वरा शाकेषु जीवन्ती सार्षपस्त्ववराः परम्॥
इति शाकवर्गः

**अस7.166**
द्राक्षा फलोत्तमा वृष्या चक्षुष्या सृष्टमूत्रविट्।
स्वादुपाकरसा स्निग्धा सकषाया हिमा गुरुः॥

**अस7.167**
निहन्त्यनिलपित्तास्रतिक्तास्यत्वमदात्ययान्।
तृष्णाकासज्वरश्वासस्वरभेदक्षतक्षयान्॥

**अस7.168**
उद्रिक्तपित्तान् जयति त्रिदोषान् स्वादु दाडिमम्।
पित्ताविरोधि नात्युष्णमम्लं वातकफापहम्॥

**अस7.169**
सर्वं हृद्यं लघु स्निग्धं ग्राहि रोचनदीपनम्।
मोचखर्जूरपनसनालिकेरपरूषकम्॥

**अस7.170**
आम्राततालकाश्मर्यराजादनमधूकजम्।
सौवीरबदराङ्कोलफल्गुश्लेष्मातकोद्भवम्॥

**अस7.171**
वातामाभिषुकाक्षोडमुकूलकनिकोचकम्।
ऊरुमाणं प्रियालं च बृंहणं गुरु शीतलम्॥

**अस7.172**
दाहक्षतक्षयहरं रक्तपित्तप्रसादनम्।
स्वादुपाकरसां स्निग्धं विष्टम्भि कफशुक्रकृत्॥

**अस7.173**
नालिकेरं गुरु स्निग्धं पित्तघ्नं स्वादु शीतलम्।
बलमांसकरं हृद्यं बृंहणं बस्तिशोधनम्॥

**अस7.174**
मोचं स्वादुरसं प्रोक्तं कषायं नातिशीतलम्।
रक्तपित्तहरं वृष्यं रुच्यं श्लेष्मकरं गुरु॥

**अस7.175**
स्निग्धं स्वादु कषायं च राजादनफलं गुरु।
फलं तु पित्तलं तालं सरं काश्मर्यजं हिमम्॥

**अस7.176**
शकृन्मूत्रविबन्धघ्नं केश्यं मेध्यं रसायनम्।
मधूकजमहृद्यं तु बदरं सरणात्मकम्॥

**अस7.177**
वातामाद्युष्णवीर्यं तु कफपित्तकरं सरम्।
परं वातहरं स्निग्धमनुष्णं तु प्रियालजम्॥

**अस7.178**
प्रियालमज्जा मधुरो वृष्यः पित्तानिलापहः।
कोलमज्जा गुणैस्तद्वत्तृट्छर्दिःकासजिच्च सः॥

**अस7.179**
तिन्दुकाश्मन्तकासीनफलिनीबिम्बितोदनम्।
टङ्काश्वकर्णबकुलगाङ्गेरुधवधन्वनम्॥

**अस7.180**
श्वेतपाककपित्थानि सिञ्चतीभव्यजाम्बवम्।
क्षीरिवृक्षभवं बीजं पौष्करं कफपित्तजित्॥

**अस7.181**
कषायमधुरं रूक्षं शीतलं गुरु लेखनम्।
विबन्धाध्मानजननं स्तम्भनं वातकोपनम्॥

**अस7.182**
कपित्थमामं कण्ठघ्नं कषायाम्लं त्रिदोषकृत्।
पक्वं रुच्यं कषायाम्लं स्वादु हिध्मावमिप्रणुत्॥

**अस7.183**
दोषघ्नं षाडवारिष्टरागयुक्तिषु पूजितम्।
विषघ्नमुभयं ग्राहि कपित्थान्येवमादिशेत्॥

**अस7.184**
बृंहणं वातपित्तघ्नं स्निग्धं सिञ्चतिकाफलम्।
भव्यं विशदमम्लं च जाम्बवं त्वतिवातलम्॥

**अस7.185**
विष्टम्भकृदकण्ठ्यं च साम्लं तु क्षीरिवृक्षजम्।
पित्तश्लेष्मघ्नमम्लं च वातलं चाक्षकीफलम्॥

**अस7.186**
बालं कषायकट्वम्लं रूक्षं वातास्रपित्तकृत्।
संपूर्णमाम्रमम्लं तु रक्तपित्तकफप्रदम्॥

**अस7.187**
स्वादु साम्लं गुरु स्निग्धं मारुतघ्नमपित्तलम्।
हृद्यं पर्यागतं श्लेष्ममांसशुक्रबलप्रदम्॥

**अस7.188**
सहकाररसो हृद्यः सुरभिस्निग्धरोचनः।
दीपनः पित्तवातघ्नः शुक्रशोणितशुद्धिकृत्॥

**अस7.189**
कषायं रोचनं हृद्यं वातलं लवलीफलम्।
गुर्वग्निसादकृद्विल्वं दोषलं पूतिमारुतम्॥

**अस7.190**
पक्वं बालं पुनस्तीक्ष्णं पित्तलं लघु दीपनम्।
वातश्लेष्मघ्नमुष्णं च स्निग्धं ग्राह्युभयं परम्॥

**अस7.191**
वृक्षाम्लं ग्राहि रूक्षोष्णं लघु दीपनरोचनम्।
वातश्लेष्महरं किञ्चिदूनं कोशाम्लम्जं ततः॥

**अस7.192**
फलं करञ्जं विष्टम्भि पित्तश्लेष्माविरोधि च।
गुरुष्णमधुरं रूक्षं केशघ्नं च शमीफलम्॥

**अस7.193**
कटुपाकरसं पीलु तीक्ष्णोष्णं भेदि पित्तलम्।
क्रिमिगुल्मोदरगरप्लीहार्शःकफवातजित्॥

**अस7.194**
सतिक्तं स्वादु यत् पीलु नात्युष्णं तत्त्रिदोषजित्।
नीपं शताक्षिकं प्राचीनागरं तृणशूल्यजम्॥

**अस7.195**
अस्मादल्पान्तरगुणमैङ्गुदं सविकङ्कतम्।
त्वक्तिक्तकटुका स्निग्धा मातुलुङ्गस्य वातजित्॥

**अस7.196**
बृंहणं मधुरं मांसं वातपित्तहरं गुरु।
लघु तत्केसरं कासश्वासहिध्मामदात्ययान्॥

**अस7.197**
आस्यशोषानिलश्लेष्मविबन्धच्छर्द्यरोचकान्।
गुल्मोदरार्शःशूलानि मन्दाग्नित्वं च नाशयेत्॥

**अस7.198**
भल्लातकस्य त्वङ्मांसं बृंहणं स्वादु शीतलम्।
तदस्थ्यग्निसमं मेध्यं कफवातहरं परम्॥

**अस7.199**
स्वाद्वम्लं शीतमुष्णं च द्विधा पारावतं गुरु।
रुच्यमत्यग्निशमनं रुच्यं मधुरमारुकम्॥

**अस7.200**
पक्वमाशु जरां याति नात्युष्णं गुरु दोषलम्।
द्राक्षापरूषकं चार्द्रमम्लं पित्तकफप्रदम्॥

**अस7.201**
गुरूष्णवीर्यं वातघ्नं सरं सकरमर्दकम्।
तथाम्लं कोलकर्कन्धुलिकुचाम्रातकारुकम्॥

**अस7.202**
ऐरावतं दन्तशठं सत्रुदं मृगलण्डिकम्।
नातिपित्तकरं पक्वं शुष्कं च करमर्दकम्॥

**अस7.203**
दीपनं भेदनंशुष्कमम्लिकाङ्कोलयोः फलम्।
तृष्णाश्रमक्लमच्छेदि लघ्विष्टं कफवातयोः॥

**अस7.204**
फलानावरं तत्र लिकुचं सर्वदोषकृत्।
हिमानिलोष्णदुर्वातव्याललालादिदूषितम्॥

**अस7.205**
जन्तुजुष्टं जले मग्नमभूमिजमनार्तवम्।
अन्यधान्ययुतं हीनवीर्यं जीर्णतयाऽति च॥

**अस7.206**
धान्यं त्यजेत्तथा शाकं रूक्षसिद्धमकोमलम्।
असञ्जातरसं तद्वच्छुष्कं चान्यत्र मूलकात्॥

**अस7.207**
प्रायेण फलमप्येवं तथामं बिल्ववर्जितम्।
इति फलवर्गः॥
शूकशिम्बिजपक्वान्नमांसशाकफलाश्रयैः॥

**अस7.208**
वर्गैरन्नैकदेशोऽयं भूयिष्ठमुपयोगवान्।
निर्दिष्टो रसवीर्याद्यैर्थयथास्वं कर्मसाधने॥

**अस7.209**
न शक्यं विस्तरेणापि वक्तुं सर्वं तु सर्वथा।
हिताहितत्वेऽप्येकान्तनियमोऽस्मादनिश्चितः॥

**अस7.210**
मात्रायोगक्रियादेशकालावस्थादिभेदतः।
ततस्ततो यतो दृष्टास्ते ते भावास्तथा तथा॥

**अस7.211**
मात्रया सेवितं मद्यं हन्ति रोगास्तदुद्भवान्।
निषेव्यमाणं तिलशो विषमप्यमृतायते॥

**अस7.212**
हीनातिमात्रमशनं मरुन्निचयकोपनम्।
भजतो विषरूपत्वं तुल्यांशे मधुसर्पिषी॥

**अस7.213**
क्षारोऽम्लरससंयोगे मधुरीभवति क्षणात्।
उत्तुण्डक्यास्तिन्दुकेन तिक्तता मधुरायते॥

**अस7.214**
हिङ्गुगैरिकसिन्धूत्थं गन्धवर्णरसाधिकम्।
पूगताम्बूलशङ्खेभ्यो वर्णगन्धरसोद्भवः॥

**अस7.215**
कोद्रवो हन्त्यसृक्पित्तं करोत्येव विदाहिभिः।
कुष्ठं तत्कार्यपि तिलो हन्ति भल्लातकैः सह॥

**अस7.216**
गुडः कर्ताग्निसादस्य स हिनस्त्यभयादिभिः।
तृष्यत्यग्नेः समदनं सर्पिरप्युपदिश्यते॥

**अस7.217**
जीवनीयमपि क्षीरं विषलेशेन मृत्यवे।
तुल्ये अपि हतोऽन्योऽन्यं विषे स्थावरजङ्गमे॥

**अस7.218**
सक्तवो वातला रूक्षाः पीतास्ते तर्पयन्ति तु।
विनापि चोपयोगेन मणिमन्त्रादि कार्यकृत्॥

**अस7.219**
आर्द्रकाज्जायते शुण्ठी संस्कारेण लघीयसी।
लघुभ्योऽपि हि सक्तुभ्यो गुरवः सिद्धापिण्डिकाः॥

**अस7.220**
भृष्टः क्षुण्णोऽपि पृथुको रक्तशालेर्लघोर्गुरुः।
शालिः पिष्टो गरीयस्त्वं गोधूमादपि गच्छति॥

**अस7.221**
लघु पित्तहरा लाजा व्रीहितो गुरुपित्तलात्।
सङ्ग्राहिणो लघोर्मुद्गात् कुल्माषो भेदनो गुरुः॥

**अस7.222**
आमं ग्राहितरं तक्रं नागरीकृतमार्द्रकम्।
गुडात्तोयाच्च सुतरां मूत्रलं गुरु पानकम्॥

**अस7.223**
गरीयो गुडदध्युत्था रसाला चातिशुक्रला।
दण्डाभिमथनाद्दध्नो गुरुणश्चातिशोफदात्॥

**अस7.224**
अनुद्धृतस्नेहमपि तक्रं शोफहरं लघु।
सर्पिः स्निग्धतरं हन्ति नार्दितं नवनीतवत्॥

**अस7.225**
चक्षुष्योऽपि हि गोधूमस्तैलपक्वस्तु दृष्टिहा।
मूलकं दोषजननं सिद्धं तु तददोषलम्॥

**अस7.226**
उष्णं विषीभवत्येव विषघ्नमपि माक्षिकम्।
दुर्भाजनस्था द्राक्षाम्ला दोषला च प्रजायते॥

**अस7.227**
श्लक्ष्णशुष्कघनो लेपश्चन्दनस्यापि दाहकृत्।
त्वग्गतस्योष्मणो रोधाच्छीतकृत्त्वन्यथाऽगुरोः॥

**अस7.228**
मेध्यस्तिलः स्पर्शशीतो मेध्यं तैलं खलो हिमः।
तस्यैव श्लेष्मकारित्वं न तैलस्य खलस्य वा॥

**अस7.229**
दध्नि श्वयथुकारित्वं न तक्रनवनीतयोः।
भूमिसात्म्यं दधिक्षीरकरीरं मरुवासिषु॥

**अस7.230**
क्षारः प्राच्येषु मत्स्यास्तु सैन्धवेष्वश्मकेषु तु।
तैलाम्लः कन्दमूलानि मलये कोङ्कणे पुनः॥

**अस7.231**
पेयामन्थ उदीच्येषु गोधूमोऽवन्तिभूमिषु।
बाल्हीका बाल्हवाश्चीनाः शूलिका यवनाः शकाः॥

**अस7.232**
मांसगोधूममार्द्वीकशस्त्रवैश्वानरोचिताः।
देहसात्म्यं घृतं क्षीरं मद्यं मासं च कस्यचित्॥

**अस7.233**
पेया यूषो रसोऽन्यस्य गोधूमोऽन्यस्य शालयः।
अहितैरपि तेषां च तैरेवोपहितं हितम्॥

**अस7.234**
अन्नपानौषधं दोषमात्राकालाद्यपेक्षया।
सात्म्यं ह्याशु बलं धत्ते नातिदोषं च बह्वपि॥

**अस7.235**
स्रंसनं सत् पयो गव्यं भवति ग्राहि कस्यचित्।
मन्दोऽग्निर्भवति प्रायः कफवातोत्तरे हिमे॥

**अस7.236**
विषघ्नेनापि पयसा देहेऽहेर्वर्द्धते विषम्।
स्थूलस्थविरबालादौ वमनादि निषिध्यते॥

**अस7.237**
तक्रमामं कफं कोष्ठे हन्ति कण्ठे करोति तु।
वातहृत्त्वेऽपि मृद्वीकाखर्जूरं कोष्ठवातकृत्॥

**अस7.238**
नातिपथ्यः शिखी पथ्यः श्रोत्रस्वरवयोदृशाम्।
दृष्टे स्पर्शहिमं द्रव्यं श्रोत्रस्योष्णं तु पूजितम्॥

**अस7.239**
पयः स्वादु सरं शीतं विपरीतं ततो दधि।
कालेन जायते तस्मात् क्षीरवच्च पुनर्घृतम्॥

**अस7.240**
पयो दधि च वातघ्नमजातं वातलं तु तत्।
तक्रं ग्राहि कषायाम्लमम्लमेव तु भेदनम्॥

**अस7.241**
धातकीगुडतोयानि कारणं मद्यशुक्तयोः।
शीते न तु तदाद्यन्ते स्निग्धाम्ललवणा हिताः॥

**अस7.242**
उदमन्थदिवास्वप्नौ ग्रीष्मादन्यत्र गर्हितौ।
समयोगेऽपि घर्माद्या वातादिचयहेतवः॥

**अस7.243**
ऋतुष्वन्यो रसेष्वन्यो रौक्ष्ये स्नेहे बले क्रमः।
रसायनं काकमाची सद्यः पर्युषिता विषम्॥

**अस7.244**
मूलकं दोसजिद्बालं विपरीतं तु कन्दवत्।
ज्वरे पेया कषायाश्च सर्पिः क्षीरं विरेचनम्॥

**अस7.245**
षडहं षडहं युञ्ज्याद्वीक्ष्य दोषबलाबलम्।
छर्दिहृद्रोगगुल्मार्ते वमनं च चिकित्सिते॥

**अस7.246**
निषिद्धमपि निर्दिष्टं बस्तिरर्शसकुष्ठिनोः।
ज्वरे तुल्यर्तुदोषत्वं प्रमेहे तुल्यदूष्यता॥

**अस7.247**
रक्तगुल्मे पुराणत्वं सुखसाध्यत्वहेतवः।
आश्च्योतनमभिष्यन्दे युञ्जीतोर्ध्वं दिनत्रयात्॥

**अस7.248**
अञ्जनं पक्वदोषस्य प्रतिश्याये च नावनम्।
नातिप्रवृद्धे तिमिरे सिरामोक्षो विधीयते॥

**अस7.249**
दुष्टास्रसम्भवेऽपीष्टो नास्रपित्ते सिराव्यधः।
अपथ्यं पथ्यमप्यन्नं निशायां नेत्ररोगिणाम्॥

**अस7.250**
अहिताः सक्तवः शुष्का हितास्ते तु प्रमेहिणः।
गुल्मिनः क्सीरदध्यादि हपुषाद्यैर्युतं हितम्॥

**अस7.251**
वातलं वातकोपेऽपि वर्षासु मधु शस्यते।
तदेव मद्यं मद्यस्य विषस्य तु विषान्तरम्॥

**अस7.252**
घृतमानूपदेशोत्थं हेमन्ते च बलाधिकम्।
आलस्यगौरवे रूपं वातजेऽपि ज्वरे पुरः॥

**अस7.253**
स्वेदैर्याति शमं दाहः प्रायो लशुनपानजः।
दिवास्वप्नाज्जरां याति भुक्तमन्येद्युरद्य न॥

**अस7.254**
कोष्ठे रुद्धोऽग्निकृद्वायुर्मेदसार्शोभिरग्निहृत्।
दुष्पानं दुर्जरं सर्पिर्दीपनं च पयोऽन्यथा॥

**अस7.255**
सर्पादिशवकोथेभ्यो वृश्चिकानां समुद्भवः।
ते तैरेव पुनर्दष्टाः सद्यो जहति जीवितम्॥

**अस7.256**
स्वयमेव विषं तीव्रं तान् पुनर्नातिबाधते।
सर्वाङ्गव्यापि तेषां च शुक्रवत् संसृतं विषम्॥

**अस7.257**
तन्मांसमुपयोगाय मांसवर्गे च पठ्यते।
छर्दिघ्नी मक्षिकाविट् च मक्षिकैव तु वामयेत्॥

**अस7.258**
कफे लङ्घनसाध्येऽपि कर्तरि ज्वरगुल्मयोः।
तुल्येऽपि देशकालादौ लङ्घनं न समं मतम्॥

**अस7.259**
सर्वथा दोषजित्तक्रं ग्रहण्यां दोषकृद्व्रणे।
पीनसश्वासकासादौ सिद्धमेव प्रशस्यते॥

**अस7.260**
इत्येतेऽन्ये च बहवः सूक्स्मा दुर्लभहेतुकाः।
धर्मा विचित्रा भावेषु किञ्चित्तेषां निदर्शितम्॥

**अस7.261**
दिशानया देशमपि स्वयमूहेत बुद्धिमान्।
न शास्त्रमात्रशरणो न चानालोचितागमः॥
इति मात्रादिप्रकरणम्।
इत्यन्नस्वरूपविज्ञानीयो नाम सप्तमोऽध्यायः इति सप्तमोऽध्यायः॥

# अष्टमोऽध्यायः

**अस8.1**
अथातोऽन्नरक्षाविधिमध्यायं व्याख्यास्यामः इति ह स्माहुरात्रेयादयो महर्षयः॥

**अस8.2**
ईश्वराणां वसुमतां विशेषेण तु भूभुजां प्रायेण मित्रेभ्योऽप्यमित्रा भूयांसो भवन्ति।
ततस्तत्प्रयुक्ताः समासन्नवर्तिनोऽन्नपानादिषु विषं प्रयच्छन्ति।
स्त्रियश्च तत्प्राणिधिप्रयुक्ताः सौभाग्यलोभेन।
तस्माद्राजा कुलीनं स्निग्धमाप्तमास्तिकर्मायर्मायपरिग्रहं दक्षं दक्षिणं निभृतं शुचिमनुद्धतमनलसमव्यसनिनमनहङ्कृतमकोपनमसाहसिकं वाक्यार्थावबोधकुशलं निष्णातमष्टाङ्गे यथाम्नायमार्युवेदे सुविहितयोगक्षेमं सन्निहितागदादियोगं सात्म्यज्ञं च प्राणाचार्यं परिगृह्णीयात्।
तमर्थमानाभ्यां यथाकालं गुरुमिव शिषयः पितरमिव पुत्रः पूजयेत्।
प्रतिकूलमपि तदवचः साम्प्रतं मतमिति प्रतिमन्येत।
न हि भद्रोऽपि गजपतिर्निरङ्कुशः श्लाघनीयो जनस्य।
तस्मात्तदायत्तमाहारविहारं प्रति चात्मानं कुर्यात्।
उपात्तमपि खलु जीवितमुपायबलेन स्वयमधितिष्ठति॥

**अस8.3**
अपि च बहुपरिग्रहा नरपतयः।
सन्ति चाशुकारिणः शूलसन्यासादयः।
प्रतिक्षणं प्रत्यवेक्षणीयावस्थाश्च रोगिणो विशेषेण राजानः।
ते हि प्रमादपरिगता दुःखासहिष्णवश्च स्वयमप्यपथ्यरुचयः सन्निहिताहितप्रियवचनप्रायपरिचारकाश्च तस्माद्भिषजो राजा राजगृहासन्ने निवेशनं कारयेत्।
तथा हि सर्वोपकरणेषु नृपतिशरीरोपयोगिष्वपरोक्षवृत्तिर्भवति॥

**अस8.4**
स सम्यक्सम्पन्नमन्नं सुपरीक्षितं विशुद्धमग्न्यादिषु प्रागुपनीतं शिखिना दृष्टमभिप्रोक्षितं प्रोक्षाणैः पुरःस्थितो राजानं हस्तबद्धौषधिरत्नं भोजयेत्॥

**अस8.5**
भुञ्जानस्य चास्य दुन्दुभीनगदप्रलिप्तान् वादयेत्॥

**अस8.6**
तत्र सविषमन्नं स्राव्यमाणमविस्राव्यं भवति, चिरेण पच्यते, पक्वं च सद्यः पर्युषितमिव निरूष्म स्तब्धं च जायते, यथास्ववर्णगन्धरसैर्व्यापद्यते, प्रक्लिद्यते, चन्द्रकाचितं च भवति॥

**अस8.7**
व्यञ्जनानामाशु शुष्कत्वं भवति।
क्वाथः ध्यामता श्यामता हीनातिरिक्तविकृतानां चात्रच्छायानां दर्शनमदर्शनमेव वा, फेनपटलसीमन्तोर्ध्वविविधराजितन्तुबुदबुदप्रादुर्भावो, विशेषेण लवणोल्बणेषु फेनमाला रसस्य मध्ये नीला राजिः, पयसस्ताम्रा, मद्यतोययोः काली, दध्नः श्यावा, तक्रस्य नीलपीता, मस्तुनः कपोताभा, धान्याम्लस्य कृष्णा, द्रवौषधस्य कपिला, घृतस्य कपिलाभा, क्षौद्रस्य हरिता, तैलस्यारुणा, वसागन्धश्च॥

**अस8.8**

फलानामामानां पाकः, पक्वानां प्रकोथः, दव्याणामार्द्राणां सहसा म्लानत्वमुत्पक्वभावः, शुष्काणां श्यावता वैवर्ण्यं वा, कठिनानां मृदुता, मृदूनां कठिनत्वं, माल्यस्य म्लानता गन्धनाशः स्फुटिताग्रत्वं, आस्तरणप्रावरणानां ध्याममण्डलता तन्तुरोमपक्ष्मशातनं च, लोहमणिमयानां पङ्कमलोपदेहः, स्नेहरागगौरवप्रभावर्णस्पर्शनाशश्च॥

**अस8.9**

विषदस्तु स्वदोषशङ्कया त्रस्तो, भीतः, स्वेदवेपथुमान्, शुष्कश्यावववक्त्रः, समन्तात् सोद्वेगं विलक्षोऽभिवीक्षते।
यत्र चानेन विषं प्रयुक्तं तद्विशेषेण।
तथा स्रस्तोत्तरीयः स्तम्भकुड्यादिभिरात्मानमन्तर्धत्ते।
स्खलितगतिर्दीनो लज्जावानस्थानहासी पृष्टोऽप्यसम्बन्धमुत्तरं ददाति।
नैववा विवक्षुर्मुह्यति, अङ्गुलीः स्फोटयति, ग्रीवामालभते, शिरः कण्डूयति, औष्ठौ परिलेढि, जृम्भते, भुवं विलिखति, क्रियासु त्वरते, विपरीतमाचरति, स्वभूमौ च नावतिष्ठते॥

**अस8.10**

नृपाज्ञात्वरयापि केचिदपराधान्तराद्वाऽनवस्थितसत्त्वाः समाचरन्त्येवम्।
तस्मादग्न्यादिष्वपि परीक्षेत।
वह्निस्तु सविषमन्नं प्राप्यैकावर्तो रूक्षमन्दार्चिरिन्द्रायुधवदनेकवर्णज्वालो भृशं चटचटायते।
कुणपगन्धी धूमश्चास्य मूर्च्छाप्रसेकरोमहर्षशिरोवेदनापीनसदृष्ट्याकुलतां जनयति॥

**अस8.11**

तत्र नलदकुष्ठलामज्जकैः क्षौद्रद्रुतैर्नस्यमञ्जनं च कुर्यात्।
धूममेव वापामार्गविडङ्गबलाद्वयचित्रकमेषशृङ्गिपुष्पसुमनःक्षारकद्राक्षाघृतगुडकृतं पिबेत्॥

**अस8.12**

स्नेहलवणयोगादपि चाग्निरित्थं स्यात्।
अतो वयोभिः परीक्षेत।
तत्र विषजुष्टाहाराभ्यवहारात्काकाः क्षामस्वरा भवन्ति।
मक्षिकाः सविषान्ने न निलीयन्ते।
निलीनाश्च व्यापद्यन्ते।
दृष्ट एव चास्मिंस्तु चकोरस्याक्षिणी विरज्येते।
कोकिलस्य स्वरो विकृतिमेति।
हंसस्य गतिः स्खलति।
कूजति भृङ्गराजः।
माद्यति क्रौञ्चः।
विरौति कृकवाकुः।
विक्रोशति शुकः शारिका च।
छर्दयति चामीकरः।
अन्यतो याति कारण्डवः।
म्रियते जीवञ्जीवको, ग्लायति वा।
हृष्टरोमा भवति नकुलः।
शकृद्विसृजति वानरः।
रोदिति पृषतः।
हृष्यति मयूरः।
दर्शनादेव चास्य विषं मन्दतामुपैति॥

**अस8.13**

विषदूषितस्य पुनराहारस्योष्मा मयूरकण्ठाभोऽभ्युदेति। तद्वाष्पेणापि धूमवन्मूर्छादयः।
तेषां तद्वदेव साधनम्।
हस्तेन स्पृष्टमन्नं विषवद्दाहशोफस्वापनखशातान् करोति।
तस्य श्यामेन्द्रगोपसोमोत्पलैर्लेपः॥

**अस8.14**
अभ्यवह्रियमाणं त्वोष्ठचिमिचिमान्तर्वक्त्रदाहजिह्वामूलगौरवहनुस्तम्भदन्तहर्षलालाः करोति रसापरिज्ञानं च।
तत्र धूमोक्तं दन्तकाष्ठोक्तं च कर्म।
आमाशयगतं स्वेदमदमूर्छछर्दिवैवर्ण्याध्मानरोमहर्षदाहारुचिदृष्टिहृदयोपरोधान् बिन्दुभिश्चाचयमङ्गानां करोति॥

**अस8.15**
तत्र मदमफलालबुबिम्बीकोशातकीफलैर्दाधिमधुयुक्तमाशु वमनं दद्यात्, निष्पावाम्बुभिर्वा।
ततः स्निग्धशरीरं विरेचयत्।
त्रिफलात्रिकटुनागपुष्पमधुकबर्हिणपर्णीबृहतीद्वयचूर्णं सिंहव्याघ्रवृकतरक्षुद्वीपिमार्जारसृगालमृगगोधानामन्यतमपित्तरससंयुक्तं सक्षौद्रं पानमेष जीवनो नामागदः परं सर्वविषौषधम्।
तस्मिन् जीर्णे श्यामाव्योषातिविषासिद्धेन पयसा घृतेन वोपस्तम्भितां मुद्गयूषेण किंचिल्लवणेन ससर्पिष्केण मृद्वोदनं भोजयेत्।
मधुकशिरीषचन्दनैश्चैनमालिम्पेत्॥

**अस8.16**
पक्वाशयगतं तृड्दाहमूर्च्छातीसाराटोपतन्द्रेन्द्रियविकृतिबलभ्रंशकार्श्यपाण्डुत्वोदराणि जनयति।
तत्र नीलिनीफलयुक्तेन सर्पिषा विरेचनं समाक्षिकं च दूषीविषारिं दध्ना पाययेत्।
दन्तकाष्ठप्रयुक्ते तु विषे कूर्चकविशरणमौषधगन्धो रूक्षता तालुदन्तजिह्वोष्ठमांसशोफश्च तत्र प्रच्छाय धातकीपुष्पजाम्बवास्थिहरीतकीचूर्णैः सक्षौद्रैः सप्तच्छदकल्केन वा प्रतिसारणं कुर्यात्।
दाडिमकरमदर्भव्याम्रातककोलबदररसक्षौद्रयुक्तं गण्डूषम्।
अनेन जिह्वानिर्लेखनकवलगण्डूषा व्याख्याताः॥

**अस8.17**
अञ्जनप्रयुक्तेऽश्रुदूषिकोपदेहरागवेदनादृष्टिविभ्रमा भवन्त्यान्ध्यं च।
तत्र सर्पिष्पानं योज्यम्।
शृतेन पयसा सप्तकृत्वः पिप्पलीर्भावयेत्।
ततस्तत्कल्केन सर्पिर्विपक्वं नेत्रतर्पणम्।
कपित्थमेषशृङ्गीभल्लातकानां पुष्पैर्वरणनिर्यासेन वाञ्जनं बृहतीशिरीषबीजप्रपौण्डरीकनागबलाचूर्णं सप्तकृत्वो मधुना भावयेत्।
तच्च स्रोतोऽञ्जनसुवर्णचूर्णयुक्तमञ्जनं देयम्।
नस्यधूमप्रयुक्ते शिरोरुक्काफास्रावः खेभ्यो रुधिरागमनमिन्द्रियवैकृतं च।
तत्रातिविषाश्वेताकाकमाचीमदयन्तिकाकल्के क्षीरसिद्धं सर्पिर्न्नस्ये पाने च विदध्यात्॥
अभ्यङ्गप्रयुक्ते त्वग्दाहस्वेदपाकस्फोटावदरणानि।
तत्र शीताम्बुपरिषिक्तस्य चन्दनतगरोशीरकुष्ठवेणुपत्रिकामृतासोमवल्लीश्वेतापद्मकालेयकैरनुलेपनम्।
एतान्येव च सकपित्थरसगोमूत्राणि पानम्।
गिरिकर्णिकाश्वेतमूलप्रियङ्गुसारिवामधुकसर्पसुगन्धामृगोर्वारुकतकमूलानि शेलुक्वाथपिष्टानि प्रलेपः।
अनेनोद्वर्त्तनघर्षणपरिषेकानुलेपनभूषणयानशय्यास्तरणवस्त्रकवचपादुकोपानत्पादपीठा व्याख्याताः॥

**अस8.18**
विशेषतस्त्वाभरणकृते विकारेऽश्वगन्धापामार्गकिणिहीखदिरशिरीषकल्कैर्गोपित्तयुक्तैः प्रदेहः।
पादपीठकृते श्लेष्मातकसर्पसुगन्धाम्रकल्को मधुयुक्तः।
छत्रप्रयुक्ते वेदनास्फोटानां क्षिप्रपाकानां पक्वजाम्बवप्रकाशानां प्रादुर्भावः।
तत्र मधुकपाटलाकशेरुकलोध्राञ्जनकुष्ठसर्पसुगन्धाखदिरशिरीषकल्कैः सर्वगात्रप्रदेहः।
अनेन चामरव्यजने व्याख्याते॥

**अस8.19**
शिरोऽभ्यङ्गप्रयुक्ते शिरोवेदना ग्रन्थिजन्म केशच्यवनं च।
तत्र श्यामापालिन्दीतण्डुलीयकचूर्णं घृतर्क्षपित्तैः सुभावितया कृष्णमृदा प्रलेपः।
गोमयमालतीमूषिककर्ण्यन्यतमरसो वागारधूमो वा श्लेष्मातकत्वक्पाटलाशिरीषमधुकहरिद्राद्वयैरजाक्षीरालोडितैः परिषेकः।
अनेन शिरःस्नानोदककङ्कतस्रगुष्णीषा व्याख्याताः॥

**अस8.20**
कर्णपूरणप्रयुक्ते शोफशूलपाकाः श्रोत्रवैगुण्यं च।
तत्र बहुपत्रास्वरसो घृतक्षौद्रसंयुक्तः प्रतिपूरणं सोमवल्करसो वा सुशीतः।

मुखालेपप्रयुक्ते मुखश्यावता पद्मकण्टका भवन्त्यभ्यङ्गजाश्च विकाराः।
तत्र मधुकपयस्याबन्धुजीवभञ्जीपुनर्नवचन्दनैः सघृतैर्लेपो, मधुसर्पिषी पानम्।
सविषपुष्पाघ्राणाच्छिरोव्यथा साश्रुनेत्रत्वं गन्धाज्ञानं च।
तत्रानन्तरोक्तो विधिर्बाष्पोदितश्चेति॥

**अस8.21**
भवति चात्र।
फलमूलच्छदादीनां दद्यात्प्रक्षालनोदकम्।
भाजनव्यञ्जनानां च तथा कुर्यादतन्द्रितः॥

**अस8.22**
घ्रेयाणि घ्रापयित्वा तु स्पृश्यान् संस्पृश्य तानपि।
प्रतीवापं ततो दत्वा प्रतीक्ष्यैवैकनाडिकाम्॥

**अस8.23**
ततो विज्ञाय शुद्धिं च भाजनस्योदकस्य च।
आहारमुपयुञ्जीत यथावद्वसुधाधिपः॥

**अस8.24**
मन्दं तीक्ष्णविषाभ्यासाद्विषमुत्क्षीयते भृशम्।
तस्मात्तीक्ष्णविषं हस्ते बध्नीयात्कुशलो भिषक्॥

**अस8.25**
विषसंधारणं धन्यं रक्षोघ्नं प्रीतिवर्धनम्।
अपि च सापिधानघटीमूटफलकस्थापितौषधम्॥

**अस8.26**
प्रागुदीच्योर्दिशोर्गुप्तं भेषजागारमिष्यते।
उच्चैः प्रशस्तदिग्देशं बहुवातायनं महत्॥

**अस8.27**
महानसं सुसंमृष्टं विश्वास्यजनसेवितम्।
सद्वास्स्थाधिष्ठितद्वारं कक्ष्यावत्सुवितानकम्॥

**अस8.28**
सुधौतदृठकुम्भादि परिशुद्धजलेन्धनम्।
स्वकर्मकुशला दक्षाः सूदास्तत्राप्रमादिनः॥

**अस8.29**
क्लृप्तकेशनखाः पित्र्या राज्ञः कृत्यैरसङ्गताः।
तेषामधिपतिर्विप्रः कुलजः सुपरीक्षितः॥

**अस8.30**
संविभक्तश्च भक्तश्च शुचिर्वैद्यवशूनुगः।
सर्वेऽपि भूभृदासन्नाः शस्ताः सततमीदृशाः॥

**अस8.31**
मिथो विग्रहसङ्घातरहिता भूभृते हिताः।
तान् वैद्यो गुणवानेको मनसा प्रतिजागृयात्॥

**अस8.32**
भूभृद्देहोपकरणसंरक्षणसमुद्यतः॥

**अस8.33**
अथाभ्यमित्रं व्रजतो जिगीषोर्वैद्यः सुसज्जौषधशस्त्रयन्त्रः।
तुङ्गध्वजाख्यातनिवासभूमिर्युद्धागतं योधजनं चिकित्सेत्॥

**अस8.34**
पन्थानमुदकं छायां भक्तं यवसमिन्धनम्।
दूषयन्त्यरयो यस्मात्तान् विद्याच्छोधयेत च॥

**अस8.35**
प्रस्थानं वा निवेशं वा नाविज्ञाय प्रयोजयेत्।
भूवारितृणकाष्ठाश्ममार्गोन्मार्गवनस्पतीन्॥

**अस8.36**
विषेणोपहता भूमिः क्वचिद्दग्धेव लक्ष्यते।
प्रम्लानतृणगुल्मादिमृतकीटसरीसृपा॥

**अस8.37**
विशीर्यन्ते खुरनखा दाहकण्डूरुजान्विताः।
छर्दिर्मूर्छा ज्वरो मोहः शिरोदुःखं च जायते॥

**अस8.38**
तत्र सौभञ्जनान्मूलं सोमवल्लीमुशीरकम्।
मातुलुङ्गरसं हिङ्गुं पाययेद्दधिमात्रया॥

**अस8.39**
मूत्राण्यजाविहस्तिभ्यो मांसानि रुधिराणि च।
सर्वगन्धैः समं योज्य पचेत्पक्वे च निक्षिपेत्॥

**अस8.40**
सोमराजीं सुनन्दाख्यां सरलं गन्धनाकुलीम्।
चारटीं त्रायमाणां च प्रोक्षयेत्तेन तां भुवम्॥

**अस8.41**
सविषं विरसं तोयं कवोष्णं राजिभिश्चितम्।
फेनिलं गुरु विच्छिन्नं खगैरनाभिनन्दितम्॥

**अस8.42**
मृताकुलितमत्स्यं च स्पर्शाद्रुक्शोफकण्डुमत्।
औदनः साधितस्तेन भुक्तमात्रोऽपि दह्यते॥

**अस8.43**
विदग्धः पच्यते कृच्छ्रात्पक्वो मूर्छाज्वरप्रदः।
दर्शयेत्सर्वतो नीलपीतकर्बुरलोहितम्॥

**अस8.44**
तत्र शिग्रेवादिमगदं भूमिदोषोदितं पिबेत्।
अजशृङ्गीं विशालाख्यां विषघ्नीमुत्तमारणीम्॥

**अस8.45**
फणिज्जकं प्रतिविषां दग्ध्वा तद्भस्म गालयेत्।
बहुशो गालितं तच्च पाचयेत्तत्र च क्षिपेत्॥

**अस8.46**
कल्कयित्वा प्रतीवापं सरलं रजनीद्वयम्।
एलामुदीच्यं मञ्जिष्ठां सुनन्दां बाकुचीअपि॥

**अस8.47**
पात्यन्ते बिन्दवस्तस्माद्यत्र तन्निर्विषीभवेत्।
पाटलापारिभद्राश्वकर्णशम्याकसिध्रकान्॥

**अस8.48**
कलशान्तर्गतान् दग्ध्वा प्रक्षिपेत्सविषेऽम्भसि।
शीते घर्मो हिमश्चोष्णे मारुतो विषसंयुतः॥

**अस8.49**
भ्रममूर्छादिकारी च शिग्र्वादिस्तत्र चेष्यते।
देवदारुनतानन्तामधुकार्जुनगैरिकम्॥

**अस8.50**
वज्रकन्दं लतां लोध्नं विकिरेच्छ्लक्ष्णचूर्णितम्।
वृक्षाग्रेषु पताकासु दूष्येषु सुमहत्सु च॥

**अस8.51**
सर्वतश्चूर्णसंपर्कान्निर्विषो जायतेऽनिलः।
विकृता भवति छाया पादपे विषदूषिते॥

**अस8.52**
निर्गन्धमतिगन्धं वा तत्पुष्पं हृच्छिरोरुजम्।
कुर्यात् फलपलशादि कण्डूपाकातिसारकृत्॥

**अस8.53**
भूमिमुद्दिश्य यत्प्रोक्तं तत्सर्वं तत्र चेष्यते।
न च कन्यामविदितां संस्पृशेदपरीक्षिताम्॥

**अस8.54**
विविधान् कुर्वते योगान् कुशलाः खलु मानवाः।
आजन्मविषसंयोगात् कन्या विषमयीकृता॥

**अस8.55**
स्पर्शोच्छ्वासादिभिर्हन्ति तस्यास्त्वेतत्परीक्षणम्।
तद्धस्तकेशसंस्पर्शान्म्लायते पुष्पपल्लवैः॥

**अस8.56**
शय्यायां मत्कुणैर्वस्त्रे यूकाभिः स्नानवारिणि।
जन्तुभिर्म्रियते ज्ञात्वा तामेवं दूरतस्त्यजेत्॥

**अस8.57**
नाप्रोक्षितं नाविदितं भिषजा नानवेक्षितम्।
नाप्राशितं च सूदाद्यैः किञ्चिदप्याहरेन्नृपः॥

**अस8.58**
धन्यं सर्वार्थसिद्धाख्यं पापरक्षोविषापहम्।
परं चक्षुष्यमायुष्यं शत्रुघ्नं वक्ष्यतेऽञ्जनम्॥

**अस8.59**

अथ शुक्लपक्षे पुण्येऽहनि पुष्यपुनर्वसुहस्तचित्रामृगशिरःश्रवणरेवतीशतभिषक्प्राजापत्योत्तराणामन्यतमेन नक्षत्रेण योगमुपगते भगवत्यौषधिपतौ प्रशस्ते मुहूर्ते सिन्धुस्रोतःसमुत्थंस्निग्धं सप्रभं गन्धवर्णच्छदैर्नीलोत्पलाभमञ्जनमाहरेत्।
तस्याष्टौ भागाः कनकरजतोदुम्बराणामेकैको भागः।
तत्सर्वं मूषायां प्रक्षिप्य बलिमङ्गलपूर्वकमग्निमुपसामाधाय खदिरकदरधवस्यन्दनानामन्यतमदारुभिर्गोमयैर्वा प्रज्वालयेत्।
ततश्चार्यावलोकितेश्वरमार्यतारां ब्रह्मदक्षाश्विरुद्रेन्द्रदित्यसोमवरुणवैश्वानरवायुविष्णुजनकभरद्वाजधन्वन्तरिसुश्रुतभव्यसुकन्यास्कन्दश्च्यवनवैनतेयानन्यांश्च यथाविध्युक्तदेवताः सुमनोऽक्षतलाजस्वस्तिकसंयावनिस्तुषयवसंस्कृतगुडघृतमिश्रपायसैरर्चयित्वावृद्धवैद्यब्रह्मणांश्च शुक्लवाससो महतीभिर्दक्षिणाभिः पूजयित्वा तस्मिन्नग्नौ तदञ्जनं ध्मातं ध्मातमावृत्य पृथक्पृथङ्निषेचयेत्।
गोशकृद्रसमूत्रघृतदधिक्षौद्रवसामज्जतैलमद्यसर्वगन्धाम्बुशर्करोदकेक्षुरसेषु तथा हरीतक्यामलकबिभीतककाश्मर्यमृद्वीकाशृङ्गाटककशेरुकोत्पलनलिनसौगन्धिकमृणालिकक्वाथेषु तथा लावकपिञ्जलैणशशहरिणकुलीररसेषु तथा मधुकचन्दनकालानुसार्यनलदपद्मकोशीरमञ्जिष्ठानन्तागैरिककुङ्कुमोदकेषु।
ततः शुक्ले वाससि बध्वा द्वादशरात्र मान्तरिक्षेऽम्भासि वासयेत्।
ततश्छायायां विशोष्य स्फटिकमुक्ताप्रवालकालनुसार्याप्रतीवापं पुनरपि बलिमङ्गलपूर्वकमहतवाससा कन्यया दृषदि पेषयित्वासुवर्णरजतताम्रशङ्खशैलद्विरदरदनगवयशृङ्गवैडूर्यस्फटिकमेषशृङ्ग्यसनसारान्यतमघट्टितायामञ्जनिकायां निधापयेत्।
अथ पूर्ववत्पुनरपि कृतस्वस्त्ययनं सावित्रेण कर्मणा सर्ववित् द्विजन्मा विधिवत्तदभिसंस्कुर्यात्।
ततो गजस्कन्धमारोप्य पाण्डुरच्छत्रचामरबालव्यजनैरनुगतं तथा शङ्खदुन्दुभिस्वनैर्द्विजातिवरप्रयुक्तैश्च वेदवादमिश्रैः पुण्याहघोषैः कृतपुष्पोपहारं वैद्यगृहान्नायकगृहमनुप्रवेशयेत्।
अनन्तरं च तेन विदेहाधिपोपदिष्टेन सर्वार्थेषु सिद्धेनाञ्जनेन यथोक्तानामेवाञ्जनभाजनद्रव्याणामन्यतमया शलाकया गोब्राह्मणपूजापूर्वकं शुचिः सनियमो भूत्वा धारणीमिमां विद्यामधीयानः पूतः पूर्वमक्षि दक्षिणमञ्जयेत्॥

**अस8.60**

अथ मन्त्रः नमश्चक्षुःपरिशोधनराजाय तथागतायर्हते सम्यक्सम्बुद्धाय तद्यथा औं चक्षुः प्रज्ञाचक्षुर्ज्ञानचक्षुर्विज्ञानचक्षुर्विशोधय स्वाहा॥

**अस8.61**

ततः परं च तामेव धारिणीमनुस्मरन् सायम्प्रातः पत्यहमेतत्परमं पवित्रमारोग्यकरमूर्जस्करं सर्वविषघ्नमञ्जनमश्विभ्यामिन्द्रस्य वृत्रवधाभ्युद्यतस्य प्राक्प्रकल्पितम्।
तस्मोदतद्राज्ञां राजमहामात्राणां च महीं विजगीषमाणानां च ब्राह्मणानां च वेदाध्ययनमन्यद्वा महच्छास्त्रमवगाहमानानां प्रसन्नमना भिषक्प्रकल्पयेदिति।
भवन्ति चात्र श्लोकाः॥

**अस8.62**

अथ योगाः प्रवक्ष्यन्ते बृहस्पतिकृताः शिवाः।
यान् सेवमानो नृपतिः शत्रुभ्यो नैति पञ्चताम्॥

**अस8.63**

बिल्वाढकीयवक्षारपाटलीबाल्हिकोषणाः।
श्रीपर्णीसल्लकीयुक्ता निष्क्वाथः प्रोक्षणः परम्॥

**अस8.64**

सविषं प्रोक्षितं तेन सद्यो भवति निर्विसम्।
यवसेन्धनपानीयशस्त्रशय्यासनोदकम्॥

**अस8.65**

कवचाभरणच्छत्रबालव्यजनवेश्म च।
शेलुपाटल्यतिविषाशिग्रुगोपीपुनर्नवम्॥

**अस8.66**

समङ्गावृषमूलत्वक्कपित्थवृषशोणितम्।
सहदन्तशठं तद्वत् प्रोक्षणं विषनाशनम्॥

**अस8.67**
लाक्षाप्रियङ्गुमञ्जिष्ठासमङ्गालहरेणुकाः।
यष्ट्याह्वमधुसंयुक्ता बभ्रुपित्तेन कल्किताः॥

**अस8.68**
निखनेद्गोविषाणस्थाः सप्तरात्रं महीतले।
ततः कृत्वा मणिं हेम्ना बद्धं हस्तेन धारयेत्॥

**अस8.69**
संस्पृष्टं सविषं तेन सद्यो भवति निर्विषम्।
मनोह्वालशमीपुष्पत्वङ्निशाश्वेतसर्षपाः॥

**अस8.70**
कपित्थकुष्ठमञ्जिष्ठाः पित्तेन श्लक्ष्णकल्किताः।
शुनो गोःकपिलायाश्च सौम्याख्योऽयं वरोऽगदः॥

**अस8.71**
विषजित्परमं कार्यो मणिरत्नं च पूर्ववत्। मूषिकाजरुहा वापि हस्तबद्धा विषापहाः॥

**अस8.72**
हरेणुमांसीमञ्जिष्ठारजनीमधुकं मधु।
अक्षत्वक्सुरसं लाक्षा श्वपित्तं पूर्ववन्मणिः॥

**अस8.73**
वादित्राणि पताकाश्च पिष्टैरोभिश्च लेखिताः।
श्रुत्वा दृष्ट्वा समाघ्राय सद्यो भवति निर्विषम्॥

**अस8.74**
त्र्यूषणं पञ्चलवणं मञ्जिष्ठां रजनीद्वयम्।
सूक्ष्मैलां त्रिवृतां पत्रं विडङ्गानीन्द्रवारुणीम्॥

**अस8.75**
मधुकं चेति सक्षौद्रं गोविषाणे निधापयेत्।
तस्मादुष्णाम्बुना मात्रां प्राग्भक्तं विनियोजयेत्॥

**अस8.76**
विषं भुक्तं जरां याति निर्विषेऽपि न दोषकृत्।
जतुसर्जरसोशीरसर्षपा पत्रवालकैः॥

**अस8.77**
सवेल्लारुष्करपुरैः कुसुमैरर्जुनस्य च।
धूपो वासगृहे हन्ति विषं स्थावरजङ्गमम्॥

**अस8.78**
न तत्र कीटाः सविषा नोन्दुरा न सरीसृपाः।
न कृत्या कर्षणा(कार्मणा)द्याश्च धूपोऽयं यत्र दह्यते॥

**अस8.79**
शिखिपिञ्छं बलाकास्थि सर्षपाश्चन्दनं घृतम्।
धूपो विषघ्नः शयनवसनासनगेहगः॥

**अस8.80**
विशालाव्योषमञ्जिष्ठायष्टीलवणपञ्चकम्।
द्विनिशापत्रवेल्लैलात्रिवृच्चूर्णं समाक्षिकम्॥

**अस8.81**
गोशृङ्गे निहितं योज्यं स्नानीयेऽम्भसि भूपतेः।
पूर्वोकतत्र्यूषणादिं च स्नानीयेऽम्भसि योजयेत्॥

**अस8.82**
क्वाथोऽथवार्ककुसुमश्वेतापामार्गसर्षपैः।
सदध्याज्यः कृतो युक्तैः कतकानाकुलीद्वयैः॥

**अस8.83**
कल्को वा चन्दनक्षीरिपलाशद्रुमवल्कलैः।
मूर्वैलावालुसुरसनाकुलीतण्डुलीयकैः॥

**अस8.84**
क्वाथः सर्वोदकार्थेषु काकमाचीयुतैर्हितः।
रोचनापत्ननैपालीकुङ्कुमैस्तिलकान् वहन्॥

**अस8.85**
विषैर्न बाध्यते स्याच्च नारीनरनृपप्रियः।
चूर्णैर्हरिद्रामञ्जिष्ठाकिणिहीकणनिम्बजैः॥

**अस8.86**
दिग्धं निर्विषतामेति गात्रमित्याह गौतमः।
नस्यपानाञ्जनालेपैर्युञ्ज्यात् सञ्जीवनात्मकान्॥

**अस8.87**
अगदान् विषभुक्तस्य तीक्ष्णानि वमनानि च।
पिप्पलीमधुकक्षौद्रशर्करेक्षुरसैः सह॥

**अस8.88**
द्विनिशापत्रवेल्लैलात्रिवृच्चूर्णं समाक्षिकम्।
विरेचनं सिरामोक्षं प्राप्तं विस्रावणं यदि॥

**अस8.89**
हृदयावरणं कार्यं प्रागेवामित्रमध्यतः।
पिबेद्घृतमजेयाख्यममृतं वाप्यभुक्तवान्॥

**अस8.90**
सर्पिः क्षौद्रं दधि क्षीरमन्ततः शीतलं जलम्।
सितामधुकपालिन्दीकल्कवन्मांसमिष्यते॥

**अस8.91**
गोधाहरिणबभ्रूणां सकणाशुण्ठिपार्षतम्।
सनागरं सातिविषं शिखिनः ससितोपलम्॥

**अस8.92**
सुशीताः सघृताश्चैषां यथास्वं कल्पिता रसाः।
विषपीताय दद्याच्च शुद्धायोर्ध्वमधस्तथा॥

**अस8.93**
सूक्ष्मं ताम्ररजः काले सक्षौद्रं हृद्विशोधनम्।
शुद्धे हृदि ततः शाणं हेमचूर्णस्य दापयेत्॥

**अस8.94**
न सज्जते हेमपाङ्गे पद्मपत्रेऽम्बुवद्विषम्।
जायते विपुलं चायुर्गरेऽप्येष विधिः स्मृतः॥

**अस8.95**
इत्थं गरविषादिभ्यो रक्षेद्वैद्यो नरेश्चरम्।
स्यादुच्छेदस्तदुच्छेदात्प्रजानां सर्वकर्मणाम्॥

**अस8.96**
आज्ञाधैर्यक्षमात्यागा मानुषत्वेऽप्यमानुषाः।
यद्राज्ञः कर्मभिस्तस्मादाराध्योऽसावतीन्द्रियैः॥

**अस8.97**
यत्र साक्षन्नृपस्तत्र विज्ञातः प्रविशोद्भिषक्।
न सम्मतोऽप्यनुचितं यानस्थानासनं भजेत्॥

**अस8.98**
उचिते पुरतो राज्ञस्तिष्ठेद्वाक्यं च नाक्षिपेत्।
अहीनकालं राजार्थं स्वार्थं प्रियहितैः सह॥

**अस8.99**
देशे काले परार्थं च वदेद्धर्मार्थसंहितम्।
नानुशिष्यादपृच्छन्तं महदेतद्धि साहसम्॥

**अस8.100**
नाचरेदहितेनैनं मूलच्छेदकरं हि तत्।
अनुकूलं हितं वाच्यमहितादवारयेन्मिथः॥

**अस8.101**
उदारैः सान्त्वयन् वाक्यैर्दोषश्चेत्तदुपेक्षया।
तूष्णीं वा प्रतिवाक्ये स्याद्वर्जयेद्वेष्यसङ्कथाम्॥

**अस8.102**
विपश्चिदप्यचित्तज्ञो बालिशोऽपि तु भाववित्।
अतिप्रियोऽपि द्वेष्योऽपि यात्याशु विपरीतताम्॥

**अस8.103**
निवेद्य राज्ञे कुर्वीत कार्याणि सुलघून्यपि।
न यायान्न चिरं तिष्ठेत् कोशस्थानावरोधयोः॥

**अस8.104**
स्वल्पेऽपि दर्शयेत्तुष्टिं लाभेऽनुद्धतमानसः।
मिथः कथनमन्येन कौलीनं द्वन्द्ववादिताम्॥

**अस8.105**
वस्त्रादि राज्ञा सदृशं राजलीलां च वर्जयेत्।
दत्तं यत्तु नृपेणव तद्धार्यं तुष्टिवृद्धये॥

**अस8.106**
हसितव्ये सिमतं कुर्यात् प्रभोरेवानुवृत्तितः।
उच्यमानेऽवलम्बेत परमर्माणि मूकताम्॥

**अस8.107**
स्वमर्मणि तु बाधिर्यं धैर्यमाधुर्यसौष्ठवान्।
अत्यायासेन नात्मानं कुर्यादतिसमुच्छ्रितम्॥

**अस8.108**
पातो यथा हि दुःखाय नोच्छ्रायः सुखकृत्तथा।
आसन्नसेवा नृपतेः क्रीडाशस्त्राहिपावकैः॥

**अस8.109**
कौशलेनातिमहता विनीतैः सा निरुध्यते।
प्राप्य दुष्प्नापमैश्वर्यं बहुमानं च भूपतेः॥

**अस8.110**
यथोपभुञ्जीत चिरं तथा स्यादप्रमादवान्।
विदध्यात्परितः शय्यां रक्षामन्त्राभिमन्त्रिताम्॥

**अस8.111**
रात्रौ सिद्धार्थकान् भूतिमक्षतैरन्वितां शुचिम्।
रक्षाशक्तिं तथोच्छीर्षे सयवाङ्कुरयावकाम्॥

**अस8.112**
सदूर्वं पूर्णकलशं सपुष्पफलपल्लवम्।
उपहारं च सन्ध्यायां भुक्त्वा चान्ते निशासु च॥

**अस8.113**
एतत्स्वस्त्ययनं कर्म कर्तव्यं शुचिना शुचेः।
आयुस्यं पौष्टिकं भूतविषकार्मणपाप्मजित्॥

**अस8.114**
सङ्क्षेप एष विषपालनसाधनाय प्रोक्तस्तु विस्तरविधिः पुनरुत्तरे तु।
आलोच्य सम्यगखिलं मतिपूर्वकारी युञ्जीत तं परिविकल्प्य विकारचिह्नम्॥

**अस8.115**
इति विषगररक्षोरक्षणायोपदेशं भजति नरपतिर्यो नित्यमेवाप्रमत्तः।
निजपररिपुवृन्दैरप्रधृष्यो महात्मा जनयति जनतायाः क्षेमयोगौ चिराय॥
इति अष्टमोऽध्यायः।

# नवमोऽध्यायः

**अस9.1**
अथातो विरुद्धान्नविज्ञानीयमध्यायं व्याख्यास्यामः।
इति हस्माहुरात्रेयादयो महर्षयः॥

**अस9.2**
ग्राम्यानूपौदकपिशितानि मधुगुडतिलपयोमाषमूलकबिसैर्विरूढधान्यैश्च नैकध्यमद्यात्।
विशेषतः पयसा मत्स्यान्।
उभयं ह्येतन्मधुररसविपाकित्वादभिष्यन्दि शीतोष्णवीर्यत्वात् परस्परं विरुद्धम्।
तेष्वपि विशेषेण चिलिचिमः।
स पुनः शकली लोहितनयनः सर्वतो लोहितराजिर्लोहितप्रभाकरः प्रायो भूमौ चरति सोऽत्याभिष्यन्दितमत्वात् सुतरां व्याधीनुपजनयत्यामविषं च॥

**अस9.3**
सर्वं चाम्लं पयसैकध्यं विरुद्धम्।
तत उत्तरं वा विरुद्धं फलञ्च कङ्गुवरकमकुष्ठवेल्लकुलत्थमाषनिष्पावाश्च।
नमूलकदिहरितं भक्षयित्वा पयः सेव्यं कुष्ठाबाधभयात्।
पौष्करं रौहिणीकं जातुकं वा शाकं सह मधुप्योभ्यां नाभ्यवहरेत्।
ताभ्यां च सह कपोतान् सर्षपतैलभृष्टान्।
तथा सर्षपतैलभृष्टानां मत्स्यबदराणां बदराणि श्वाविद्वराहमांसं चैकध्यं पित्तेनाममांसानि, दध्ना कुक्कुटं पृषतं च कुसुम्भशाकेनैरौरभ्रं सौवीरकेण तिलशष्कुलीः, क्षीरेण लवणं मूलकेन माषसूपं, नवनीतेन शाकं, उपोदकां मैरेयमार्द्वीकाभ्यां, पीलूनि करीरैः, बिसैर्विरूढकानि, दध्ना माषसूपेन गुडेन मधुना घृतेन वा लकुचफलं, दध्ना तक्रेण गुडेन वा काकमाचीं, तामेव मत्स्यपचने शृङ्गिवेरपचने वा भाजने सिद्धामन्यत्र वा सिद्धां रात्रिमुषितां, कांस्यभाजने दशरात्रोषितं सर्पिर्मद्यदधिमधुभल्लातकेषु चोष्णम्॥

**अस9.4**
तक्रसिद्धकाम्पिल्लको विरुद्धः।
अङ्गारशूल्यो भासः।
सुराकृसरापायसाश्चैकध्यं विरुद्धाः॥

**अस9.5**
मधुसर्पिर्वसातैलोदकानि समधृतानि द्विशस्त्रिशः समस्तानि वा।
मधुघृते भिन्नांशे दिव्योदकानुपाने।
मधुपुष्करबीजं पद्मोत्तरिकाशाकं शार्करो मैरयो मधु च सहोपयुक्तं विरुद्धम्।
वातं चातिकोपयति।
हारिद्रकः सर्षपतैलभृष्टो विरुद्धः।
पित्तं चातिकोपयति।
पायसो मन्थानुपानो विरुद्धः।
श्लेष्माणं चातिकोपयति।
उपोदका तिलकल्कसिद्धा हेतुरतीसारस्य।
बलाका वारुण्या कुल्माषैश्च विरुध्दा।
सैव वराहवसया परिभृष्टा सद्यो व्यापादयति।
गोधालावंतित्तिरिमयूरकपिञ्जलाश्चैरण्डदार्वग्निसिद्धा एरण्डतैलसम्मूर्छिताः।
हारीतमांसं हारिद्रशूलकावसक्तं हारिद्राग्निप्लुष्टं च।
तदेव भस्मपांसुपरिध्वस्तं सक्षौद्रं च॥

**अस9.6**
तथा मत्स्यनिस्तालितस्नेहसाधिताः पिप्पल्यः।
शीतोष्णं नवपुराणमामपक्वं च नैकमैकध्यमद्यात्।
सलिलावगाहः सहसोष्णाभितप्तस्य त्वग्दृष्ट्योरुपघाताय।
तृष्णाभिप्रवृद्धये च।
तथैव च पयःपानं रक्तपित्ताय।
शरीरेणायस्तस्य सहसाभ्यवहारः छर्दिषे गुल्माय वा।
वाचा त्वायस्तस्य स्वरसादाय।
इत्यन्नपानद्रव्यविरोधैकदेशो बाहुल्येनोपयोगी कथितः।
भेषजद्रव्याणां तु यथोपदेशमेव प्रयोगो न्याय्यतरः।
तद्विरोधः पुनरतिप्रसङ्गभयान्नोक्तः।
न च तद्विज्ञानमेकान्तभद्रकं॥

**अस9.7**
अपिच।
उत्क्लेश्य दोषान्न हरेत् द्रव्यं यत्तत्समासतः।
विरुद्धं तद्धि धातूनां प्रत्यनीकतया स्थितम्॥

**अस9.8**
बलिनां मिथोगुणानां विषमतया समतयाप्युभयथापि।
संस्कारादिवशेन च भवति निसर्गादपि विरोधः॥

**अस9.9**
क्षीरं कुलत्थैः पनसेन मत्स्यैस्तप्तं दधि क्षौद्रघृते समांशे।
वार्यूषरे रात्रिषु सक्तवश्च तोयान्तरास्ते यवकास्तथा च॥

**अस9.10**
कुशाग्रीयधियामेतदुदाहरणमात्रकम्।
उपनीतमलं विद्वान् सर्वत्र क्रमते यतः॥

**अस9.11**
विस्फोटशोफमदविद्रधिगुल्मयक्ष्मतेजोबलस्मृतिमतीन्द्रियचित्तनाशान्।
कुर्याद्विरुद्धमशनं ज्वरमस्त्रपित्तमष्टौ गदांश्च महतो विषवच्च मृत्युम्॥

**अस9.12**
तेष्वाशु कुर्यात्संशुद्धिं शमं वा तद्विरोधिभिः।
द्रव्यैस्तैरेव वा पूर्वं शरीरस्याभिसंस्कृतिम्॥

**अस9.13**
व्यायामस्निग्धदीप्ताग्निवयस्थबलशालिनाम्।
विरोध्यपि न पीडायैसात्म्यमल्पं च भोजनम्॥

**अस9.14**
दोषादिवैपरीत्येन हरते रोगिणां रुजम्।
ऐकध्यं दधिदुग्धादियोजना न विरुध्यते॥

**अस9.15**
योगादिभेदाद्यद्यद्वा पथ्यानामप्यपथ्यता।
तद्भेदान्तरतस्तद्वद्विरोधोऽपि निवर्त्तते॥

**अस9.16**
पादांशेन त्यजेत्सात्म्यमहितं हितमाचरेत्।
एकान्तरं ततश्चोर्ध्वं द्व्यन्तरं त्र्यन्तरं तथा॥

**अस9.17**
क्रमेणानेन सन्त्यक्ता दोषाः संवर्द्धिता गुणाः।
प्रभवन्ति न पीडायै प्राप्नुवन्ति स्थिरात्मताम्॥

**अस9.18**
त्रितयं चतदुपस्तम्भनमाहारः स्वप्नोऽब्रह्मचर्यं च।
एभिर्युक्तियुक्तैरुपस्तब्धमुपस्तम्भैः शरीरं बलवर्णोपचयोचितमनुवर्त्तते यावदायुःसंस्कारः।
तत्र आहार उक्तो वक्ष्यते च॥

**अस9.19**
लोकादिसर्गप्रभवा तमोमूला तमोमयी।
बाहुल्यात्तमसो रात्रौ निद्रा प्रायेण जायते॥

**अस9.20**
श्लेष्मावृतेषु स्रोतस्सु श्रमादुपरतेषु च।
इन्द्रियेषु स्वकर्मभ्यो निद्रा विशति देहिनम्॥

**अस9.21**
सर्वेन्द्रियव्युपरतौ मनोऽनुपरतं यदा।
विषयेभ्यस्तदा स्वप्नं नानारूपं प्रपश्यति॥

**अस9.22**
निद्रायत्तं सुखं दुःखं पुष्टिः कार्श्यं बलाबलम्।
वृषता क्लीबता ज्ञानमज्ञानं जीवितं न च॥

**अस9.23**
अकालेऽतिप्रसङ्गाच्च न च निद्रा निषेविता।
सुखयुषी पराकुर्यात् कालरात्रिरिवापरा॥

**अस9.24**
सैव युक्ता पुनर्युङ्क्ते निद्रा देहं सुखायुषा।
योगाभियोगिनो बुद्धिर्निर्मला तपसा यथा॥

**अस9.25**
रात्रौ जागरणं रूक्षं स्निग्धं प्रस्वपनं दिवा।
अरूक्षमनभिष्यन्दि त्वासीनप्रचलायितम्॥

**अस9.26**
ग्रीष्मे वायुचयादानरौक्ष्यरात्र्यल्पभावतः।
दिवास्वप्नो हितोऽन्यस्मिन् कफपित्तकरो हि सः॥

**अस9.27**
मुक्त्वातिभाष्ययानाध्वमद्यस्त्रीभारकर्मभिः।
क्रोधशोकभयैः क्लान्तान् श्वासहिध्मातिसारिणः॥

**अस9.28**
वृद्धबालाबलक्षीणक्षततृट्च्छूलपीडितान्।
अजीर्ण्यभिहतोन्मत्तान् दिवास्वप्नोचितानपि।
धातुसाम्यं तथा ह्येषां श्लेष्मा चाङ्गानि पुष्यति॥

**अस9.29**
बहुमेदःकफाः स्वप्युः स्नेहनित्याश्च नाहनि।
विषार्त्तः कण्ठरोगी च नैव जातु निशास्वपि॥

**अस9.30**
हलीमकशिरोजाड्यस्तैमित्यगुरुगात्रताः।
ज्वरभ्रममतिभ्रंशस्रोतोरोधाग्निमन्दताः॥

**अस9.31**
शोफारोचकहृल्लासपीनसार्द्धावभेदकाः।
कण्डूरुक्कोठपिटकाकासतन्द्रागलामयाः॥

**अस9.32**
विषवेगप्रवृत्तिश्च भवेदहितनिद्रया।
अपच्यमानो बाहुल्यात् स्रोतांस्यावृणुते कफः॥

**अस9.33**
ततः स्रोतस्सु रुद्धेषु जायते गात्रगौरवम्।
गुरुगात्रस्य चालस्यमालस्यादतिनिद्रता॥

**अस9.34**
विरेकः कायशिरसोर्वमनं रक्तमोक्षणम्।
धूमः क्षूत्तृड्व्यथाहर्षशोकमैथुनभीक्रुधः॥

**अस9.35**
चिन्तोत्कण्ठासुखा शय्यासत्वौदार्यं तमोजयः।
रूक्षान्नं चाहितां निद्रां वारयन्ति प्रसङ्गिनीम्॥

**अस9.36**
एत एव च विज्ञेया निद्रानाशस्य हेतवः।
कालशीलक्षयो व्याधिर्वृद्धिश्चानिलपित्तयोः॥

**अस9.37**
निद्रानाशादङ्गमर्द्दशिरोगौरवजृम्भिकाः।
जाड्यग्लानि भ्रमापक्तितन्द्रारोगाश्च वातजाः॥

**अस9.38**
कफोऽल्पो वायुनोद्धूतो धमनीः सनिरुध्य तु।
कुर्यात्संज्ञापहां तन्द्रां दारुणां मोहकरिणीम्॥

**अस9.39**
उन्मीलितविनिर्भुग्ने परिवर्त्तिततारके।
भवतस्तत्र नयने स्रुते लुलितपक्ष्मणी॥

**अस9.40**
अर्द्धत्रिरात्रात्सा साध्या न सा साध्या ततः परम्।
यथाकालमतो निद्रां रात्रौ सेवेत सात्म्यतः॥

**अस9.41**
असात्म्याज्जागरादर्धं प्रातः स्वप्यादभुक्तवान्।
शीलयेन्मन्दनिद्रस्तु क्षीरमिक्षुरसं रसान्॥

**अस9.42**
आनूपौदकमांसानां भक्ष्यान् गौडिकपैष्टिकान्।
शालीन्मद्यानि माषांश्च कीलाटान् माहिषं दधि॥

**अस9.43**
अभ्यङ्गोद्वर्त्तनस्नानमूर्ध्दश्रवणपूरणम्।
चक्षुषस्तर्पणं लेपः शिरसो वदनस्य च॥

**अस9.44**
प्रवाते सुरभौ देशे सुखां शय्यां यथोचिते।
संवाहनं स्पर्शसुखं चित्तज्ञैरनुजीविभिः॥

**अस9.45**
सर्पिः क्षीरानुपानं च जीवनीयैः शृतं पिबेत्।
कान्ताबाहुलताश्लेषो निर्वृतिः कृतकृत्यता॥

**अस9.46**
मनोऽनुकूला विषयाः कामं निद्रासुखप्रदाः।
ब्रह्मचर्यरतेर्ग्रम्यसुखनिस्पृहचेतसः॥

**अस9.47**
निद्रा सन्तोषतृप्तस्य स्वं कालं नातिवर्त्तते।
एतान्येव च भूयिष्ठं निद्रालुः परिवर्जयेत्॥

**अस9.48**
कालस्वभावामयचित्तदेहखेदैः कफागन्तुतमोभवा च।
निद्रा बिभर्त्ति प्रथमा शरीरं पाप्मान्तगा व्याधिनिमित्तमन्याः॥

**अस9.49**
ग्राम्यधर्मप्रवृत्तौ तु रजस्वलामनिष्टामनिष्टाचारामशस्तामतिस्थूलामतिकृशां गर्भिणीं सूतिकामनुत्तानां विकृताङ्गां गणिकामप्रजसं दुष्टयोनिमन्ययोनिमन्यस्त्रियं विशेषाच्च वयोवर्णवृद्धां सगोत्रां गुरुमित्रबन्धुभृत्यपत्नीं वर्णिनीं तथा चैत्यचत्वरचतुष्पथोपवनश्मशानाघातसलिलौषधद्विजगुरुसुरनृपालयेष्वहनि गोसर्गे मध्यन्दिनेऽर्द्धरात्रौ पर्वेष्वनङ्गे पिपासुरप्रणीतसङ्कल्पो वा न गच्छेत्।
न च विपरीतव्यवाये योजयेत्।
विशेषेण चातिव्यायतां गर्भिणीं नवप्रसूतामृतुमतीं संवृतयोनिं च।
मूर्द्धाभिघातं च परिहरेत्।
न च निषेकाभिमुखं शुक्रं धारयेदिति।
मनःशरिरस्थितिमात्रमेव व्यवायं सेवेत।
न तत्परः स्यादिति॥

**अस9.50**
भवति चात्र श्लोकः।
विस्रब्धहृष्टो रहसि तत्कामस्तरुणः पुमान्।
समस्थिताङ्गः सुरभिर्मुक्तमूत्रादिरव्यथः॥

**अस9.51**
नानाशितो नात्यशितो वृष्याणां तर्पितस्त्र्यहम्।
नारीं नारीर्गुणैर्युक्तां सहपूर्वगुणां व्रजेत्॥

**अस9.52**
द्व्यहाद्वसन्ते तस्यान्ते पक्षात्तद्वत् घनोदये सेवेत कामतः कामं हेमन्ते शिशिरे बली।
स्नानाङ्गरागव्यजनेन्दुपादमांसासवक्षीररसान् रसालाम्॥

**अस9.53**
भक्ष्यान् सिताढ्यान् सलिलं सुशीतम्।
सेवेत निद्रां च रतान्ततान्तः॥

**अस9.54**
स्त्रीसंसर्गद्धि सद्यः स्यात् क्लीबता बलिनामपि।
एवं चाप्यायते शीघ्रं तेषां शुक्रं च धाम च॥

**अस9.55**
दृष्ट्यायुरोजःशुक्रानां क्षयं मेढ्राश्रयान् गदान्।
वायोः कोपमधर्मं च मूढः प्राप्नोत्यतोऽन्यथा॥

**अस9.56**
उत्तानो वेगरोधी वा वृद्धिमेहाश्मशर्कराः।
तिमिरादिगदोत्पत्तिर्मूर्द्धाद्याहननाद्ध्रुवम्॥

**अस9.57**
भ्रमक्लमोरुदौर्बल्यबलधात्विन्द्रियक्षयः।
अपर्वमरणं च स्याद्विशेषेणातिमैथुनात्॥

**अस9.58**
नचोनः षोडशाद्वर्षात् सप्ततेः परतो न अच्।
आयुष्कामो नरः स्त्रीभिः संयोगं गन्तुमर्हति॥

**अस9.59**
अतिबालो ह्यसंपूर्णसर्वधातुः स्त्रियं व्रजन्।
उपतप्येत सहसा तटाकमिव काजलम्॥

**अस9.60**
शुष्कं रूक्षं यथा काष्ठं जन्तुजग्धं विजर्जरम्।
स्पृष्टमाशु विशीर्येत तथा वृद्धः स्त्रियं व्रजन्॥

**अस9.61**
कायस्य तेजः परमं हि शुक्रमाहारसारदपि सारभूतम्।
जितात्मना तत् परिरक्षणीयं ततो वपुः सन्ततिरप्युदारा॥

**अस9.62**
अप्रमत्तो भजेद्भावांस्तदात्वसुखसंज्ञकान्।
सुखोदर्केषु सज्जेत देहस्यैतदलं हितम्॥

**अस9.63**
प्रज्ञापराधोऽसात्म्यार्थसंयोगः कालवैकृतम्।
हितेऽपि रतमाहारे योजयन्त्यामयैर्नरम्॥

**अस9.64**
नापथ्यसेविनं सद्यः प्रबाधन्ते तदा मलाः।
प्रकोपं प्रतिविघ्नान्ति भिन्नैर्दूष्यादिभिर्यदा॥

**अस9.65**
न च सर्वोपचारोऽपि सर्वदा सर्वदोषकृत्।
न हि सर्वाण्यपथ्यानि तुल्यदोषाणि नैव च॥

**अस9.66**
सर्वे तुल्यबला दोषा न सर्वाणि वपूंषि च।
व्याधिक्षमत्वे शक्तानि यतोऽपथ्यं तदेव तु॥

**अस9.67**
गच्छत्यपथ्यतमतां तुल्यदोषादिवर्द्धितम्।
त एव च पुनर्दोषा हेतुभिर्बहुभिश्चिताः॥

**अस9.68**
मिथो विरुद्धा बलिनो दीर्घकालानुबन्धिनः।
सर्वे समप्रकुपिताः प्राप्याल्पमपि कारणम्॥

**अस9.69**
प्राणायतनमाश्रित्य गर्भीराः सर्वमार्गगाः।
देहेऽहितोचिते ते स्युश्चिरादप्याशुकारिणः॥

**अस9.70**
अहितान्यपि चान्येषामभ्यासादुपशेरते।
दोषाश्चैषां क्षयं यान्ति कर्मवातातपादिभिः॥

**अस9.71**
भिन्नाहारवयः सात्म्यप्रकृतीनां समं भवेत्।
एको विकृतवाय्यादियुगपत्सेवनात् गदः॥

**अस9.72**
वातादीनां तु विकृतिर्विकृताद्ग्रहचारतः।
भौमान्तरिक्षदिव्येभ्य उत्पातेभ्यश्च जायते।
सम्भवः पुनरेतेषां कर्मणः सामुदायिकात्॥

**अस9.73**
दुष्टो वायुरभिष्यन्दी स्तिमितोऽत्युष्णशीतलः।
कुण्डली भैरवरवः परुषोऽनार्त्तवो बली॥

**अस9.74**
अन्योन्यव्याहतगतिः पांसुबाष्पविषान्वितः।
रसवर्णादिविकृतमपक्रान्तविहङ्गमम्॥

**अस9.75**
निन्दितप्रभवं तोयमुपक्षीणजलाशयम्।
मक्षिकामूषिकाव्यालबहूत्पातप्रदूषितः॥

**अस9.76**
देशोऽपथ्यान्नबहुलो नष्टधर्ममहौषधिः।
कालश्च विपरीतोऽतिहीनलिङ्गो यथायथम्॥

**अस9.77**
एते दुष्परिहारत्वादहितायोत्तरोत्तरम्।
येषामनियतं कर्म तस्मिन् काले सुदारुणे॥

**अस9.78**
कर्म पञ्चविधं तेषां योज्यं तद्वद्रसायनम्।
शस्यते देहवृद्धिश्च भेषजैः पूर्वमुद्धृतैः॥

**अस9.79**
ब्रह्मचर्यं दया दानं सदाचाररतिः शमः।
सद्धर्मः सत्कथा पूजा देवर्षीणां जितात्मनाम्॥

**अस9.80**
देशानामविपन्नानां साधूनां च निषेवणम्।
दैवव्यपाश्रयं चेष्टं कर्म जीवितरक्षणम्॥

**अस9.81**
हेमन्तादिषु कुर्वीत स्वं स्वं चाकालिकेष्वपि।
विधिं तच्छीलनं यस्माच्छीतादिद्वन्द्वकारितम्॥

**अस9.82**
ऋतुचर्यादिशीतोष्णवृष्टिदोषप्रतिक्रिया।
अत एव च चर्यायां हेमन्तशिशिरे समे॥

**अस9.83**
सर्वप्राणभृतां नित्यमायुर्युक्तिमपेक्षते।
दैवे पुरुषकारे च स्थितं तस्य बलाबलम्॥

**अस9.84**
अन्यजन्मकृत कर्म दैवं पौरुषमैहिकम्।
विद्यात्ते कर्मणी त्रेधा श्रेष्ठमध्यावरत्वतः॥

**अस9.85**
तयोरुदारयोर्युक्तिर्दीर्घस्य सुसुखस्य च।
नियतस्यायुषो हेतुर्विपरीतस्य चापरा॥

**अस9.86**
मध्या मध्यस्य मिश्रस्य सङ्कीर्णा श्रुणु चापरम्।
दैवं पुरुषकारेण दुर्बलं ह्युपहन्यते॥

**अस9.87**
तथा दैवेन बलिना पौरुषं कर्म दुर्बलम्।
दृष्ट्वा यदेके मन्यन्ते नियतं मानमायुषः॥

**अस9.88**
कर्म किञ्चित् क्वचित्काले विपाकनियतं महत्।
किञ्चिच्च कालनियतं प्रत्ययैः प्रतिबोध्यते॥

**अस9.89**
एवं च द्विविधो मृत्युः कालाकालविभेदतः।
उपदिष्टस्ततश्चैष हिताहितविधिक्रमः॥

**अस9.90**
एकोत्तरं मृत्युशतं ब्रुवते वेदवादिनः।
तत्रैकः कालसंयुक्तः शेषास्त्वागन्तवः स्मृताः॥

**अस9.91**
श्येनादिना च यागेन भ्रातृव्यस्य तथा च तैः।
दीर्घश्रवससोमाद्यैर्विहितश्चात्मनो वधः॥

**अस9.92**
आयुष्कामस्य तत्प्राप्तिस्तथेष्ट्या मित्रविन्दया।
सर्वस्मादेव चात्मानं गोपयेदीदृशी स्मृतिः॥

**अस9.93**
तथा मरणमुद्दिष्टं सौगतानां चतुर्विधम्।
विषमापरिहारेण जायते नियतायुषाम्॥

**अस9.94**
ध्रुवं रोगित्वमन्येषां मृत्युरेव त्वपर्वणि।
अकाण्डे शस्त्रघाताद्यैः प्रत्यक्षो मृत्युरन्यथा॥

**अस9.95**
उद्भ्रान्तचण्डमातङ्गतुरङ्गादिसमागमम्।
आरातिदुष्टवाय्वादिसाहसाहितभोजनम्॥

**अस9.96**
वर्जयेदिति न ब्रूयुर्मुनयो दिव्यचक्षुषः।
दैवव्यपाश्रयादीश्च रसायनविधीस्तथा॥

**अस9.97**
न वा तेऽपि यथाकाममायुषः स्थितिमाप्नुयुः।
अहिसिंहगजादिभ्यो विदुषां न भयं भवेत्॥

**अस9.98**
मिथ्याप्राकारदुर्गाणि मिथ्यामारणरक्षणम्।
आयुष्कामस्य मिथ्यैव परदारादिवर्जनम्॥

**अस9.99**
मन्त्रदेवतयाहूता नाचक्षीरन् महाहयः।
विषसुप्तप्रबुद्धस्था भावाभावौ तदायुषः॥

**अस9.100**
सन्यासरोहिणीकादिग्रस्तस्य सहसा भवेत्।
उपेक्षया न मरणं जीवितं वा चिकित्सया॥

**अस9.101**
प्रत्यहं नृसहस्रस्य युद्‌वेऽन्योन्यमभिघ्नतः।
साधुवृत्तस्य चातुल्या न भवेदायुषः स्थितिः॥

**अस9.102**
नायुधैर्द्विषमिन्द्राद्या नौषधैरार्तमश्विनौ।
उपक्रमेरन्न भवेदकालमरणं यदि॥

**अस9.103**
घटानामामपक्वानां पालनापरिपालनैः।
चिराल्पकालवर्त्तित्वं चित्रस्थानां च दृश्यते॥

**अस9.104**
इत्यत्यन्तप्रसिद्धेऽपि सिद्धे सर्वागमैरपि।
दृष्टेऽप्यकालमरणे विचिकित्सेत्कथं बुधः॥

**अस9.105**
गुणवद्भिषगादीनां सम्भवे सम्भवेत्तु यः।
मृत्युं तं कालजं प्राहुरितरं तद्विपर्यये॥

**अस9.106**
यथा रथो वाह्यमानो न्यायेन क्रमशः क्षयम्।
यायादात्मवतामायुस्तथान्येषां विपर्ययः॥

**अस9.107**
शुचितैलदशो दीपः कीटवाताद्यपीडितः।
दीप्तिमान् वर्त्तते सम्यक् यथैवास्नेहसङ्क्षयात्॥

**अस9.108**
स एवातो यथा च स्याद्विपरीतो विपर्यये।
हिताहितोपचारेण तथैव पुरुषो ध्रुवम्॥

**अस9.109**
सर्वमन्यत् परित्यज्य शरीरं पालयेदतः।
तदभावे हि भावानां सर्वाभावः शरीरिणाम्॥

**अस9.110**
नगरी नगरस्येव रथस्येव रथी तथा।
स्वशरीरस्य मेधावी कृत्येष्ववहितो भवेत्॥

**अस9.111**
आहारकल्पनाहेतून् स्वभावादीन् विशेषतः।
समीक्ष्य हितमश्नीयाद्देहो ह्याहारसम्भवः॥

**अस9.112**
भीलज्जायन्त्रणालोभहर्षशोकवशं गतः।
न जातु धारयेद्वेगांस्तद्धि सर्वापदास्पदम्॥

**अस9.113**
हितमभ्यस्यतः पुंसो नाकाले कालदंष्ट्रया।
सञ्जायते परामर्शो बलोत्साहेन्द्रियायुषाम्॥

**अस9.114**
अहितान्यपि सन्त्यज्य दोषमाप्याप्नुयाद्यदि।
तथाप्यानृण्यमायाति साधूनामात्मवानिति॥

**अस9.115**
यच्च रोगसमुत्थानं न शक्यमिह केनचित्।
परिवर्तुं न तत् प्राप्य शोचितव्यं मनीषिणा॥

**अस9.116**
हिताहारविहाराणां सदाचारनिषेविणाम्।
लोकद्वयव्यपेक्षाणां जीवितं ह्यमृतायते॥

**अस9.117**
गृध्नुर्ग्राम्यसुखे वश्यः क्लेशानां हतसत्पथः।
मूढो जीवत्यनर्थाय दुर्गतिं परिबृंहयन्॥

**अस9.118**
विदुषान्तश्शरीरस्थान्नित्यं सन्निहितानरीन्।
जित्वा वर्ज्यानि वर्ज्यानि चिरं जीवितुमिच्छता॥

**अस9.119**
तदात्वे चानुबन्धे वा तस्मात् कर्माशुभोदयम्।
स्मरन्नात्रेयवचसो न धीमान् कर्तुमर्हति॥
इति नवमोऽध्यायः॥

# दशमोऽध्यायः

**अस10.1**
अथातोऽन्नपानविधिमध्यायं व्याख्यास्यामः।
इतिहस्माहुरात्रेयादयो महर्षयः॥

**अस10.2**
विधिविहितमन्नपानमिष्टेन्द्रियार्थमायतनमायुषो ब्रुवते।
यदायत्तानि ह्योजस्तेजोधात्विन्द्रियबलतुष्टिपुष्टिप्रतिभारोग्यादीनि।

तदिन्धना चान्तराग्नेः स्थितिः।
अग्निमूलं च देहधारणमिति॥

**अस10.3**
अथात्मवान् स्वभावसंयोगसंस्कारमात्रादेशकालोपयोगव्यवस्थाः सप्ताहारकल्पनाविशेषाणां स्वास्थ्यास्वास्थ्यफलानां हेतुभूताः समीक्ष्य हितमेव अनुरुध्येत।
तत्र स्वभावतो दिव्योदकरक्तशालिषष्टिकमुद्गैणलावादयो लघवः।
क्षीरेक्षुव्रीहिमाषानूपामिषादयो गुरव इति।
ते खल्वपि संयोगादिविशेषैरन्यथात्वं प्रतिपद्यन्ते॥

**अस10.4**
तत्र संयोगो नाम द्वयोर्बहूनां वाद्रव्याणां संहतीभावः।
स विशेषमारभते यन्नैकैकशो द्रव्याणि।
संस्कारस्तु तोयाग्निसन्निकर्षशौचमन्थनदेशकालभावनाभाजनादिभिरुपजन्यते।
मात्रा पुनः पिण्डपरिमाणतः समुदायेन प्रतिद्रव्यापेक्षया चाहारराशिः।
देशो द्रव्यस्योपयोक्तुश्चोत्पत्यवस्थाने।
तत्र पुनरुपयोक्तास्वस्थातुरत्वतः प्रकृतिभेदतश्च परीक्ष्यः॥

**अस10.5**
कालस्तु ऋतुव्याध्यपेक्षो जीर्णाजीर्णलक्षणश्च।
अजीर्णेऽपि पूर्वस्याहारस्यापरिणतो रस उत्तरेणोपसंसृज्यमानः सर्वान् दोषान् प्रकोपयत्याशु।
जीर्णे तु स्वस्थानस्थेषु दोषेषु वातानुलोम्यादुत्सृष्टेषु मूत्रपुरीषवेगेषु विशुद्धेषूद्गारहृदयस्रोतोमुखेषु विशदकरणे लघुनि शरीरेऽग्नावुदीर्णे जाताया बुभुक्षायामभ्यवहृतमन्नमप्रदूषयद्दोषानायुर्बलवर्णानभिवर्द्धयति।
केवलमयमेव कालो भोजनस्य॥

**अस10.6**
अतीतकालं पुनस्तद्वातविष्टब्धं कृच्छ्राद्विपच्यते कर्शयत्यन्नरुचिं च पुनरुपहन्ति।
उपयोगव्यवस्था तु नास्नातो न दिग्वासा नैकवस्त्रधृक् न मलिनवसनो नाहुत्वा न जपित्वा नानिरूप्य देवताभ्यो न पितृभ्यो न दत्वाग्रमन्नमग्नये न गुरुभ्यो नातिथये नाभ्यागतेभ्यो न श्ववयःश्वपचेभ्यः प्रत्यवेक्ष्य चाश्रितोपाशितानपि तिरश्चोऽपि स्वपरिगृहीतान् प्रशस्तदेशकालोपकरणयुक्तः स्रग्वी विभूषितः सुरन्धिरार्द्रपाणिपादः सुविशुद्धवदनोऽभिमतसहायः केशमक्षिकाद्यनुपजुष्टमनिन्द्यमनिन्दन्ननिन्दितमपुनरुष्णीकृतं नात्युष्णमनुपदग्धं सुसिद्धमलोलो नासात्म्यं नाविदितं नाविदितागमं नातिसायं नातिप्रगे नाकाशे नातपे नान्धकारे नाधो वृक्षस्य न श्य्यास्थो नोन्नम्य प्रदेशिनीं न पात्रे भिन्ने नासंवृते न मलिने भावदूषिते वा न चासनस्थिते न हस्तस्थे न हस्ते प्राङ्मुखः सुमनाः शुचिभक्ताक्षुधितानुकूलजनोपहितं हितमन्नमश्नीयात्।
न पर्युषितमन्यत्र मांसोपदंशभक्ष्येभ्यः।
नाशेषमन्यत्र दधिमधुघृतसलिलसक्तुशुक्तपायसेभ्योऽपि च।
स्निग्धं लघूष्णमविलम्बित मनतिद्रुतमजल्पन्नहसंस्तन्मनाः समीक्ष्य सम्यगात्मानम्॥

**अस10.7**
स्निग्धलघूष्णानि हि वह्निमौदर्यमुदीरयन्ति कोष्ठं परिशोधयान्ति धातून्न विकुर्वते क्षिप्रं जरयन्ति अनिलमनुलोमयन्ति।
तथा स्निग्धं दृढीकरोतीन्द्रियाण्युपचिनोति शरीरमपचिनोति जरसं बलमभिवर्द्धयति वर्णप्रसादमभिनिर्वर्त्तयति।
लघु च पुनः स्वभावादिभिरन्नमप्रतिपीडयद्दोषानव्यथमानं परिणाममेति।
विपन्नमपि चाल्पदोषं भवति।
उष्णं च पुनर्जनयति रुचिमुपशोषयति श्लेष्माणम्।
विलम्बितं तु भुञ्जानो न तृप्तिमधिगच्छति बहु च भुङ्क्ते शीतीभवति चान्नजातं विषमपाकं च भवति।
अतिद्रुतं तु भुञ्जानस्य जल्पतो हस्तोऽन्यमनसो वा भवेदुत्स्नेहनमवसादनं भोजनस्याप्रतिष्ठानं गुणदोषाविभावनं च॥

**अस10.8**
समीक्ष्य सम्यगात्मानमिति ममेदं सात्म्यमिदमसात्म्यमिति नित्यमप्रमत्तः प्रत्यवेक्षेत।
तत्र सात्म्यं नाम सहात्मना भवत्यभ्यस्तं तदौचित्यादुपशेत इत्येके।
सात्म्यविपरीतमनुपशयादसात्म्यम्।
अन्ये पुनः प्रकृतिवयोदेशर्तुदोषव्याधिवशेन सात्म्यं बहुविधमिच्छन्ति।
ते ह्युपशयमात्रमङ्गीकृत्य विपरीतगुणमप्युपचारेण सात्म्यमाचक्षते।

तुल्यगुणं चानुपशयादसात्म्यम्।
सात्म्यं तु प्रवरावरमध्यविभागेन त्रिविधम्।
तत्र सर्वरसं प्रवरमेकरसमवरं मध्यं तु मध्यममेव।
तेषु प्रवरं समदोषस्योपदिशन्तीति।
इतरेषामपि क्रमेण सात्म्यमपि चाहितं पादेन वा विवर्जयेदित्युक्तं प्राक्।
तत्र यदाहारजातं समधातूननुवर्त्तयति विषमांश्च समीकरोति तत्समासतो हितम्।
विपरीतमहितम्।
तत् पुनर्मात्रायोगादिवैचित्र्यादनियतमपि यथोपदेशं यथाभूयिष्ठं च शीलयेत् परिहरेच्च॥

**अस10.9**
तथा विशेषतः समशनमध्यशनममात्रशनं विषमाशनं च वर्जयेत्।
तत्र पथ्यापथ्येमकत्रभुक्तं समशनम्।
भुक्तस्योपरि भुक्तमध्यशनम्।
अमात्राशनं पुनः पृथगेवोपदेक्ष्यते।
अप्राप्तातीतकालं तु भुक्तं विषमाशनमिति।
भुञ्जानस्तु पेयायूषरसान् व्यञ्जनानि राजतेषु पात्रेषु निदध्यात्।
परिशुष्कप्रदिग्धानत्युष्णं च पयः सौवर्णेषु।
खलखट्वरकाम्बलिकान् कांस्येषु।
रागषाडवसट्टकान् वज्रवैडूर्य विचित्रेषु।
घृतमायसे पयः सुशीतं ताम्रमये पानीय पानकानि च मृद्धेमस्फटिककाचमयेषु औदनं च विस्तीर्णे मनोरमे स्थाने।
अन्यथा हि वर्णगन्धरसान्यत्वादहितं स्यात्॥

**अस10.10**
अपि च।
दक्षिणपार्श्वे भक्ष्यं स्थापयेत्।
सव्ये पेयं लेह्यं मुखोद्घर्षणपिण्डीं च मध्ये भोज्यमिति।
यथाग्निसात्म्यं तु प्राक् द्रवमुपशुष्कं वाश्नीयात्।
प्रागेव तु गुरुस्वादुस्निग्धं च।
मध्येऽम्ललवणम्।
अन्ते रूक्षं द्रवमितररसयुक्तं च।
तत्र मन्दाग्रेर्द्रवोष्णेन समुत्तेजितोष्मणोऽन्यदुपयुक्तं सम्यक् पाकमेति॥

**अस10.11**
अनुपाने तु सलिलमेव श्रेष्ठं सर्वरसयोनित्वात्सर्वभूतसात्म्यत्वाज्जीवनादिगुणयोगाच्च।
तच्छीतं दधिमधुयवगोधूममद्यविशेषेषु सर्वेषु च विदाहिषु शरद् ग्रीष्मयोश्च।
उष्णं पिष्टमयेष्वन्येषु च दुर्जरेषु हेमन्ते च।
द्रवद्रव्यविज्ञानीयं चेक्षेत।
क्षीरं शालिषष्टिकयोः तथैवोपवासाध्वभाष्यस्त्रीव्यायामक्लान्तबालवृद्धेषु।
मांसरसः शोषादिषु।
वाते त्वम्लानि च।
पित्ते शर्करोदकम्।
त्रिफलोदकं तु सक्षौद्रं श्लेष्मणि प्राथश्चाक्षिगलरोगेषु।
मस्त्वेव वा दध्नि कूचिकाकीलाटयोश्च।
धान्याम्लं मस्तु तक्रं वा शाकावरान्नेषु।
मद्यं मांसेषु फलाम्लमम्बु वासवांश्च विविधान् विभज्य प्रयोजयेत्।
विशेषतस्तु मध्वासवान् ग्राम्येषु तीक्ष्णान् त्रिफलासवान् वन्येषु।
न्यग्रोधादिफलासवान् विष्किरेषु अर्कशेलुशिरीषकपित्थासवान् बिलेशयेषु दिग्धहतेषु च।
अम्लफलासवान् प्रसहेषु काशेक्षुपद्मबीजशृङ्गाटककशेरुकमृद्वीकाखदिरासवान् क्षौद्रयुक्तं वा शीतमुदकमुदश्चिद्वा महामृगेष्वौदकेषु च।
सुरां प्रतुदेषु तथा श्रमार्त्तेषु कृशेषु च।
मधूदकं स्थूलेषु।

मद्यं मद्यमांससात्म्येष्वल्पाग्निषु।
अपि च।
समासेनान्नविपरीतमविरोधि च॥

**अस10.12**
अनुपानं खलु तर्पयति प्रीणयत्यूर्जयति बृंहयति देहस्य पर्याप्तिमभिनिर्वर्तयति भुक्तमवसादयत्यन्नसङ्घातं भिनत्ति मार्दवमापादयति क्लेदयति सुखपरिणामितामाशुव्यवायितां चाहारस्योपजनयति।
वर्ज्यं तूर्ध्वजत्रुगदश्वासकासप्रसेकहिध्मास्वरभेदोरःक्षतिभिर्गीतभाष्यप्रसक्तैश्च।
तेषां हि प्रदूष्यामाशयमुरःकण्ठस्थितमाहारजं स्नेहमासाद्य तदभिष्यन्दाग्निसादच्छर्द्यादीनामयान् विदध्यात्।
पीत्वा च भाष्यगेयाध्वस्वप्नान्न शीलयेत्।
पानं च प्रक्लिन्नदेहमेदहण्ठाक्षिरोगव्रणिन इति॥

**अस10.13**
ततः पाणिगतमन्नमन्येनापनीय दन्तान्तरस्थं च शनैः शनैः शोधनेन विशोध्य लेपगन्धस्नेहापनोदमाचान्तोऽङ्गुल्यग्रगलिताम्बुपरिषिक्तनेत्रस्ताम्बूलादिकृत वदनवैशद्यो धूमपानादिहृतोर्ध्वकफवेगः पदशतमात्रं गत्वा वामपार्श्वेन संविशेत्।
द्रवोत्तरभोजनस्तु शय्यां नातिसेवेत।
यानप्लवनवाहनाग्न्यातपांश्च भुक्तवान् वर्जयेत्।
आहारपरिणामकराः पुनरिमे भावाः।
तद्यथा ऊष्मा वायुः स्नेहः क्लेदः कालः समयोगश्च।
तत्रोष्मा पचति वायुरपकर्षति स्नेहो मार्दवं जनयति क्लैदः शैथिल्यमापादयति कालः सर्ववपुर्व्याप्तिमभिनिर्वर्त्तयति।
समयोगस्त्वेषामन्नपरिणामधातुसाम्यकरः सम्पद्यते।
समयोगस्य तु पुनः कारणान्युचितो हितश्च देहसंस्कारोऽभ्यवहारश्चेष्टा शयनं सौमनस्यं च।
परिणमतस्त्वाहारस्य गुणाः शरीरगुणभावमापद्यन्ते यथास्वमविरुद्धाः।
विरुद्धास्तु विहताश्च विरोधिभिर्विहन्युः शरीरमिति।
भवन्ति चात्र॥

**अस10.14**
औकुलाभ्योषपृथुकान् सुपिष्टकृततण्डुलान्।
न जातुभुक्तवानद्यान्मात्रयाद्यात्सुकाङ्क्षितः॥

**अस10.15**
शाकावरान्नकट्वम्लकषायलवणोत्कटम्।
त्यजेदेहरसासात्म्यं गुरु शुष्कं च भोजनम्॥

**अस10.16**
वक्ष्यते यन्निदानादौ सर्वदोषप्रकोपणम्।
अत्यभिष्यन्दि विष्टम्भि विदाहि गुरु रूक्षणम्॥

**अस10.17**
कीलाटदधिकूचीकामत्स्यशुष्काममूलकम्। क्षारपिष्टविरूढाद्यं तत्समस्तं न शीलयेत्॥

**अस10.18**
शीलयेच्छालिगोधूमयवषष्टिकजाङ्गलम्।
सुनिषण्णकजीवन्तीबालमूलकवास्तुकम्॥

**अस10.19**
पथ्यामलकमृद्वीकापटोलीमुद्गशर्कराः।
घृतंदिव्योदकक्षीरक्षौद्रदाडिमसैन्धवम्॥

**अस10.20**
त्रिफलां मधुसर्पिर्भ्यां निशि नेत्रबलाय च।
स्वास्थ्यानुवृत्तिकृद्यच्च रोगोच्छेदकरं च यत्॥

**अस10.21**
स्वभावमात्रायोगादिपरस्परविपर्ययैः।
भोजनानि विरुध्यन्ते तानि विद्वान् विवर्जयेत्॥

**अस10.22**
त्यागाद्विषमहेतूनां समानां चोपसेवनात्।
विषमा नानुबध्नन्ति जायन्ते धातवः समाः॥

**अस10.23**
अन्नेन कुक्षेर्द्वावंशौ पानेनैकं प्रपूरयेत्।
आश्रयं पवनादीनां चतुर्थमवशेषयेत्॥

**अस10.24**
मन्दानलबलारोग्यनृपेश्वरसुखात्मसु।
योज्यः क्रमोऽयं सततं नावश्यमितरेषु च॥

**अस10.25**
करोति रूक्षं बलवर्णनाशं त्वग्रूक्षतां वातशकृन्निरोधम्।
स्निग्धं त्वतिश्लेष्मचयप्रसेक हृद्गौरवालस्यरुचिप्रणाशान्॥

**अस10.26**
अत्युष्णमन्नं मददाहतृष्णाबलप्रणाशभ्रमरक्तपित्तम्।
शीतं तु सादारुचिवह्निसादहृल्लासविष्टम्भनरोमहर्षान्॥

**अस10.27**
अतिस्थिरं मूत्रशकृद्विबन्धमतृप्तिमव्याप्तिमशीघ्रपक्तिम्।
अतिद्रवं पीनसमेहकासस्यन्दान् करोत्यग्निबलं च हन्ति॥

**अस10.28**
अतिमधुरमनलशमनं भुक्तमसात्म्यं न पुष्टये वपुषः।
अतिलवणमचक्षुष्यं तीक्ष्णात्यमलं जरा साक्षात्॥

**अस10.29**
तनुमपि तनुजां रुजां त्वनाप्य व्रजति नरः स समाशतस्य पारम्॥

इति दशमोऽध्यायः॥

# अष्टाङ्गसंग्रहः सूत्रस्थानम् अध्याय ११-२०

https://sa.wikisource.org/s/9zd

**अष्टाङ्गसंग्रहः**

अथैकाअदशोऽध्यायः।

**अस11.1**
अथातो मात्राशितीयं नामाध्यायं व्याख्यास्यामः।
इति हस्माहुरात्रेयादयो महर्षयः॥

**अस11.2**
मात्राशी स्यात्।
मात्रा पुनरग्निबलाहारद्रव्यापेक्षिणी।
कुक्षेरप्रतिपीडनमाहारेण हृदयस्यासंरोधः पार्श्वयोरविपाटनमनतिगौरवमुदरस्य प्रीणनमिन्द्रियाणां क्षुत्पिपासोपरतिः स्थानासनशयनगमनोच्छ्वासप्रश्वासभाष्यसङ्कथासु सुखानुवृत्तिः सायं प्रातश्च सुखेन परिणमनं बलवर्णोपचयकरत्वं चेति मात्राया लक्षणम्॥

**अस11.3**
त्रिभागसौहित्यमर्द्धसौहित्यं वा गुरूणामुपदिश्यते।
लघूनामपि नातिसौहित्यम्।
अनिलानलगुणबहुलानि हि लघूनि तुल्यगुणत्वादग्निसन्धुक्षणान्यविधिना चाल्पदोषाणि।
इतराणि तु पृथिवीसलिलगुणबहुलान्यसामान्याद्विपरीतान्यन्यत्र व्यायामाग्निबलात्।
अमात्रा पुनरशनस्य हीनताधिक्यं च।
तत्र हीनमात्रमशनं बलवर्णोपचयमनोबुद्धीन्द्रियोपघातकरं विबन्धकृदवृष्यमनौजस्यं सारविध्मापनमलक्ष्मीजननमशीतेश्च वातविकाराणामायतनम्।
अतिमात्रं पुनः सर्वदोषप्रकोपनमाहुः।
तेन हि प्रपीड्यमाना वातादयो युगपत्प्रकुपिताः कुक्ष्यैकदेशस्थास्तदेवापरिपक्वमाविश्य विष्टम्भयन्तोऽलसकमभिनिर्वर्तयन्ति।
सहसा वाधरोत्तराभ्यां मार्गाभ्यां प्रत्यावयन्तो विषूचिकाम्॥

**अस11.4**
अपि च।
प्रयाति नोर्ध्वं नाधस्तादाहारो न च पच्यते।
आमाशयेऽलसीभूतस्तेन सोऽलसकः स्मृतः॥

**अस11.5**
विविधैर्वेदनोद्भेदैर्वाय्वादिभृशकोपतः।
सूचीभिरिव गात्राणि विध्यतीति विषूचिका॥

**अस11.6**
तत्र वातः शूलानाहाङ्गमर्दमुखशोषप्रलापकम्पमूर्च्छभ्रमजृम्भोद्वेष्टनाक्षिप्रवेशशिरोहृदयातिरुक्सिरा कुञ्चनस्तम्भनानि करोति।
पित्तं पुनर्ज्वरातिसारान्तर्दाहवैवर्ण्यतृष्णामदभ्रमप्रलयानि।
श्लेष्मा तु छर्दरोचकप्रसेकाङ्गसादाविपाकशीतज्वरगात्रगौरवाणि विशेषतस्तु दुर्बलस्याल्पवह्नेर्बहुश्लेष्मणोवातमूत्रपुरीषवेगविधारिणोऽन्नपानमनिलप्रपीडितं श्लेष्मणाविबद्धमार्गमलसत्वादबहिर्मुखीभवत् छर्दतीसारवर्ज्यानि यथोक्तानि शूलादीन्युपजनयत्यतिमात्राणि।
सोऽलसः।
अतिमात्रदुष्टास्तु दोषाः शरीरं दण्डवत् स्तम्भयन्ति ततस्तमलसकमसाध्यं ब्रुवते॥

**अस11.7**
विरुद्धाध्यशनाजीर्णशीलिनः पुनरामदोषमामविषमामनन्ति।
विषसदृशलिङ्गत्वात्।
तत्परमसाध्यानाम्।
अशुकारितया विरुद्धोपक्रमत्वाच्च।
न च केवलं मात्रयैव कृत्स्नमाहारफलमवाप्तुं शक्यं स्वभावादीनां भिन्नफलत्वात्॥

**अस11.8**
तथा हि।
गुरुरूक्षशुष्कशीतद्विष्टविष्टम्भिविदाअह्यशुचिविरुद्धात्यम्बुपानद्रवमकाले काले वा कामक्रोधलोभेर्ष्याद्व्रीशोकोद्वेगभयक्षुदुपतप्तेन वा यदन्नपानमुपयुज्यते तदप्याममेव प्रदूषयति॥

**अस11.9**
तत्र साध्यमानं दुष्टमलसीभूतमुल्लिखेत् पाययित्वा सलवणमुष्णं वारि।
तथात्वच्छर्दयन्तमतिलीनदोषं कृष्णानागदन्तीकल्कयुक्तं पाययेत्।
मदनफलकषायं वा पिप्पलीसिद्धार्थकल्कयुक्तम्।
दन्तीमागधिकाचूर्णितं वा कोशातकीरसम्।
अवस्थापेक्षी वा वमनकल्पोक्तानि तीक्ष्णवमनानि।
ततः स्वेदवर्त्तिप्रणिधानाभ्यामुपाचरेत्॥

**अस11.10**
अपि च।
सद्यः सम्यग्विशुद्धस्य शाम्यन्ति तदुपद्रवाः।
शूले निरन्नकोष्ठेऽद्भिः कोष्णाभिश्चूर्णिताः पिबेत्॥

**अस11.11**
हिङ्गुप्रतिविषाव्योषसौवर्चलवचाभयाः।
अथवा पिप्पलीमूलं त्रिवृतादारुसैन्धवम्॥

**अस11.12**
शुण्ठीः सक्षीरलवणपिप्पलीमरिचानि च।
पाठाम्लवेतसक्षारयवानीपौष्कराणि वा॥

**अस11.13**
द्विरुत्तरं हिङ्गुवचाग्निकुष्ठ सुवर्चिकाक्षारबिडाजमोजम्।
शूलोदरानाहविषूचिकार्शोहृद्रोगगुल्मोर्ध्वसमीरणघ्नम्॥

**अस11.14**
मुस्ताजमोजपूजीकवचाशुण्ठ्यग्निधान्यकैः।
सवालकशठीबिल्वैः क्वाथं तृट्च्छूलवान् पिबेत्॥

**अस11.15**
रास्नाकट्फलषड्ग्रन्थाबृहतीद्वयजोङ्गकैः।
गुग्गुल्वतिविषाकुष्ठपत्रत्र्याघ्रनखाम्बुदैः।
कुर्याच्छुष्कैः समूत्रैर्वा लेपोद्वर्तनधूपनम्॥

**अस11.16**
सरुक्चानद्धमुदरमम्लपिष्टैः प्रलेपयेत्।
दारुहैमवतीकुष्ठशताह्वाहिङ्गुसैन्धवैः॥

**अस11.17**
यवचूर्णश्च सक्षारतक्रः कोष्ठार्तिजित् परम्।
योजयेत्सैन्धवान्तैश्च वर्ति विण्मूत्रसङ्ग्रहे॥

**अस11.18**
नाम्यमानानि चाङ्गानि भृशं स्विन्नानि वेष्टयेत्।
विषूच्यामतिवृद्धायां पाष्ण्योर्दाहः प्रशस्यते॥

**अस11.19**
द्विक्षारजीर्णपिण्याककुष्ठारुष्करचित्रकैः।
सशुक्तसैन्धवैस्तैलं पक्वमभ्यञ्जने हितम्॥

**अस11.20**
सुच्छर्दितविरिक्तस्य गात्रायामेऽतिदारुणे।
भल्लातकमधूच्छिष्टजीर्णपिण्याकनागरैः।
घृततैलं पचेत्साम्लैस्तच्च खल्लीघ्नमुत्तमम्॥

**अस11.21**
त्वक्पत्ररास्नागरुशिग्रुकुष्ठैरम्लप्रपिष्टैः सवचाशताह्वैः।
उद्वर्तनं खल्लिविषूचिकाघ्नं तैलं विपक्वं च तदर्थकारि॥

**अस11.22**
तदहश्चोपवास्यैनं विरिक्तवदुपाचरेत्।
सामान्येनेति सिद्धोक्ता विषूच्यलसकक्रिया॥

**अस11.23**
आमदोषेषु त्वन्नकाले जीर्णाहारं दोषोपलिप्तामाशयं स्तिमितगुरुकोष्ठमनन्नाभिलाषिणमभिसमीक्ष्य पाययेद्दोषशेषपाचनार्थमौषधं वह्निसन्धुक्षणार्थं च।
अजीर्णाहारं पुनर्न पाययेत्।
यत आमदोषदुर्बलो ह्यग्निर्युगपदामदोषमौषधमाहारजातं चाशक्तः पक्तुम्॥

**अस11.24**
अपि चैषा विभ्रमोऽतिबलत्वादुपरतानलबलमातुरं सहसैवातिपातत्येत्।
आमदोषजानां पुनर्विकाराणामपतर्पणेनैवोपशमो भवति॥

**अस11.25**
तत्तु त्रिविधम्।
लङ्घनं लङ्घनपाचनमवसेचनं च।
तत्र लङ्घनमल्पदोषाणाम्।
तेन ह्यनिलानलवृध्या वातातपपरीत इवाल्पः सलिलाशयोऽल्पदोषः प्रशोषमापद्यते।
लङ्घनपाचनाभ्यां मध्यदोषे वातातपाभ्यां पांसुभस्मावकिरणैरिव चानतिमहान् सलिलाशयः।
बहुदोषाणां पुनर्दोषावसेचनमेव कार्यम्।
न ह्यस्राविते पल्वलोदकौघे शाल्यादिपुष्टिर्भवति॥

**अस11.26**
तस्मात्सन्तर्पणनिमित्तानां नान्तरेणापतर्पणमस्ति शान्तिः।
अपतर्पणनिमित्तानां च नान्तरेण सन्तर्पणमिति।
एवमन्येषामपि व्याधीनां यथास्वं निदानविपरीतमौषधमेवावचारयेत्।
सति त्वनुबन्धे निदानविपरीतमपास्य व्याधिविपरीतमेव तदर्थकारि वा।
विमुक्तामदोषस्य पुनः परिपक्वामदोषशेषस्य दीप्ते चाग्नावभ्यङ्गास्थापनानुवासनं विविधस्नेहपानं च युक्त्या प्रयोज्यम्।
प्रसमीक्ष्य दोषौषधादीनामवस्थान्तराणि।
भवन्ति चात्र॥

**अस11.27**
यः श्यावदन्तौष्ठनखोऽल्पसंज्ञः छर्यर्दितोऽन्तर्गतताम्रनेत्रः।
क्षामस्वरः स्रस्तसमस्तसन्धिर्यायान्नरोऽसौ पुनरागमाय॥

**अस11.28**
व्योषं करञ्जस्य फलं हरिद्रे मूलं समावाप्य च मातुलुङ्ग्याः।
छयाविशुष्का गुलिकाः कृतास्ता हन्युर्विषूचीं नयनाञ्जनेन॥

**अस11.29**
शिरीषनक्ताह्वफणिज्जबीजत्रायन्त्यपामाअर्गफलैश्च वर्तिः।
बस्तस्य मूत्रेण विषूचिकाघ्नी प्रलेपधूपाञ्जननस्ययोगैः॥

**अस11.30**
अजीर्णं च कफादामं विष्टब्धमनिलाद्भवेत्।
विदग्धं पित्तकोपेन त्रिप्रकारमिति स्मृतम्॥

**अस11.31**
तत्रामे गुरुतोत्क्लेदः शोफो गण्डाक्षिकूटयोः।
उद्गारश्च यथाभुक्तमविदग्धः प्रवर्त्तते॥

**अस11.32**
विष्टब्धे शूलमाध्मानं विविधा वातवेदनाः।
मलवाताप्रवृत्तिश्च स्तम्भो मोहोऽङ्गपीडनम्॥

**अस11.33**
विदग्धे भ्रमतृण्मूर्छाः पित्तच्च विविधा रुजाः।
उद्गारश्च साधूमाम्लः स्वेदो दाहश्च जायते॥

**अस11.34**
लङ्घनं कार्यमामे तु विष्टब्धे स्वेदनं भृशम्।
विदग्धे वमनं यद्वा यथावस्थं हितं भवेत्॥

**अस11.35**
रगीयसो भवेल्लीनादामादेव विलम्बिका।
कफवातानुविद्धामलिङ्गा तत्समसाधना॥

**अस11.36**
रसशेषेऽन्नविद्वेषो हृदयाशुद्धिगौरवे।
तत्राभुक्त्वा दिवस्वप्यात् क्षुद्वानयाल्लघुप्रति॥

**अस11.37**
यामैश्चतुर्भिर्द्वाभ्यां च भोज्यभैषज्ययोः समे।
पाकोऽग्नौयुक्तयोर्द्राक्च तीक्ष्णे मन्दे पुनश्चिरात्॥

**अस11.38**
सभक्तमौषधं तस्मान्मन्दाग्नेरवचारयेत्।
पूर्वाह्णे भोजनं सात्म्यं लघु दीपनबृंहणम्॥

**अस11.39**
प्रातराशे त्वजीर्णेऽपि सायमाशो न दुष्यति।
अजीर्णे सायमाशे तु प्रातराशो हि दुष्यति॥

**अस11.40**
दिवा प्रबोध्यतेऽर्केण हृदयं पुण्डरीकवत्।
तस्मिन्विबुद्धे स्रोतांसि स्फुटत्वं यान्ति सर्वशः॥

**अस11.41**
व्यायामाच्च विचाराच्च विक्षिप्तत्वाच्च चेतसः।
न क्लेदमुपगच्छन्ति दिवा तेनास्य धातवः॥

**अस11.42**
अक्लिन्नेष्वन्नमासिक्तमत्यन्तेन न दुष्यति।
अविदग्धेष्विव पयस्स्वन्यत्संमिश्रितं पयः॥

**अस11.43**
रात्रौ तु हृदये म्लाने संवृतेष्वयनेषु च।
यान्ति कोष्ठे परिक्लेदं संवृते सर्वधातवः॥

**अस11.44**
क्लिन्नेष्वन्यदपक्वेषु तेष्वासिक्तं प्रदुष्यति।
विदग्धेषु पयस्स्वन्यात् पयस्तप्तेष्विवापितम्।
नैशे तस्मादजीर्णेऽन्ने नान्यद्भुञ्जीत भोजनम्॥

**अस11.45**
उद्गारशुद्धिरुत्साहो वेगोत्सर्गो यथोचितः।
लघुता क्षुत्पिपास च जीर्णाहारस्य लक्षणम्॥

**अस11.46**
प्रायः प्रज्ञापराधेन रोगग्रामः प्रजायते।
नृणामशनलुब्धानां विशेषेण विषूचिका॥

**अस11.47**
दोषोपनद्धं यदि लीनमन्नं पित्तोल्बणरयावृणुयान्न वह्निम्।
जायेत दुष्टा तु ततो बुधुक्षा या मन्दबुद्धीन् विषवन्निहन्ति॥
इति एकादशोऽध्यायः॥

अथ द्वादशोऽध्यायः।

**अस12.1**
अथातो द्विविधौषधविज्ञानीयमध्यायं व्याख्यास्यामः।
इति हस्माहुरात्रेयादयो महर्षयः॥

**अस12.2**
द्विविधमौषधमूर्जस्करं रोगघ्नं च।
उभयमपि चोभयात्मकम्।
बाहुल्येन तु निर्देशः।
तत्रोर्जस्करं द्विविधं रसायनं वाजीकरणं च।
रोगघ्नमपि द्विविधम्।
रोगस्य प्रशमनमपुनर्भवकरं च।
पुनश्च द्विविधम्।
द्रव्यमद्रव्यम् च।
तत्र द्रव्यम् त्रिविधम्।
भौममौद्भिदं जङ्गममिति।
तेषु वक्ष्यमाणं हेमादि लवणान्तं प्रायेण भौमम्।
औद्भिदं पुनर्वनस्पतिवानस्पत्यवीरुदौषधिभेदेन चतुर्विधं भवति।
तत्र फलिनो वनस्पतिः।
पुष्पफलवान् वानस्पत्यः।
वल्लीगुल्मवीरुत्।
फलपाकान्ताश्चौषध्य इति।
जङ्गमोद्भवं मधुघृतादि जङ्गमद्रव्यमाहुः॥

**अस12.3**
अद्रव्यं पुनरुपवासानिलातपच्छायामन्त्रसान्त्वदानभयोत्त्रासक्षोभणहर्षणभर्त्सनहसनस्वप्नजागरण संवाहनादीनि।
पुनरपि च त्रिविधं दैवव्यपाश्रयं युक्तिव्यपाश्रयं सत्वावजयश्चेति।
तत्र दैवव्यपाश्रयं मन्त्रौषधिमणिमङ्गलबल्युपहारहोमनियमप्रायश्चित्तो पवासस्वस्त्ययनप्रणिधानगमनादि।
युक्तिव्यपाश्रयमाहारौषधयोजनादि।
सत्वावजयः पुनरहितान्मनोनिग्रहः।
पुनरपि च त्रिविधम्।
अपकर्षणं प्रकृतिविघातो निदानत्यागश्च॥

**अस12.4**
ते पुनरपकर्षणादयो द्विविधाः बाह्याभ्यन्तरभेदेन।
तत्र बाह्यमपकर्षणं ग्रन्थ्यर्बुदोपपक्ष्मक्रिमिशल्यादिषु शस्त्रहस्तयन्त्रादिभिः।
आभ्यन्तरं पुनर्वमनविरेचनादिभिः।
प्रकृतिविघातः संशमनम्।
तत् बाह्यमभ्यङ्गस्वेदप्रदेहपरिषेकोपमर्दनादि।
आभ्यन्तरं यदन्तरमनुप्रविश्याविक्षोभयद्दोषान् शमयति।
निदानत्यागो यथादोषं शीतोष्णशनव्यायामादीनां वर्जनं स्निग्धरुक्षायनभ्यवहारश्च।
तत्र शस्त्रादिसाध्ये भेषजमनुक्रमते न तु भेषजसाध्ये शस्त्रादि॥

**अस12.5**
पुनरपि त्रिविधं हेतुविपरीतं व्याधिविपरीतमुभयार्थकारि च।
तत्र हेतुविपरीतं गुरुस्निग्धशीतादिजे व्याधौ लघुरूक्षोष्णादि।
तथेतरस्मिन्नितरत्।
व्याधिविपरीतम्।
द्वौ मूलोपक्रमौ लङ्घनबृंहणे।
पञ्च कर्माणि वमनादीनि सधूमधूपाञ्जनादीनि च।
तथा विम्लापनोपनाहनपाटनादीनि॥

**अस12.6**
यच्च दोषशमनत्वे सत्यपि ज्वरे विशेषतो हितं मुस्ता पर्पटकं यवाग्वश्च प्रमेहे रजनी यवान्नं चेत्यादि।
रक्तपित्ते चोर्ध्वागे विरेचनमधोगे वमनम्।
उभयार्थकारि पुनर्दैवव्यपाश्रयमौषधम्।
तथा छर्द्यां छर्दनमतिसारे विरेचनं मदात्ययेमद्यपानं तुल्थदग्धेऽग्निप्रतपनं पित्तेऽन्तर्न्निगूढे विमार्गगे वा स्वेदः कट्वम्ललवणतीक्ष्णोष्णाभ्यवहारश्च बहिः प्रवर्त्तनाय स्वमार्गापादनाय च।
श्लेष्मणि चान्तर्निगूढे स्तब्धे बहिः शीतोपचारस्तत्पीडितस्योष्मणोऽन्तःप्रवेशेन कफो विलयतामुपयाति।
एवंविधं ह्यविपरीतमेव सत् भेषजं हेतुव्याधिविपरीतमर्थं करोति॥

**अस12.7**
अनौषधं पुनर्द्विविधं बाधनमनुबाधनं च।
तत्र सद्यः प्राणहरं बाधनम्।
कालान्तरेणानुबाधनमिति।
परं चातो रसवीर्यादिभेदेन यथास्थूलमौषधैकदेश उपदिश्यते॥

**अस12.8**
सुवर्णं बृंहणं स्निग्धं मधुरं रसपाकयोः।
विषदोषहरं शीतं सकषायं रसायनम्॥

**अस12.9**
रूप्यं स्निग्धं कषायाम्ल विपाके मधुरं रसम्।
वयसः स्थापनं शीतं लेखनं वातपित्तजित्॥

**अस12.10**
ताम्रं सतिक्तमधुरं कषायं लेखनं लघु।
कटुपाकरसं शीतं रोषणं कफपित्तजित्॥

**अस12.11**
कस्यं कषायानुरसं विशदं लेखन लघु।
दृष्टिप्रसादनं रूक्षं तिक्तं पित्तकफापहम्॥

**अस12.12**
सतिक्तलवणं भेदि पाण्डुत्वकृमिवातनुत्।
लेखनं पित्तलं किञ्चित् त्रपु सीसं च तद्गुणम्॥

**अस12.13**
चक्षुष्यं कृष्णलोहं तु कषायं स्वादुतिक्तकम्।
लेखनं वातलं शीतं कृमिकुष्ठकफप्रणुत्॥

**अस12.14**
गात्रशैथिल्यपालित्यपाण्डुघ्नं शोषशोफजित्।
तद्वत्तीक्ष्णं विशेषेण तद्विकाषि सुदुर्जरम्॥

**अस12.15**
पद्मरागमहानीलपुष्परागविदूरकाः।
मुक्ताविद्रुमवज्रेन्द्रवैडूर्यस्फटिकादिकम्॥

**अस12.16**
मणिरत्नं सरं शीतं कषायं स्वादुलेखनम्।
चक्षुष्यं धारणात्तु पाप्मालक्ष्मीविषापहम्॥

**अस12.17**
धन्यमायुष्यमोजस्यं हर्षोत्साहकरं शिवम्।
सक्षार उष्णवीर्यश्च काचो दृष्टिकृदञ्जनात्॥

**अस12.18**
शङ्खोदधिमलौ शीतौ कषायावतिलेखनौ।
तुत्थकं कटु सक्षारं कषायं विषदं लघु॥

**अस12.19**
लेखनं भेदि चक्षुष्यं कण्डूकृमिविषापहम्।
विशदो गैरिकः स्निग्धः कषायमधुरो हिमः॥

**अस12.20**
कफघ्नी तिक्तकटुका मनोह्वा लेखनी सरा।
स्निग्धं कषायकटुकं हरितालं विषप्रणुत्॥

**अस12.21**
कषायं मधुरं शीतं लेखनं स्निग्धमञ्जनम्।
रक्तपित्तविषच्छर्दिहिध्माघ्नं दृक्प्रसादनम्॥

**अस12.22**
स्रोतोऽञ्जनं वरं तत्र ततः सौवीरकाञ्जनम्।
कफघ्नं तित्तकटुकं छेदि सोष्णं रसाञ्जनम्॥

**अस12.23**
स्वादु हिध्माप्रशमनं कासमेहक्षयापहम्।
कफघ्नमुष्णं कटुकं शिलाजतु रसायनम्॥

**अस12.24**
तिक्तं च छेदनं योगवाहित्वात्सर्वरोगजित्।
विशेषात् कृच्छ्रमेहार्शःपाण्डुशोफकफापहम्॥

**अस12.25**
कषाया मधुरा रूक्षा कासघ्नी वंशरोचना।
तुगाक्षीरी क्षयश्वासकासघ्नी मधुरा हिमा॥

**अस12.26**
विष्यन्दि लवणं सर्वं सूक्ष्मं सृष्टमलं विदुः।
वातघ्नं पाकि तीक्ष्णोष्णं रोचनं कफपित्तकृत्॥

**अस12.27**
सैधन्वं तत्र सस्वादु वृष्यं हृद्यं त्रिदोषनुत्।
लघ्वनुष्णं दृशः पथ्यमविदाह्यग्निदीपनम्॥

**अस12.28**
लघु सौवर्चलं हृद्यं सुगन्ध्युद्गारशोधनम्।
कटुपाकं विबन्धघ्नं दीपनीयं रुचिप्रदम्॥

**अस12.29**
ऊर्ध्वाधःकफवातानुलोमनं दीपनं विडम्।
विबन्धानाहविष्टम्भशूलगौरवनाशनम्॥

**अस12.30**
विपाके स्वादु सामुद्रं गुरु श्लेष्मविवर्धनम्।
सतिक्तकटुकक्षारं तीक्ष्णमुत्क्लेदि चौद्भिदम्॥

**अस12.31**
कृष्णे सौवर्चलगुणा लवणे गन्धवर्जिताः।
रोमकं लघु पांसूत्थं सक्षारं श्लेष्मलं गुरु॥

**अस12.32**
लवणानां प्रयोगे तु सैन्धवादीन् प्रयोजयेत्।
गुल्महृत् ग्रहणीपाण्डुप्लीहानाहगलामयान्॥

**अस12.33**
श्वासार्शःकफवातांश्च शमयेद्यवशूकजः।
स्वर्जिका तद्गुणान्न्यूना क्षारेण तु ततोऽधिका॥

**अस12.34**
क्षारः सर्वश्च परमं तीक्ष्णोष्णः कृमिजिल्लघुः।
पित्तासृग्दूषणः पाकी छेद्यहृद्यो विदारणः।
अपथ्यः कटुलावण्याच्शुक्रौजःकेशचक्षुषाम्॥

**अस12.35**
कषाया मधुरा पाके रूक्षा विलवणा लघुः।
दीपनी पाचनी मेध्या वयसः स्थापनी परम्॥

**अस12.36**
उष्णवीर्या सरायुष्या बुद्धीन्द्रियबलप्रदा।
कुष्ठवैवर्ण्यवैस्वर्यपुराणविषमज्वरान्॥

**अस12.37**
शिरोऽक्षिपाण्डुहृद्रोगकामलाग्रहणीगदान्।
सशोषशोफातीसारमेहमोहवमिक्रिमीन्॥

**अस12.38**
श्वासकासप्रसेकार्शःप्लीहानाहगरोदरम्।
विबन्धं स्रोतसां गुल्ममूरुस्तम्भमरोचकम्॥

**अस12.39**
हरीतकी जयेद्व्याधींस्ताअंस्तांश्चकफवातजान्।
तद्वदामलकं शीतं माधुर्यात् पित्तजित् परम्॥

**अस12.40**
कफं कटुविपाकित्वादम्लत्वान्मारुतं जयेत्।
परं च कण्ठ्यं चक्षुष्यं हृद्यं दाहज्वरापहम्॥

**अस12.41**
अक्षं तु तद्गुणान्न्यूनं कषायमधुरं हिमम्।
कासश्वासगलश्लेष्मपित्तशुक्रहरं लघु॥

**अस12.42**
परं केश्यस्तु तन्मज्जा शुक्रघ्नं च ततोऽञ्जनम्।
इय रसायनवरा त्रिफलाक्ष्यामयापहा।
रोपणी त्वग्गदक्लेदमेदोमेहकफास्रजित्॥

**अस12.43**
सकेसरं चतुर्जातं त्वक्पत्रैलं त्रिजातकम्।
पित्तप्रकोपि तीष्णोष्णं रूक्षं रोचनदीपनम्॥

**अस12.44**
रसे पाके च कटुकं कफघ्नं मरिचं लघु।
श्लेष्मला स्वादु शीतार्द्रा गुर्वी स्निग्धा च पिप्पली॥

**अस12.45**
सा शुष्का विपरीतातःस्निग्धा वृष्या रसे कटुः।
स्वादुपाकानिलश्लेष्मश्वासकासापहा सरा॥

**अस12.46**
न तामत्युपयुञ्जीत रसायनविधिं विना।
नागरं दीपनं वृष्यं ग्राहि हृद्यं विबन्धनुत्॥

**अस12.47**
रुच्य लघु स्वादुपाकं स्निग्धोष्णं कफवातजित्।
तद्वदार्द्रकमेतच्च त्रयं त्रिकटुकं जयेत्॥

**अस12.48**
स्थौल्याग्निसदनश्वासकासश्लीपदपीनसान्।
चविका पिप्पलीमूलं मरिचाल्पान्तरं गुणैः॥

**अस12.49**
चित्रकोऽग्निसमः पाके शोफार्शःकृमिकुष्ठहा।
पञ्चकोलकमेतच्च मरिचेन विना स्मृतम्।
गुल्मप्लीहोदरानाहशूलघ्नं दीपनं परम्॥

**अस12.50**
बिल्वकाश्मर्यतर्कारीपाटलाटुण्टुकैर्महत्।
जयेत् कषायं तिक्तोष्णं पञ्चमूलं कफानिलौ॥

**अस12.51**
ह्रस्वं बृहत्यंशुमतीद्वयगोक्षुरकैः स्मृतम्।
स्वादुपाकरसं नातिशीतोष्णं सर्वदोषजित्॥

**अस12.52**
बलापुनर्नवैरण्डशूर्पपर्णीद्वयेन च।
मध्यमं कफवातघ्नं नातिपित्तकरं लघु॥

**अस12.53**
अभीरुवीराजीवन्तीजीवकर्षभकैः स्मृतम्।
जीवनाख्यं तु चक्षुष्यं वृष्यं पित्तानिलापहम्॥

**अस12.54**
तृणाख्यं शरदर्भेक्षुशालिकाशैस्तु पित्तजित्।
अजशृङ्गी हरिद्रा च विदारीशारिवामृताः॥

**अस12.55**
बल्याख्यं कण्टकाख्यं तु श्वदंष्ट्राभीरुसैर्यकैः।
सहिस्राकरमर्दीकैस्सर्वदोषहरे च ते॥

**अस12.56**
कारवीकुञ्चिवाजाजीकवरीधान्यतुम्बरु।
अन्नगन्धहरं रुच्यं दीपनं कफवातजित्॥

**अस12.57**
वाष्पिका कटुतिक्तोष्णा कृमिश्लेष्महरा परम्।
शूलाटोपहरा रुच्या दीप्यकः कोष्ठशूलजित्॥

**अस12.58**
अह्नद्याः सर्षपाः स्निग्धा बाष्पिकावच्च कीर्त्तिताः।
हिङ्गु वातकफानाहशूलघ्नं पित्तकोपनम्॥

**अस12.59**
कटुपाकरसं रुच्यं दीपनं पाचनं लघु।
पित्तास्रकोपि तच्चैव श्रेष्ठं बोष्काणदेशजम्॥

**अस12.60**
ततो न्यूनगुणं त्वन्यदद्रव्यव्यञ्जनधूपनम्।
शताह्वाकुष्ठतगरसुरदारुहरेणवः॥

**अस12.61**
एलैलवालुसरलत्वग्व्याघ्रनखचोरकाः।
लघूष्णाः कटुकाः पाके कफवातनिबर्हणाः॥

**अस12.62**
सैर्यकस्तिक्तमधुरः स्निग्धोष्णः कफवातजित्।
बस्तिमूत्रविबन्धघ्नो वृष्यो गोक्षुरको हिमः॥

**अस12.63**
पाचनं कफपित्तघ्नं तिक्तं शीतं विषाद्वयम्।
कफघ्नं तिक्तकटुकं मुस्तं संग्राहि पाचनम्॥

**अस12.64**
तिक्तामृता त्रिदोषघ्नी ग्राहिण्युष्णा रसायनी।
दीपनी ज्वरतृड्दाहकामलावातरक्तनुत्॥

**अस12.65**
तिक्तशीतौ ज्वरहरौ लघू भूनिम्बपर्पटौ।
निम्बस्तिक्तो हिमः कुष्ठकृमिपित्तकफापहः॥

**अस12.66**
महानिम्बः परं ग्राही कषायो रूक्षशीतलः।
गुग्गुलुः पिच्छिलः स्पर्शे विशदोऽभ्यवहारतः॥

**अस12.67**
सस्वादु सकटुस्तिक्तः सकषायो रसायनम्।
व्रण्यः स्वर्यः कटुः पाके रुक्षः सूक्ष्मोऽग्निदीपनः॥

**अस12.68**
क्लेदमेदोनिलश्लेष्मगण्डमेहापचीक्रिमीन्।
पिटकाग्रन्थिशोफांश्च हन्त्युष्णः स्रंसनो लघुः॥

**अस12.69**
शङ्खपुष्पी सरा तिक्ता मेध्या कृमिविषापहा।
कटुतिक्तोष्णमगरु स्निग्धं वातकफापहम्॥

**अस12.70**
पित्तास्रविषतृड्दाहक्लमघ्नं गुरु रूक्षणम्।
सर्वं सतिक्तमधुरं चन्दनं शिशिरं परम्॥

**अस12.71**
लघु रक्तं तथोशीरं वालकं पाचनं च तत्।
ज्वरातिसारवमथुरक्तपित्तक्षतापहम्॥

**अस12.72**
मधुकं रक्तपित्तघ्नं व्रणशोधनरोपणम्।
गुरु स्वादु हिमं वृष्यं चक्षुष्यं स्वरवर्णकृत्॥

**अस12.73**
कटुतिक्ते निशे कुष्ठमेहपित्तकफापहे।
प्रलेपाज्जयतः कण्डूं शोफं दुष्टव्रणं विषम्॥

**अस12.74**
प्रपौण्डरीकं चक्षुष्यं शिशिरं व्रणरोपणम्।
कषायतिक्तमधुरं रक्तपित्तप्रसादनम्॥

**अस12.75**
बलात्रयं स्वादु वृष्यं स्निग्धं शीतं बलप्रदम्।
तत्र नागबला बल्या क्षतक्षीणहिता गुरुः॥

**अस12.76**
ताम्बुलं कटु सक्षारं रुच्यमुष्णं कफप्रणुत्।
भेदि सम्मोहकृत् पूगं कषायं स्वादु रोचनम्॥

**अस12.77**
जातिपत्री कटुफलं कङ्कोलकलवङ्गकम्।
लघु तृष्णापहं हृद्यं वक्त्रदौर्गन्ध्यनाशनम्॥

**अस12.78**
सस्वादुतिक्तस्तृष्णाघ्नः कर्पूरश्छेदनो हिमः।
लताकस्तूरिका तद्वन्मुखशोषहरा परम्॥

**अस12.79**
कषायमधुरं शीतं पद्मं पित्तकफास्रजित्।
तद्वत् बकुलपुन्नागकुमुदोत्पलपाटलम्॥

**अस12.80**
सचम्पकं ततो न्यूनं गुणैः कोरण्डकिंशुकम्।
मालतीमल्लिकापुष्पं तिक्तं जयति मारुतम्॥

**अस12.81**
विषपित्तकफान्नगं सिन्दुवारं च तद्गुणम्।
कफघ्नं कैतकं तिक्तं शैरीषं विषहारि च॥

**अस12.82**
वातलं पुष्पमागस्त्यं कषायं कफपित्तजित्।
चातुर्थिकज्वरहरं नावनेनोपयोजितम्॥

**अस12.83**
बन्धूकं श्लेष्मलं ग्राहि तद्वदेव च यूथिका।
कफघ्नमुष्णवीर्यं च कुङ्कुमं व्रणशोधनम्।
अवल्वेडकजं बीजं कटिवातकफप्रणुत्॥

**अस12.84**
आस्या वर्णश्लेष्ममेदःसौकुमार्यकृदन्यथा।
अतोऽध्वाग्निबलायूंषि कुर्याच्चङ्क्रमणं सुखम्॥

**अस12.85**
मारुतस्यानुलोम्यं च खुडस्तम्भश्रमापहम्।
अन्वर्थसंज्ञं पादत्रं बलदृक्शुक्रवर्द्धनम्॥

**अस12.86**
वर्ण्यं नेत्रहितं छत्रं वातवर्षातपापहम्।
प्रवातो रौक्ष्यवैवर्ण्यस्तम्भकृद्दाहतृड्भ्रमान्॥

**अस12.87**
श्रमाग्निमूर्च्छाश्च जयेदप्रवातस्त्वतोऽन्यथा।
प्राग्वायुरुष्णोऽभिष्यन्दी त्वग्दोषार्शोविषक्रिमीन्॥

**अस12.88**
सन्निपातज्वरं श्वासमामं वायुं च कोपयेत्।
पश्चिमः शिशिरो हन्ति मूर्च्छां दाहं तृषं विषम्॥

**अस12.89**
दक्षिणो मारुतः श्रेष्ठो नेत्र्योऽङ्गबलवर्द्धनः।
रक्तपित्तप्रशमनो न च वातप्रकोपनः॥

**अस12.90**
उत्तरो मारुतः स्निग्धो मृदुर्मधुर एव च।
कषायानुरसः शीतो दोषाणामप्रकोपनः॥

**अस12.91**
आतपो भ्रमतृट्स्वेददाहमूर्च्छाविवर्णताः।
कुर्यात् पित्तास्रवह्नींश्च छाया चैतानपोहति।
तमः कषायकटुकं ज्योत्स्ना मधुरशीतला॥

**अस12.92**
भवति चात्र।
रसादिभेदैरिति भेषजाना दिङ्मात्रमुक्तं न यतोऽस्ति किञ्चित्।
अनौषधं द्रव्यमिहावबोधो रूपस्य तेषां वनगोचरेभ्यः॥
इति द्वादशोऽध्यायः।

अथ त्रयोदशोऽध्यायः

**अस13.1**
अथातोऽग्र्यसङ्ग्रहणीयमध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अस13.2**
श्रेष्ठमुदकमाश्वासनस्तम्भनक्लेदनानाम्।
स्नानं सुरा च श्रमहराणाम्।
क्षीरं जीवनीयानाम्।
मांसं बृंहणीयानाम्।
रसः प्रीणनानाम्।
लवणमन्नद्रव्यरुचिकराणाम्।
तिन्दुकमन्नद्रव्यारुचिकराणाम्।
अम्लं हृद्यानाम्।
कुक्कुटो बल्यानाम्।
तैलं वातश्लेष्मप्रशमनानाम्।
सर्पिर्वातपित्तप्रशमनानाम्।
मधु श्लेष्मपित्तप्रशमनानाम्।
स्वेदो मार्दवकराणाम्।
व्यायामः स्थैर्यकराणाम्।
क्षारः पुंस्त्वोपघातिनाम्।
आमं कपित्थमकण्ठ्यानाम्।
आविकं सर्पिरहृद्यानाम्।
महिषीक्षीरं स्वप्नजननानाम्।
मन्दकं दध्यभिष्यन्दकराणाम्।
इक्षुर्मूत्रजननानाम्।
यवाः पुरीषजननानाम्।
जाम्बवं वातजननानाम्।
कुलत्थोऽम्लपित्तजननानाम्।
माषाः शष्कुल्योऽविक्षीरं च पित्तश्लेष्मजननानाम्।
दुरालभा पित्तश्लेष्मोपशोषणानाम्।
उपवासो ज्वरहराणां।
वृषो रक्तपित्तप्रशमनानाम्।
कण्टकारिका कासघ्नानाम्।
लाक्षा सद्यःक्षतघ्नानाम्।
नागबलाभ्यासः क्षतक्षयघ्नानाम्।
पुष्करमूलं हिध्माश्वासकासपार्श्वशूलारुचिहराणाम्।
अजापयः शोषघ्नस्तन्यकररक्तसङ्ग्रहणप्रशमनानाम्।
मृद्भृष्टलोष्टप्रसादः छर्दितृष्णातियोगप्रशमनानाम्।
अरुष्करश्चित्रकमूलं च शुष्कार्शःप्रशमनानाम्।
कुटजो रक्तार्शःप्रशमनानाम्।
लाजाश्छर्दिघ्नानाम्।
यावशूकः स्रंसनीयपाचनीयार्शोघ्नानाम्।
तक्राभ्यासोऽर्शःश्वयथुग्रहणीदोषघृतव्यापत्प्रशमनानाम्।
क्रव्यान्मांसाभ्यासोऽर्शःशोषग्रहणीदोषघ्नानाम्।
मुस्तं सङ्ग्रहणीयदीपनीयपाचनीयानाम्।
अतिविषा सङ्ग्रहणीयपाचनीयसर्वदोषहराणाम्।
बिल्वं सङ्ग्रहणीयदीपनीयवातकफप्रशमनानाम्।
उदीच्यं निर्वापणदीपनीयछर्द्यतीसारहराणाम्।
कट्वङ्गं सङ्ग्रहणीयदीपनीयानाम्।
कुटजत्वक् श्लेष्मपित्तरक्तसङ्ग्रहणीयोपशोषणीयानाम्।
उत्पलकुमुदकिञ्जल्कोऽनन्ता च सङ्ग्रहणीयरक्तपित्तप्रशमनानाम्।
काश्मर्यफलं रक्तसङ्ग्रहणीयरक्तपित्तप्रशमनानाम्।
गन्धप्रियङ्गुः शोणितपित्तातियोगप्रशमनानाम्।
पृश्निपर्णी रक्तसङ्ग्रहणीयदीपनीयपाचनीयवातहरवृष्याणाम्।
सालपर्णी वृष्यसर्वदोषहराणाम्।
बला सङ्ग्रहणीयबल्यवातहराणाम्।
पिप्पलीमूलं दीपनीयपाचनीयानाहहराणाम् चित्रकमूलं दीपनीयपाचनीयगुदशोफशूलहराणाम्।
गोक्षुरको मूत्रकृच्छ्रानिलहराणाम्।
हरिद्रा प्रमेहहराणाम्।
रक्तावसेको विद्रधिविसर्पपिटकागण्डमालापहराणाम्।
एरण्डतैलाभ्यासो वर्ध्मगुल्मानिलशूलहराणाम्।
लशुनो गुल्मानिलहराणाम्।
हिङ्गुनिर्यासः३छेदनीयपाचनीयानुलोमिकवातकफप्रशमनानाम्।

अम्लवेतसो भेदनीयदीपनीयानुलोमिकवातकफप्रशमनानाम्।
उष्ट्रीक्षीरमुदरश्वयथुघ्नानाम्।
अयोरजः पाण्डुरोगघ्नानाम्।
खदिरः कुष्ठघ्नानाम्।
विडङ्गः कृमिघ्नानाम्।
रास्ना वातहराणाम्।
एरण्डमूलं वृष्यवातहराणाम्।
गुग्गुलुर्मेदोनिलहराणाम्।
अमृता सङ्ग्रहणीयदीपनीयवातश्लेष्मशोणितविबन्धप्रशमनानाम्।
मदनफलं वमनास्थापनानुवासनोपयोगिनाम्।
त्रिवृत्सुखविरेचनानाम्।
चतुरङ्गुलो मृदुविरेचनानाम्।
स्नुक्पयस्तीक्ष्णविरेचनानाम्।
प्रत्यक्पुष्पी शिरोविरेचनानाम्।
त्रिफलातिमिरघ्नानाम्।
गुग्गुलुर्व्रण्यानाम्।
शिरीषो विषघ्नानाम्।
आमलकं वयस्थापनानाम्।
हरीतकी पथ्यानाम्।
क्षीरघृताभ्यासो रसायनानाम्।
समघृतसक्तुप्राशाभ्यासो वृष्योदावर्तहराणाम्।
सङ्कल्पो नक्ररेतश्च वृष्याणाम्॥

**अस13.3**
दौर्मनस्यमवृष्याणाम्।
तैलगण्डूषाभयासो दन्तबलरुचिकराणाम्।
चन्दनोदुम्बरं दाहनिर्वापणलेपनानाम्।
रास्नागरुणी शीतापनयनप्रलेपनानाम्।
लामज्जकोशीरे दाहत्वग्दोषस्वेदापनयनप्रलेपनानाम्।
कुष्ठं वातहराभ्यङ्गोपनाहोपयोगिनाम्।
मधुकं चक्षुष्यवृष्यकेश्यकण्ठ्यबल्यविरेचनीयरोपणीयानाम्।
अजीर्णाशनं ग्रहणीदूषणानाम्।
विरुद्धवीर्याशनं निन्दितव्याधिकराणाम्।
गुरुभोजनं दुर्विपाकानाम्।
अतिमात्राशनमामदोषहेतूनाम्।
यथाग्न्यभ्यवहारोऽग्निसन्धुक्षणानाम्।
यथासात्म्यमाहारविहारौ सेव्यानाम्।
एकासनशयनभोजनं सुखनाशकराणाम्।
विषमाशनमग्निवैषम्यकराणाम्।
काले भोजनमारोग्यकराणाम्।
सुदर्शनमन्नं श्रद्धाजननानाम्।
वेगधारणमनारोग्यकराणाम्।
तृप्तिराहारगुणानाम्।
अनशनमायुषो ह्रासकराणाम्।
प्रमिताशनं गवेधुकान्नं च कर्शनीयानाम्।
उद्दालकान्नं रूक्षणीयानाम् मद्यं सौमनस्यजननानाम्।
मद्याक्षेपो धीधृतिस्मृतिहराणाम्।
स्त्रीष्वतिप्रसङ्गः शोषकराणाम्।
शुक्रवेगविनिग्रहः षाण्ढ्यकराणाम् पादाभ्यामुद्वर्तनमन्नश्रद्धाजननानाम्।
सूनादर्शनमन्नाश्रद्धाजननानाम्॥

**अस13.4**
मिथ्यायोगो व्याधिमुखानाम्।
रजस्वलागमनमलक्ष्मीमुखानाम्।
ब्रह्मचर्यमायुष्याणम्।
परदारगमनमनायुष्याणाम्।
अयथाप्राणमारम्भः प्राणोपरोधिनाम्।
विषादो रोगवर्द्धनानाम्।
हर्षः प्रीणनानाम्।
शोकः शोषणानाम्।
आश्वासो बलकराणाम्।
निर्वृतिः पुष्टिकराणाम्।
पुष्टिः स्वप्नकराणाम्।
स्वप्नः तन्द्रीकराणाम्।
सर्वरसाभ्यासो बलकराणाम्।
एकरसाभ्यासो दौर्बल्यारोचकान्यतमदोषप्रकोपकराणाम्।
गर्भशल्यमाहार्याणाम्।
अग्निरामस्तम्भशीतशूलोद्वेष्टकप्रशमनानाम्।
अजीर्णमुद्धार्याणाम्।
बालो मृदुभेषजार्हाणाम्।
वृद्धो याप्यानाम्।
गर्भिणी तीक्ष्णौषधव्यवायव्यायामवर्जनीयानाम्।
सौमनस्यं गर्भधारणानाम्।
असौमनस्यं दुःखजनानाम्।
सन्निपातो दुश्चिकित्स्यानाम्।

आमविषमचिकित्स्यानाम्।
ज्वरः शीघ्ररोगाणाम्।
कुष्ठं दीर्घरोगाणाम्।
राजयक्ष्मा रोगसमूहानाम्।
प्रमेहोऽनुषङ्गिणाम्।
जलौकसोऽनुशस्त्राणाम्।
बस्तिर्यन्त्राणाम्।
हिमवानौषधभूमीनाम्।
सोम औषधीनाम्।
मरुभूमिरारोग्यदेशानाम्।
आनूपभूमिरहितदेशानाम्।
निर्देशकारित्वमातुरगुणानाम्।
अनिर्देशकारित्वमरिष्टानाम्।
भिषक्चिकित्साङ्गानाम्।
सिद्धिर्वैद्याङ्गानाम्।
नास्तिको वर्ज्यानाम्।
लौल्यं क्लेशकराणाम्।
आत्मवत्तोपकारिणाम्।
शास्त्रसहितस्तर्कः साधकानाम्।
दृष्टकर्मता निस्संशयकराणाम्।
असमर्थता भयंकराणाम्।
तद्विद्यसम्भाषा बुद्धिवर्द्धनानाम्।
आचार्यः शास्त्राधिगमहेतूनाम्।
आयुर्वेदोऽमृतानाम्।
सद्वैद्यद्वेषः प्राणत्यागहेतूनाम्।
सद्वचनमनुष्ठेयानाम्।
वायुः प्राणसंज्ञाप्रदानहेतूनाम्।
सर्वसन्यासः सुखानामिति।
तत्रोदकाग्निमृद्भृष्टलोष्टप्रसादतक्राभ्यासरक्तावसेकैरण्डतैलाभ्यासोष्ट्रीक्षीरमदनफलमद्याक्षेपैकरसगर्भिणीनामेकैकस्मात् समुदायाच्च निर्द्धारणम्।
पुष्करमूलादीनां तु समुदायादेवेति॥

**अस13.5**
भवति चात्र।
अग्र्याणां शतमुद्दिष्टं पञ्च पञ्चाशदुत्तरम्।
अलमेतद्विजानीयाद्धिताहितविनिश्चये॥
इति त्रयोदशोऽध्यायः।

अथ चतुर्दशोऽध्यायः।

**अस14.1**
अथ शोधनादिगणसङ्ग्रहमध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अस14.2**
मदननीमूतकेक्ष्वाकुकोशातकीद्वयफलपुष्पपत्राणि कुटजकरञ्जत्रपुससर्षपपिप्पलीविडङ्गैलाप्रत्यक्पुष्पीहरेणुपृथ्वीकाकुस्तुम्बरुप्रपुन्नाटानां फलानि शारदानि च हस्तिपर्ण्याः कोविदारकर्बुदारारिष्टश्वगन्धानीपविदुलबिल्वबिम्बीबन्धुजीवकश्वेताशणपुष्पीसदापुष्पीवचाचित्राचित्रकमृगेन्द्रवारुणीसुषवीचतुरङ्गुलस्वादु कण्टकपाठापाटलीशार्ङ्गेष्टामधुकमूर्वासप्तपर्णसोमवल्कद्वीपिशिग्रुसुमनस्सौमनस्यायवानीवृश्चीवपुनर्नवामहा सहाक्षुद्रसहेक्षुकाण्डकालकपिप्पलीमूलचविकानलदोशीरह्रीबेरमूलानि।
शाल्मलीशेलुकाभद्रपर्ण्यैरावण्यावर्तक्युपोदकोद्दालधन्वनरसाञ्जनराजादनोपचित्रागोपशृङ्गाटिकापिच्छाः।
प्रियङ्गुपूष्पम्।
तालीसपत्रम्।
हरिद्राशृङ्गवेरकन्दौ।
मधुयष्टीदारुहरिद्रासासौ।
तगरगुडूचीमधुफणितक्षीरक्षारलवणानि चेति वमनोपयोगीनि॥

**अस14.3**
त्रिवृच्छामादन्तीद्रवन्तीशङ्खिनीसप्तलाजगन्धाजशृङ्गीवचागवाक्षीछगलान्त्रीसुवर्णक्षीरीचित्रककिणिहीह्रस्वपञ्चमूलवृश्चीवपुनर्नवापलङ्कषावास्तुकशाकसालमूलानि।
तिल्वकरम्यककाम्पिल्यकपाटलीत्वच।
त्रिफलापीलुप्रियालकुवलबदरकर्कन्धुकाश्मर्यपरूषकद्राक्षानीलिनीक्लीतनकोदकीर्याविडङ्गपूगपञ्चाङ्गुलफलानि।
चतुरङ्गुलफलपत्राणि।
पूतीकस्य त्वक्फलपत्राणि।
महावृक्षसप्तच्छदज्योतिष्मतीक्षीराणि।
क्षीरमद्यमस्तुतक्रधान्याम्लमूत्राणि चेति विरेचनोपयोगीनि॥

**अस14.4**
कोशातकीदेवदालीसप्तलाकारवोल्लिकास्वरसमर्कक्षीरमुष्णोदकं चेत्युभयात्मकानि।
बस्तिषु तु तेषु तेष्ववस्थान्तरेषुयान्युपयुज्यन्ते द्रव्याणि तान्यसङ्ख्येयत्वान्नोपदिश्यन्ते।
रसस्कन्धेभ्य एव यथादोषं यथावस्थं च विभजेत्।
सर्वेषु तु प्रायो मदनकुटज जीमूतकेक्ष्वाकुकोशातकीद्वयत्रपुंसासिद्धार्थकशताह्वाफलानि।
बलादशमूलैरण्डत्रिवृद्वचायष्ट्याह्वकुष्ठरास्नापुनर्नवकतृणमूलानि।
सरलदेवदारुहपुषाहिङ्गुरसाञ्जनव्योषपत्रैलामृतायवकोलकुलत्थगुडलवणमस्तुधान्याम्लमूत्रस्नेहक्षीरक्षौद्राणि चेति निरूहोपयोगीनि॥

**अस14.5**
अपामार्गविडङ्गमरिचपिप्पलीशिरीषविल्वाजाज्यजमोजवार्ताकपृथ्वीकैलाहरेणुफलानि।
तालीसतमालतर्करीहरितकवर्गपत्राणि।
सर्षपाफलपत्राणि।
शिग्रुफलपत्रत्वचः।
हरिद्रामूलकलशुननागरकन्दपत्राणि।

अतिविषाकन्दाः।
कुष्ठवचाभार्ङ्गीश्वेताकिणिहीनागदन्तीज्योतिष्मतीगवाक्षीवयस्थावृश्चिकालीबम्बीकरञ्जमूलानि।
अर्कालर्कपुष्पमूलानि।
लोध्रमदनसप्तपर्णनिम्बपीलुबीजानि।
मुरुङ्गीमातुलुङ्गीलवङ्गपुष्पाणि।
अगरुसुरदारुसरलसल्लकीजिङ्गिण्यसनरसाञ्जनहिङ्गुलाक्षानिर्यासाः।
तमालसालतालमधूकदार्वीसाराः।
तेजस्विनीमेषशृङ्गीवराङ्गेङ्गुदीबृहतीद्वयचोचत्वचः।
राजादनमज्जक्षौद्रलवणानि मद्यानि गवादिशकृद्रसमूत्रपित्तान्येवंविधानि चेन्द्रियोपशयान्यन्यान्यपि तथा स्नेहाः क्षीरं रक्तं मांसरसो धान्यरसस्तोयमिति शिरोविरेचनोपयोगीनि॥

**अस14.6**
मधुकपद्मकमञ्जिष्ठाशारिवामुस्तापुन्नागनागकेसरैलवालुकसुवर्णत्वक्तमालपृथ्वीकाहरेणुलाक्षाशतपुष्पासल्लकीशर्करामदनकमरुबकन्यग्रोधोदुम्बराश्वत्थप्लक्षलोध्रत्वक् पद्मोत्पलानि सर्वगन्धद्रव्याणि च कुष्ठतगरवर्ज्यानि प्रायोगिकधूमोपयोगीनि
अगरुगुग्गुलुसल्लकीशैलेयकनलदह्रीबेरहरेणूशीरमुस्ताध्यामकवराङ्गश्रीवेष्टकस्थौणेयकपरिपेलवैलवालुककुन्दुरुकसर्जरसयष्ट्याह्वफलसारस्नेहमधूच्छिष्टबिल्वफलमज्जयवतिलमाषकुङ्कुमानि मेदोमज्जवसासर्पींषि च स्नैहिकधूमोपयोगीनि।
शिरोविरेचनद्रव्याणि गन्धद्रव्याणि च तीक्ष्णानि मनोह्वा हरितालं चेति तीक्ष्णधूमोपयोगीनि॥

**अस14.7**
भद्रदारुकुष्ठतगरवरुणबलातिबलार्तगलकच्छुराह्वादिनीकुबेराक्षीवत्सादिन्यर्कालर्ककतकभार्ङ्गीकार्पासीवृश्चिकालीपत्तूरप्रभृतीनि विदार्यादिगणो वीरतरादि स्तृणाख्यवर्ज्यानि षट् पञ्चमूलानि चेति वातशमनानि।
दूर्वानन्तामोचरसमञ्जिष्ठापरिपेलवकालाकालीयककदलीकन्दलीपयस्यात्मगुप्तानालिकेरखर्ज्जूरद्राक्षाविदारीबदरीबलानागबलानागपुष्पशतावरीशीत
पाक्योदनपाकीतृणशूल्यांशुमतीद्वयारिष्टकारिष्टाटरूषकेत्कटर्प्रियङ्गुधातकीधवधवधन्वनस्यन्दनखदिरकदरप्रियालतालसालसर्जतिनिशाश्वकर्णगुन्द्रावानीरपद्मापद्मकपद्मबीजमृणालकुमुदनलिनसौगन्धिकपुण्डरीकशतपत्रः
अन्यानि च शीतवीर्याणि सारिवादिः पद्मकादिः पटोलाअदिर्न्यग्रोधादिर्दाहहरो महाकषायस्तृणपञ्चमूलं चेति पित्तशमनानि।
शीतशिवशतपुष्पासरलसुरदारुरास्नेङ्गु दीसातलासुमनःकाकादनीलाङ्गलिकाहस्तिकर्णमुञ्जातलामज्जकप्रभृतीन्यन्यानि च रूक्षोष्णवीर्याण्यारग्वधादिरसनादिरर्कादिः सुरसादिर्मुष्ककादिर्वत्सकादिर्मुस्तादिः शीतघ्नश्च महाकषायो वल्लीकण्टकपञ्चमूले च श्लेष्मशमनानीति॥

**अस14.8**
भवति चात्र।
समीक्ष्य दोषदूष्यादीनमी वर्गाः सुयोजिताः।
सर्वामयजयायालं जायन्ते नियतात्मनाम्॥
इति चतुर्दशोऽध्यायः।

अथ पञ्चदशोऽध्यायः

**अस15.1**
अथातो महाकषायसङ्ग्रहमध्यायं व्याख्यास्यामः इति ह स्माहुरात्रेयादयो महर्षयः॥

**अस15.2**
आनन्त्यादौषधानामामयानां चानन्ता एव कषायाः।
ये तु सुतरामुपयोगवन्तः प्रकर्षवर्तिनो वा ते जीवनीयादिसंज्ञाः।
प्रत्येकं दशकषायसंयोगात् पञ्चचत्वारिंशन्महाकषाया वक्ष्यन्ते।
तत्प्रतिपत्त्यर्थमेव मन्दबुद्धीनाम्।
बुद्धिमतामुदाहरणामात्रप्रदर्शनार्थम्।
शक्यं हि बुद्धिमद्भिः स्वादुशीतस्निग्धादीन् जीवन्त्यादिषु साधारणान् गुणानालोच्य क्षीरेक्षुद्राक्षाक्षोडविदारीकन्दादिष्वपि तद्गुणेषु जीवनीयादित्वमवधारयितुम्।
यथोक्तानुसरणमेव तु श्रेयो मन्दबुद्धेरिति।
व्यस्ताश्च ते चत्वारि पञ्चाशदधिकानि तदभिधानान्येव।
यद्यपि तानि तान्येव द्रव्याणीति द्रव्यसङ्करः कषायेषु तथापि न संज्ञाविरोधः।
एकस्यापि बहुकार्यनिर्वर्तनात्।
तत्र लवणवर्ज्या रसाः कल्पनायां कषाया इत्युचयन्ते।
तद्योनित्वात्।
लवणस्य यतो निर्यासादिकल्पनानामसम्भवः।
पृथगुपयोगोपकाररहितत्वाच्च नैरथक्यमिति॥

**अस15.3**
भवति चात्र।
जीवन्तीकाकोल्यौ द्वे मेदे मुद्गमाषपर्ण्यौ च।
ऋषभकजीवकमधुकं चेति गणो जीवनीयाख्यः॥

**अस15.4**
वाट्या बला पयस्याकाकोल्याविक्षुवाजिगन्धे च।
क्षीरिणिराजक्षवके भारद्वाजी च बृंहणीयोऽयम्॥

**अस15.5**
हैमवती चिरिबिल्वं मुस्ता कुष्ठं वचा हरिद्रे च।
चित्रककटुकातिविषा वर्गोयं लेखनीयाख्यः॥

**अस15.6**
अर्कैरण्डौ चित्रा चित्रकचिरिबिल्वशङ्खिनीसरला।
हेमक्षीरी कटुका वह्निमुखी भेदनीयोऽयम्॥

**अस15.7**
मधुमधुकपृश्निपर्णीकट्फललोध्रप्रियङ्गुधातक्यः।
अम्बष्ठकी समङ्गा मोचरसश्चेति सन्धानः॥

**अस15.8**
हिङ्गुमरिचाम्लवेतस दीप्यकभल्लातकास्थिसंयोगात्।
वर्गः सपञ्चकोलो निर्दिष्टो दीपनीयोऽयम्॥

**अस15.9**
ऐन्द्र्यतिरसा पयस्या ऋष्यप्रोक्ता स्थिरा बलातिबला।
इति बल्यो दशकोऽयं हयगन्धा रोहिणी ऋषभः॥

**अस15.10**
चन्दनतुङ्गपयस्या सितालतामधुकपद्मकोशरिम्।
वर्ण्यो गणोयमुदितो मञ्जिष्ठासारिवासहितः॥

**अस15.11**
हंसपदीबृहतीद्वयमृद्वीकासारिवेक्षुमूलानि।
कैडर्यमधुककृष्णाः सविदार्यः कण्ठजननानि॥

**अस15.12**
वृक्षाम्लबदरदाडिमकुवलाम्राम्रातालिकुचकरमर्दम्।
हृद्यं समातुलुङ्गाम्लवेतसं विद्धि वर्गमिमम्॥

**अस15.13**
नागरचविकाचित्रकविडङ्गमूर्वामृतावचामुस्ताः।
सहपिप्पलीपटोलास्तृप्तिघ्नोऽयं गणः प्रथितः॥

**अस15.14**
कुटजफलबिल्वचित्रकमहौषधप्रतिविषावचाचविकाः।
धन्वयवासं पथ्या दारुहरिद्रागणोऽयमर्शोघ्नः॥

**अस15.15**
खदिरामलकारुष्करनिशाभयासप्तपर्णकरवीराः।
कुष्ठाघ्नाश्वतुङ्गुलविडङ्गजातिप्रवालाश्व॥

**अस15.16**
नलदकृतमालचन्दनसर्षपघननिम्बकुटजमधुकानि।
कण्डूं दारुहरिद्रासनक्तमालानि निघ्नन्ति॥

**अस15.17**
अक्षीवमरिचकेबुकविडङ्गगण्डीरकिणिहिनिर्गुण्ड्यः।
घ्नन्ति क्रिमीन् श्वदंष्ट्राविषाखुपर्ण्यस्तथा न चिरात्॥

**अस15.18**
मञ्जिष्ठाश्लेष्मातकरजनीसुवहाशिरीषपालिन्यः।
सैलाचन्दनकत्काः ससिन्दुवारा विषं घ्नन्ति॥

**अस15.19**
शालिकुशकाशषष्टिकवीरणदर्भेक्षुवालिकेक्षूणाम्।
तद्वद् गुन्द्रोत्कटयोर्मूलमलं स्तन्यजननाय॥

**अस15.20**
पाठानागरसुरतरुघनामृतासारिवेन्द्रयवमूर्वाः।
कटुकाकिराततिक्तं वर्गोऽयं स्तन्यशुद्धिकरः॥

**अस15.21**
मेदाकाकोलीद्वयवृक्षरुहाजीवकर्षभकुलिङ्गाः।
शुक्रजननो गणोऽयं सह जटिलाशूर्पपर्णीभिः॥

**अस15.22**
कुष्ठैलवालुककट्फलकाण्डेक्ष्विक्ष्वब्धिफेनकोशीरैः।
वसुकेक्षुरकैः शुक्रं शुध्येत् सकदम्बनिर्यासैः॥

**अस15.23**
द्राक्षाकाकोलीद्वय मधुपर्णीमधुकजीवकविदार्यः।
स्नेहोपगाः समेदा जीवन्तीशालिपर्णीकाः॥

**अस15.24**
सौभञ्जनकपुनर्नववृश्चीवकुलत्थमाषबदराणि।
स्वेदोपगानि विद्यात् सयवतिलार्कोरुपूगानि॥

**अस15.25**
लाजाम्रबदरदाडिमयवषष्टिकमातुलुङ्गसेव्यानि।
जम्ब्वाम्रपल्लवानि च वमिनिग्रहणानि मृत्सा च॥

**अस15.26**
नागरधन्वयवासकवालकपर्पटकचन्दनगुडूच्यः।
भूनिम्बघनपटोली कुस्तुम्बर्यस्तृषं घ्नन्ति॥

**अस15.27**
बृहतीद्वयवृक्षरुहापुष्करमूलाभयाकणाशृङ्ग्यः।
हिध्मां निघ्नन्ति शटी दुरालभा बदरबीजं च॥

**अस15.28**
शामानन्ता पद्मा कट्वङ्गः पद्मकेसरं लोध्रम्।
धातकिकुसुमसमङ्गामोचरसाम्रास्थि विड्ग्रहणम्॥

**अस15.29**
जम्बूसल्लकिमधुकं नीलोत्पलकच्छुरातिलश्र्याह्वम्।
भृष्टा च मृत् पयस्या सशाल्मली विड्विरजनानि॥

**अस15.30**
जम्ब्वाम्रोदुम्बरवटकपीतनप्लक्षपिप्पलाश्मन्तम्।
भल्लातसोमवल्कं मूत्रग्रहणाय् निर्दिष्टम्॥

**अस15.31**
कमलनलिनकुमुद मधुकसौगन्धिकधातकीलताकुसुमम् मूत्रं नयति विरागं सोत्पलशतपत्रपुण्डरीकं च॥

**अस15.32**
वृक्षादनीश्वदंष्ट्रादर्भेत्कटवसुकवशिरकुशकाशाः।
मूत्रं विरेचयेयुर्गुन्द्रा पाषाणभेदश्च॥

**अस15.33**
द्राक्षामलकपुनर्नबवृश्चीवदुरालभाभयाकृष्णाः।
कासं घ्नन्ति सशृङ्गी तामलकी कण्टकारी च॥

**अस15.34**
चण्डाम्लवेतसशटी तामलकीसुरसहिङ्गुजीवन्त्यः।
पुष्करमूलैलागुरुवर्गोऽयं श्वासशमनाय॥

**अस15.35**
द्राक्षापीलुपरूषकमञ्जिष्ठासारिवामृतापाठाः।
त्रिफला चेति गणोऽयं ज्वरस्य शमनाय् निर्दिष्टः॥

**अस15.36**
दाडिमफल्गुपरूषकप्रियालयवषष्टिकेक्षुबदराणि।
श्रमनाशनानि विद्याद् द्राक्षाखर्जूरसहितानि॥

**अस15.37**
पद्मकलाजोशीरं मधुकोत्पलसारिवासितोदीच्यम्।
काश्मर्यफलं चन्दनमेष गणो दाहहा प्रोक्तः॥

**अस15.38**
नतनागरागुरुवचाधान्यकभूतीकपिप्पलीव्याघ्रयः।
शीतं शमयन्त्यचिरात् स्योनाकः साग्निमन्थश्च॥

**अस15.39**
तिन्दुकप्रियालवीजकसप्तच्छदखदिरकदरबदराणि।
अरिमेदवाजिकर्णौ ककुभश्चोदर्दशमनानि॥

**अस15.40**
काकोल्येला सेव्यं निदिग्धिके शालिपृश्निपर्ण्यौ च।
घ्नन्त्यङ्गमर्दमचिराचन्दनमधुकोरुबूकं च॥

**अस15.41**
दीप्यकमरिचाजाजीगण्डीरं साजगन्धमथ शूलम्।
शमयति सपञ्चकोलं शोफं दशमूलमाद्यं च॥

**अस15.42**
मधुमधुकलाजगैरिकफलिनीमोचरसमृत्कपालानि।
संस्थापयन्ति रुधिरं रुधिरं च सशर्करं लोध्रम्॥

**अस15.43**
शैलैलवालुकट्फलमोचरसाशोकपद्मकशिरीषम्।
स्थापयति वेदनामथ सहतुङ्गकदम्बविदुलं च॥

**अस15.44**
कैडर्यहिङ्गुचोरकपलङ्कषाशोकरोहिणिवयस्थाः।
पूत्यरिमेदो जटिलागोलोमिवचाश्च संज्ञादाः॥

**अस15.45**
ऐन्द्री दूर्वामोघाविष्वक्सेना व्यथा शिवारिष्टा।
ब्राह्मी सवाट्यपुष्पी शतवीर्या स्थापयेद् गर्भम्॥

**अस15.46**
अमृता पथ्या धात्री जीवन्ती श्रेयसी स्थिरायुक्ता।
मण्डूकपर्ण्यतिरसा स्थापयति पुनर्नवा च वयः॥

**अस15.47**
इति नानाविधव्याधिविघातार्थमुदाहृताः।
योगा रोगातुरवशात् कल्पयेत्तान् यथायथम्॥
इति पञ्चदशोऽध्यायः।

अथ षोडशोऽध्यायः।

**अस16.1**
अथातो विविधद्रव्यगणसङ्ग्रहमध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अस16.2**
विदारिपञ्चाङ्गुलवृश्चिकालीवृश्चीवदेवाह्वयशूर्पपर्ण्यः।
कण्डूकरी जीवनह्रस्वसंज्ञे द्वे पञ्चके गोपसुता त्रिपादी॥

**अस16.3**
विदार्यादिरयं हृद्यो बृंहणो वातपित्तहा।
शोषगुल्माङ्गमर्दोर्ध्वश्वासकासहरो गणः॥

**अस16.4**
सारिवोशीरकाश्मर्यमधूकशिशिरद्वयम्।
यष्टीपरूषकं हन्ति दाहपित्तास्रतृड्ज्वरान्॥

**अस16.5**
पद्मकपुण्ड्रौ वृद्धितुगर्ध्यः शृङ्ग्यमृता दश जीवनसंज्ञाः।
स्तन्यकरा घ्नन्तीरणपित्तं प्रीणनबृंहणजीवनवृष्याः॥

**अस16.6**
परूषकं वरा द्राक्षा कट्फलं कतकात् फलम्।
राजाह्वं दाडिमं शाकं तृण्मूत्रामयवातजित्।
अञ्जनं फलिनी मांसी पद्मोत्पलरसाञ्जनम्।
सैलामधुकनागाह्वं विषान्तर्दाहपित्तनुत्॥

**अस16.7**
पटोलकटुरोहिणीचन्दनं मधुस्रवगुडूचिपाठान्वितम्।
निहन्ति कफपित्तकुष्ठज्वरान् विषं वमिमरोचकं कामलाम्॥

**अस16.8**
गुडूचीपद्मकारिष्टधानका रक्तचन्दनम्।
पित्तश्लेष्मज्वरच्छर्दिदाहतृष्णाघ्नमग्निकृत्॥

**अस16.9**
आरग्वधेन्द्रयवपाटलिकाकतिक्तानिम्बामृतामधुरसास्रुववृक्षपाठाः। भूनिम्बसैर्यकपटोलकरञ्जयुग्मसप्तच्छदाग्निसुषवीफलबाणघोण्टाः॥

**अस16.10**
आरग्वधादिर्जयति छर्दिकुष्ठविषज्वरान्।
कफं कण्डूं प्रमेहं च दुष्टव्रणविशोधनः॥

**अस16.11**
असनतिनिशभूर्जश्वेतवाहप्रकीर्याः खदिरकदरभण्डीशिंशपामेषशृङ्ग्यः।
त्रिहिमनतपलाशाजोङ्गकः शाकसालौ धवकबुककलिङ्गच्छागकर्णाश्वकर्णाः॥

**अस16.12**
असनादिर्विजयते श्वित्रकुष्ठकफक्रिमीन्।
पाण्डुरोगं प्रमेहं च मेदोदोषनिबर्हणः॥

**अस16.13**
वरणसैर्यकयुग्मशतावरीदहनमोरटबिल्वविषाणिकाः।
द्विबृहतीद्विकरञ्जजयाद्वयं बहलपल्लवदर्भरुजाकराः॥

**अस16.14**
वरणादिः कफं मेदो मन्दाग्नित्वं नियच्छति।
आढ्यवातं शिरश्शूलं गुल्मं चान्तः सविद्रधिम्॥

**अस16.15**
ऊषकस्तुत्थकं हिङ्गुकासीसद्वयसैन्धवम्।
सशिलाजतु कृच्छ्राश्मगुल्ममेदः कफापहम्॥

**अस16.16**
भवन्ति चात्र वीरतरारणिकौ नगगुच्छौ मोरटटुण्टुकसैर्यकयुग्मम्।
मुस्तकमञ्जरिकर्कशपार्था मूत्रविरेककरो दशकश्च॥

**अस16.17**
वर्गो वीरतराद्योऽयं हन्ति वातकृतान् गदान्।
अश्मरीशर्करामूत्रकृच्छ्राघातरुजापहः॥

**अस16.18**
लोध्रशाबरकलोध्रपलाशाजिङ्गिणीसरलकट्फलयुक्ताः।
कुत्सिताम्बकदलीगतशोकाः सेलवालुपरिपेलवमोचाः॥

**अस16.19**
एष लोध्रादिको नाम मेदःकफहरोगणः।
योनिदोषहरः स्तम्भी वर्ण्यो विषविनाशनः॥

**अस16.20**
अर्कालर्कौ नागदन्ती विशल्या भार्ङ्गी रास्ना वृश्चिकाली प्रकीर्या।
प्रत्यक्पुष्पी पीततैलोदकीर्याः श्वेतायुग्मं तापसानां च वृक्षः॥

**अस16.21**
अयमर्कादिको वर्गः कफमेदोविषापहः।
कृमिकुष्ठप्रशमनो विशेषात् व्रणशोधनः॥

**अस16.22**
सुरसयुगफणिज्जं कालमाला विडङ्गं खरबुकवृषकर्णीकट्फलं कासमर्दः।
क्षवकसरसिभार्ङ्गीकार्मुकाः काकमाची कुलहलविषमुष्टी भूस्तृणो भूतकेशी॥

**अस16.23**
सुरसादिर्गणः श्लेष्ममेदःक्रिमिनिषूदनः।
प्रतिश्यायारुचिश्वासकासघ्नो व्रणशोधनः॥

**अस16.24**
मुष्ककस्नुग्वराद्वीपीपलाशधवशिंशपाः।
गुल्ममेहाश्मरीपाण्डुमेदोऽर्शःकफशुक्रजित्॥

**अस16.25**
वत्सको मधुरसा त्रुटिर्वचा दीर्घवृन्तफलवेल्लसर्षपाः।
रोहिणीस्थपनिहिंगुभार्ङ्गयः शूलघाति दशकं घुणप्रिया॥

**अस16.26**
वत्सकाद्योऽनिलश्लेष्ममेदोऽरोचकपीनसान्।
शूलार्शोज्वरगुल्मांश्च हन्ति दीपनपाचनः॥

**अस16.27**
वचाजलददेवाह्वनागरातिविषाभयाः।
हरिद्राद्वययष्ट्याह्वकलशीकुटजोद्भवाः॥

**अस16.28**
वचाहरिद्रादिगणावामातीसारनाशनौ।
मेदःकफाढ्यपवनस्तन्यदोषनिबर्हणौ॥

**अस16.29**
प्रियङ्गुपुष्पाञ्जनयुग्मपद्माः पद्माद्रजो योजनवल्ल्यनन्ता।
सालद्रुमो मोचरसः समङ्गा पुन्नागशीतं मदनीयहेतुः॥

**अस16.30**
अम्बष्ठामधुकनमस्करीनन्दीवृक्षपलाशकच्छुराः।
लोध्रं घातकिविल्वपेशिका वटवङ्गः कमलोद्भवं रजः॥

**अस16.31**
गणौ प्रियङ्ग्वम्बष्ठादी पक्वतीसारनाशनौ।
सन्धानीयौ हितौ पित्ते व्रणानामपि रोपणौ॥

**अस16.32**
मुस्तावचाग्निद्विनिशाद्वितिक्ताभल्लातपाठात्रिफलाविषाख्याः।
कुष्ठं त्रुटी हैमवती च योनिस्तन्यामयघ्ना मलपाचनाश्च॥

**अस16.33**
न्यग्रोधपिप्पलसदाफललोध्रयुग्मजम्बूद्वयार्जुनकपीतनसोमवल्काः।
प्लक्षाम्रवञ्जुलप्रियालपलाशनन्दीकोलीकदम्बविरलामधुकं मधूकम्॥

**अस16.34**
न्यग्रोधादिर्गणो व्रण्यः सङ्ग्राही भग्नसाधनः मेदःपित्तास्रतृड्दाहयोनिरोगनिबर्हणः॥

**अस16.35**
एलायुग्मतुरुष्ककुष्ठफलिनीमांसीजलध्यामकस्पृक्काचोरकचोचपत्रतगरस्थौणेयजातीरसाः।
शुक्तिव्याघ्रनखौ सुराह्वमगरुःश्रीवासकःकुङ्कुमं चण्डागुग्गुलुदेवधूपखपुराःपुन्नागनागाह्वयम्॥

**अस16.36**
एलादिको वातकफौ विषं च विनियच्छति।
वर्णप्रसादनः कण्डूपिटकाकोठनाशनः॥

**अस16.37**
श्यामादन्तीद्रवन्तीक्रमुककुठरणाशङ्खिनीचर्मसाह्वास्वर्णक्षीरिगवाक्षीशिखरिरजनिका छिन्नरोहा करञ्जः।
बस्तान्त्री व्याधिघातो बहलबहुरसस्तीक्ष्णवृक्षात् फलानि श्यामाद्यो हन्ति गुल्मं विषमरुचिकफौ हृद्रुजं मूत्रकृच्छ्रम्॥

**अस16.38**
पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेरमरिचहस्तिपिप्पलीहरेणुकैलाजमोजेन्द्रयवपाठाजीरकसर्षपमहानिम्बफलगुहिङ्गुभार्ङ्गीवचामुस्तामधुरसातिविषाविडङ्गानि कटुरोहिणी चेति॥

**अस16.39**
पिप्पल्यादिः कफहरः प्रतिश्यायानिलारुचीः।
निहन्याद्दीपनो गुल्मशूलघ्नश्चामपाचनः॥

**अस16.40**
पञ्चविंशीतरित्युक्ता वर्गास्तेषु त्वलाभतः।
युञ्ज्यात्तद्विधमन्यच्च द्रव्यं जह्यादयौगिकम्॥

**अस16.41**
एते वर्गा दोषदूष्याद्यपेक्ष्य कल्कक्वाथस्नेहलेहादियुक्ताः।
पाने नस्येऽन्वासनेऽन्तर्बहिर्वा लेपाभ्यङ्गैर्घ्नन्ति रोगान् सुकृच्छ्रान्॥
इति षोडशोऽध्यायः।

अथ सप्तदशोऽध्यायः।

विदाहो जन्यते।
ततश्चासावपथ्यतामुपगतो ध्रुवमयोगाय प्रथमसंगृहीतमपिचौषधं तोयदतोयानुगतमारुतोपहते जगतीति॥

**अस23.11**
ग्रीष्मे पुनरादानोपहतत्वाच्छरीरमुष्णरूक्षवातातपाध्मातमतिस्विन्नमतिशिथिलमतियलीनदोषं भवति।
भेषजं पुनरनुष्णमपि तपनकरनिपातादुष्णतीक्ष्णतामुपगतमतियोगायोपकल्पते।
शरीरञ्च पिपासाभ्रमक्लमोपद्रवाय।
तस्मात्साधारणेष्वेव तदन्तरालेषु वमनादीनि योजयेन्नचेदात्ययिको व्याधिः।
आत्ययिके तु कृत्रिमगुणोपधानेन यथर्तुगुणविपरीतेन संयोगसंस्कारप्रमाणविकल्पैश्चोपपाद्यौषधमेवावहितोऽवचारयेत्॥

**अस23.12**
आतुरावस्थासु तु कलाः कालसंज्ञाः।
तद्यथास्यामवस्थायामस्यौषधस्य कालोऽकालो वा।
नह्यप्राप्तातीतकालमौषधं यौगिकं भवति।
तस्यत्वेकादशधावचारणम्।
तद्यथा।
अभक्तं प्राग्भक्तं मध्यभक्तमधोभक्तं सभक्तमन्तरभक्तं सामुद्गं मुहुर्मुहुः सग्रासं ग्रासान्तरा निशि च॥

**अस23.13**
तत्राभक्तं नाम केवलमेवौषधं निरन्नोपयोगादतिवीर्यम्।
कफोद्रेकविमुक्तामाशयस्रोताः प्रातर्बलवानुपयुञ्जीत।
इतरस्तु प्राग्भक्तादिकमन्नसंसर्गेण हितं नातिग्लानिकरं भवति॥

**अस23.14**
प्राग्भक्तं नाम यदनन्तरभक्तम्।
तदपानानिलविकृतावधः कायस्य च बलाधानार्थं तद्गतेषु च व्याधिषु प्रशमनाय कृशीकरणार्थञ्च योज्यम्॥

**अस23.15**
मध्यभक्तं मध्ये भक्तस्य तत् समानानिलविकृतौ।
कोष्ठगतेषु च व्याधिषु पैत्तिकेषु च॥

**अस23.16**
अधोभक्तं भक्तादनन्तरम्।
तत्तुव्यानविकृतौ प्रातराशान्तमुदानविकृतौ पुनः सायमाशान्तम्।
पूर्वकायस्य च बलाधानार्थं तद्गतेषु व्याधिषु च श्लैष्मिकेषु च प्रशमाय स्थूलीकरणार्थञ्च॥

**अस23.17**
सभक्तं यदन्नेन समं साधितं पश्चाद्वा समालोडितम्।
तत् बालेषु सुकुमारेष्वौषधद्वेषिष्वरुचौ सर्वाङ्गगेषु च रोगेषु॥

**अस23.18**
अन्तराभक्तं यत् पूर्वाह्ने भक्ते जीर्णे मध्याह्ने भेषजमुपयुज्यते।
तस्मिंश्च जीर्णे पुनरपराह्ने भोजनम्।
एतेन रात्रिर्व्याख्याता।
तद्दीप्ताग्नेर्व्यानजेष्वामयेषु॥

**अस23.19**
सामुद्गं यदादावन्ते च भुक्तस्य।
तत्तु लघ्वल्पान्नयुक्तं पाचनावलेहचूर्णादि हिध्मायां कम्पाक्षेपयोरूर्ध्वाधस्संश्रये च दोषे॥

**अस23.20**
मुहुर्मुहुस्तु पुनःपुनर्भुक्ते यदभुक्ते वा।
तच्छ्वासकासहिध्मातृट्छर्दिषु विषनिमित्तेषु च विकारेषु॥

**अस23.21**
सग्रासं यत् ग्राससम्पृक्तम्।
ग्रासान्तरं यत् ग्रासयोर्ग्रासयोर्मध्ये द्वयमप्येतत् प्राणानिलविकृतौ।
तथा सग्रासं चूर्णलेहवटकादिकमग्निदीपनं वाजीकरणानि चोपयुञ्जीत।
ग्रासान्तरं हृद्रोगे वमनं धूमञ्च।
जत्रूर्ध्वामयेषु निशायाम्॥

**अस23.22**
तत्राद्ये काले तृषितः पीतशीताम्बुरजीर्णी क्षुधितः क्षामश्च भेषजं वर्जयेत्।
शेषेषु वाह्यमसात्म्यमतितीक्ष्णोष्णोग्रगन्धं भूरिमात्रञ्चेति।
भवति चात्र श्लोकः॥

**अस23.23**
रोगमादौ परीक्षेत तदनन्तरमौषधम्।
ततः कर्म भिषक् पश्चात् ज्ञानपूर्वं समाचरेत्॥

**अस23.24**
निवृत्तोऽपि पुनर्व्याधिरल्पेनायाति हेतुना।
देहे मार्गीकृते दोषैः शेषः सूक्ष्म इवानलः॥

**अस23.25**
तस्मात्तमनुबध्नीयात् प्रयोगेणानपायिना।
सिद्धानामपि योगानां पूर्वेषां दार्ढ्यमावहन्॥

**अस23.26**
सातत्यात्स्वाद्वभावाद्वा पथ्यं द्वेष्यत्वमागतम्।
कल्पनाविधिभिस्तैस्तैः प्रियत्वं गमयेत् पुनः॥

**अस23.27**
मनसोर्थानुकूल्येन तुष्टिरूर्जा रुचिर्बलम्।
सुखोपभोगता च स्यात् व्याधेश्चातः परिक्षयः॥

**अस23.28**
लौल्याद्दोषक्षयाद्व्याधिवैषम्येण च या रुचिः।
तासु पथ्योपचारज्ञो योगेनायं विकल्पयेत्॥

**अस23.29**
शीतोष्णवर्षानिचितं चैत्रश्रावणकार्तिके।
क्रमात् साधारणे श्लेष्मवातपित्तं हरेद्द्रुतम्॥

**अस23.30**
प्रावृट्शरद्वसन्तानां मासेष्वेतेषु वा हरेत्।
साधारणेषु विधिना त्रिमासान्तरितान्मलान्॥

**अस23.31**
कृत्वा शीतोष्णवृष्टीनां प्रतीकारं यथायथम्।
प्रयोजयेत् क्रियां प्राप्तां क्रियाकालं न हापयेत्॥

**अस23.32**
सप्ताहेन गुणालाभे क्रितामन्यां प्रयोजयेत्।
पूर्वस्यां शान्तवेगायां न क्रियासङ्करो हितः।
गुणेऽल्पेपि तु तामेव विशेषोत्कर्षलब्धये॥

**अस23.33**
भेषजं नृपतेर्हृद्यमल्पमल्पात्ययं शुचिः।
शुद्धागमं बहुगुणं बहुकृत्वः प्रयोजितम्॥

**अस23.34**
अनन्यकार्योऽवहितः तथा तन्मन्त्रिसम्मतः।
आस्वादितं परिचरैःस्वयञ्चानुप्रयोजयेत्॥

**अस23.35**
उचितो यस्य यो देशस्तज्जं तस्यौषधं हितम्।
देशेऽन्यत्रापि वसतस्ततुल्यगुणजन्म च॥

**अस23.36**
वीर्यवद्भावितं सम्यक् स्वरसैरसकृल्लघु।
रसगन्धादिसम्पन्नं काले जीर्णे च मात्रया।
एकाग्रमनसा युक्तं भषज्यममृतायते॥
इति त्रयोविंशोऽध्यायः॥

अथ चतुर्विंशोऽध्यायः।

**अस24.1**
अथातो द्विविधोपक्रमणीयं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अस24.2**
उपक्रम्यस्य हि द्वित्वाद् द्विधैवोपक्रमो मतः।
एकस्सन्तर्पणस्तत्र द्वितीयश्चापतर्पणः।
बृंहणो लङ्घनश्चेति तत्पर्यायावुदाहृतौ॥

**अस24.3**
बृंहणं यत् बृहत्वाय लङ्घनं लाघवाय यत्।
देहस्यं भवतः प्रायो भौमापमितरच्च ते॥

**अस24.4**
स्नेहनं रूक्षणं कर्म स्वेदनं स्तम्भनञ्च यत्।
भूतानां तदपि द्वैध्यात् द्वितयं नातिवर्तते॥

**अस24.5**
शोधनं शमनञ्चेति द्विधा तत्रापि लङ्घनम्।
यदीरयेत् बहिर्दोषान् पञ्चधा शोधनञ्च तत्॥

**अस24.6**
निरूहो वमनं कायशिरोरेकोऽस्रविस्रुतिः।
न शोधयति यद्दोषान् समान्नोदीरयत्यपि॥

**अस24.7**
समीकरोति विषमान् शमनं तच्च सप्तधा।
पाचनं दीपनं क्षुत्तृड्व्यायामातपमारुताः।
बृंहणं शमनन्त्वेव वायोः पित्तानिलस्य च॥

**अस24.8**
बृंहयेद् व्याधिभैषज्यमद्यस्त्रीशोककर्शितान्।
भाराध्वोरःक्षतक्षीणरूक्षदुर्बलवातलान्॥

**अस24.9**
गर्भिणीसूतिकाबालवृद्धान् ग्रीष्मेऽपरानप्पि।
मांसक्षीरसितासर्पिर्मधुरस्निग्धबस्तिभिः॥

**अस24.10**
स्वप्नशय्यासुखाभ्यङ्गस्नाननिर्वृतिहर्षणैः।
मेहामदोषातिस्निग्धज्वरोरुस्तम्भकुष्ठिनः।
विसर्पविद्रधिप्लीहशिरःकण्ठाक्षिरोगिणः॥

**अस24.11**
स्थूलांश्च लङ्घयेन्नित्यं शिशिरे त्वपरानपि।
तत्र संशोधनैः स्थौल्यबलपित्तकफाधिकान्।
आमदोषज्वरच्छर्दिरतीसारहृदामयैः॥

**अस24.12**
विबन्धगौरवोद्गारहृल्लासादिभिरातुरान्।
मध्यस्थौल्यादिकान् प्रायः पूर्वं पाचनदीपनैः॥

**अस24.13**
एभिरेवमयैरार्तान् हीनस्थौल्यबलादिकान्।
क्षुत्तृष्णानिग्रहैर्दोषैस्त्वार्तान्मध्यबलैर्दृढान्॥

**अस24.14**
समीरणातपायासैः किमुताल्पबलैर्नरान्।
न बृंहयेल्लङ्घनीयान् बृंह्यांस्तु मृदु लङ्घयेत्।
युक्त्या वा देशकालादिबलतस्तानुपाचरेत्॥

**अस24.15**
बृंहिते स्यात् बलं पुष्टिस्तत्साध्यामयसंक्षयः।
विमलेन्द्रियता सर्गो मलानां लाघवं रुचिः॥

**अस24.16**
क्षुत्तृट्सहोदयश्शुद्धहृदयोद्गारकण्ठता।
व्याधिमार्दवमुत्साहस्तन्द्रानाशश्च लङ्घते॥

**अस24.17**
अनपेक्षितमात्रादिसेविते कुरुतस्तु ते।
अतिस्थौल्यातिकार्श्यादीन् वक्ष्यन्ते ते च सौषधाः।
रूपं तैरेव च ज्ञेयमतिबृंहितलङ्घते॥

**अस24.18**
तत्र शोधनमुद्दिश्य स्थौल्याद्याः प्रगुदाहृताः।
गुर्वादिवृद्धसंलीनश्लेष्ममिश्रोऽन्नजो रसः॥

**अस24.19**
आम एव श्लथीकुर्वन् धातून् स्त्हौल्यमुपानयेत्।
अतिस्थौल्यादतिक्षुत्तृट्प्रस्वेदश्वासनिद्रताः॥

**अस24.20**
आयासाक्षमता जाड्यमल्पायुर्बलवेगता।
दौर्गन्ध्यं गद्गदत्वञ्च भवेन्मेदोतिपुष्टितः॥

**अस24.21**
स्रोतस्तु मेदोरुद्धेषु वायुः कोष्ठे विशेषतः।
चरन् प्रज्वलयत्यग्निं क्षुत्तृषौ स्तस्ततोऽधिकम्॥

**अस24.22**
स्थूलं कोटरवद्वृद्धौ दहतोऽग्न्यनिलौ च तम्।
स्वेदवाहिसिरामूलभावाद्विष्यन्दनादपि।
मेदसः श्लेष्मयोगाच्च भवति स्वेदभूरिता॥

**अस24.23**
कोष्ठ एव विपक्वेऽस्य संरुद्धस्रोतसो रसे।
सर्वत्रालब्धवृत्तित्वात् प्रयो मेदः प्रचीयते॥

**अस24.24**
तच्छेषोऽल्परसोऽल्पत्वान्नालं रक्तादिपुष्टये।
तुल्येपि वाय्वादिचये प्राक्चितं चीयतेतराम्।
मेदस्तेनासमस्तेन धातूनां विदधाति तत्॥

**अस24.25**
श्वासादीनचिराच्चान्यान् ज्वरोदरभगन्दरान्।
मेहोरुस्तम्भपिटकाविद्रधिप्रभृतीन् गदान्॥

**अस24.26**
अयथोपचयोत्साहश्चलस्फिगुदरस्तनः।
अतिस्थूलः स्मृतो योज्यं तत्रान्नं मारुतापहम्॥

**अस24.27**
श्लेष्ममेदोहरं यच्च कुलत्था यवका यवाः।
जूर्णश्यामाकमुद्गाद्याः पानेऽरिष्टं मधूदकम्॥

**अस24.28**
मस्तु तक्रं च तीक्ष्णोष्णं रूक्षं छेदि च भेषजम्।
चिन्ताव्यवायव्यायामशोधनास्वपनं भजेत्॥

**अस24.29**
देहापेक्षी तथा रूक्षं स्नानमुद्वर्तनादि च।
मधुना त्रिफलां लिह्यात् गुडूचीमभयां घनम्।
रसाञ्जनस्य महतः पञ्चमूलस्य गुग्गुलोः॥

**अस24.30**
शिलाह्वस्य प्रयोगश्च साग्निमन्थरसो हितः।
विडङ्गं नागरं क्षारः काललोहरजो मधु॥

**अस24.31**
यवामलकचूर्णं च योगोऽतिस्थौल्यदोषजित्।
मदनं त्रिफला मुस्ता सप्ताह्वारिष्टवत्सकम्॥

**अस24.32**
सपाठारग्वधं पीतमतिबृंहणरोगजित्।
तद्वद्वत्सकशम्याकदेवदारुनिशाद्वयम्॥

**अस24.33**
समुस्तपाठाखदिरत्रिफलानिम्बगोक्षुरम्।
मदनादीनि चालेपः स्ननादिष्वपि योजयेत्॥

**अस24.34**
हिङ्गुगोमेदकव्योषकुष्ठक्रौञ्चास्थिगोक्षुरम्।
एलावृक्षकषड्ग्रन्थाखराश्वोपलभेदकम्॥

**अस24.35**
तक्रेण दधिमण्डेन पीतं कोलरसेन वा।
मूत्रकृच्छ्रं कृमीन् मेहं स्थूलतां च व्यपोहति॥

**अस24.36**
कृमिघ्नत्रिफलं तैलसक्तुत्र्यूषणदीप्यकैः।
लोहोदकाप्लुतो मन्थः शस्तो बृंहणरोगिणाम्॥

**अस24.37**
व्योषकट्वीवराशिग्रुविडङ्गातिविषास्थिराः।
हिङ्गुसौचर्चलाजाजीयवानीधान्यचित्रकाः॥

**अस24.38**
निशे बृहत्यौ हपुषा पाठा मूलं च केम्बुकात्।
एषां चूर्णं मधु घृतं तैलं च सदृशांशकम्॥

**अस24.39**
सक्तुभिः षोडशगुणैर्युक्तं पीतं निहन्ति तत्।
अतिस्थौल्यादिकान् सर्वान् रोगानन्यांश्च तद्विधान्।
हृद्रोगकामलाश्वित्रश्वासकासगलग्रहान्॥

**अस24.40**
बुद्धिमेधास्मृतिकरं सन्नस्याग्नेश्च दीपनम्।
योज्यं तथा यथाव्याधि स्वेदासृक्स्रावणान्यपि॥

**अस24.41**
अतिकार्श्यं भ्रमः कासस्तृष्णाधिक्यमरोचकः।
स्नेहाग्निनिद्रादृक्श्रोत्रशुक्रौजःक्षुत्स्वरक्षयः॥

**अस24.42**
बस्तिहृन्मूर्द्धजङ्घोरुत्रिकपार्श्वरुजा ज्वरः।
प्रलापोर्ध्वानिलग्लानिः छर्द्दिः पर्वास्थिभेदनम्॥

**अस24.43**
वर्चोमूत्रग्रहाद्याश्च जायन्तेऽतिविलङ्घनात्।
अतिकार्श्येन नायासवर्षशीतोष्णतृट्क्षुधः॥

**अस24.44**
तृप्तिव्याध्यौषधमनान् सहतेऽल्पबलत्वतः।
श्वासकासक्षयप्लीहगुल्मार्शोवह्निमन्दताः॥

**अस24.45**
कृशं प्रायश्च धावन्ति रक्तपित्तानिलामयाः।
कार्श्यमेव वरं स्थौल्यान्न हि स्थूलस्य भेषजम्।
बृंहणं लङ्घनं नालमतिमेदोऽग्निवातजित्॥

**अस24.46**
मधुरस्निग्धसौहित्यैर्यत् सौख्येन च नश्यति।
क्रशिमा स्थविमात्यन्तविपरीतनिषेवणैः॥

**अस24.47**
शुष्कस्फिगुदरग्रीवाः स्थूलपर्वा सिराततः।
उच्यतेऽतिकृशस्तत्रप्रागुक्तो बृंहणो विधिः॥

**अस24.48**
अश्वगन्धाविदार्याद्या वृष्याश्चौषधयो हिताः।
अचिन्तया हर्षणेन ध्रुवं सन्तर्पणेन च॥

**अस24.49**
स्वप्नप्रसङ्गाच्च कृशो वराह इव पुष्यति।
लङ्घनोत्थेषु रोगेषु शेषेष्वप्युपकल्पयेत्।
यत्तदात्वे समर्थं स्याद्यच्चाभ्यासेन पुष्टये॥

**अस24.50**
सद्यः क्षीणो यतः सद्यो बृंहणेनोपचीयते।
चिरं क्रमेण च क्षीणस्तदभ्यासेन तत्र च॥

**अस24.51**
बृंहणं देहमात्राग्निबलादीन् वीक्ष्य योजयेत्।
न हि मांससमं किञ्चिदन्यद्देहबृहत्त्वकृत्।
मांसादमांसं मांसेन सम्भृतत्वाद्विशेषतः॥

**अस24.52**
क्रव्यान्मांसरसांस्तस्माद्दकलावणिकान् लघून्।
वेशवारीकृतैस्तद्वज्जाङ्गलैश्च कृताकृतान्।
रसांस्तथा च क्षीरादीन् तर्पणांस्तर्पणान् पुनः॥

**अस24.53**
युञ्ज्यात् कृशानां ज्वरिणां कासिनां मूत्रकृच्छ्रिणाम्।
तृष्यतामूर्ध्ववातानां मूढमारुतवर्चसाम्॥

**अस24.54**
समैः कृष्णासितातैलक्षौद्राद्यैर्द्व्यंशतर्पणैः।
मन्थस्तद्वत् सिताक्षौद्रमदिरासक्तुयोजितः॥

**अस24.55**
फाणितं सक्तवः सर्पिर्दधिमण्डोऽम्लकाञ्जिकम्।
तर्पणं मूत्रकृच्छ्रघ्नमुदावर्तहरं परम्॥

**अस24.56**
मन्थः खर्जूरमृद्वीकावृक्षाम्लाम्लीकदाडिमैः।
परूषकैः सामलकैः सद्यस्तृष्णादिरोगजित्॥

**अस24.57**
स्वादुरम्लो जलकृतः सस्नेहो रूक्ष एव वा।
सद्यः सन्तर्पणो मन्थः स्थैर्यवर्णबलप्रदः॥

**अस24.58**
गुरु चातर्पणं स्थूले विपरीतं हितं कृशे।
यवगोधूममुभयोस्तद्योग्याहितकल्पनम्॥

**अस24.59**
स्थौल्यकार्श्ये प्रकृत्यापि स्यातां तत्राप्ययं विधिः।
सततं व्याधिततया सदा योज्यो विभज्य च॥

**अस24.60**
मात्रादियुक्ते सेवेत यस्तु लङ्घनबृंहणे।
समधात्वग्निदेहोऽसौ समसंहननो भवेत्॥

**अस24.61**
दृढेन्द्रियबलत्वाच्च न द्वन्द्वैरभिभूयते।
दोषगत्यातिरिच्यन्ते ग्राहिभेद्यादिभेदतः।
उपक्रमा न तु द्वित्वाद्भिन्ना अपि गदा इव॥
इति चतुर्विंशोऽध्यायः॥

अथ पञ्चविंशोऽध्यायः।

**अस25.1**
अथातः स्नेहविधिमध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अस25.2**
स्नेहादिषूपयोगाय तद्व्यापच्छमनाय च।
कुर्यात् प्रागेव तद्योगिद्रव्यसम्भारसङ्ग्रहम्॥

**अस25.3**
गुरुशीतसरस्निग्धमन्दसूक्ष्ममृदुद्रवम्।
औषधं स्नेहनं प्रायो विपरीतं विरूक्षणम्॥

**अस25.4**
सर्पिर्मज्जा वसा तैलं स्नेहेषु प्रवरं मतम्।
तत्रापि चोत्तमं सर्पिः संस्कारस्यानुवर्तनात्॥

**अस25.5**
माधुर्यादविदाहित्वाज्जन्माद्येव च शीलनात्।
पित्तघ्नास्ते यथापूर्वमितरघ्ना यथोत्तरम्।

**अस25.6**
घृतात्तैलं गुरु वसा तैलान्मज्जा ततोऽपि च।
द्वाध्यां त्रिभिश्चतुर्भिस्तैर्यमकस्त्रिवृतो महान्॥

**अस25.7**
स्नेहाशया दधिक्षीरं मांसास्थिफलदारु च।
स्वेद्यसंशोध्यमद्यस्त्रीव्यायामासक्तचिन्तकाः।
वृद्धबालावलकृशा रूक्षाः क्षीणास्रेतसः॥

**अस25.8**
वातार्तस्यन्दतिमिरदारुणप्रतिबोधिनः।
स्नेह्याः न त्वतिमन्दाग्नितीक्ष्णाग्निस्थूलदुर्बलाः।
ऊरुस्तम्भातिसारामगलरोगगरोदरैः॥

**अस25.9**
मूर्छार्छ्यरुचिश्लेष्मतृष्णामद्यैश्च पीडिताः।
अपप्रसूता युक्ते च नस्ये बस्तौ विरेचने॥

**अस25.10**
तत्र धीस्मृतिमेधाग्निकाङ्क्षिणां शस्यते घृतम्।
ग्रन्थिनाडीकृमिश्लेष्ममेदोमारुतरोगिषु॥

**अस25.11**
तैलं लाघवदार्ढ्यार्थिक्रूरकोष्ठेषु देहिषु।
वातातपाध्वभारस्त्रीव्यायामक्षीणधातुषु॥

**अस25.12**
रूक्षक्लेशक्षमात्यग्निवातावृतपथेषु च।
शेषौ वसा तु सन्ध्यस्थिमर्मकोष्ठरुजासु च॥

**अस25.13**
तथादग्धाहतभ्रष्टयोनिकर्णाशिरोरुजि।
तैलं प्रावृषि वर्षान्ते सर्पिरन्यौ तु माधवे।
सर्वं सर्वस्य च स्नेहं युञ्ज्यात् भास्वति निर्मले॥

**अस25.14**
ऋतौ साधारणे दोषसाम्येऽनिलकफे कफे।
दिवा निश्यनिले पित्ते संसर्गे पित्तवत्यपि॥

**अस25.15**
त्वरमाणे तु शीतेऽपि दिवा तैलं च योजयेत्।
उष्णेऽपि रात्रौ सर्पिश्च दोषादीन्वीक्ष्य चान्यथा॥

**अस25.16**
निश्यश्नुते वातकफाद्रोगानहनि पित्ततः।
युक्त्यावचारयेत् स्नेहं भक्ष्यायन्नेन बस्तिभिः।
नस्याभ्यञ्जनगण्डूषमूर्धकर्णाक्षितर्पणैः॥

**अस25.17**
रसभेदैककत्वाभ्यां चतुष्षष्टिर्विचारणाः।
स्नेहस्यान्याभिभूतत्वादल्पत्वाच्च क्रमात्स्मृताः॥

**अस25.18**
यथोक्तहेत्वभावाच्च नाच्छपेयो विचारणा।
स्नेहस्य कल्पः स श्रेष्ठः स्नेहकर्माशुसाधनात्॥

**अस25.19**
द्वाभ्यां चतुर्भिरष्टाभिर्यामैर्जीर्यन्ति याः क्रमात्।
ह्रस्वमध्योत्तमा मात्रास्तास्ताभ्यश्च ह्रासीयसीम्॥

**अस25.20**
कल्पयेद्वीक्ष्य दोषादीन् प्रागेव तु ह्रसीयसीम्।
अज्ञातकोष्ठे हि बहुः कुर्याज्जीवितसंशयम्॥

**अस25.21**
तत्र दुर्बलमन्दाग्निबालवृद्धसुखात्मकैः।
अपथ्यरिक्तकोष्ठत्वज्वरातीसारकासिभिः॥

**अस25.22**
ह्रस्वा पेया सुखा सा हि परिहारेऽनुवर्तते।
चिराच्च बल्या न रुजे व्यापन्नापि प्रकल्पते॥

**अस25.23**
मेहोरुःपिटकाकुष्ठवातशोणितपीडितैः।
मध्यमा मृदुकोष्ठैश्च स्नेहनी स्यात्सुखेन सा॥

**अस25.24**
न बलक्षपणी मन्दविभ्रंशा शुद्धयेऽप्यलम्।
महादोहानलबलक्षुत्तृट्क्लेशसहिष्णुभिः।
गुल्मोदावर्तवीसर्पदंशाभिपीडितैः॥

अस25.25। उन्मतैः कृच्छ्रमूत्रैश्च महती शीघ्रमेव सा।
सर्वमार्गानुसारेण जयेद् व्याधीन् सुयोजिता॥

**अस25.26**
ह्यस्तेन जीर्ण एवान्ने स्नेहोच्छः शुद्धये बहुः।
शमनः क्षुद्वयोऽनन्नो मध्यमात्रश्च शस्यते॥

**अस25.27**
बृंहणो रसमद्याद्यैः सभक्तोऽल्पो हितः स च।
बालवृद्धपिपासाअर्तस्नेहद्विण्मद्यशीलिषु॥

**अस25.28**
स्त्रीस्नेहनित्यमन्दाग्निसुखितक्लेशभीरुषु।
मृदुकोष्ठाल्पदोषेषु काले चोष्णे कृशेषु च॥

**अस25.29**
स्नेहः प्राग्भोजनात् कुर्यादूरुजङ्घाकटीबलम्।
वेगानुलोम्यमारोग्यमधःकायगदक्षयम्॥

**अस25.30**
मध्ये बृहत्वाग्निबलस्थिरताकुक्षिरुक्शमान्।
इन्द्रियस्थिरतामूर्ध्वमूर्ध्वजत्रुगदक्षयम्॥

**अस25.31**
वाते सलवणं सर्पिः पित्ते केवलमिष्यते।
वैद्यो दद्यात् बहुकफे क्षारत्रिकटुकान्वितम्॥

**अस25.32**
वार्युष्णमच्छेऽनुपिबेत्स्नेहे तत्सुखपक्तये।
आस्योपलेपशुद्ध्यै च तौवरारुष्करे न तु॥

**अस25.33**
उष्णोपचारः स्नेहे स्यादुष्णो ह्युष्णैर्विरुध्यते।
ततो गुरुप्रावरणो निवातशयनस्थितः।
जरणान्तं प्रतीक्षेत तृष्यन्नुष्णाल्पवारिपः॥

**अस25.34**
शिरोरुग्भ्रमनिष्ठीवमूर्च्छासादारतिक्लमैः।
जानीयाद् भेषजं जीर्यज्जीर्णं तच्छान्तिलाघावात्॥

**अस25.35**
अनुलोमनिलस्वास्थ्यक्षुत्तृष्णोद्गारशुद्धिभिः।
जीर्णाजीर्णविशङ्कायां पुनरुष्णोदकं पिबेत्।
तेनोद्गारविशुद्धिः स्तात्ततश्च लघुता रुचिः॥

**अस25.36**
भोज्योऽन्नं मात्रया पास्यन् श्वःपिबन् पीतवानपि।
द्रवोष्णमनभिष्यन्दि नातिस्निग्धमसङ्करम्॥

**अस25.37**
उष्णोदकोपचारी स्यात् ब्रह्मचारी क्षपाशयः।
व्यायामवेगसंरोधशोकवर्षहिमातपान्॥

**अस25.38**
प्रवातयानयानाध्वभाष्यात्यासनसंस्थितीः।
नीचात्युच्चोपधानाहस्स्वप्नधूमरजांसि च॥

**अस25.39**
यान्यहानि पिबेतानि तावन्त्यन्यान्यपि त्यजेत्।
सर्वकर्मस्वयं प्रायो व्याधिक्षीणेषु च क्रमः॥

**अस25.40**
उपचारस्तु शमने कार्यः स्नेहे विरिक्तवत्।
स्नेहस्य पानात् पूर्वं च दातव्यं मृदुभेषजम्।
उत्तेजनं हुताशस्य कोष्ठलाघवकारि च॥

**अस25.41**
त्र्यहमच्छं मृदौ कोष्ठे क्रूरे सप्तदिनं पिबेत्।
सम्यक्स्निग्धोऽथवायावदतःसात्मीभवेत् परम्॥

**अस25.42**
सात्मीभूतो हि कुरुते न मलानामुदीरणम्।
अतियोगेन वा व्याधीन् यथाम्ब्बोधोतियोजनात्॥

**अस25.43**
विहत्य सेतुं मृत्कोष्ठात् स्रवति क्षपयन् मृदम्।
स्नेहोऽप्यग्निं तथा हत्वा स्रवति क्षपयंस्तनुम्॥

**अस25.44**
वातानुलोम्यं दीप्तोऽग्निर्वर्चः स्निग्धमसंहतम्।
मृदुस्निग्धाङ्गताग्लानिःस्नेहोद्वेगोऽथलाघवम्॥

**अस25.45**
विमलेन्द्रियता सम्यक् स्निग्धे रूक्षे विपर्ययः।
पाण्ड्वामयाग्गसदनघ्राणवक्त्रगुदस्रवाः।
गुददाहारुचिश्छर्दिमूर्छातृष्णाप्रवाहिकाः॥

**अस25.46**
शुक्तोद्गारभ्रमश्वासकासाः स्नेहातिसेवनात्।
अमात्रयाहितोऽकाले मिथ्याहारविहारतः।
स्नेहः करोति शोफार्शस्तन्द्रानिद्राविसंज्ञताः॥

**अस25.47**
कण्डूकुष्ठज्वरोत्क्लेशशूलानाहबलक्षयान्।
जठरेन्द्रियदौर्बल्यजाड्यामस्तम्भवाग्ग्रहान्॥

**अस25.48**
तांस्तान् स्वदोषहेतूत्थान् पाण्ड्वादींश्चातियोजनात्।
क्षुत्तृष्णोक्लेखनस्वेदरूक्षपानान्नभेषजम्।
तक्रारिष्टखलोद्दालयवश्यामाककोद्रवाः॥

**अस25.49**
पिप्पलीत्रिफलाक्षौद्रपथ्यागोमूत्रगुग्गुलु।
यथास्वं प्रतिरोगं च स्नेहव्यापदि साधनम्॥

**अस25.50**
विरूक्षणे लङ्घनवत् कृतातिकृतलक्षणम्।
स्नेहेन पैत्तिकस्याग्निर्यदा तीव्रतरीकृतः।
स्नेहमाशु जरां नीत्वा पुनरोजोऽभितश्चरन्॥

**अस25.51**
उदीरयेत् सोपसर्गां पिपासामस्य बाधिकाम्।
सोऽसूंस्त्यजेद्यद्युदकं न पिबेदाशु शीतलम्॥

**अस25.52**
शीतसेकावगाहान् वा ततृष्णापीडितो भजेत्।
स्नेहाग्निना दह्यमानः स्वविषेणेव पन्नगः॥

**अस25.53**
अजीर्णे बलवत्या तु शीतैर्दिह्याच्छिरोमुखम्।
छर्दयेत्तदशान्तौ च पीत्वा शीतोदकं पुनः॥

**अस25.54**
रूक्षान्नमुल्लिखेद्भुक्त्वा तादृश्यां तु कफानिले।
समदोषश्च निःशेषं स्नेहमुष्णाम्बुनोद्धरेत्॥

**अस25.55**
ततो दोषादिबलतः पूर्वोक्तं च विधिं श्रयेत्।
न सर्पिः केवलं पित्ते पेयं सामे विशेषतः।
सर्वं ह्यनुव्रजेद्देहं हत्वा संज्ञां च मारयेत्॥

**अस25.56**
स्निग्धद्रवोष्णधन्वोत्थरसभुक्स्वेदमाचरेत्।
स्निग्धस्त्र्यहं स्थितः कुर्याद्विरेकं वमनं पुनः॥

**अस25.57**
एकाहं दिनमन्यच्च कफमुत्क्लेश्य तत्करैः।
तिलमाषदधिक्षीरगुडमत्स्यरसादिभिः॥

**अस25.58**
मासला मेदुरा भूरिश्लेष्माणो विषमाग्नयः।
स्नेहोचिताश्च ये स्नेह्यास्तान् पूर्वं रूक्षयेत्ततः॥

**अस25.59**
संस्नेह्य शोधयेदेवं स्नेहव्यापन्न जायते।
अलं मलानीरयितुं स्नेहश्चासात्म्यतां गतः॥

**अस25.60**
बालवृद्धादिषु स्नेहपरिहारासहिष्णुषु।
योगानिमाननुद्वेगान् सद्यःस्नेहान् प्रयोजयेत्॥

**अस25.61**
प्रभूतमांसनिष्क्वाथान् जाङ्गलानूपजान् रसान्।
स्नेहभृष्टेषु वा तेषु यवागूं नातिसंहताम्॥

**अस25.62**
तिलचूर्णं च सस्नेहं फाणितं कृसरां तथा।
तिलकाम्बलिकं भूरिस्नेहं सर्पिष्मतीमपि॥

**अस25.63**
पेयां सुखोष्णा क्षैरेयीं पात्रे वा ससिताघृते।
सर्पिर्लवणयुक्तं वा सद्योदुग्धं तथा पयः॥

**अस25.64**
पेयां च पञ्चप्रसृतां स्नेहैस्तण्डुलपञ्चमैः।
पायसं माषमिश्रं च बहुस्नेहसमूयुतम्।
तैलशुण्ठीगुडरसं जीर्णे मांसरसाशिनः॥

**अस25.65**
स्नेहं वैकं सुराच्छेन दध्नो वा सगुडं सरम्।
वसां वराहजां सर्पिः पिप्पलीं लवणं तिलान्॥

**अस25.66**
पिप्पलीं लवणं स्नेहांश्चतुरो दधिमस्तुकम्।
दध्ना सिद्धं व्योषगर्भं धात्रीद्राक्षारसे घृतम्॥

**अस25.67**
यवकोलकुलत्थाम्बुक्षारक्षीरसुरादधि।
घृतं च सिद्धं तुल्यांशं सद्यःस्नेहनमुत्तमम्॥

**अस25.68**
सिद्धांश्च चतुरः स्नेहान् बदरत्रिफलारसैः।
योनिशुक्रामयहरान् सद्यःस्नेहान् प्रयोजयेत्॥

**अस25.69**
लवणोपहिताः स्नेहाः स्नेहयन्त्यचिरान्नरम्।
तद्धि विष्यन्द्यरूक्षं च सूक्ष्ममुष्णं व्यवायि च॥

**अस25.70**
गुडानूपामिषक्षीरतिलमाषसुरादधि।
कुष्ठशोफप्रमेहेषु स्नेहार्थं न प्रकल्पयेत्॥

**अस25.71**
त्रिफलापिप्पलीपथ्यागुग्गुल्वादिविपाचितान्।
स्नेहान्यथास्वमेतेषां योजयेदविकारिणः॥

**अस25.72**
क्षीणानां त्वामयैरग्निदेहसन्धुक्षणक्षमान्।
दीप्तान्तराग्निः परिशुद्धकोष्ठः प्रत्यग्रधातुर्बलवर्णयुक्तः।
दृढेन्द्रियो मन्दजरः शतायुः स्नेहोपसेवी पुरुषः प्रदिष्टः॥
इति पञ्चविंशोऽध्यायः॥

अथ षड्विंशोऽध्यायः।

अस26.1। अथातः स्वेदविधिं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अस26.2**
चतुर्विधोऽग्निस्वेदो भवति तापोपनाहद्रवोष्मभेदेन।
तत्र तापस्वेदः पाणिकांस्यफालवालुकावस्त्रघटिकादिभिः साक्षादग्निना च प्रयोक्तव्यः॥

**अस26.3**
उपनाहस्वेदस्तु सर्वगन्धधान्यसर्षपकिण्ववचादेवदारुरास्नैरण्डमूलमधुकशताह्वासुराकिट्टादिवातहरद्रव्यचूर्णैर्यवगोधूमशकलैरानूपासृक्पित्तशिरःपादामिषवेशवारैश्च।
तथा श्लेष्मसंसृष्टे वायौ सुरसादिभिः।
पित्तसंसृष्टे च पद्मकादिभिः।
पृथक् सहितैर्वा।
क्षीरशुक्तधान्याम्ललवणमस्तुप्रगाढैः सुस्निग्धैः सुखोष्णैः साल्वलाभिधानैस्तैर्बहुशः प्रदिह्योष्णवीर्यापूतिसृदुरोमचर्मभिस्तदभावे घनवातहरपत्राविककौशेयैरुपनद्धमङ्गमहस्थितं विदाहपरिहारार्थं निशि मुञ्चेत्।
दिवा निशि बद्धम्।
दोषकालवलवशेन वा॥

**अस26.4**
द्रवस्वेदस्तु द्विविधिः।
परिषेकोऽवगाहश्च।
तत्र शिग्रुवरणाम्रातकमूलकसर्षपसुरसार्जकवासावंशाश्मन्तकाशोकशिरीषार्ककरञ्जैरण्डमालतीपत्रभङ्गपूतीकदशमूलादिवातहरैर्द्रव्यैर्मस्तुसलिलसुराक्षीरशुक्तादिभिः क्वथितैः पूर्वोक्तैश्च यथादोषं पृथक् सहितैर्वा कुम्भीर्वर्षलिकाः प्रणालीर्वा पूरयित्वा वातहरसिद्धस्नेहाभ्यक्तमनभ्यक्तं वोपविष्टं किलिञ्जे वा शयानमेकाङ्गे सर्वाङ्गे वा वस्त्रावच्छन्ने परिषेचयेत्।
तैरेवाद्भिः पूर्णे महति कटाहे कुण्डे द्रोण्यांवावगाहयेत्॥

**अस26.5**
ऊष्मस्वेदः पुनरष्टधा भियते।
पिण्डः संस्तरो नाडी घनाश्म कुम्भी कूपः कुटी जेन्ताकश्च।
तत्र मृत्कपालपाषाणलोष्टलोहपिण्डानग्निवर्णान् सन्दंशेन गृहीत्वाम्भस्यम्ले वा निमज्जयेत् तैरार्द्राविकविस्त्रेण वेष्टितैः श्लेष्ममेदोभूयिष्ठं सरुजमङ्गं ग्रन्थिमद्वा स्वेदयेत्।
पांसुसिकतागवादिपुरीषधान्यबुसपुलाकपललैर्वाम्लोत्क्वथितैः पूर्ववद्वेष्टितैः।
गवादिशकृतार्द्रेण पिण्डीकृतेनोपनाहद्रव्योत्कारिकाकृसरमांसपिण्डैर्वा वातरोगेष्विति पिण्डस्वेदः।
स एव सङ्कराख्यः॥

**अस26.6**
यथार्हस्वेदद्रव्याणि पिहितमुखायामुखायां सम्यगुपस्वेद्य निवातशरणशयनस्थे किलिञ्जे प्रस्तीर्याविककौशेयवातहरपत्रान्यतमोत्तरप्रच्छदे रौरवाजिनप्रावारादिभिः स्ववच्छन्नं स्वेदयेदिति संस्तरस्वेदः॥

**अस26.7**
पूर्ववदेवोपस्वेद्योखामुखेऽन्यामुख।
नाडीमूलच्छिद्रप्रमाणपार्श्वच्छिद्रामुपसन्धायावलिप्य च पार्श्वच्छिद्रस्थया नाड्या शरोषिकावंशदलकिलिञ्जकरञ्जपत्रान्यतमकृतया गजाग्रहस्तसंस्थानया व्यामदीर्घयाध्यर्द्धव्यामदीर्घया वा स्वायामचतुर्भागाष्टभागपरिणाहमूलाग्रस्रोतसा सर्वतोवातहरपत्रसंवृतछिद्रया द्विस्त्रिर्वा विनमितया सुखोपविष्टस्य स्वभ्यक्तप्रावृतेङ्गे बाष्पमुपहरेत्।
बाष्पो ह्यनृजुगामी विहतचण्डवेगस्त्वचमविदहन् सुखं स्वेदयतीति नाडीस्वेदः॥

**अस26.8**
पुरुषायाममात्रमधिकं वा घनं समं च शिलातलं भूप्रदेशं वा वातहरदारुदीप्तेनाग्निना सर्वतस्तापयित्वाग्निमपोह्योष्णोदकाम्लादिभिरभ्युक्ष्य यथोक्तप्रच्छदे संस्तरवत्स्वेदयेदिति घानाश्मस्वेदः॥

**अस26.9**
पूर्ववत् स्वेदद्रव्याणि कुम्भ्यामुत्क्वाथ्याश्लिष्योपविष्टस्तद्वदूष्माणं गृह्णीयात्।
भूमौ वा तां निखाय तदूर्ध्वमासनं शयनं वा नातिघनप्रच्छदं परितः प्रलम्बमानकुथाकम्बलगोणिकं निधाय तत्रस्थस्योष्माणं गृह्णतः कुम्भ्यामग्निवर्णानयोगुडानुपलांश्च शनैर्निमज्जयेदिति कुम्भीस्वेदः॥

**अस26.10**
शयनस्याधोविस्तारद्विगुणखाते कूपे वातहरदारुकरीषान्यतरपूर्णदग्धे विगतधूमे स्वास्तीर्णशयनस्थं स्वेदयेदिति कूपस्वेदः॥

**अस26.11**
कुटीं नात्युच्चविस्तारां वृत्तामच्छिद्रामुपनाहकल्कघनप्रदिग्धकुड्यां सर्वतोविधूमप्रदीप्तखदिराङ्गारपूर्णहसन्तिकासमूहपरिवृतां विधाय तन्मध्ये च शय्यां तत्रस्थं स्वेदयेदिति कुटीस्वेदः॥

**अस26.12**
अथ जेन्ताकं चिकीर्षुर्भूमिं परीक्षेत।
पूर्वस्यामुत्तरस्यां वा दिशि गुणवति प्रशस्तभूमिभागे।
देशे कृष्णमृत्तिके वा।
सुवर्णवर्णमृत्तिके परिघापुष्करिण्यादीनां जलाशयानामन्यतमस्य कूले।
दक्षिणे पश्चिमे वा सुतीर्थे समसुविभक्तभूमिभागे।
सप्ताष्टौ वारत्नीरपक्रम्योदकात् प्राङ्मुखमुदङ्मुखं वाभिमुखतीर्थं कूटागारं कारयेत्।
उत्सेधविस्तारतः परमरत्नयः षोडश।
समन्तात्सुवृत्तं मृत्कर्मसंपन्नमनेकवातायनम्।
अस्य च कूटागारस्यान्तः समन्ततो भित्तिमरत्निविस्तारोच्छ्रायां पिण्डिकां कारयेदाकवाटात्।
मध्ये चास्य कूटागारस्य किष्कुमुक्तं द्विपुरुषप्रमाणं मृन्मयं कन्दुसंस्थानंबहुसूक्ष्मच्छिद्रमङ्गारकोष्ठकस्तम्भं सापिधानं कारयेत्।
तं च खादिराणामश्वकर्णानां वा काष्ठानां पूरयित्वा दीपयेत्।
स यदा जानीयात्साधुदग्धानि काष्ठानि विगतधूमान्यवतप्तं सर्वमग्निना तदग्निगृहं स्वेदयोग्येन चोष्मणा युक्तमिति।
तत्रैनं वातहराभ्यङ्गाभ्यक्तगात्रं वस्त्रावच्छन्नं प्रवेशयेत्।
अनुशिष्यात्सौम्य प्रविश कल्याणायारोग्याय च।
प्रविश्य चैनां पिण्डिकामारुह्य षार्श्वापरपार्श्वाभ्यां यथासुखं शयीथाः।
न च त्वरयास्वेदमूर्छापरीतेनापि पिण्डिकैषा विमोक्तव्याप्राणोच्छवासात्।
भ्रश्यमानो ह्यतः पिण्डिकावकाशाद् द्वारमनधिगच्छन् स्वेदमूर्च्छा परीततया सद्यः प्राणान् जह्याः।
तस्मात् पिण्डिकामेनां न कथञ्चन मुञ्चेथाः।
त्वं यदा जानीया विगताभिष्यन्दमात्मानं सम्यक् प्रसुतस्वेदपिच्छं सर्वस्रोतो विमुक्तं लघुभूतमपगतविबन्धस्तम्भसुप्तिवेदनाग रवमिति।
ततः पिण्डिकानुसारेण द्वारं प्रपद्येथाः।
निष्क्रम्य च चक्षुषोः परिपालनार्थमतिस्विन्नोऽपि न सहसा शीतोदकमनुप्रविशेथाः।
सम्यक् स्विन्नस्त्वपगतसन्तापक्लमो मुहूर्तात् सुखोष्णेन वारिणा यथान्यायं परिषिक्तोऽश्नीयादिति जेन्ताकस्वेदः॥

**अस26.13**
तेषां विशेषतस्तापोष्मस्वेदौ कफे प्रयोजयेत्।
उपनाहमनिले।
किञ्चित् पित्तसंसृष्टेऽन्यतरस्मिन् द्रवमिति॥

**अस26.14**
अनाग्नेयं पुनर्मेदःकफावृते वायौ निवातसदनगुरुप्रावरणबहुमद्यपानव्यायामक्षुदातपनियुद्धाध्वभारभरणामर्षभयैः।
उपनाहं च पित्तान्वये पूर्वोक्तेनैव विधिनाग्निरहितमिति।
भवति चात्र॥

**अस26.15**
निवातेऽन्तर्बहिःस्निग्धो जीर्णान्नः स्वेदमाचरेत्।
व्याधिव्याधितदेशर्तुवशान्मध्यवरावरम्॥

**अस26.16**
कफार्तो रूक्षणं रूक्षो रूक्षस्निग्धं कफानिले।
आमाशयगते वायौ कफे पक्वाशयाश्रिते॥

**अस26.17**
रूक्षपूर्वं तथा स्नेहपूर्वं स्थानानुरोधतः।
अल्पं वङ्क्षणयोः स्वल्पं दृङ्मुष्कहृदये न वा॥

**अस26.18**
पद्मोत्पलादिभिः सक्तुपिण्ड्या वाच्छाय चक्षुषी।
शीतैर्मुक्तावलीपद्मकुमुदोत्पलभाजनैः॥

**अस26.19**
मुहुः करैश्च तोयार्द्रैः स्विद्यते हृदयं स्पृशेत्।
शीतशूलक्षये स्विन्नो जातेऽङ्गानां च मार्दवे।
स्याच्छनैर्मृदितः स्नातस्ततः स्नेहविधिं भजेत्॥

**अस26.20**
पित्तास्रकोपतृण्मूर्च्छास्वराङ्गसदनभ्रमाः।
सन्धिपीडाज्वरश्यावरक्तमण्डलदर्शनम्॥

**अस26.21**
स्वेदातियोगाच्छर्दिश्च तत्र स्तम्भनमौषधम्।
विषक्षाराग्न्यतीसारछर्दिमेहातुरेषु च॥

**अस26.22**
स्वेदनं गुरु तीक्ष्णोष्णं प्रायः स्तम्भनमन्यथा।
द्रवस्थिरसरस्निग्धरूक्षसूक्ष्मं च भेषजम्॥

**अस26.23**
स्वेदनं स्तम्भनं श्लक्ष्णरूक्षसूक्ष्मसरद्रवम्।
प्रायस्तिक्तं कषायं च मधुरं च समासतः॥

**अस26.24**
स्तम्मितः स्यात् बले लब्धे यथोक्तामयसङ्क्षयात्।
स्तम्भत्वक्स्नायुसङ्कोचकम्पहृद्वाग्घनुग्रहैः॥

**अस26.25**
पादौष्ठत्वक्करैः श्यावैरतिस्तम्भितमादिशेत्।
न स्वेदयेदतिस्थूलरूक्षदुर्बलमूर्च्छतान्।
स्तम्भनीयक्षतक्षीणाक्षाममद्यविकारिणः॥

**अस26.26**
तिमिरोदरवीसर्पकुष्ठशोषाढ्यरोगिणः।
पीतदुग्धदधिस्नेहमधून् कृतविरेचनान्॥

**अस26.27**
भ्रष्टदग्धगुदग्लानिक्रोधशोकभयार्दितान्।
क्षुत्तृष्णाकमलापाण्डुमेहिनः पित्तपीडितान्॥

**अस26.28**
गर्भिणीं पुष्पितां सूतां मृदु वात्ययिके गदे।
श्वासकासप्रतिश्यायहिध्माध्मानविबन्धिषु।
स्वरभेदानिलव्याधिपक्षाघातापतानके॥

**अस26.29**
अङ्गमर्दकटीपार्श्वपृष्ठकुक्षिहनुग्रहे।
महत्त्वे मुष्कयोः खल्यामायामे वातकण्टके॥

**अस26.30**
मूत्रकृच्छ्रार्बुदग्रन्थिशुक्राघाताढ्यमारुते।
वेपथुश्वयथुस्वापस्तम्भजृम्भाङ्गगौरवे॥

**अस26.31**
कर्णमन्याशिरःकोष्ठजङ्घापादोरुरुक्षु च।
स्वेदं यथायथं कुर्यात्तदौषधविभागतः॥

**अस26.32**
स्विन्नोऽन्नं पथ्यमश्नीयाद्दोषरोगानुरोधतः।
तदहः स्विन्नसर्वाङ्गो व्यायामं सुतरां त्यजेत्॥

**अस26.33**
अग्नेर्दीप्तिं मार्दवं त्वक्प्रसादं भक्तश्रद्धां स्रोतसां निर्मलत्वम्।
कुर्यात् स्वेदो जाड्यतन्द्रापहारं स्तब्धान् सन्धीँश्चेष्टयत्याशु चास्य॥

**अस26.34**
स्नेहक्लिन्नाः कोष्ठगा धातुगा वा स्रोतोलीना ये च शाखास्थिसंस्थाः।
दोषाः स्वेदैस्ते द्रवीकृत्य कोष्ठं नीताः सम्यक् शुद्धिभिर्निर्ह्रियन्ते॥
इति षड्विंशोऽध्यायः॥

अथ सप्तविंशोऽध्यायः।

**अस27.1**
अथातो वमनविरेचनविधिं नामाध्यायं व्याख्यास्यामः।
इति हस्माहुरात्रेयादयो महर्षयः॥

**अस27.2**
दोषहरणमूर्ध्वभागं वमनाख्यमधोभागं विरेचनाख्यमुभयं वा मलविरेचनाद्विरेचनमित्युच्यते॥

**अस27.3**
तत्रोष्णतीक्ष्णसूक्ष्मव्यवायिविकाषीण्यौषधानि स्ववीर्येण हृदयमुपेत्य सौक्ष्म्यात् व्यवायित्वाच्च धमनीरनुसृत्य स्नेहेन मृदूकृतेऽन्तश्शरीरे स्वेदोष्मणार्द्रदारुवद्विष्यण्णे स्थूलाणुस्रोतेभ्यः सकलमपि दोषसङ्घातमौष्ण्यात् पुनर्विष्यन्दयन्ति।
तैक्ष्ण्याद्विकाषित्वाच्च विच्छिन्दयन्ति।

स विष्यण्णविच्छिन्नो दोषसङ्घातः पारिप्लवः स्नेहाक्तभाजनस्थ इवोदकाञ्जलिरसज्जन्ननुप्नसरणभावादामाशयमनुगम्य उदानप्रणुन्नः अग्निवाय्वात्मकत्वात् ऊर्ध्वभागप्रभावाच्चौषधस्योर्ध्वं प्रवर्तते।
स्लिलपृथिव्यात्मकत्वादधोभागप्रभावाच्च औषधस्याधः।
उभयतश्चोभयगुणात्मकत्वादुभयभागप्रभावाच्च॥

**अस27.4**
तत्रोत्कृष्टे श्लेष्मणि पित्तसंसृष्टे वा तत्स्थानगते वा पित्ते अनिले वा श्लेष्मोत्तरे च वमनमाचरेत्।
पित्ते तु विरेकं श्लेष्मसंसृष्टे वा तत्स्थानगते वा श्लेष्मणीति॥

**अस27.5**
तत्र वमनसाध्या
विषपीतदष्टदिग्धविद्धविरुद्धाजीर्णान्ननवज्वरराजयक्ष्मातीसाराधोरक्तपित्तविषूचिकालसकाविपाकारोचकापचिग्रन्थ्यर्बुदश्लीपदमेदोगदगरोन्मादापस्मारश्वासकासहृल्लासवीसर्पप्रमेहकुष्ठपाण्डुवर्त्मिमुखघ्राणकपालरोगकर्णरोग
दोषभेदीयोक्ताश्च श्लेष्मव्याधयो विशेषेण।
एते हि परं वमनेन नाशमुपयान्ति सलिलापगमनेनानिष्पन्नशाल्यादिवत्॥

**अस27.6**
अवाम्यास्तु
गर्भिणीसुकुमारान्यकार्यव्यग्ररूक्षरूक्षाशनप्रायातिदीप्ताग्निभाराध्वकर्मनित्यक्लान्तक्षतक्षीणातिस्थूलकृशवृद्धबालदुर्बलश्रमभयशोकक्रोधमदमूर्छाक्षुत्पिपासार्तोपवासव्यवायव्यायामाध्ययनचिन्ताप्रसक्तच्छर्दिरूर्ध्वरक्तपित्त
इति।
अन्यत्रामगरीवषविरुद्धाभ्यवहोरभ्यः शीघ्रकारित्वादेषाम्।
तत्र गर्भिण्या गर्भव्यापदामगर्भभ्रंशाच्च दारुणरोगप्राप्तिः स्यात्।
सुकुमारस्य हृदयविकर्षणादूर्ध्वमधो वा रुधिरप्रवृत्तिः।
अन्यकार्यव्यग्रस्यौषधं न प्रवर्तते।
कृच्छ्रेण वा प्रवर्तमानमयोगदोषान् कुर्यात्।
रूक्षस्य वायुरङ्गग्रहणम्।
रूक्षाशनप्रायस्यं वायुना क्षपितदेहत्वाद् बलक्षयः स्यात्।
तथातिदीप्ताग्नेरग्निबलेन भाराध्वकर्मनित्ययानक्लान्तानां चायासेन क्षतस्य भूयःक्षणनाद्रक्तातिप्रवृत्तिः।
क्षीणादीनामौषधबलाक्षमत्वाद्देहबलोपरोधोऽन्तःक्षतभयं च।
प्रसक्तच्छर्यूर्ध्वरक्तपित्तयोरुदान उत्क्षिप्य प्राणान् हरेद्रक्तं चातिप्रवर्तयेत्।
ऊर्ध्ववातास्थापितानुवासितानामूर्ध्वं वातातिप्रवृत्तिः।
संवृतकोष्ठस्य दुश्छर्दितस्य वातिमात्रप्रवाहणादन्तः कोष्ठसमुत्क्लिष्टैर्दोषैर्विसर्पस्तम्भजाड्यवैचित्यानि मरणं वा।
हृद्रोगिणो हृदयोपरोधः।
उदावर्तादिभिरार्तानामर्दितादिभिश्च यथायथमामयप्रवृद्धिर्मरणं वा।
कृमिणकोष्ठस्यास्थापनेनाधःपूर्वमनिर्हृतैः कृमिभिरतिबहुत्वादशेषानिस्सरणेन हृदयमतिकर्षद्भिश्छर्दिषोऽतिप्रवृत्तिः स्यात्॥

**अस27.7**
गर्भिण्यादिचिन्ताप्रसक्तान्ताश्चात्र धूमान्तैः प्रायः सर्वकर्मभिर्वक्ष्यमाणः परिहर्तव्याः।
अजीर्णी तु सर्वैरेव च वमनवर्ज्जैरामदोषभयात्।
नवज्वरस्य दोषस्तम्भभयादिति॥

**अस27.8**
अथ विरेचनसाध्या
जीर्णज्वरोर्ध्वरक्तपित्तगुल्मविद्रधिप्लीहार्शोभगन्दरोदरकृमिणकोष्ठमूत्राघातरेतोयोनिदोषवातशोणितहलीमकव्यङ्गतिमिरकाचाभिष्यन्दाक्षिपाकक्षाराग्निदग्धकुष्टव्रणशिरःपक्वाशयशूलोदावर्तविबन्धच्छर्दिविस्फोटादयो
वाम्योक्ताश्च विषूचिकादयो दोषभेदीयोक्ताश्च पित्तव्याधयः।
विशेषेणैते हि परं विरेचनेन नाशमुपयान्त्यग्न्यपनयनेनाग्निगृहतापवत्॥

**अस27.9**
अविरेच्याः पुनर्नवज्वरातिसार्यधोरक्तपित्तक्षतगुदलङ्घतरात्रिजागरितास्थापिताल्पाग्निराजयक्ष्ममदात्ययार्ताध्मातसशल्याभिहततिस्निग्धरूक्षक्रूरकोष्ठाः तत्र नवज्वरस्याविपक्वान् दोषान्न निर्हरेत्।
वातमेव च कोपयेत्।
अतीसार्यधोरक्तपित्तयोरतिप्रवृत्त्या हन्यात्।
क्षतगुदस्य गुदे प्राणोपरोधकरीं राजयक्ष्मार्तस्य क्षीणधातुतया मलबलत्त्वम्।
तदभावाद्देहनाशः स्यात्।
मदात्ययार्तस्य मद्यक्षीणे देहे वायुः प्राणोपरोधाय।
आध्मातस्य पुरीषाशये निचितो वायुर्विसर्पन् सहसा तीव्रतरमाध्मानं मरणं वा जनयेत्।
सशल्याभिहतयोः क्षते वायुराश्रितो जीवितं हिंस्यात्।
अतिस्निग्धस्यातियोगो भवेत्।
क्रूरकोष्ठस्यौषधोद्धता दोषा ह्यप्रवर्तमाना हृदयशूलपर्वभेदानाहच्छर्दिमूर्च्छाक्लमान् जनयित्वा प्राणान् हन्युः।
गर्भिण्यादीनां पूर्वोक्तदोषः स्यात्॥

**अस27.10**
अथ साधारणे काले सम्यक्स्निग्धस्विन्नमनुपहतमानसंश्चः च्छर्दयितव्यमिति ग्राम्यानूपौदकशृतमांसरसक्षीरदधिमाषतिलपललशाकादिभिर्द्रवप्रायैः समुत्क्लेशितश्लेष्माणं सुखोषितं जीर्णाहारं पूर्वाह्णे स्नातानुलिप्तं स्रग्विणमहतवाससं देवताग्निद्विजगुरुवृद्धवैद्यानर्चितवन्तं कृतहोमबलिमङ्गलप्रायश्चित्तस्वस्तिवचनं जानुसमसंस्तृतसोपधानोपाश्रयासनोपविष्टं निरन्नभीषत्स्निग्धं वा यवागू मण्डेन घृतमात्रां पीतवन्तं भीरुकृशबालवृद्धसुकुमारान् वा दोषानुरोधेनाकण्ठं पीतक्षीरतक्रयूषेक्षुमांसरसमद्यतुषोदकयवागूमण्डान्यतमं नक्षत्रतिथिकरणमुहूर्तोदये प्रशस्ते यथाव्याधिदोषदूष्यादिविहितामौषधमात्रां मधुसैन्धवयुक्तां सुखोष्णां ब्राह्मणप्रयुक्ताभिराशीर्भिराभिमन्त्रितां, पुनश्च॥

**अस27.11**
ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानिलानलाः।
ऋषयः सौषधिग्रामा भूतसङ्घाश्च पान्तु वः॥

**अस27.12**
रसायनीमवर्षीणाममराणाभिवामृतम्।
सुधेवोत्तमनागानां भैषज्यभिदमस्तु ते॥

**अस27.13**
औम् नामो भगवते भैषज्यगुरवे वैडूर्यप्रभराजाय तथागतायार्हते सम्यक्सम्बुद्धाय।
तद्यथा।
औम्।
भैषज्ये भैषज्ये महाभैषज्ये भैषज्यसमुद्गते स्वाहा।
इत्येवमभिमन्त्र्योदग्मुखः प्राङ्मुखमातुरं पाययेत्॥

**अस27.14**
ततः पीतवानूरून्यस्तभुजो वमनानुगतमानसोग्नितप्तैः पाणिभिरुपतप्यमानो मुहूर्तमनुपालयेत्।
स यदा जानीयात् स्वेदप्रादुर्भावेन दोषं प्रविलयमापद्यमानं, रोमहर्षेण च स्थानेभ्यः प्रविचलितं, कुक्ष्याध्मानेन च कुक्षिमनुसृतं च क्रमात् हृदयोपमर्दहृल्लासास्यसंस्रवणैश्चोर्ध्वमभिमुखीभूतम्।
अथ समुपस्थितानेकप्रतिग्राहः पार्श्वललाटोपग्रहणे नाभिप्रपीडने पृष्ठप्रतिलोमोन्मर्दने च प्रवृत्ताव्यपत्रपणीयपुरुषो विवृतोष्ठतालुकण्ठो नातिमहता व्यायामेन वेगानुदीरयन् नाप्रवृत्तान् न प्रवर्तयन् प्रवृत्तांश्चानुप्रवर्तयन् सुपरिलिखितनखाभ्यामङ्गुलीभ्यामुत्पलकुमुदैरण्डनालैर्वा कण्ठमभिमृशन् वमेत्।
नात्युन्नतो नात्यवनतो न पार्श्वापवृत्तो वा।
तत्रात्युन्नतस्य पृष्ठहृदयपीडा भवति।
अत्यवनतस्य शिरःकोष्ठपीडा।
पार्श्वापवृतस्य पार्श्वकोष्ठहृदयोर्ध्वजत्रुपीडेति॥

**अस27.15**
एवं कटुतीक्ष्णोष्णैः कफे छर्दयेत्।
स्वादुभिः पित्तयुक्ते।
अम्लैः सस्नेहैरनिलसंसृष्टे।
यावत् कफच्छेदः केवलमौषधप्रवृत्तिः पित्तदर्शनं वा॥

**अस27.16**
हीनवेगस्तु पिप्पल्यामलकसर्षपकल्कलवणोष्णोदकैः पुनःपुनः प्रवर्तयेत्।
प्रभूतवमनासहिष्णुर्द्व्यहं त्र्यहं वा विश्रम्य।
असात्म्यबीभत्सदुर्दर्शदुर्गन्धानि वमनानि विदध्यात्।
विपरीतानि तु विरेचनानि।
सर्वेषु च वमनेषु सैन्धवं मधु च विदध्यात्कफविलयनविच्छेदनार्थम्।
वेगांश्चास्य प्रतिग्राहगतानावेक्षेत॥

**अस27.17**
तत्राप्रवृत्तिः केवलस्य वा भेषजस्य प्रवृत्तिर्विबन्धो वा वेगानामयोगलक्षणम्।
ततश्चारोचकगौरवाध्मानकण्डूस्फोटकोठालस्यशूलप्रतिश्यायलोमहर्षप्रसेकशोफशीतज्वरादयः॥

**अस27.18**
योगलक्षणं पुनः काले क्रमात् कफपित्तानिलप्रवृत्तिर्नातिमहती व्यथा स्वयं चावस्थानं ततश्च स्वस्थता मनःप्रसादः स्वरविशुद्धिररोचकादिवैपरीत्यं च॥

**अस27.19**
अतियोगे तु फेनिलरक्तचन्द्रिकोद्गमनम्।
ततश्च क्षामतास्वरक्षयदाहकण्ठशोषभ्रममोहोन्मादमूर्च्छाशिरःशून्यताहृद्द्रवायनगात्रशूलसुप्तितृष्णोर्ध्वानिलप्रकोपकर्णशूलार्दितवाक्सङ्गहनुसंहननजिह्वाप्रवेशनिर्गमाक्षिव्यावृत्तिविसंज्ञतानिद्राबलाग्निहानयो भवन्ति।
जीवशोणितप्रवृत्त्या मरणं वा।
एषां सिद्धिषु साधनं वक्ष्यते॥

**अस27.20**
योगेन तु खल्वेनं छर्दितवन्तं सुविशोधितपाणिपादमुखं मुहूर्तमाश्वास्य धूमत्रयस्यान्यतमं सामर्थ्यतः पाययित्वा पुनरुपस्पृष्टोदकं सम्मानितसुरभिताम्बूलं निवातागारशय्यास्थितं स्नेहोक्तेनाचारविधिनानुशिष्यात्॥

**अस27.21**
ततोग्निबलमवेक्ष्य क्षुधं च सायाह्ने अपरे वाह्नि सुखोदकपरिषिक्तः पुराणानां रक्तशालितण्डुलानां सुसिद्धमन्नमस्नेहलवणकटुकमल्पस्नेहलवणकटुकं वा द्रवप्रायमुष्णोदकानुप्रायं सायं प्रातरुपभुञ्जानो विधिमिममवेक्षेत पेयादीनाम्॥

**अस27.22**
पेयां विलेपीमकृतं कृतं च यूषं रसं त्रीनुभयं तथैकम्।
क्रमेण सेवेत नरोऽन्नकालान् प्रधानमध्यावरशुद्धिशुद्धः॥

**अस27.23**
यथाणुरग्निस्तृणगोमयाद्यैः सन्धुक्ष्यमाणो भवति क्रमेण।
महान् स्थिरः सर्वपचस्तथैव शुद्धस्य पेयादिभिरन्तराग्निः॥

**अस27.24**
जघन्यमध्यप्रवरे तु वेगाश्चत्वार इष्टा वमने षडष्टौ।
दशैव ते द्वित्रिगुणा विरेके प्रस्थस्तथास्याद् द्विचतुर्गुणश्च॥

**अस27.25**
पित्तावसानं वमनं विरेकादर्द्धं कफान्तं च विरेकमाहुः।
द्वित्रान् सविट्कानपनीय वेगान् मेयं विरेके वमने तु पीतम्॥इति

**अस27.26**
अथ वमितवन्तं पुनरेवं स्नेहस्वेदाभ्यामुपपाद्यश्चो विरेचयितव्य इति सुजरमश्लेष्मलं स्निग्धं फलाम्लमुष्णमुष्णोदकानुपानं जाङ्गलरसौदनं भोजयेत्। ततः सुखोषितं पूर्वोक्तेन विधिनातीते श्लेष्मकाले निरन्नं विभज्य कोष्ठं यथार्हौषधमात्रां पाययेत्।
न त्वकृतवमनमन्यत्रातिक्रूरकोष्ठात्॥

**अस27.27**
अकृतवमनस्य हि श्लेष्मणोपहतमौषधमूर्ध्वं प्रवर्तते।
उरसि वावरुद्धमवतिष्ठते।
ततो नालं विरेकाय।
सम्यग्विरिक्तस्यापि चाधःस्रस्तः श्लेष्मा ग्रहणीं छादयित्वा गौरवमापादयति।
प्रवाहिकां वा।
न त्वेष दोषोऽतुक्रूरकोष्ठस्य वाय्वात्मकत्वात्॥

**अस27.28**
श्लेष्मकाले त्वकृतवमनोक्तदोषाः शूलाध्मानगौरवाणि वा कृत्वा छर्दिक्षीणे श्लेष्मण्यपराह्ने रात्रौ वा विरेचयेत्।
तेनान्नावृतमपि तुल्यम्।
छर्दिं च पुनस्तज्जनयति।
अविरिक्तस्य तु श्लेष्मकाले च वमनं निरन्नं योज्यम्।
तथोर्ध्वं सुखेन निर्हरणात्॥

**अस27.29**
कोष्ठस्तु त्रिविधो भवति।
मृदुः क्रूरो मध्यमश्च।
तत्र बहुपित्तो मृदुः।
स विरिच्यते क्षीरेक्षुरसाम्लतक्रमस्तुगुडकृसरसर्पिर्नवमद्योष्णोदकपीलुद्राक्षापूगफलादिभिरपि।
बहुवातः क्रूरः।
स दुर्विरेच्यस्त्रिफलातिल्वकत्रिवृन्नीलिनीफलादिभिरपि।
बहुश्लेष्मासमदोषश्च मध्यः स साधारणः।
ये च स्निह्यन्त्यच्छपानेन प्रायशः त्रिसप्तपञ्चरात्रैरिति॥

**अस27.30**
तत्र कषायमधुरद्रव्यैः पित्ते विरेचनम्।
मूत्रकटूष्णैः कफे।
स्निग्धोष्णलवणैर्वाते।
पीतमात्र एव चौषधे छर्दिविघाताय शीताम्बुना मुखमस्य सहसा सिञ्चेत्।
ततश्चोष्णोदकेन सोऽन्तर्मुखं विशोध्यार्द्रसुरभिमृन्मातुलुङ्गजम्बीरसुमनःसौगन्धिकादिहृद्यगन्धानुपजिघ्रेत्।
निवातसुखशय्यास्थितश्चाविबन्धार्थमल्पाल्पमुष्णोदकमनुकण्ठयंस्तन्मना वेगान्न धारयन् ईरयमाणाश्च शय्यासन्ने प्रतिग्राहेऽशीतस्पृग्विरिच्येत।
यथा च वमने स्वेदप्रसेकौषधकफपित्तानिलाः क्रमेण प्रवर्तन्ते तथा विरेचने वातमूत्रपुरीषपित्तकफाः।
पुनश्चान्ते वायुः।
दोषाणां हि देहे तथा सन्निवेशान्मार्गवैपरीत्याच्च शोधनयोरिति॥

**अस27.31**
अप्रवृत्तौ तु भेषजोत्तेजनार्थमुष्णोदकं पाययेत्।
पाणितापैश्च जठरं स्वेदयेत्।
प्रवृत्ते च दीप्ताग्नेः स्निग्धवपुषा बहुदोषस्याल्पदोषे नैव वा प्रवृत्तेऽल्पदोषस्यापि जीर्णभैषज्यस्याहःशेषं बलं चापेक्ष्य भूयो मात्रां विदध्यात्।
न त्वजीर्णौषधस्यातियोगभयात्॥

**अस27.32**
तदहर्वा भुक्तवतोऽन्येयुरदृढस्नेहं वा दशरात्रादूर्ध्वमुपस्कृतदेहमवहितो भूयः पाययेत्॥

**अस27.33**
ह्रीभयलोभैश्च वेगाघातशीलाः प्रायशः स्त्रियो राजसमीपस्था वणिजश्च भवन्ति।
तस्मादेते वेगधारणप्रवृद्धवातत्वात्सदातुरा दुर्विरेच्याश्च।
तान् सुस्निग्धान् शोधयेत्॥

**अस27.34**
अन्यानपि चाकालनिर्हारविहाराहारान्।
ततश्चैषां सदातुरत्वादल्पोऽप्यामयो दुःसाध्यो भवति।
तेषां पुनः क्रियाविधिः स्नेहव्यापत्सिद्धावुपदेक्ष्यते॥

**अस27.35**
तत्रासम्यग्विरेकात् कुक्षिहृदयाविशुद्धिराध्मानमरुचिः प्रसेकः कफपित्तोत्क्लेशछर्दिभ्रमाः कण्डू पिटका विदाहो गौरवमग्निसादस्तन्द्रा स्तैमित्यं प्रतिश्यायो वातविण्मूत्रसङ्गश्च।
सम्यग्विरेकात् व्याध्युपशमो यथोक्तविपर्ययश्च।
अतिविरेकातु केवलं दोषरहितमुदकं रक्तं वा मेदोमांसधावनोपमं कृष्णं वा प्रवर्तते।
परिकर्तिका हृदयोद्वेष्टनं गुदनिस्सरणं नयनप्रवेशः पिपीलिकासञ्चार इवाङ्गे वमनातियोगतुल्यता च॥

**अस27.36**
सम्यग्विरिक्तं चैनं वमनोक्तेन धूमवर्ज्येन विधिनोपपादयेत्।
अथ वमितवानिव क्रमेणान्नान्युपयुञ्जानः प्रकृतिभोजनमागच्छेदिति।
भवति चात्र॥

**अस27.37**
जीर्णेऽन्ने वमनं योज्यं कफे जीर्णे विरेचनम्।
मन्दवह्निमसंशुद्धमक्षामं दोषदुर्बलम्॥

**अस27.38**
अदृष्टजीर्णलिङ्गं च लङ्घयेत् पीतभेषजम्।
स्नेहस्वेदौषधोत्क्लेशसङ्गैरिति न बाध्यते॥

**अस27.39**
संशोधनास्रविस्रावस्नेहयोजनलङ्घनैः।
यात्यग्निर्मन्दतां तस्मात् क्रमं पेयादिमाचरेत्॥

**अस27.40**
सुताल्पपित्तश्लेष्माणं मद्यपं वातपैत्तिकम्।
पेयां न पाययेत्तेषां तर्पणादिक्रमो हितः॥

**अस27.41**
अपक्वं वमनं दोषान् पच्यमानं विरेचनम्।
निर्हरेद्वमनस्यातः पाकं न प्रतिपालयेत्॥

**अस27.42**
ऊर्ध्वाधोरेचनं युक्तं वैपरीत्येन जायते।
यदा तदा छर्दयतः सिञ्चेदुष्णेन वारिणा।
पादौ शीतेन चोर्ध्वाङ्गं विपरीतं विरेचने॥

**अस27.43**
दुर्बलो बहुदोषश्च दोषपाकेन यः स्वयम्।
विरिच्यते भेदनीयैर्भोज्यैस्तमुपपादयेत्॥

**अस27.44**
दुर्बलः शोधितः पूर्वमल्पदोषः कृशो नरः।
अपरिज्ञातकोष्ठश्च पिबेन्मृद्वल्पमौषधम्।
वरं तदसकृत् पीतमन्यथा संशयावहम्॥

**अस27.45**
हरेद् बहूंश्चलान् दोषानल्पानल्पान् पुनःपुनः।
दुर्बलस्य मृदुद्रव्यैरल्पान् संशमये तुतान्।
क्लेशयन्ति चिरं ते हि हन्युर्वैनमनिर्हृताः॥

**अस27.46**
मन्दाग्निं क्रूरकोष्ठं च सक्षारलवणैर्घृतैः।
सन्धुक्षिताग्निं विजितकफवातं च शोधयेत्॥

**अस27.47**
रूक्षबह्वनिलक्रूरकोष्ठव्यायामशीलिनाम्।
दीप्ताग्नीनां च भैषज्यमविरेच्यैव जीर्यति॥

**अस27.48**
तेभ्यो बस्तिं पुरो दद्यात्ततः स्निग्धं विरेचनम्।
शकृन्निर्हृत्य वा किञ्चित्तीक्ष्णाभिः फलवर्त्तिभिः।
प्रवृत्तं हि मलं स्निग्धो विरेको निर्हरेत्सुखम्॥

**अस27.49**
विषाभिघातपिटकाकुष्ठशोफविसर्पिणः।
कामलापाण्डुमेहार्तान् नातिस्निग्धान् विशोधयेत्॥

**अस27.50**
सर्वान् स्नेहविरेकैश्च रूक्षैस्तु स्नेहभावितान्॥

**अस27.51**
कर्मणां वमनादीनां पुनरप्यन्तरेऽन्तरे।
स्नेहस्वेदौ प्रयुञ्जीत स्नेहमन्ते बलाय च॥

**अस27.52**
ऊषादिभिर्यथोत्क्लेश्य ह्रियते वाससो मलः।
तथैव वपुषः स्नेहस्वेदमाषतिलादिभिः॥

**अस27.53**
स्नेहस्वेदावनभ्यस्य कुर्यात्संशोधनं तु यः।
दारुशुष्कमिवानामे शरीरं तस्य दीर्यते॥

**अस27.54**
सुखं क्षिप्रं महावेगमसक्तं यत् प्रवर्तते।
नातिग्लानिकरं नापि हृदि पायौ च रुक्करम्॥

**अस27.55**
अन्तराशयगं क्लिन्नं कृत्स्नं दोषं निरस्यति।
विरेचनं निरूहं वा तत्तीक्ष्णमिति निर्दिशेत्॥

**अस27.56**
जलाग्निकीटैरस्पृष्टं देशकालगुणान्वितम्।
नवं मात्राधिकं किञ्चित् तुल्यवीर्यैः सुभावितम्॥

**अस27.57**
स्नेहस्वेदोपपन्नस्य तीक्ष्णत्वं याति भेषजम्।
अतो विपर्यये मन्दं मन्दतां च प्रपद्यते॥

**अस27.58**
तीक्ष्णो मध्यो मृदुर्व्याधिः सर्वमध्याल्पलक्षणः।
बलापेक्षं हितं तेषु तीक्ष्णं मध्यं मृदु क्रमात्॥

**अस27.59**
अप्रवर्त्य मलान् द्रव्यं सात्मीभूतं हि जीर्यति।
वमनं वा विरेकं वा तस्मात्सात्म्यं न योजयेत्॥

**अस27.60**
विभ्रंशो विषवत्सम्यग्योगो यस्यामृतोपमः।
कालेऽवश्यं प्रयोज्यं च यस्माद्यत्नेन तत् पिबेत्॥

**अस27.61**
बुद्धिप्रसादं बलमिन्द्रियाणां धातुस्थिरत्वं ज्वलनस्य दीप्तिम्।
चिराच्च पाकं वयसः करोति संशोधनं सम्यगुपास्यमानम्॥
इति सप्तविंशोऽध्यायः॥

अथाष्टविंशोऽध्यायः।

**अस28.1**
अथातो बस्तिविधिं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अस28.2**
बस्तिरनिलप्रधानेषु दोषेषु प्रयुज्यते।
बस्तिना दीयते बस्तिं वा पूर्वमन्वेत्यतो बस्तिः॥

**अस28.3**
स च सर्वोपक्रमाणां प्रधानतमः शीघ्रं बृंहणादिकारित्वाद्विकृतानिलोच्छेदित्वाच्च॥

**अस28.4**
अनिलो हि दोषाणां नेता।
सर्वशरीरचेष्टैककारणम्।
पञ्चात्मतया अङ्गप्रत्यङ्गव्यापी।
विधाता विविधबाह्याध्यात्मिकभावानां सर्गस्थितिप्रलयानां हेतुः मार्गत्रयजानामपि रोगाणामिति॥

**अस28.5**
सुखत्वादेव च बस्तिर्बालवृद्धकृशस्थूलक्षीणधात्विन्द्रियेषु च स्त्रीषु चानिलोपसर्गादप्रजासु कृच्छ्रप्रजासुचोपदिश्यते।
तथाग्निबलवर्णमेधास्वरायुःसुखप्रदो वयःस्थापनः पङ्गूरुस्तम्भभग्नसङ्कुचितानिलाध्मानशूलारोचकोदावर्तपरिकर्तिकादिषु हित इति॥

**अस28.6**
स तु बस्तिस्त्रिविधः।
आस्थापनमनुवासनमुत्तरबस्तिश्च।
तत्रास्थापनं दोषदूष्याद्यनुसारेण नानाद्रव्यसंयोगादिनिर्वृत्तम्।
तस्य भेदाः।
उत्क्लेशनं संशोधनं संशमनं लेखनं बृंहणं वाजीकरणं पिच्छाबस्तिर्माधुतैलिकमित्यादयः।
माधुतैलिकस्य पर्यायाः यापनो युक्तरथो दोषहरः स्निग्धबसतिरिति।
तेषां नामभिरेव स्वरूपमाख्यातम्॥

**अस28.7**
तद्वयःस्थापनाद्दोषस्थापनाद्वास्थापनमित्युच्यते शरीरारोहणाद्दोषनिर्हरणादचिन्त्यप्रभावतया यस्मिन्नूहासम्भवान्निरूह इति॥

**अस28.8**
अनुवासनं यथार्हौषधसिद्धः स्नेहनार्थः स्नेहः स्नेहविधौ स चतुर्धाभिहितः।
तस्य भेदो मात्राबस्तिः।
स पेयस्नेहह्रस्वमात्रातुल्यः॥

**अस28.9**
सेव्यः सदा च माधुतैलिकवत्।
बालवृद्धाध्वभारयानव्यायामचिन्तास्त्रीनित्यस्त्रीनृपेश्वरसुकुमारदुर्बलानिलभग्नाल्पाग्निभिर्निष्परिहारतया सुखो बल्यो वर्ण्यः सृष्टमलो दोषघ्नश्च तथापि तौ नाजीर्णे योज्यौ न च दिवास्वप्नः सेव्यः।
यतश्च सोऽन्नमनुवसन्नपि न दुष्यत्यनुवासरमपि वा दीयत इत्यनुवासनम्॥

**अस28.10**
उत्तरबस्तिरपि स्नेहोनुवासनवच्छोधनं निरूहवदपि केचिदाहुः स निरूहादुत्तरमुत्तरेण वा मार्गेण दीयत इत्युत्तरबस्तिः॥

**अस28.11**
तत्रास्थाप्या
गुल्मप्लीहानाहशूलशुद्धातीसारजीर्णज्वरप्रतिश्यायाढ्यरोगहृदयकुक्षिपार्श्वग्रहपर्वाभितापपार्श्वयोनिशूलाङ्गसुप्तिशोषकम्पगौरवातिलाघवान्त्रकूजनवातवर्चोमूत्रशुक्रसङ्गाश्मरीशर्करावृद्धिशुक्रार्तवस्तन्यनाशरजःक्षयोन्मादरे
दोषभेदीयोक्ताश्च वातव्याधयो विशेषेणैते हि परं बस्तिना नाशमुपयान्ति मूलच्छेदेन वृक्षवत्॥

**अस28.12**
अनास्थाप्यास्त्वतिस्निग्धोत्क्लिष्टदोषक्षतोरस्कातिकृशा निरन्नाः
कृतवमनविरेचननस्यप्रसक्तच्छर्दिनिष्ठीविकाकासश्वासहिक्कार्शोबद्धच्छिद्रदकादेराध्मानालसकविषूचिकामातीसारारोचकाल्पाग्निगुदशोफकुष्ठमधुमेहार्ताः।
गर्भिणी चाप्रवृत्ताष्टममासा।
तत्रातिस्निग्धोत्क्लिष्टदोषयोर्दोषानुत्क्लेश्योदरं मूर्च्छां श्वयथुं वा निरूहो जनयेत्।
क्षतोरस्कस्यातिकृशस्य च क्षोभमापन्नः शरीरमाशु पीडयेत्।
अनिरन्नस्य वक्ष्यते।
कृतवमनविरेकयोस्तु रिक्तं देहं क्षतं क्षार इव दहेत्।
स्नेहबस्तिस्तु सद्योऽग्निमवसाद्य श्लेष्मामयाय स्यात्॥

**अस28.13**
कृतनस्यस्याम्यविभ्रंशं विरूक्ष्वतोध्वस्रोतस्तया कुर्यात्।
अनुवासनं तु दोषोत्क्लेशम्।
प्रसक्तच्छर्द्यादीनां वायुर्निरूहमूर्ध्वं नयेत्।
अनुवासनं च।
अर्शसस्यावृतमार्गत्वादनागच्छन्बस्तिः प्राणान् हिंस्यात्।
स्नेहः पुनरर्शास्यभिष्यन्द्याध्मानाय स्यात्।
बद्धोदराद्याध्मानान्तानां भृशतरमाध्मानान्मृत्युः।
अलसकार्तादीनां चामदोषात्।
अरोचकार्तादीनां यथास्वमामयवृद्धिः।
गर्भिण्याः पूर्वोक्तो दोषः॥

**अस28.14**
य एवास्थाप्यास्त एवानुवास्याः।
रूक्सातिदीप्ताग्नयः केवलानिलार्ताश्च विशेषेण।
एते परमनुवास नेनाप्याय्यन्ते।
मूलसेकेन वृक्षवत्।
य एवानास्थाप्यास्त एवाननुवास्याः।
तथा निरन्ननवज्वरपाण्डुरोगकामलाप्रमेहप्रतिश्यायप्लीहकफोदराढ्यवातवर्चोभेदार्तपीतविषगरपित्तकफाभिष्यन्दगुरुकोष्ठातिस्थूलश्लीपदगलगण्डापचीक्रिमिणकोष्ठाः।
तत्रातिस्निग्धादीनां यथास्वमुक्ताः पृथग्दोषाः।
अपि च॥

**अस28.15**
अभुक्ते रिक्तकोष्ठस्य प्रयुक्तमनुवासनम्।
सरदूरगसूक्ष्मत्वैः क्षिप्रमूर्ध्वं प्रपद्यते॥

**अस28.16**
तेन वायोर्जयो न स्याद्वातस्थाने ह्यतिष्ठता।
कायाग्नेराशु नाशश्च विशेषादनिवर्तनात्॥

**अस28.17**
स्नेहःसद्योशिताहाररुद्धे त्वामाशयेऽनिलम्।
पक्वस्थं हन्ति पक्वस्थश्च्यवते चान्नपाकतः॥

**अस28.18**
निरूहश्च समीरश्च तीक्ष्णवेगावुभावपि।
तावन्नमूर्च्छितौ तीक्ष्णावधोऽन्नेन सहागतौ॥

**अस28.19**
ऊर्ध्वं वा शकृता सार्द्धं संस्थितौ कोष्ठ एव वा।
समलाहारविष्टब्धौ हरेतामाशु जीवितम्॥

**अस28.20**
भुक्तवाननुवास्योऽस्मान्न निरूह्यस्तु भुक्तवान्।
पाण्डुरोगार्तादीनां दोषानुत्क्लेश्य स्नेहबस्तिरुदरं जनयेत्।
प्रैश्यायादिमतां भूय एव दोषं वर्धयेत्॥

**अस28.21**
तयोस्तु नेत्रं सुवर्णादिधातुमणिशङ्खशृङ्गदन्तास्थिवेणुनलखदिरकदरतिनिशतिन्दुकादिदारुसारमयमृज्वककशं गोपुच्छाकृतिगुलिकामुखमूनवर्षवार्षिकसप्तद्वादशषोडशवर्षाणां विंशतिप्रभृतिषु च क्रमात् पञ्चषट्सप्ताष्टनवद्वादशाङ्गुलप्रमाणम्।
मूलेऽग्रे चातुराङ्गुष्ठकनिष्ठिकापरिणाहमर्धाग्गुलात् प्रभृत्यर्धाङ्गुलप्रवृद्धत्र्यङ्गुलपर्यन्तप्रवेशमूलच्छिद्रम् वनमुद्गमुद्गमाषकलायक्लिन्नकलायर्ककन्धुवाह्यग्रच्छिद्रम् मूलछिद्रप्रमाणाङ्गुलैरग्रे यथास्वं सन्निविष्टकर्णिकं कर्णिकान्तःप्रतिबद्धसूत्रान्तर्गृहीताग्रपिधानघनचैलवर्ति।
मूले द्व्यङ्गुलान्तराले कर्णिकाद्वयं कारयेत्।
वर्षान्तरेषु च वयोबलशरीराण्यवेक्ष्य नेत्रप्रमाणमुत्कर्षयेत्॥

**अस28.22**
ततोजाविवराहहरिणगोमहिषान्यतमजं स्नेहमुद्रविमृदितं विगतच्छिद्रसिराग्रन्थिस्कन्धं नातिवर्तुलं मृदु दृढं कषायरक्तं सुखसंस्थाप्यौषधप्रमाण न्युब्जं विवृताननं निवेश्य बस्तिं कर्णकयोर्दृढेन सूत्रेण घनं समं च बध्वा परिवर्त्य पुनश्चान्यद्बस्तिमुखबन्धनार्थं सूत्रमुपधायानुगुप्तं निधापयेत्॥

**अस28.23**
बस्त्यभावे प्लवनीच्छागलाङ्कपादमधूच्छिष्टोपदिग्धघनसूक्ष्मतान्तवान्यतमं निवेशयेत्॥

**अस28.24**
आस्थापनमात्रा तु प्रथमे वर्षे प्रकुञ्चः।
ततः परं प्रतिवर्षं प्रकुञ्चमभिवर्धयेदाषट्प्रसृतात्।
ततश्चोर्ध्वं प्रसृताभिवृद्धिः।
प्राप्तानतीताष्टादशसप्ततेस्तु द्वादश प्रसृताः।
परं चातो दशैव।
अन्ये पुनर्द्वादशप्रसृतस्याप्यष्टाविच्छन्ति॥

**अस28.25**
यथास्वमास्थापनमात्रा पादहीना माधुतैलिके प्रयोज्या।
अनुवासने स्वेवमेवास्थापनस्य पाद इति॥

**अस28.26**
अथास्थापनीयमातुरं स्नेहस्वेदोपपन्नं कृतवमनविरेकमासेवितपेयादिसंसर्गक्रममुपजातबलमनुवासनार्हं पूर्वमेवानुवासयेत्।
शीतवसन्तयोर्दिवा अन्यथा रात्राववेक्ष्य वा दोषादीन्।
अन्यथा हि स्हेहोक्तामयप्रादुर्भावः॥

**अस28.27**
धन्वन्तरीयाः पुनराहः।
न रात्रौ प्रणयेद्बस्तिं स्नेहोत्क्लेशो हि रात्रिजः।
अह्नि स्थानस्थिते दोषे वह्नौचन्नरसान्विते॥

**अस28.28**
स्फुटस्रोतोमुखं देहं स्नेहो यत् परिसर्पति।
अल्पपित्तकफं रूक्षं भृशं वातरुजार्दितम्॥

**अस28.29**
भुक्तं जीर्णाशनं कामं रात्रावप्यनुवासयेत्।
केवलानिलनिपीडितं त्वशुद्धमप्यनिरूपितबलं चाप्यनुवासयेदात्ययिकत्वात् व्याधेः।
तस्य विधिर्वमनादधिकतरं कृतमङ्गलमनुसुखमभ्यक्तमुष्णाम्बुस्नातं युक्तस्नेहमुचितात् पादहीनं द्रवपूर्वं लघूष्णं सानुपानमशनमशितवन्तं कृतचङ्क्रमणमुत्सृष्टविण्मूत्रमशनार्द्रहस्तमशङ्कनीयपरिचारकं निवाते वेश्मनि प्रतत शयने नात्युच्छ्रिते स्वास्तृते ईषदुन्नमितपाददेशे वामपाश्वन प्राक्शिरसं संवेशयेत्।
अतिस्निग्धाशिनो ह्युभयमार्गसंसर्गात् स्नेहो मदमूर्च्छाग्निसादहृल्लासान् जनयति।
रूक्षाशिनो विष्टम्भं बलवर्णहानिं वा।
अल्पमात्रद्रवाशिनो विसृष्टविण्मूत्रस्य चानावृतेन तदावृतात् व्यापदम्।
चिरमशितवतो विदाहाभिमुखभक्तस्य ज्वरं कुर्यात्।
यतश्च वामपार्श्वाश्रयाणि वह्निग्रहणीगुदवलामुखानि तानि तत्पार्श्वशायिनो निम्नानि भवन्त्यतस्तदौषधमस्खलितमाप्नोति प्रवेशनिर्गमाविति।
संविष्टं चैनमृजुस्थितदेहं स्वबाहूपधानं प्रसारितवामसक्थिमाकुञ्चितेतरं तस्यैव चोपरिप्रसारितदाक्षणबाहुं कारयेत्॥

**अस28.30**
पूर्वमेव तु वैद्यो वर्त्या सुपिहिताग्रच्छिद्रं नेत्रं भाजनस्योपरि कृत्वा दक्षिणपादाङ्गुष्ठाङ्गुलीभ्यां कर्णिकाया उपरिष्टान्निष्पीड्याविबन्धाय शताह्वासैन्धवचूर्णावचूर्णितं प्रगेव नेत्रस्पर्शात् पूर्ववदाभिमन्त्रितं यथार्हं यथार्हौषधाविपक्व सुखोष्णं बस्तौ स्नेहमासिच्यावलीकोच्छवासं निस्सारितवातबुद्बुदमौषधान्ते सूत्रेण द्विस्त्रिर्वा बस्तिमुखमावेष्ट्य दक्षिणपाणौ नेत्रमुपरिधाय तिष्ठेत्।
ततो घृताभ्यक्ते पायौ वामहस्तप्रदेशिन्याभ्यक्तप्रवेशप्रदेशमपनीतवर्त्युत्तानवामहस्ताङ्गुष्ठोदरपिहिताग्रं मध्यमाप्रदेशिन्युपगृहीतकर्णिकमृज्वनुपृष्ठवंशमनुसुखमेकमना लाघवेन निष्कम्पमद्रुतमविलम्बितं नेत्रमाकर्णिकं प्रवेशयेत्।
आतुरोऽपि तदनुलोमयन्नवलम्बेत।
ततश्च वैद्यो बस्तिमुखं दक्षिणहस्ताङ्गुष्ठप्रदोशिनीभ्याममुञ्चन्नेत्रमचालयन् हस्तद्वयेनोतानेनैकग्रहणेनैवानिलाधिष्ठानभूतं किञ्चिदवशेषयन् शनैश्शनैरवेगमनुपीडयेत्।
अन्यथा हि व्यापदो भवन्ति।
ताः ससाधनाः सिद्धिषु वक्ष्यन्ते॥

**अस28.31**
अन्ये तु त्रिंशन्मात्राः पीडनकालमाहुः।
न च बस्तौ दीयमाने क्षवकासहासजृम्भास्पन्दनान्याचरेत्।
विण्मूत्रानिलवेगे तु नेत्रमाकृष्य वेगान्ते शेषं प्रणयेत्।
अन्ते चोत्तानस्य स्थिजौ पाणितलेन त्रिचतुरो वारांस्ताडयेत्।
तथा तत्पार्ष्णिभ्याम्।
पादतश्च शय्यां त्रिरुत्क्षिपेत्।
सोपधानस्य च प्रसारितसर्वाङ्गस्य पार्ष्णिके मुष्टिना हन्यात्।
तथा पार्ष्ण्यङ्गुलिपादतलपिण्डिकाः।
सरुजं चाङ्गं स्नेहेन प्रतिलोमं वाक्शतमात्रं शनैर्विमृद्नीयात्।
एवमाशु स्नेहो न निवर्तते।
समनुगच्छति चासमन्तात्सिराः।
ततः परं तु स्नेहोक्तमाचार्मनुवर्तते॥

**अस28.32**
दीप्ताग्निं च सायं लघ्वन्नं भोजयेत्।
नैव चानागतस्नेहं द्वितीयेऽहनि।
न च तमनुवासयेत्।
आगमनकालस्तु परो यामत्रयम्।
ततः परमनागच्छन्तमहोरात्रमुपेक्षेत।
तदाप्यनिवर्तमाने फलवर्तिभिर्लवणारनालप्रायैर्वा तीक्ष्णबस्तिभिः शोधयेत्।
स्नेहव्यापत्सिद्धिं चावेक्षेत।
अतिरौक्ष्यादनागच्छन्नचेज्जाड्यायुपद्रवाय् स्यात् तथाप्युपेक्ष्यः।
शीघ्रनिवृते तु विना मलेन केवले स्नेह स्नेहमन्यं पुनर्योजयेत्।
न ह्यसावतिष्ठन् कार्यकरो भवति।
सुखोषितं चैनं तथाकृतवमनविरेकास्थापनान्यतमं प्रायः शुण्ठीधान्यक्वाथमितरच्चोष्णोदकं वा स्नेहशेषजरणाय वातकफोपशान्तये च पाययेत्॥

**अस28.33**
ततोऽन्नकाले यथोक्तमन्नमश्नीयात्।
न चानुवासितं पेयां पाययेत्।
सा हि सस्नेहकोष्ठमेनमभिष्यन्दयति।
पुनश्च तृतीयेऽहन्यनुवासयेत् पञ्चमे वा।
यदा वा स्नेहपक्तिः स्यादतश्च दीप्ताग्निरूक्षवातोल्बणव्यायामनित्यान् प्रत्यहम्।
एवममुना क्रमेण दोषाद्यनुसारतस्त्रिचतुरैः स्नेहबस्तिभिरुपस्निग्धं शोधनेनास्थापनेन स्रोतोविशुद्ध्यर्थमास्थापयेत्।
वाताधिक्यादस्निग्धं तु स्नेहनेन॥

**अस28.34**
अथैनं तृतीये पञ्चमे वाहनि किञ्चिदावृते माध्याह्ने कृतमङ्गलस्वस्त्ययनमभ्यक्तदेहं स्वेदितमुत्सृष्टमलमनाशितं नातिक्षुधितमवेक्ष्यातुरमार्यावलोकितं नाथमार्यतारामात्मभुवं धातारमश्विनाविन्द्रमात्रेयं सप्तर्षीन् काशिराजं विदेहपतिप्रभृतीनग्निवेशादींश्च तन्त्रकारान् दीपगन्धफलबलिधूपैर्यज्ञ इव प्रकल्पितभागान् कृत्वौषधीवृद्धवैद्यद्विजातींश्च संपूज्य तद्विद्यसहितो दोषौषधादिबलेन यथार्हमुपकल्पयेद्बस्तिम्॥

**अस28.35**
तत्र विंशतिमात्राणि पलान्यौषधानां मदनफलाष्टकं च क्वाथकल्पेन विपचेत्।
क्वाथाच्चतुर्थांशां स्नेहमनिले षष्ठांशं पित्ते स्वस्थवृत्ते चाष्टमांशं तु कफे।
सर्वस्य चाष्टमांशं कल्कस्य स्याद्यावता नात्यच्छसान्द्रता भवेत्।
गुडस्य पलं युक्त्या मधुसैन्धवे यथायोग्यं च शेषाणि कल्पयेत्॥

**अस28.36**
सर्वाणि चैकध्यमुष्णोदककुम्भीबाष्पाभितप्तानि खजमथितानि बस्तौ प्रक्षिप्यानुवासनवन्निरूहं प्रणयेत्।
नात्युष्णशीतं नातिमृदुतीक्ष्णं नातिस्निग्धरूक्षं नातितनुसान्द्रं न हीनातिमात्रं नालवणातिलवणं नात्यम्लं च।
तत्र बाष्पमात्रानुतापादौषधस्य विदाहो न भवति।
खजप्रमथनात्तु क्वाथस्नेहादयः सम्यक् सम्प्रयुक्ताः सम्यगेव योगमारभन्ते।
अन्यथा पुनः क्वाथादीनामुल्बणोन्यतमं यथास्वं दोषमीरयेत्।
अत्युष्णादीनां तु पृथग्व्यापदः साधनानि च सिद्धिषूत्तरकालमुपदेक्ष्यन्ते॥

**अस28.37**
अपि च।
तिर्यक्प्रणीते हि न याति धारा गुदे व्रणः स्याच्चलिते च नेत्रे।
दत्तः शनैर्नाशयमेति बस्तिः कण्ठं प्रधावेदतिपीडितस्तु॥

**अस28.38**
स्तम्भं विधत्तेऽतिमृदुर्हिमश्च तप्ताम्लतीक्ष्णो भ्रमदाहमोहान्।
स्निग्धोऽतिजाड्यं पवनं तु रूक्षस्तन्वल्पमात्रालवणस्त्वयोगम्॥

**अस28.39**
करोति मात्राभ्यधिकोऽतियोगं क्षोभ तु सान्द्रः सुचिरेण चैति।
दाहातिसारौ लवणोऽति कुर्यात्तस्मात्सुयुक्तं सममेव दद्यात्॥

**अस8.20**
वयस्त्रिविधं बालं मध्यं वृद्धं च।
तत्राषोडशाद्वर्षाद्बालम्।
आ षष्टेर्मध्यम्।
ततो वृद्धम्।
तेष्वपि स्तन्याहारोभयवृत्त्या बालं त्रिविधम्।
तस्मिन् देहप्रमाणवृद्धिः श्लेष्मोद्रेकश्च।
तेन बालस्य स्नेहमार्दवसौकुमार्याल्पक्रोधत्वसौभाग्यानि भवन्ति॥

**अस8.21**
मध्यमपि त्रिविधं यौवनं सम्पूर्णत्वमपरिहानिश्च।
तस्मिन् पित्तोद्रेकः।
तेन दीप्ताग्निता प्रज्ञाधिक्यपरिपाकौ व्यवसायश्च।
तत्रात्रिंशतो यौवनमाचत्वारिंशतः सर्वधात्विन्द्रियबलवीर्यपौरुषस्मरणवचनविज्ञानप्रश्रयगुणसम्पूर्णत्वमतः परमपरिहानिः॥

**अस8.22**
वृद्धं तु शश्वत् क्षीयमाणधात्विन्द्रियादिगुणं वलीखलतिकासश्वसाग्निसादादिभिरभिभूयमानं जीर्णं भवनमिवाभिवृष्टमवसीदति।
तस्मिन्मारुतोद्रेकः तेन श्लथसारमांससन्ध्यस्थिता त्वक्पारुष्यमवनामः कायस्य वेपथुः कासः श्वासः श्लेष्मसिङ्घाणकोदीरणं धातुक्षयश्च॥

**अस8.23**
अन्ये पुनराहुः।
बाल्यं वृद्धिः प्रभा मेधां त्वक्शुक्राक्षिश्रुतीन्द्रियम्।
दशकेषु क्रमाद्व्येति मनस्सर्वेन्द्रियाणि च॥

**अस8.24**
एवं वर्षतमायुषः प्रमाणमस्मिन् काले।
सन्ति पुनः कर्मविशेषादूनाधिकवर्षशतजीविनो मनुष्याः।
तेषां यथोक्तैः प्रकृतिविशेषैरायुषः प्रमाणमुपलभ्य वयस्त्रिधा विभजेत्॥

**अस8.25**
अपि च।
वर्षं वर्षं क्षयं याति नृणां याते शते शते।
आयुषोऽपुण्यबाहुल्याद्यदा यन्मानमिष्यते॥

**अस8.26**
बलमपि त्रिविधं भवति।
सहजं कालकृतं युक्तिकृतं च।
तत्र सहजं देहसत्त्वयोः प्राकृतम्।
कालकृतमृतुविभागजं वयःकृतं च।
युक्तिकृतं पुनराहारविहारोत्थमूर्जस्करयोगजं च।
तद्वृद्धिकरास्त्विमे च भावा भवन्ति।
तद्यथा।
बलवत्पुरुषे देशे जन्म तद्विधे च काले सुखश्च कालयोगो बीजक्षेत्रगुणशरीराहारसत्त्वसम्पत्तयः स्वभावो यौवनं व्यायामो हर्षश्च॥

**अस8.27**
तथा साराण्यष्टौ त्वग्रक्तमांसमेदोऽस्थिमज्जशुक्रसत्वात्मकान्युत्तरोत्तरवराणि बलमानज्ञानार्थमुपदिश्यन्ते।
अपि च।
न मुह्येद्देहमात्रदर्शनादेव भिषगयमुपचयेन माहाशरीरत्वाद्वा बलवानयं कृशत्वादल्पशरीरत्वाद्वाल्पबल इति।
तच्चोभयमप्यन्यथा दृष्टं गजसिंहे॥

**अस8.28**
तत्र सर्वैः सारैरुपेतो भवत्यतिबलः परमगौरवयुक्तः क्लेशक्षमः सर्वारम्भेष्वात्मनि प्रत्याशावान् कल्याणाभिनिवेशी स्थिरशरीरः सुसमाहितगतिः सानुनादस्निग्धगम्भीरमहास्वरः सुखैश्वर्यवित्तोपभोगसम्मानभाङ्मन्दजरामयः प्रायस्तुल्यगुणविस्तीर्णापत्यो दीर्घायुश्च।
तद्विपरीतस्त्वसारः।
मध्यो मध्यगुणः॥

**अस8.29**
प्रमाणं पुनः स्वाङ्गुलैः पादाङ्गुष्ठप्रदेशिन्यौ द्व्यङ्गुलायते तिस्रोऽन्याः क्रमेणोत्तरोत्तरं पञ्चमभागहीनास्तन्नखहीना वा।
चतुरङ्गुलायताः पृथक् प्रपदपादतलपार्ष्णयः षट्पञ्चचतुरङ्गुलविस्तृताश्चतुर्दशैवायामेन पादश्चतुर्दशैव परिणाहेन।
तथा गुल्फौ जङ्घामध्यं च।
चतुरङ्गुलोत्सेधः पादः।
अष्टादशायामा जङ्घा ऊरुश्च।
चतुरङ्गुलं जानु।
त्रिंशदङ्गुलपरिणाह ऊरुः।
षडायामेन॥

**अस8.30**
मुष्कमेढ्रावष्टपञ्चपरिणाहौ।
षोडशविस्तारा कटी पञ्चाशत्परिणाहा।
दशाङ्गुलं बस्तिशिरः।
द्वादशाङ्गुलमुदरम्।
दशविस्तारे द्वादशायामे पार्श्वे।
द्वादशोत्सेधं त्रिकम्।
अष्टादशोत्सेधं पृष्ठम्।
द्वादशकं स्तनान्तरम्।
द्व्यङ्गुलं स्तनपर्यन्तम्।
चतुर्विंशत्यङ्गुलविशालं द्वादशोत्सेधमुरः।
द्व्यङ्गुलं हृदयम्।

अष्टकौ स्कन्धे कक्षे च।
षट्कावंसौ।
षोडशकौ प्रबाहू।
पञ्चदशकौ प्रपाणी।
द्वादशाङ्गुलौ पाणी।
तत्रापि पञ्चाङ्गुला मध्यमाङ्गुलिः।
ततोऽर्धाङ्गुलहीने प्रदेशिन्यनामिके।
सार्धत्र्यङ्गुलौ कनिष्ठिकाङ्गुष्ठौ।
चतुरङ्गुलोत्सेधा द्वाविंशतिपरिणाहा शिरोधरा।
द्वादशोत्सेधं चतुर्विंशतिपरिणाहमाननम्॥

**अस8.31**
पञ्चाङ्गुलमास्यम्।
चतुरङ्गुलं पृथक् चिबुकौष्ठनासादृष्ट्यन्तरकर्णललाटम्। त्रिभागाङ्गुलविस्तारा नासापुटमर्यादा।
द्व्यङ्गुलायतमङ्गुष्ठोदरविस्तृतं नेत्रम्।
तत्र शुक्लातृतीयांशं कृष्णम्।
कृष्णान्नवमांशा मसूरदलमात्रा दृष्टिः।
षडङ्गुलोत्सेधं द्वात्रिंशत्परिणाहं शिर इति।
सर्वं पुनः शरीरमङ्गुलानि चतुरशीतिः।
तदायामविस्तारसमं सममुच्यते।
तत्र यथोक्तपरिमाणमिष्टमनिष्टं हीनमधिकं वा।
तथा ह्रस्वदीर्घगौरकृष्णरोमारोमस्थूलकृशं चेति॥

**अस8.32**
इष्टं पुनर्महाशरीरदर्शनवदनहनुस्तनाग्रपृष्ठस्वरमुपचितोरुस्थिक्कटीवक्षोग्रीवातालुकमुभयगुणपाणिपादचिबुककर्णललाटम्।
सूक्ष्मास्थिदन्तनखाङ्गुलिपर्वकेशम्।
दीर्घाङ्गुलिसक्थिबाहूच्छ्वासेक्षितनेत्रजिह्वम्।
विस्तीर्णास्याधरौष्ठजिह्वाललाटकर्णपठिवक्षोऽल्पमेढ्रग्रीवाकेशम्।
स्निग्धत्वक्कचकरजनयनस्वनम्।
स्थिरेन्द्रियत्वङ्नखकेशपार्श्वम्।
गम्भीरनाभिसन्धिस्वरम्।
गूढजत्रुपृष्ठवंशदन्तमूलम्।
रक्तताल्वोष्ठनखनेत्रान्तमाताम्रजिह्वाहस्तपादतलम्।
कृष्णकेशभ्रूनेत्रपक्ष्मतारकम्।
शुक्लशुक्लमण्डलदशनचरितमुन्नतचितरकन्धललाटोदरमुखनखपादम्।
नीचैर्बद्धकर्णस्तननासाग्रचङ्क्रमणम्।
घनस्कन्धकन्धरादन्ताङ्गुलित्वक्सौहार्दम्।
तनुनखमध्यजिह्वम्।
वृत्तस्फिग्ग्रीवानखम्।
समपृष्ठदन्तललाटेक्षितम्।
तथानुपूर्ववृत्तावूरू।
दक्षिणावर्तनाभिः।
प्रकृष्टान्तरौस्तनौ भ्रुवौ च।
कूर्माकृतयो नखाः पादौ च।
ज्वस्यं नासावंशश्च।
अनुल्बणे हनू वेषश्च।
श्लक्ष्णं तालु जिह्वा च।
नातिस्थूलकृशावोष्ठौ देहबन्धश्च।
सस्पन्दं हृदयं शङ्खौ मन्ये च।
सोष्मतालुपादोदरं निश्वासश्च।
पृष्ठतोऽवनतौ रोमशौ च कर्णौ।
ईषत्प्रलम्बिन्यौ भ्रुवौ वलिनं सुश्लिष्टसन्ध्यर्धचन्द्राकृतिललाटमातपत्रोपमं शिरः।
नैकमूला मृदवः केशाः दृढं गूढं सिरास्थिसन्धि।
प्रकृतियुक्तानि वातमूत्रपुरीषगुह्यानि।
हसितरुदितानि च चेष्टितानि।
तथा स्नातानुलिप्तमधःप्रसृतानुपूर्व्या शुष्यदिष्टं शरीरमिति भवति चात्र॥

**अस8.33**
उत्तरोत्तरसुक्षेत्रं गर्भीद्भवति नीरुजम्।
आयामज्ञानविज्ञानैर्वर्धमानं शनैश्शुभम्॥

**अस8.34**
इति सर्वगुणोपेते शरीरे शरदां शतम्।
आयुरैश्वर्यमिष्टाश्च सर्वे भावाः प्रतिष्ठिताः॥

**अस8.35**
अनुत्सेकमदैन्यं च सुखं दुःखं च सेवते।
सत्ववांस्तभ्यमानस्तु राजसो नैव तामसः॥

**अस8.36**
दानशीलदयासत्यब्रह्मचर्यकृतज्ञताः।
रसायनानि मैत्री च पुण्यायुर्वृद्धिकृद्गणः॥

अथ नवमोऽध्यायः।

**अस9.1**
अथातो विकृतिविज्ञानीयमध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अस9.2**
स्वस्थानामातुराणां वा पुरुषाणां देहान्तराभिलाषिणामौषधविषयमतीताः सकलशरीरव्यापिनो दोषा घना घना इव वर्षमायुषः क्षयं सूचयन्तोऽकस्मात्स्वभावविपर्यासं जनयन्ति।
तत्समासतो रिष्टमित्याहुः॥

**अस9.3**
तत्र गौरः श्यामः कृष्णो गौरश्यामः कृष्णश्याम इति देहप्रकृतिवर्णाः।तद्भेदाश्च पद्मगौरादयः।
नीलश्यामताम्रहारिद्रशुक्लादयस्तु विकृतयः।
तत्र प्रकृतिविकृतिवर्णौ युगपदङ्गेऽङ्गैकदेशे वा मरणाय।
एतेन ग्लान्युपचयशोकहर्षरौक्ष्यस्नेहादयस्तथा प्रकृतिभेदीयोक्तानां महदुपचयसूक्ष्मदीर्घाणां सर्वेषां च दोषादिभागेन प्रतिनियतानां भावानाम्निमित्ततोऽन्यथात्वमुक्तं भवति॥

**अस9.4**
छायास्तु शरीरे पञ्च।
तत्र खादमलखड्गाकाशनीलनिर्मला सस्नेहा सप्रभेव।
वातात् पांसुभस्मरूक्षा रजोऽरुणा श्यावा निष्प्रभा स्वेदमलगन्धिः।
तेजसो हुतहुताशनविद्युत्तप्ततपनीयरक्ता दृष्टिसुखा।
अम्भसो वैडूर्येन्द्रनीलविमला घना सुस्निग्धा।
भुवो रुचिराभा घना स्थिरा स्निग्धा शुद्धा श्यामा श्वेता च।
तासां वायव्या विनाशाय क्लेशाय चातिमहते।
शेषास्तु सुखोदयाः॥

**अस9.5**
सप्त प्रभा रक्ता पीता पाण्डुरा सितासिता श्यावा हरिता च।
ताः स्निग्धा विकासिन्योऽमलाः शुभाः।
विपरीतास्त्वशुभाः॥

**अस9.6**
तयोर्विशेषाः।
छायावर्णमाक्रामत्यासन्ना च लक्ष्यते पञ्चभूतात्मिका च।
प्रभा तु वर्णं प्रकाशयति विप्रकृष्टाल्लक्ष्यते तेजःप्रभवैव च॥

**अस9.7**
यस्य दृष्टौ प्रतिच्छायामयी कुमारिका न दृश्यते स परासुः॥

**अस9.8**
यस्यातपादर्शादिष्वकस्मात् प्रतिच्छाया छिन्ना भिन्ना हीनाधिकाकुला नष्टा जिह्माऽन्यथा वा विकृता वा दृश्यते।
यस्य ललाटं न स्विद्यति यस्य केशरोमाण्यनभ्यक्तान्यभ्यक्तवद् दृश्यन्ते।
नयने चातिप्रविष्टे निर्गते विस्तृते सङ्क्षिप्ते सङ्क्षिप्तभ्रुणी विनतभ्रुणी जिह्मो विषमे विभ्रान्तदर्शने हीनदर्शने नकुलाभे कपोताभे अलातवर्णे नीलादिविकृतवर्णे अतिचले स्तब्धस्रस्ते प्रस्रुते अत्युन्मिषिते अतिनिमिषिते लुलितपक्ष्मणी वा।
नासिका वातिविवृतातिसंवृता कुटिला स्फुटिता पिटकाचिता शुष्का वा स गतायुः॥

**अस9.9**
यस्याधोधरौष्ठो यात्युत्तरौष्ठश्चोर्ध्वमुभौ वा पक्वजम्बूनीलौ।
दन्ता वातिरूक्षास्ताम्राः श्यामाः पङ्किताः पुष्पिताः सशर्करा वा सहसा वा पतन्ति।
जिह्वा वा जिह्मास्तब्धा सुप्तावलिप्ता गुर्वी श्यावा शूना शुष्का विसर्पिणी कण्टकाचितेव वा।
यस्य गण्डललाटहनुबन्धानि स्थानाच्च्युतानीव स्रस्तानि।
यस्य न धत्ते शिरः शिरोधरां पृष्ठं वा स्वभारम्।
हनू वा वृषणावतो विपर्ययो वा।
यस्य मूत्रमत्युष्णम्।
यस्य विषदोषाद्विना स्वेभ्यः सरोमकूपेभ्यो रक्तं प्रवर्तते।
यस्यानिमित्तमङ्गान्यतिलघून्यतिगुरूणि वा स्युः समुमूर्षुः॥

**अस9.10**
यस्यैकोऽनेको वा स्वरो गद्गदो व्यक्तः क्षामो दीनो वा सहसा लक्ष्यते।
यो वा विवक्षुर्मुह्यति।
यस्या वा वदतो भृशमूर्ध्वमुरो रुजति।
यस्योच्छ्वासोऽतिदीर्घोऽतिह्रस्वः पूतिगन्धिः सुगन्धिर्वा।
यस्याङ्गुलय आयम्यमाना न स्फुटेयुः।
यस्यान्योऽन्योऽपि क्षुतगतमूत्रणादिषु स्वभावातीतः शब्दः।
यस्येष्टोऽनिष्टो वा माल्यफलचन्दनकुणपादिगन्धो देहमुखमलव्रणवस्त्रादिषु।
यस्य शरीरं वैरस्यात्सौरस्याद्वात्यर्थं यूकामक्षिकादयस्त्यजन्ति भजन्ति वा।
यस्य सततोष्मस्वङ्गावयवेषु शौत्यं शीतेषु वा कुमुदोत्पलानुकार्यतिशैत्यमतिस्वेदोऽतिस्तम्भो विगतमांसशोणितेष्विव च स्रंसः।
यस्य च योगोतियोगो वा शरीरे युगपन्महाभूतानां दृश्यते।
सर्वे ते कालपक्वा इति।
भवति चात्र॥

**अस9.11**
यस्यापूर्वास्सिरालेखा बालेन्द्वाकृतयोऽपि वा।
ललाटे बस्तिशीर्षे वा षण्मासान्न स जीवति॥

**अस9.12**
पद्मिनीपत्रवत्तोयं शरीरे यस्य देहिनः।
प्लवते प्लवमानस्य षण्मासं तस्य जीवितम्॥

**अस9.13**
हरिताभाः सिरा यस्य रोमकूपाश्च संवृताः।
सोऽम्लाभिलाषी पुरुषः पित्तान्मरणमश्नुते॥

**अस9.14**
यस्य गोमयचूर्णाभं चूर्णं मूर्ध्नि मुखेऽपि वा।
सस्नेहं मूर्ध्नि धूमो वा मासान्तं तस्य जीवितम्॥

**अस9.15**
मूर्ध्नि भ्रुवोर्वा कुर्वन्ति सीमन्तावर्तका नवाः।
मृत्युं स्वस्थस्य षड्रात्रात्त्रिरात्रादातुरस्य तु॥

**अस9.16**
यस्य स्नातानुलिप्तस्य पूर्वं शुष्यत्युरो भृशम्।
आर्द्रेषु सर्वगात्रेषु सोऽर्धमासं न जीवति॥

**अस9.17**
उरस्यूष्मा भवेद्यस्य जठरे चातिशीतता।
भिन्नं पुरीषं तृष्णा च यथा प्रेतस्तथैव सः॥

**अस9.18**
मूत्रं पुरीषं निष्ठ्यूतं शुक्रं चाप्सु निमज्जति।
निष्ठ्यूतं बहुवर्णं वा यस्य मासात्स नश्यति॥

**अस9.19**
स्वरस्य दुर्बलीभावं हानिं वा बलवर्णयोः।
रोगवृद्धिमयुक्त्या च दृष्ट्वा मरणमादिशेत्॥

**अस9.20**
अपस्वरं भाषमाणं प्राप्तं मरणमात्मनः।
श्रोतारं चास्य शब्दस्य दूरतः परिवर्जयेत्॥

**अस9.21**
ऊर्ध्वश्वासं गतोष्माणं शूलोपहतवङ्क्षणम्।
शर्म चानधिगच्छन्तं बुद्धिमान् परिवर्जयेत्॥

**अस9.22**
यो जातशीतपिटकः शीताङ्गो वा विदह्यते।
उष्णद्वेषी च शीतार्तः स प्रेताधिपगोचरः॥

**अस9.23**
यस्य रज्जुरिवच्छाया कण्ठे सक्तोपलक्ष्यते।
अवश्यं कृष्यते जन्तुः सोऽचिराद्यमकिङ्करैः॥

अथ दशमोऽध्यायः।

**अस10.1**
अथातो विकृतेहाविज्ञानीयमध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अस10.2**
घनीभूतमिवाकाशमाकाशमिव यो घनम्।
अमूर्तामिव मूर्तं च मूर्तं वामूर्तवत् स्थितम्॥

**अस10.3**
तेजस्व्यतेजस्तद्वच्च शुक्लं कृष्णमसच्च सत्।
अनेत्ररोगश्चन्द्रं च बहुरूपमलाञ्छनम्॥

**अस10.4**
जाग्रद्रक्षांसि गन्धर्ववन् प्रेतानन्यांश्च तद्विधान्।
रूपं व्याकृति तद्वच्च यः पश्यति स नश्यति॥

**अस10.5**
सप्तर्षीणां समीपस्थां यो न पश्यत्यरुन्धतीम्।
ध्रुवमाकाशगङ्गां वा न स पश्यति तां समाम्॥

**अस10.6**
मेघतोयौघनिर्घोषवीणापणववेणुजान्।
शृणोत्यन्यांश्च यः शब्दानसतो न सतोऽपि वा॥

**अस10.7**
निष्पीड्य कर्णौ शृणुयान्न यो धुकधुकास्वनम्।
तद्वद्गन्धरसस्पर्शान्मन्यते यो विपर्ययात्॥

**अस10.8**
सर्वशो वा न यो यश्च दीपगन्धं न जिघ्रति।
विधिना यस्य दोषाय स्वास्थ्यायाविधिना रसाः॥

**अस10.9**
यः पांसुनेव कीर्णाङ्गो योऽङ्गे घातं न वेत्ति वा॥

**अस10.10**
अन्तरेण तपस्तीव्रं योगं वा विधिपूर्वकम्।
जानात्यतीन्द्रियं यश्च तेषां मरणमादिशेत्॥

**अस10.11**
जिह्वा श्यावा मुखं पूति सव्यमक्षि निमज्जति।
स्वगा वा मूर्ध्नि लीयन्ते यस्य तं परिवर्जयेत्॥

**अस10.12**
निकषन्निव यः पादौच्युतांसः परिसर्पति।
हीयते बलतः शश्वयोऽन्नमश्नन् हितं बहु॥

**अस10.13**
योल्पाशी बहुविण्मूत्रो बह्वाशी चाल्पमूत्रविट्।
यो वाल्पाशी कफेनार्तो दीर्घं श्वसिति चेष्टते॥

**अस10.14**
दीर्घमुच्छ्वस्य यो ह्रस्वं निश्वस्य परिताम्यति।
ह्रस्वं च यः प्रश्वसिति व्याविद्धं स्पन्दते भृशम्॥

**अस10.15**
शिरो विक्षिपते कृच्छ्रायोऽञ्चयित्वा प्रपाणिकौ।
यो ललाटात्स्नुतस्वेदः श्लथसन्धानबन्धनः॥

**अस10.16**
उत्थाप्यमानः सम्मुह्येयो बली दुर्बलोऽपि वा।
उत्थान एव स्वपिति यः पादौ विकरोति च॥

**अस10.17**
शयनासनकुड्यादेः योऽसदेव जिघृक्षति।
अहास्यहासी सम्मुह्यन् यो लेढि दशनच्छदौ॥

**अस10.18**
उत्तरोष्ठं परिलिहन् फूत्कारांश्च करोति यः।
यमभिद्रवति छाया कृष्णा पीतारुणापि वा॥

**अस10.19**
भिषग्भेषजपानान्नगुरुमित्राद्विषश्च ये।
वशगाः सर्व एवैते विज्ञेयाः समवर्तिनः॥

**अस10.20**
ग्रीवाललाटहृदयं यस्य स्विद्यति शीतलम्।
उष्णोऽपरः प्रदेशश्च शरणं तस्य देवताः॥

**अस10.21**
योऽणुज्योतिरनेकाग्रो दुश्छायो दुर्मनाः सदा।
बलिं बलिभुजो यस्य प्रणीतं नोपभुञ्जते॥

**अस10.22**
निर्निमित्तं च यो मेधां शोभामुपचयं श्रियम्।
प्राप्नोत्यतो वा विभ्रंशं स प्राप्नोति यमक्षयम्॥

**अस10.23**
गुणदोषमयी यस्य स्वस्थस्य व्याधितस्य वा।
यात्यन्यथात्वं प्रकृतिः षण्मासान्न् स जीवति॥

**अस10.24**
भक्तिः शीलं स्मृतिस्त्यागो बुद्धिर्बलमहेतुकम्।
षडेतानि निवर्तन्ते षड्भिर्मासैर्मरिष्यतः॥

**अस10.25**
मत्तवद्गतिवाक्कम्पमोहा मासान्मरिष्यतः।
नश्यत्यजानन् षडहात् केशलुञ्चनवेदनाम्॥

**अस10.26**
न याति यस्य चाहारः कण्ठं कण्ठामयादृते।
प्रेष्याः प्रतीपतां यान्ति प्रेताकृतिरुदीर्यते॥

**अस10.27**
यस्य निद्रा भवेन्नित्या नैव वा न स जीवति।
वक्त्रमापूर्यतेऽश्रूणां स्विद्यतश्चरणौ भृशम्॥

**अस10.28**
चक्षुश्चाकुलतां याति यमराज्यं गमिष्यतः।
यैः पुरा रमते भावैररतिस्तैर्न जीवति॥

**अस10.29**
कथयेन्न च पृष्टोऽपि दुःश्रवं मरणं भिषक्।
गतासोर्बन्धुमित्राणां न चेच्छेत्तं चिकित्सितुम्॥

**अस10.30**
यमदूतपिशाचाद्यैर्यत् परासुरुपास्यते।
घ्नद्भिरौषधवीर्याणि तस्मात्तं परिवर्जयेत्॥

**अस10.31**
अरिष्टं नास्ति मरणं दृष्टरिष्टं च जीवितम्।
अरिष्टे रिष्टविज्ञानं न च रिष्टेऽप्यनैपुणात्॥

**अस10.32**
चरकस्येति वचनं सुश्रुतेन तु पठ्यते।
ध्रुवं हि रिष्टे मरणं ब्राह्मणैस्तत् किलामलैः॥

**अस10.33**
रसायनतपोदानतत्परैश्च निवार्यते।
कृष्णात्रेयो द्विधा रिष्टं स्थिरास्थिरविभेदतः॥

**अस10.34**
दोषाणामपि बाहुल्याद्रिष्टाभासः समुद्भवेत्।
तद्दोषाणां शमे शाम्येत्स्थाय्यवश्यं तु मृत्यवे॥

**अस10.35**
आयुर्वेदफलं कृत्स्नं यदायुर्ज्ञे प्रतिष्ठितम्।
रिष्टज्ञानादृतस्तस्मात्सर्वदैव भवेद्भिषक्॥

अथैकादशोऽध्यायः।

**अस11.1**
अथातो विकृतव्याधिविज्ञानीयमध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अस11.2**
सर्वैर्यथास्वं हेतुप्राग्रूपरूपैरतिमात्रैर्यस्य व्याधिरुत्पद्यते।
व्याधितस्य वा यस्याशु मुखे पिप्लुव्यङ्गलेखातिलकालकाः।
करजरदनेषु वा पुष्पाण्युदरे वा नानावर्णाः सिराः।
यस्य शुष्यतो नेत्रोपदेहो वर्त्मनासिकान्यतरश्वयथुर्वर्त्मस्रंसो वा।
यस्य क्षीणस्य क्षुत्तृष्णा वा हृद्यैर्बहुभिरप्यन्नपानैर्न शाम्यति।
यस्य सफेनमसृक् प्रसिच्यते।
कुक्षिशूलं च।
उरसो वा।
यस्य श्लेष्मा नीलपीतलोहितो बहुशश्च।
यस्य बलवान् ग्रीवावमर्दो जिह्वाशोषः कण्ठास्यगुदपाकश्च।
यस्यामाशयोत्था परिकर्तिकातितृष्णा शकृद्भेदश्च। यस्य पक्वाशयोत्था परिकर्तिकातितृष्णातिमात्रश्च गुदग्रहः।
यस्यामपक्वाशयान्यतरमाश्रित्य संज्ञां च हत्वा वायुः कण्ठे घुर्घुरकं करोति।
यस्य क्षीणस्य तृष्णाभिवृद्धिर्हृदि शूलं च।
तथा हिध्मारक्तातिसारौ वाध्मानातीसारौ वा भृशं सतृष्णौ।
सपरासुरिति भवति चात्र॥

**अस11.3**
ज्वरो निहन्ति बलवान् गम्भीरो दैर्घरात्रिकः।
सप्रलापभ्रमश्वासः क्षीणं शूनं हतानलम्॥

**अस11.4**
अक्षामं सक्तवचनं रक्ताक्षं हृदि शूलिनम्।
सशुष्ककासःपूर्वाह्णे योऽपराह्णेऽपि वा भवेत्॥

**अस11.5**
बलमांसविहीनस्य श्लेष्मकाससमन्वितः।
रक्तपित्तं भृशं रक्तं कृष्णमिन्द्रधनुष्प्रभम्॥

**अस11.6**
ताम्रहारिद्रहरितं रूपं रक्तं प्रदर्शयेत्।
रोमकूपप्रविसृतं कण्ठास्यहृदये सजत्॥

**अस11.7**
वाससोऽरञ्जनं पूति वेगवच्चातिभूरि च।
वृद्धं पाण्डुज्वरच्छर्दिकासशोफातिसारिणम्॥

**अस11.8**
कासश्वासौ ज्वरच्छर्दितृष्णातीसारशोफिनम्।
यक्ष्मा पार्श्वरुजानाहरक्तच्छर्दंसतापितम्॥

**अस11.9**
छर्दिर्वेगवती मूत्रशकृद्गन्धिः सचन्द्रिका।
सास्रविट्पूयरुक्कासश्वासवत्यनुषङ्गिणी॥

**अस11.10**
तृष्णान्यरोगक्षपितं बहिर्जिह्वं विचेतनम्।
मदात्ययोऽतिशीतार्तं क्षीणं तैलप्रभाननम्॥

**अस11.11**
अर्शांसि पाणिपन्नाभिगुदमुष्कास्यशोफिनम्।
हृत्पार्श्वाङ्गरुजाच्छर्दिपायुपाकज्वरातुरम्॥

**अस11.12**
अतीसारो यकृत्पिण्डमांसधावनमेचकैः।
तुल्यस्तैलघृतक्षीरदधिमज्जवसासवैः॥

**अस11.13**
मस्तुलुङ्गमषीपूयवेशवाराम्बुमाक्षिकैः।
अतिरक्तासितस्निग्धपूत्यच्छघनवेदनः॥

**अस11.14**
कर्बुरं प्रस्रवन् धतून् निष्पुरीषोऽथवातिविट्।
तन्तुमान् मक्षिकाक्रान्तो राजीमांश्चन्द्रकैर्युतः॥

**अस11.15**
शीर्णपायुवलिं मुक्तनालं पर्वास्थिशूलिनम्।
स्रस्तपायुं बलक्षीणमन्नमेवोपवेशयेत्॥

**अस11.16**
सतृट्कासज्वरच्छर्दिदाहानाहप्रवाहिकः।
अश्मरी शूनवृषणं बद्धमूत्रं रुजार्दितम्॥

**अस11.17**
मेहस्तृड्दाहपिटकामांसकोथातिसारिणम्।
पिटका मर्महृत्पृष्ठस्तनांसगुदमूर्द्धगा॥

**अस11.18**
पर्वपादकरस्था वा मन्दोत्साहं प्रमेहिणम्।
सर्वं च मांससङ्कोथदाहतृष्णामदज्वरैः॥

**अस11.19**
विसर्पमर्मसंरोधहिध्माश्वासभ्रमक्लमैः।
गुल्मः पृथुपरीणाहो घनः कूर्म इवोन्नतः॥

**अस11.20**
सिरानद्धो ज्वरच्छर्दिहिध्माध्मानरुजान्वितः।
कासपीनसहृल्लासश्वासातीसारशोफवान्॥

**अस11.21**
विण्मूत्रसङ्ग्रहश्वासशोफहिध्माज्वरभ्रमैः।
मूर्च्छाछर्द्यतिसारैश्च जठरं हन्ति दुर्बलम्॥

**अस11.22**
शूनाक्षं कुटिलोपस्थमुपक्लिन्नतनुत्वचम्।
विरेचनहृतानाहमानह्यन्तं पुनःपुनः॥

**अस11.23**
पाण्डुरोगः श्वयथुमान् पीताक्षिनखदर्शनम्।
तन्द्रादाहारुचिच्छर्दिमूर्च्छाध्मानातिसारवान्॥

**अस11.24**
अनेकोपद्रवयुतः पादाभ्यां प्रसृतो नरम्।
नारीं शोफो मुखाद्धन्ति कुक्षिगुह्याद्युभावपि॥

**अस11.25**
राजीचितः स्रवंश्छर्दिज्वरश्वासातिसारिणम्॥

**अस11.26**
ज्वरातिसारौ शोफान्ते श्वयथुर्वा तयोः क्षये।
दुर्बलस्य विशेषेण जायन्तेऽन्ताय देहिनः॥

**अस11.27**
श्वयथुर्यस्य पादस्थः परिस्रस्ते च पिण्डिके।
सीदतः सक्थिनी चैव तं भिषक् परिवर्जयेत्॥

**अस11.28**
आननं हस्तपादं च विशेषाद्यस्य शुष्यतः।
शूयेते वा विना देहात्स मासाद्याति पञ्चताम्॥

**अस11.29**
उदरी यश्च शोफी वा स्वं न पश्यति मेहनम्।
यस्य वा जठरोन्नामात् परिधानं न तिष्ठति॥

**अस11.30**
विसर्पः कासवैवर्ण्यज्वरमूर्छाङ्गभङ्गवान्।
भ्रमास्यशोफहृल्लासदेहसादातिसारवान्॥

**अस11.31**
कुष्ठं विशीर्यमाणाङ्गं रक्तनेत्रं हतस्वरम्।
मन्दाग्निं जन्तुभिर्जुष्टं हन्ति तृष्णातिसारिणम्॥

**अस11.32**
वायुः सुप्तत्वचं भुग्नं कम्पशोफरुजातुरम्॥

**अस11.33**
वातास्रं मोहमूर्छायमदास्वप्नज्वरान्वितम्।
शिरोग्रहारुचिश्वाससङ्कोचस्फोटकोथवत्॥

**अस11.34**
शिरोरोगारुचिश्वासमोहविड्भेदतृड्भ्रमैः।
घ्नन्ति सर्वामयाः क्षीणस्वरधातुबलानलम्॥

**अस11.35**
वातव्याधिरपस्मारी कुष्ठी रक्त्युदरी क्षयी।
गुल्मी मेही च तान् क्षीणान् विकारेऽल्पेऽपि वर्जयेत्॥

**अस11.36**
बलमांसक्षयस्तीव्रो रोगवृद्धिररोचकः।
यस्यातुरस्य लक्ष्यन्ते त्रीन् पक्षान्न स जीवति॥

**अस11.37**
वाताष्ठीलातिसंवृद्धा तिष्ठन्ती दारुणा हृदि।
तृष्णयानुपरीतस्य सद्यो मुष्णाति जीवितम्॥

**अस11.38**
शैथिल्यं पिण्डिके वायुर्नीत्वा नासां च जिह्मताम्।
क्षीणस्यायम्य मन्ये वा सद्यो मुष्णाति जीवितम्॥

**अस11.39**
नाभीगुदान्तरं गत्वा वङ्क्षणौ वा समाश्रयन्।
गृहीत्वा पायुहृदये क्षीणदेहस्य वा बली॥

**अस11.40**
मलान् वस्तिशिरोनाभिं विबध्य जनयन् रुजम्।
कुर्वन् वङ्क्षणयोः शूलं तृष्णां भिन्नपुरीषताम्॥

**अस11.41**
श्वासं वा जनयन् वायुर्गृहीत्वा गुदवङ्क्षणौ।
वितत्य पर्शुकाग्राणि गृहीत्वोरश्च मारुतः॥

**अस11.42**
स्तिमितस्याततात्क्षस्य सद्यो मुष्णाति जीवितम्॥

**अस11.43**
सहसा ज्वरसन्तापस्तृष्णामूर्छाबलक्षयः।
विश्लेषणं च सन्धीनां मुमूर्षोरुपजायते॥

**अस11.44**
गोसर्गे वदनाद्यस्य स्वेदः प्रच्यवते भृशम्।
लेपज्वरोपतप्तस्य दुर्लभं तस्य जीवितम्॥

**अस11.45**
प्रवालगुलिकाभासा यस्य गात्रे मसूरिकाः।
उत्पद्याशु विनश्यन्ति न चिरात्स विनश्यति॥

**अस11.46**
मसूरविदलप्रख्यास्तथा विद्रुमसन्निभाः।
अन्तर्वक्राः किणाभाश्च विस्फोटा देहनाशनाः॥

**अस11.47**
कामलाक्ष्णोर्मुखं पूर्णं शङ्खयोर्मुक्तमांसता।
सन्त्रासश्चोष्णताङ्गे च यस्य तं परिवर्जयेत्॥

**अस11.48**
अकस्मादनुधावच्च विघृष्टं त्वक्समाश्रयम्।
चन्दनोशीरमदिराकुणपध्वाङ्क्षगन्धयः॥

**अस11.49**
शैवालकुक्कुटशिखाकुङ्कुमालमषीप्रभाः।
अन्तर्दाहा निरूष्माणः प्राणनाशकरा व्रणाः॥

**अस11.50**
यो वातजो न शूलाय स्यान्न दाहाय पित्तजः।
कफजो न च पूयाय मर्मजश्च रुजे न यः॥

**अस11.51**
अचूर्णश्चूर्णकीर्णाभो यत्राकस्माच्च दृश्यते।
रूपं शक्तिध्वजादीनां सर्वांस्तान् वर्जयेद् व्रणान्॥

**अस11.52**
विण्मूत्रमारुतवहं कृमिणं च भगन्दरम्॥

**अस11.53**
घट्टयन् जानुना जानु पादावुद्यम्य पातयन्।
योऽपास्यति मुहुर्वक्त्रमातुरो न स जीवति॥

**अस11.54**
दन्तैश्छिन्दन् नखाग्राणि तैश्च केशांस्तृणानि वा।
भूमिं काष्ठेन विलिखन् लोष्टं लोष्टेन ताडयन्॥

**अस11.55**
हृष्टरोमा सान्द्रमूत्रः शुष्ककासी ज्वरी च यः।
मुहुर्हसन् मुहुः क्ष्वेडन् शय्यां पादेन हन्ति यः॥

**अस11.56**
मुहुश्छिद्राणि विमृशन्नातुरो न स जीवति॥

**अस11.57**
ऊर्ध्वश्वासं गतोष्माणं शूलोपहतवङ्क्षणम्।
शर्म चानधिगच्छन्तं बुद्धिमान् परिवर्जयेत्॥

**अस11.58**
विकारा यस्य वर्द्धन्ते प्रकृतिः परिहीयते।
सहसा सहसा तस्य मृत्युर्हरति जीवितम्॥

**अस11.59**
यमुद्दिश्यातुरं वैद्यः सम्पादयितुमौषधम्।
यतमानो न शक्नोति दुर्लभं तस्य जीवितम्॥

**अस11.60**
विज्ञातं बहुशः सिद्धं विधिवच्चावचारितम्।
न सिध्यत्यौषधं यस्य नास्ति तस्य चिकित्सितम्॥

**अस11.61**
भवेद्यस्यौषधेऽन्ने वा कल्प्यमाने विपर्ययः।
अकस्माद्वर्णगन्धादेः स्वस्थोऽपि न स जीवति॥

**अस11.62**
निवाते सेन्धनं यस्य ज्योतिश्चाप्युपशाम्यति॥

**अस11.63**
आतुरस्य गृहे यस्य भिद्यन्ते वा पतन्ति वा।
अतिमात्रममत्राणि दुर्लभं तस्य जीवितम्॥

**अस11.64**
यं नरं सहसा रोगो दुर्बलं परिमुञ्चति।
संशयप्राप्तमात्रेयो जीवितं तस्य मन्यते॥

अथ द्वादशोऽध्यायः।

**अस12.1**
अथातो दूतादिविज्ञानीयमध्यायं व्याख्यास्यामः॥

**अस12.2**
निर्दिष्टं रिष्टमातुराश्रयम्।
दूतस्यापि तु जातिवेषभाषाचेष्टितदेशकाला वैद्यस्य च तत्सङ्गमसङ्कल्पप्रस्थानप्रयाणप्रवेशा ग्रहचारोऽपूर्वसम्भवः स्वप्नदर्शनानि च रोगिणः शुभाशुभं सूचयन्ति॥

**अस12.3**
तत्रातुराद्वर्णोत्तमोऽन्याश्रमः पाषण्डः षण्डो मुण्डी जटिलः स्त्री व्याधितोऽनेकोऽजीर्णविवर्णमलिनच्छिन्नार्द्रैकवसनः पङ्कतैलदिग्धो रक्तमाल्यानुलेपनो विकृताङ्गरूपकर्मा खरोष्ट्रमहिषवाहनो विक्लबः श्वसन् रुदन् निष्टुरामङ्गलाभिधायी
दूरादाह्वयमानस्तृणलोष्टतुषाङ्गारभस्मतुषसीसास्थिकेशशिरोललाटनासिकास्यदन्तजिह्वाग्रीवानखानामिकाङ्गुलिस्तनजठरनाभिपृष्ठकटीमेहनजङ्घाकपालपललोपलमुसलशूर्पोपानन्मार्जनीशस्त्रवस्त्रान्तदशाकार्पासभग्नच
पादाभ्यां भुवं मुञ्चन् विलिखन् गृहीत्वा पक्वं फलप्रसारं वा तद्विधमन्यद्वा विकारतुल्यगुणे च देशे काले वा दूतो वैद्यमुपसर्पन्नशुभः॥

**अस12.4**
तद्यथा।
घृतोदकादिद्रवसमपि स्थमातिशीतस्तब्धः प्रत्युषसि श्लेष्मामयेऽशुभः।
पित्तामये तु शुभः।
तथा सेतुभङ्गे छर्दिमेहातिसारादिष्वशुभः सेतुबन्धे तु शुभः।
तथा मध्याह्नोभयसन्ध्यार्द्धरात्रिचतुर्थीषष्ठीनवमीपर्वदिनेषु ग्रहोपरागोत्पातदर्शनभ्रणीकृत्तिकार्द्राश्लेषामघामूलपूर्वासु चाशुभो यश्च वैद्यं सुप्तं नग्नं च भूमौ शयानमभ्यक्तं मुक्तकेशं दक्षिणाभिमुखं विक्लवं छिन्दन्तं भिन्दन्तमग्निपितृकार्यप्रवणमशस्तं चिन्तयन्तं कथयन्तं वोपतिष्ठति।
यो वा दिशं याम्यां प्रतिकृताञ्जलिर्विषमैकपादस्थः।
यस्मिन् व्याधिताश्रयं कथयति दूते भिषगशुभमिन्द्रियार्थमुपलक्षयेत् सङ्कल्पयेद्वा तं च नानुयायात्।
अतोऽन्यथा पुनः करुणापेशलेन मनसा सौमनस्यवता मातापितृसमेनातुरस्यात्यन्तमारोग्यमाशसमानेन प्रयातव्यम्॥

**अस12.5**
प्रस्थानगमनप्रवेशेषु दधिमधुघृतलाजपुष्पाक्षतोदुम्बराश्वत्थमुक्तामणिछत्रदूर्वाङ्कुरादर्शकन्याध्वजस्यन्दनाष्टापदाक्षा नृपश्रीतरुर्भद्रपीठानि सस्यानि मत्स्या हया हंसचाषौ वृषः केसरी दक्षिणावर्तशङ्खाब्जसिद्धार्थकारोचनाः स्वस्तिकस्तोरणं कीचकावेणवो वरवधूर्मदसिक्तगण्डो गजस्तोयलम्बोऽम्बुदः पूर्णकुम्भो हरिद्रात्रिरिन्द्रः फलान्यार्द्रमांसं सितं चामरं गौः सवत्साङ्गना पुत्रिणी मानुषं वर्धमानं सहस्रं भूमिरभ्युद्धृता सिद्धमन्नं वराहश्च तोयोत्थितास्त्रिणयनमधुसूदनस्कन्दपद्मासनाः लोकपालाः सुराः खं दिशोऽग्निः सरांसि स्रवन्त्यः समुद्रा मखा मारुतो ज्योतिषं धर्मशास्त्राणि तीर्थानि काव्यं धर्मार्थकामामृतं

वालखिल्यादयो वेदवाक्यं निधिः कौस्तुभः काञ्चनं मणिभद्रः सुमेरुः प्रियङ्गुः प्रदीपो वचामोदकौ दितिरदितिररुन्धती र्द्धिः सावित्र्युमाकाशगङ्गा शची देवसेना स्वधा शान्तिर्लक्ष्मीः सरस्वत्यपत्यं क्षमा स्वस्तिशब्दो वषट्कार औंकारपुण्याहधर्मक्रियाश्चैतदष्टोत्तरं मङ्गलानां शतं दर्शनात् स्पर्शनात् कीर्तनाच्चाशुभानि व्यपोह्यार्थसिद्धिं दिशन्त्युत्तमाम्।
अपि च॥

**अस12.6**
पुन्नामानः पक्षिणो वामाः शिवाः।
शिवा श्यामा पिङ्गला कोकिलारला चुच्छुन्दरी सूकरी गृहगोधिकैकशफाश्च स्त्रीनामानो दक्षिणाः।
शिखी चणकश्येनगजाजकपयश्च।
प्रवेशे तु विपरीताः।
सर्वत्र च दक्षिणाद्वामगमनमिष्टं श्वसृगालयोः।
विपरीतं मृगविहङ्गयोः।
सर्वथापि दर्शनं भरद्वाजचाषभासनकुलानाम्॥

**अस12.7**
शशसर्पाजाविगोधाजाविकसूकराणां तु कीर्तनमिष्टम्।
न दर्शनं विरुतं वा।
विपरीतमृक्षवानरयोः।
सर्पमपि त्वनिष्टं सरटकुक्कुटबिडालोलूकानाम्।
तथा ग्रन्थ्यर्बुदादिषु छेदशब्द इष्टो गुल्मोदरादिषु भेदशब्दोऽतीसाररक्तपित्तादिषु रुद्धशब्दोऽश्मर्युदरादिषु प्रवर्तनशब्द इति।
एवमन्येऽपि ध्वनयो योज्याः।
सर्वत्रैव च स्थिरस्थावरवर्द्धमानत्राताचलध्रुवक्षेमशिवादयः शब्दा धन्यवादित्रस्वराश्च श्रेष्ठाः॥

**अस12.8**
क्षतहतपतिताक्रोशप्रहारच्छेदभेददाहहाहाप्रतिषेधादिशब्दाः चिकित्साप्रतिषेधाय॥

**अस12.9**
दीप्तायां च दिशि क्रूराः पक्षिमृगध्वनयो वृक्षे वा रूक्षशुष्के सवल्लीकण्टके।
तद्विधे वा देशे॥

**अस12.10**
दर्शनं च तृणपललकाष्ठभारकर्परकलोष्टादीनां कण्टकोर्ध्वपादयानशयनासनादिभग्नोपस्कररिक्तकुम्भमद्यवसातैलतिलगर्भिणीश्वपाकव्यसनिमृतानां च।
प्रवेशे चातुरगृहात् पूर्वोक्तमाङ्गल्यनिर्गमः।
प्रविष्टस्य तु भिषजः न सत्कारो लाभतुष्टिस्तुतयश्चाशुभाः॥

**अस12.11**
आतुरस्य वक्रानुवक्ता ग्रहा गर्हितस्थानस्थाः।
केतुशनिराहुभिर्जन्मर्क्षाभिभवो गृहदारशयनासनवाहनमणिरत्नोपकरणेषु वा गर्हितलक्षणप्रादुर्भावश्चिकित्साप्रतिषेधाय॥

**अस12.12**
स्वप्नस्तु स्वयमन्येन वा दृष्टः शुभाशुभहेतुः सप्तविधो दृष्टः श्रुतोऽनुभूतः प्रार्थितः सङ्कल्पितो भाविको दोषजश्च।
तत्राद्यः पञ्चविधोऽफलः।
तथा यथास्वप्रकृतिर्विस्मृतो दिवातिह्रस्वोऽतिदोर्घो नातिशुसदृष्टश्च॥

**अस12.13**
पूर्वरात्रेऽल्पं चिराच्च फलं करोति।
गोसर्गे महत्सद्यश्च।
निद्रया च पुनरनुपहतः प्रतीपैर्वा वचोभिर्दानयमनियमादिभिर्वा॥

**अस12.14**
तत्र यः प्रेतैः सह मद्यं पिबन् शुनाकृष्यते।
स हन्यते ज्वरेण।
यो लाक्षारक्ताभमम्बरं पश्यति यो वा रक्तदेहमाल्यवस्त्रो हसन्नार्या ह्रियते स रक्तपित्तेन।
यो याम्यां दिशं खरोष्ट्रमहिषवराहान्यतमेन स यक्ष्मणा।
यस्य कण्टकिनी लता वंशस्तालो वा हृदि जायते स गुल्मेन।
यस्य शिरसि स शिरोरोगेण वा शिरच्छेदनेन।
यस्य नग्नस्याज्यावसिक्तस्याग्निमनर्चिषं जुह्वतो जायन्ते पद्मान्युरसि स कुष्ठेन।
यश्चण्डालैः सह स्नेहं पिबति स प्रमेहेण।
यो मत्तः सोऽपस्मारेण।
यश्चन्द्रसूर्ययोरुपरागं पश्यति तस्य नेत्ररोग उपजायते।
यस्तयोः पतनं तस्य नेत्रविनाशः॥

**अस12.15**
यः शष्कुलीरपूरान्वाभ्यवहृत्य प्रतिबुद्धश्छर्दयति यस्य शिरसि लतादयो जायन्ते वयांसि च निलीयन्ते मौड्यं वा भवति यो गृध्रोत्लूककाकाद्यैः प्रेतपिशाचरक्षोद्रविडान्ध्रस्त्रीचण्डालाद्यैर्वा परिवार्यते दक्षिणाभिमुखं वा स्त्रिया नृत्यन्नाकृष्यते अन्तावसायिभिर्वा स्वयं वा दिग्वासा याति शून्याटवीं वा कपिरथेन प्रेतैः प्रव्रजितैर्वा परिष्वज्यते नग्नो वा रक्तां स्रजं धारयति पङ्कदिग्धो हसति नृत्यति वा वेत्रवंशकण्टकतृणगहने संसृज्यते पतति वा पांसूपधानायां भुवि वल्मीकभस्मश्मशानश्वभ्रायतनेषु पङ्ककूपकलुषोदकेषु वा मज्जति स्रोतसा वा ह्रियते रक्तकुसुमवनां भूमिं गुहामन्धकाराचितां पापकर्मालयं संबाधं जननीं वा प्रविशति मत्स्येन वा ग्रस्यते।
श्मश्रुकर्म च यो गात्रवृद्धिं विवाहं चानुभवति शैलप्रासादाग्रात्पतत्यारोहति वा यूपपुष्पाड्यशाल्मलीकोविदारकिंशुकपारिभद्रकान्यो वा पराजीयते बध्यते छर्दयति विरिच्यते हृष्यति लभते वा हिरण्यलोहलवणतैलपिण्याककार्पासानश्नाति पक्वान्नं पिबति मद्यं स्नेहं वाभ्यज्यति निर्भत्स्र्यते वा कुपितैः पितृभिः चन्द्रार्कतारादीपदेवतानेत्रदर्शनान्यनुपततो नश्यतो वा पश्यति वक्रं वा बाहुमङ्गं वा विभिद्यमानं पुरुषान् वा नग्नान् कषायवाससोऽसौम्यान् दण्डपाशहस्तान् कृष्णान्रक्ताक्षान् स्त्रियं वा कृष्णशुक्लदर्शनां दीर्घकेशस्तनीं कालरात्रिरूपां ते व्याधिताः पञ्चतामाप्नुवन्ति स्वस्थास्तु जीवितसन्देहमिति।
भवन्ति चात्र॥

**अस12.16**
मनोवहानां पूर्णत्वात् स्रोतसां प्रबलैर्मलैः।
दृश्यन्ते दारुणाः स्वप्ना विनाशाभिमुखात्मभिः॥

**अस12.17**
अकल्याणमपि स्वप्नं दृष्ट्वा तत्रैव यः पुनः।
पश्येत् सौम्यं शुभं तस्य शुभमेव फलं भवेत्॥

**अस12.18**
देवान् द्विजान् गोवृषभान् जीवतः सुहृदो नृपान्।
साधून्यशस्विनो वह्निमिद्धं स्वच्छान् जलाशयान्॥

**अस12.19**
कन्याः कुमारकान् गौरान् शुक्लवस्त्रान् सुतेजसः।
नराशनं दीप्ततनुं समन्ताद्रुधिरोक्षितम्॥

**अस12.20**
यः पश्येल्लभते यो वा छत्रादर्शविषामिषम्।
शुक्लाः सुमनसो वस्त्रममेध्यालेपनं फलम्॥

**अस12.21**
शैलप्रासादसफलवृक्षसिंहनरद्विपान्।
आरोहेत् गोऽश्वयानं च तरेन्नदह्रदोदधीन्॥

**अस12.22**
पूर्वोत्तरेण गमनमगम्यागमनं मृतिः।
सम्बाधान्निस्सृतिः स्पर्शास्तारकाचलभास्वताम्॥

**अस12.23**
रोदनं पतितोत्थानं द्विषतां चावमर्दनम्।
यस्य स्यादायुरारोग्यं वित्तं स बहुशोऽश्नुते॥

**अस12.24**
पितृदेवद्विजातीनां क्रुद्धभीतकृशात्मनाम्।
मलिनाम्बरपुष्पाणां दर्शनं न प्रशस्यते॥

**अस12.25**
तेषामेव तु तुष्टानां शुद्धपुष्पाम्बरात्मनाम्।
दर्शनं शस्यते स्वप्ने तैश्च सम्भाषणं शुभम्॥

**अस12.26**
दृष्ट्वा स्वप्नान् दारुणान् शोभनान् वा।
प्रातः स्नातः सर्षपानग्निवर्णान्।
हुत्वा सावित्र्या सर्पिषाक्तांस्तिलान्वा।
पूतः पापैर्मुच्यते व्याधिभिश्च॥

**अस12.27**
मङ्गलाचारसम्पन्नपरिवारस्तथातुरः।
श्रद्दधानोऽनुकूलश्च प्रभूतद्रव्यसङ्ग्रहः॥

**अस12.28**
सत्त्वलक्षणसंयोगो भक्तिर्वैद्यद्विजातिषु।
चिकित्सायामनिर्वेदस्तदारोग्यस्य लक्षणम्॥

**अस12.29**
इत्यत्र जन्ममरणं यतः सम्यगुदाहृतम्।
शरीरस्य ततः स्थानं शारीरमिदमुच्यते॥

**इति द्वादशोऽध्यायः॥**

# अष्टाङ्गसंग्रहः निदानस्थानम् अध्याय १-५

https://sa.wikisource.org/s/9zj

**अष्टाङ्गसंग्रहः**

अष्टाङ्गसङ्ग्रहः

निदानस्थानम्

**अस1.1**
अथातः सर्वरोगनिदानं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अस1.2**
इह कृतयुगे विगतरागद्वेषादिद्वन्द्वा जितलोभक्रोधश्रमक्लमालस्यभया निष्परिग्रहाः पुरुषा बभूवुः।
तेषां पुण्यबलेन पृथिव्यादीनां सर्वगुणसमुदायादचिन्त्यरस वीर्यादिसमुदितानि सस्यान्योषधयश्चासन्।
ते तानि जितेन्द्रियत्वात् काले मात्रया चोपयुञ्जानाः सत्यार्जवानृशंस्यादिगुणयोगाच्च सुरसदृशतेजसो रूपाकृतिप्रमाणप्रसादोपचयसंहनननसत्वसारसम्पन्ना दीर्घायुषो नीरुजश्च बभूवुः॥

**अस1.3**
भ्रश्यन्ति तु कृतयुगे युगस्वभावात् क्रमेण परिहीयमाणसर्वगुणेषु पृथिव्यादिषु शरीरेषु च धर्मातिक्रमात् पुरुषेष्ववश्यम्भाविनो निरपेक्षरूक्षाभिरुपेक्षिता देवताभिर्ज्वरादयः प्रादुरभूवन्निति सर्वरोगाणां सामान्यतः सम्भवः॥

**अस1.4**
ज्वरस्तु स्थाणुशापात् प्राचेतसत्वमुपागतस्य प्रजापतेः क्रतौ भागमपरिकल्पयतस्तद्विनाशार्थं पूर्वजन्मावमानितया रुद्राण्या प्रेरितस्य पशुपतेर्दिव्यमब्दसहस्रं परिरक्षितवतः क्रोधमतिचिरकालसम्भृतो व्रतान्ते रोषाग्निः किङ्कररूपेण किल पिण्डितमूर्तिर्वीरभद्रनामा भस्मप्रहरणस्त्रिशिरोक्षिबाहुपादः पिङ्गललोचनो दंष्ट्री शङ्कुकर्णः कृष्णतनुरुत्तमाङ्गान्निश्चचार।
स देवीविनिर्मितया सह भद्रकाल्या प्रतिरोमकूपमभिनिःसृतैर्विविधविकृताकृतिभिरनन्तैर्भयानकवाक्यक्रियावपुर्भिरनुचरैः परिवृतश्चतुर्युगान्तकरकालाम्भोदसहस्रनिनदोऽनुनादयन् रोदसी ज्वालागर्भेण परीतः कलकलारावेण महाभूतसम्प्लवकारिणा विधाय दानववधमश्वमेधाध्वरविध्वंसनं च प्राञ्जलिर्विज्ञापयामास शिवम्।
शिवीभूतोऽसि देवदेव, देवैः पितामहप्रभृतिभिर्जगतः पित्रा च धात्राभिष्टूयमानः।
सम्प्रत्यहं किं करवाणीति।
तं शूली क्रोधमादिदेश।
यस्मात् त्रिदशैरप्यजय्य मत्क्रोध व्रतविघ्नं चिकीर्षुदत्यसैन्यं दक्षो दक्षहव्यं च त्वया जीर्णमतो जगतोऽस्य सस्थावरस्य ज्वरयिता ज्वरो भवान् भवतु।
त्वं हि सर्घरोगाणां प्रथमः प्रवरो जन्ममरणेषु तमोमयतया महामोहः प्राग्जन्मनो विस्मारयितापचारान्तरेषु चोष्मायमाणत्वात् सन्तापात्मा द्वयेष्वपि ध्रुवो ज्वरो भवेति।
सोऽयमेवमुमापतिनानुगृहीतो नानानामभिः सर्वतोऽनुभुवि विचरति।
तद्यथा।
पाकलो गजेष्वभितापो वाजिष्वलर्कः कक्कुरेष्विन्द्रमदो जलजेषु ज्योतिरोषधीषु चूर्णको धान्येष्वप्सु नीलिका भूमावूषरो मनुष्येषु ज्वर इति॥

**अस1.5**
तत्सहजाश्चारोचकाङ्गमर्दशिरोव्यथाभ्रमक्लमग्लानितृष्णासन्तापादयः।
तत्सन्तापाच्च रक्तपित्तम्।
तत्रैव च यज्ञे क्रोधभयाभिभूतानां परितो विद्रवतां लङ्घनप्लवनाद्यैर्देहविक्षोभणैर्गुल्मविद्रधिवृद्धिजठरादयो, हविःप्राशान्मेहकुष्ठार्शःशोफातीसारादयो, भयोत्त्रासशोकाशुचिसंस्पर्शैरुन्मादापस्मारग्रहादयो, रोहिण्यतिप्रसङ्गाच्छेषदुहित्रसम्भोगकृताच्च प्रजापतिक्रोधान्नक्षत्रराजस्य राजयक्ष्मा तत्सहोद्भवाश्च कासश्वासादयः।
सोऽपि हि न विना ज्वरेणानुबध्नातीति सकलोऽपि रोगग्रामो ज्वरपूर्वको ज्वरशब्दवाच्यो वा॥

**अस1.6**
ज्वरस्तमो विकार आतङ्कः पाप्मा गदो व्याधिराबाधो दुःखमामयो यक्ष्मा रोग इत्यनर्थान्तरम्।
तत्र रुजतीति रोगः।
तस्योपलब्धिर्निदानपूर्वरूपरूपोपशयसम्प्राप्तिभिः॥

**अस1.7**
तत्र निदानं वाय्वादिप्रकोपः।
तस्य पुनरहिताहारविहारसेवा।
निदानपर्यायास्तु हेतुर्निमित्तमायतनं कारकः कर्ता कारणं प्रत्ययः समुत्थानं मूलं योनिरिति॥

**अस1.8**
पूर्वरूपं नाम येन भाविव्याधिविशेषो विज्ञायते न तु दोषविशेषः।
तदध्युत्पत्स्यमानस्य व्याधेरल्पत्वादव्यक्तं रूपम्॥

**अस1.9**
स्पष्टं पुना रूपम्।
तस्य शब्दान्तराणि लिङ्गमाकृतिर्लक्षणं चिह्नं संस्थानं व्यञ्जनमिति॥

**अस1.10**
उपशयो हेतुव्याधिविपरीतैर्विपरीतार्थकारिभिश्चचौषधाहारविहारैः सुखानुबन्धः।
स हि व्याधिसात्म्यसंज्ञः।
तद्विपरीतोऽनुपशयः।
एतेन देशकालौ व्याख्यातौ॥

**अस1.11**
सम्प्राप्तिः पुनरेवंदुष्टो दोषस्तेन चैवमारब्धो व्याधिस्तत्पर्याया जातिरागतिर्निर्वृत्तिर्निष्पत्तिरिति॥

**अस1.12**
सा सङ्ख्याविकल्पप्राधान्यबलकालविशेषैर्भियते।
तत्र सङ्ख्या तावदष्टौ ज्वरास्त्रिविधं रक्तपित्तं पञ्च कासा इति।
विकल्पः समवेतानां दोषाणामंशांशकल्पना।
प्राधान्यं व्याधिनामनुबन्ध्यानुबन्धकभेदात्तरतमयोगाद्वा दोषाणाम्।
बलाबलविशेषो हेत्वादिकात्स्न्यार्वयवविभावनया।

कालविशेषः पुनर्दोषाणामृत्वहोरात्र्याहारसमयनियतः प्रकोप इति।
एतावतैव समासतः कथितो निदानार्थः।
विस्तरेण तु यथास्वं प्रतिरोगमुपदेक्ष्यते॥

**अस1.13**
अथ
तिक्तकटुकषायरूक्षलघुशीतविष्टम्भिविरूढकतृणधान्यकलायचणककरीरतुम्बकालिङ्गचिर्भिटबिसशालूकजाम्बवतिन्दुकहीनशुष्कप्रमिततृषिताशनक्षुधिताम्बुपानासृक्क्षयविरेचनादिकर्मातियोगवेगविधारणोदीरणरात्रिजा
च वायुः प्रकोपमापद्यते॥

**अस1.14**
कट्वम्ललवणक्षारोष्णतीक्ष्णविदाहिशुक्तशाण्डाकीमद्यमूत्रमस्तुदधिधान्याम्लतैलकुलत्थमाषनिष्पावतिलान्नकट्वरकुठेरकादिवर्गामाम्रातकाम्लीकापीलुभल्लातकास्थिलाङ्गलिकामरिचातपाग्निरजोधूमक्रोधेर्ष्याजीर्णमै
च पित्तम्॥

**अस1.15**
मधुराम्ललवणस्निग्धगुरुशीतपिच्छिलाभिष्यन्दि
नवान्नपिष्टपृथुकस्थूलभक्ष्यशष्कुल्यामक्षीरकीलाटमोरटकूचीकातक्रपिण्डकपीयुषेक्षुरसफाणितगुडानूपपिशितमोचखर्जूरभव्यनारिकेलनिशाम्बुपानात्यम्बुपानातिसन्तर्पणभुक्तमात्रदिवास्वप्नकालातिस्वप्नकायवाङ्मनो
व्यापारानारम्भानुपधानशयनावश्यायहर्षच्छीर्दविघातविरेचनाद्ययोगादिभिः शिशिरवसन्तपूर्वाह्णप्रदोषभुक्तमात्रेषु च श्लेष्मा॥

**अस1.16**
द्वयसंसर्गात् संसर्गः।
सर्वेषां तु
मिश्रीभावात्तथाध्यशनसमशनविषमाशनविरुद्धाशनसङ्कीर्णाशनव्यापन्नाम्बुमद्यमन्दकदधियावकयवसुरापिण्याकाममूलकसर्षपशुष्कशाकवल्लूरकृशपिशितलकुचामफलमृत्तिकाभ्यवहारान्नपरिवर्तर्तुव्यापदसात्म्यौषधि
पापानां च कर्मणामभ्यासात् पूर्वकृतानां च परिणामात् स्त्रीणां विषमप्रसवात् प्रसूतानां च मिथ्योपचारात् सन्निपातः॥

**अस1.17**
इति सामान्यतः सर्वेषु रोगेषु दोषप्रकोपहेतुरुक्त इति।
भवन्ति चात्र॥

**अस1.18**
प्रतिरोगमिति क्रुद्धा रोगाधिष्ठानगामिनीः।
रसायनीः प्रपद्याशु दोषा देहे विकुर्वते॥

**अस1.19**
आधानजन्मनिधनप्रत्यराख्यविपत्करे।
नक्षत्रे व्याधिरुत्पन्नः क्लेशाय मरणाय वा॥

**अस1.20**
ज्वरस्तु जातः षड्रात्रादश्विनीषु निवर्तते।
भरणीषु तु पञ्चाहात् सप्ताहात् कृत्तिकासु तु॥

**अस1.21**
त्रिः सप्तरात्रादथवा रोहिण्यामष्टरात्रतः।
एकादशाद्वा दिवसान्मृगे षण्णवरात्रयोः॥

**अस1.22**
पञ्चाहान्मृत्युरार्द्रायां त्रिपक्षे संशयोऽथवा।
पुनर्वसौ प्रवृत्तस्तु ज्वरोऽपैति त्रयोदशात्॥

**अस1.23**
दिवसात् सप्तविंशाद्वा द्व्यहात् सप्ताहतोऽथवा।
पुष्ये श्लेषासु मरणं चिरेणापि मघासु तु॥

**अस1.24**
अवश्यं स्वास्थ्यमाप्नोति द्वादशाहान्मृतो न चेत्।
फाल्गुन्योः पूर्वयोर्मृत्युरन्यथोश्च दिनेऽष्टमे॥

**अस1.25**
नव्मेऽग्न्येकविंशे वा ज्वरः सौम्यत्वमृच्छति।
हस्तेन सप्तमे शान्तिश्चित्रायामष्टमेऽथवा॥

**अस1.26**
पुनश्चित्रागमे स्वातौ दशाहादथ वा त्रिभिः।
पक्षैर्मृत्युं विशाखासु द्वाविंशेऽहनि निर्दिशेत्॥

**अस1.27**
नवमेऽह्नि न चेच्छान्तिर्मैत्रे मृत्युस्ततः परम्।
ज्येष्ठायां पञ्चमे मृत्युरूर्ध्वं वा द्वादशात् सुखम्॥

**अस1.28**
स्वास्थ्यं दशाहान्मूले तु त्रिसप्ताहेऽथ वा गते।
पूर्वाषाढासु नवमे ततोऽन्यासु तु मासतः॥

**अस1.29**
अष्टाभिरथवा मासैर्नवभिर्वा भवेच्छिवम्।
आज्येष्ठाहाद्धनिष्ठासु द्वादशाद्वारुणेषु तु॥

**अस1.30**
षडहे द्वादशाहे वा मृत्युर्भाद्रपदासु तु।
उत्तरासु त्रिसप्ताहात् प्रशमो रेवतीषु च॥

**अस1.31**
चतूरात्रेऽष्टरात्रे वा क्षेममित्याह गौतमः॥
इति प्रथमोऽध्यायः॥

अथ द्वितीयोऽध्यायः।

**अस2.1**
अथातो ज्वरनिदानं व्याख्यास्यामाः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अस2.2**
अष्टाभिः कारणैर्ज्वरः सञ्जायते मनुष्याणां पृथग्दोषैः संसृष्टैः सन्निपतितैरागन्तुना च॥

**अस2.3**
तत्र यथोक्तैः प्रकोपणविशेषैः प्रकुपिता दोषाः प्रविश्यामाशयमूष्मणा मिश्रीभूयाममनुगम्य रसस्वेदवाहीनि स्रोतांसि पिधाय पित्तं तु द्रवत्वात्तप्तमिव जलमनलमुपहत्य सर्वेऽपि च दोषाः पक्तारं स्वस्थानाद्बहिर्निरस्य सह तेन सकलमपि शरीरमभिसर्पन्तः तत्सम्पर्काल्लब्धबलेन स्वेनोष्मणा नितरां देहोष्माणमेधयन्तोऽन्तस्स्रोतोमुखपिधानात् स्तम्भमादधाना बहिरपि स्वेदमपहरन्तः सर्वेन्द्रियाणि चोपतापयन्तो ज्वरमभिनिर्वर्तयन्ति॥

**अस2.4**
तस्येमानि पूर्वरूपाणि मुखवैरस्यमन्नानभिलाषो गुरुगात्रत्वमालस्यमल्पप्राणता गतिस्खलनं निद्राधिक्यमरतिरसूया हितोपदेशेषु प्रद्वेषो बालेषु मधुरेषु च भक्ष्येष्वम्ललवणकटुकाभिनन्दनमविपाकेऽङ्गमर्दश्चक्षुषोराकुलत्वं साश्रुता जृम्भा विनामः क्लमो रोमहर्षः शब्दानलाम्बुशीतवातच्छायातपेष्वकस्मादिच्छाद्वेषौ च।
तदनन्तरं व्यक्तीभावो ज्वरस्येति।
भवति चात्र॥

**अस2.5**
आगमापगमक्षोभमृदुता वेदनोष्मणाम्।
वैषम्यं तत्र तत्राङ्गे तास्ताः स्युर्वेदनाश्चलाः॥

**अस2.6**
पादयोः सुप्तता स्तम्भः पिण्डिकोद्वेष्टनं क्लमः।
विश्लेष इव सन्धीनां साद ऊर्वोः कटीग्रहः॥

**अस2.7**
पृष्ठं क्षोदमिवाप्नोति निष्पीड्यत इवोदरम्।
भिद्यन्त इव चास्थीनि पार्श्वगानि विशेषतः॥

**अस2.8**
हृदयस्य ग्रहस्तोदः प्राजनेनेव वक्षसः।
स्कन्धयोर्मथनं बाह्वोर्भेदः पीडनमंसयोः॥

**अस2.9**
अशक्तिर्भक्षणे हन्वोर्जृम्भणं कर्णयोः स्वनः।
निस्तोदःशङ्खयोर्मूर्ध्नि वेदना विरसास्यता॥

**अस2.10**
कषायास्यत्वमथवा मलानामप्रवर्तनम्।
रूक्षारुणत्वगास्याक्षिनखमूत्रपुरीषता॥

**अस2.11**
प्रसेकारोचकाश्रद्धाविपाकास्वेदजागराः।
कण्ठौष्ठशोषस्तृट्शुष्कौ छर्दिकासौ विषादिता॥

**अस2.12**
हर्षो रोमाङ्गदन्तेषु वेपथुः क्षवथोर्ग्रहः।
भ्रमः प्रलापो घर्मेच्छा विनामश्चानिलज्वरे॥

**अस2.13**
युगपद्व्याप्तिरङ्गानां प्रलापः कटुवक्त्रता।
नासास्यपाकः शीतेच्छा भ्रमो मूर्छा मदोऽरतिः॥

**अस2.14**
विट्स्रंसः पित्तवमनं रक्तष्ठीवनमम्लकः।
रक्तकोठोद्गमः पीतहरितत्वं त्वगादिषु॥

**अस2.15**
स्वेदो निश्वासवैगन्ध्यमतितृष्णा च पित्तजे॥

**अस2.16**
विशेषादरुचिर्जाड्यं स्रोतोरोधोऽल्पवेगता।
प्रसेको मुखमाधुर्यं हृल्लेपश्वासपीनसाः॥

**अस2.17**
हृल्लासश्छर्दनं कासः स्तम्भः श्वैत्यं त्वगादिषु॥

**अस2.18**
अङ्गेषु शीतपिटकास्तन्द्रोदर्दः कफोद्भवे॥

**अस2.19**
काले यथास्वं सर्वेषां प्रवृत्तिर्वृद्धिरेव वा।
निदानोक्तानुपशयो विपरीतोपशायिता॥

**अस2.20**
यथास्वं लिङ्गसंसर्गे ज्वरः संसर्गजोऽपि च॥

**अस2.21**
शिरोऽर्तिमूर्छावमिदाहमोहकण्ठास्यशोषारतिपर्वभेदाः।
उन्निद्रतातृड्भ्रमरोमहर्षा जृम्भातिवाक्त्वं च चलात् सपित्तात्॥

**अस2.22**
तापहान्यरुचिपर्वशिरोरुक्पीनसश्वसनकासविबन्धाः।
शीतजाड्यतिमिरभ्रमतन्द्राः श्लेष्मवातजनितज्वरलिङ्गम्॥

**अस2.23**
शीतस्तम्भस्वेददाहाव्यवस्था तृष्णा कासः श्लेष्मपित्तप्रवृत्तिः।
मोहस्तन्द्रा लिप्ततिक्तास्यता च ज्ञेयं रूपं श्लेष्मपित्तज्वरस्य॥

**अस2.24**
सर्वजो लक्षणैः सर्वैर्दाहोऽत्र च मुहुर्मुहुः।
तद्वच्छीतं महानिद्रा दिवा जागरणं निशि॥

**अस2.25**
सदा वा नैव वा निद्रा मुहुः स्वेदोऽति नैव वा।
गीतनर्तनहास्यादिविकृतेहाप्रवर्तनम्॥

**अस2.26**
सस्रुती कलुषे रक्ते भुग्ने लुलितपक्ष्मणी।
अक्षिणी पिण्डिकापार्श्वमूर्धपर्वास्थिरुग्भ्रमः॥

**अस2.27**
सत्वनौ सरुजौ कर्णौ कण्ठः शूकैरिवावृतः।
परिदग्धा खरा जिह्वा गुरुस्रस्ताङ्गसन्धिता॥

**अस2.28**
रक्तपित्तकफष्ठीवो लोलनं शिरसोऽतितृट्।
कोठानां श्यावरक्तानां मण्डलानां च दर्शनम्॥

**अस2.29**
हृद्व्यथा मलसंसर्ङ्गः प्रवृत्तिर्वाल्पशोऽति वा।
स्निग्धास्यता बलभ्रंशः स्वरसादः प्रलापिता॥

**अस2.30**
दोषपाकश्चिरात्तन्द्रा प्रततं कण्ठकूजनम्।
सन्निपातमभिन्यासं तं ब्रूयाच्च हृतौजसम्॥

**अस2.31**
वायुना कफरुद्धेन पित्तमन्तः प्रपीडितम्।
व्यवायित्वाच्च सौक्ष्म्याच्च बहिर्मर्गं प्रवर्तते॥

**अस2.32**
तेन हारिद्रनेत्रत्वं सन्निपातोद्भवे ज्वरे।
दोषे विबद्धे नष्टेऽग्नौ सर्वसम्पूर्णलक्षणः॥

**अस2.33**
असाध्यः सोऽन्यथा कृच्छ्रो भवेद्वैकल्यदोऽपि वा॥

**अस2.34**
अन्यच्च सन्निपातोत्थो यत्र पित्तं पृथक्स्थितम्।
त्वचि कोष्ठेऽथवा दाहं विदधाति पुरोऽनु वा॥

**अस2.35**
तद्वद्वातकफौ शीतं दाहादिर्दुस्तरस्तयोः॥

**अस2.36**
शीतादौ तत्र पित्तेन कफे स्यन्दितशोषिते।
शीते शान्तेऽम्लको मूर्च्छा मदस्तृष्णा च जायते॥

**अस2.37**
दाहादौ पुनरन्ते स्युस्तन्द्राष्ठीववमिक्लमाः॥

**अस2.38**
आगन्तुरभिघाताभिषङ्गशापाभिचारतः।
चतुर्धात्र क्षतच्छेददाहाद्यैरभिघातजः॥

**अस2.39**
श्रमाच्च तस्मिन् पवनः प्रायो रक्तं प्रदूषयन्।
सव्यथाशोफवैवर्ण्यं सरुजं कुरुते ज्वरम्॥

**अस2.40**
ग्रहावेशौषधिविषक्रोधभीशोककामजः।
अभिषङ्गाद् ग्रहेणास्मिन्नकस्माद्धासरोदने॥

**अस2.41**
औषधीगन्धजे मूर्छा शिरोरुक् श्वयथुः क्षवः।
विषान्मूर्छातिसारास्यश्यावतादाहहृद्रदाः।

**अस2.42**
क्रोधात् कम्पः शिरोरुक् च प्रलापो भयशोकजे।
कामान्मोहोऽरुचिर्दाहोह्रीनिद्राधधृतिक्षयः॥

**अस2.43**
ग्रहादौ सन्निपातस्य भयादौ मरुतस्त्रये।
कोपः क्रोधे तु पित्तस्य यौ तु शापाभिचारजौ।
सन्निपातज्वरौ घोरौ तावसह्यतमौ मतौ॥

**अस2.44**
तत्राभिचारिकैर्मन्त्रैर्हूयमानस्य तप्यते।
पूर्वं चेतस्ततो देहस्ततो विस्फोटतृड्भ्रमैः॥

**अस2.45**
सदाहमूर्छाग्रस्तस्य प्रत्यहं वर्धते ज्वरः।
इति ज्वरोऽष्टधा दृष्टः समासाद्द्विविधस्तु सः॥

**अस2.46**
शारीरो मानसःसौम्यस्तीक्ष्णोऽन्तर्बहिराश्रयः।
प्राकृतो वैकृतःसाध्योऽसाध्यःसामो निरामकः॥

**अस2.47**
पूर्वं शरीरे शारीरे तापो मनसि मानसे।
पवने योगवाहित्वाच्छीतं श्लेष्मयुते भवेत्॥

**अस2.48**
दाहः पित्तयुते मिश्रं मिश्रे अन्तः संश्रये पुनः।
ज्वरेधिकं विकाराः स्युरन्तःक्षोभो मलग्रहः॥

**अस2.49**
बहिरेव बहिर्वेगे तापोऽपि च सुसाध्यता॥

**अस2.50**
वर्षाशरद्वसन्तेषु वाताद्यैः प्राकृतः क्रमात्।
वैकृतोऽन्यःसदुः साध्यः प्रायश्च प्राकृतोऽनिलात्॥

**अस2.51**
एकमार्गक्रियारम्भव्यतिवृत्तेर्महात्ययात्॥

**अस2.52**
वर्षासु मारुतो दुष्टः पित्तश्लेष्मान्वितो ज्वरम्।
कुर्यात् पित्तं च शरदि तस्य चानुबलः कफः॥

**अस2.53**
तत्प्रकृत्या विसर्गाच्च तत्र नानशनाद्भयम्।
कफो वसन्ते तमपि बातपित्तं भवेदनु॥

**अस2.54**
बलवत्स्वल्पदोषेषु ज्वरः साध्योऽनुपद्रवः।
सर्वथा विकृतिज्ञाने प्रागसाध्य उदाहृतः॥

**अस2.55**
ज्वरोपद्रवतीक्ष्णत्वमग्लानिर्बहुमूत्रता।
न प्रवृत्तिर्न विड्जीर्णा न क्षुत्सामज्वराकृतिः॥

**अस2.56**
ज्वरेगोऽधिकं तृष्णा प्रलापः श्वसनं भ्रमः।
मलप्रवृत्तिरुत्क्लेशः पच्यमानस्य लक्षणम्॥

**अस2.57**
जीर्णतामविपर्यासात् सप्तरात्रं च लङ्घनात्॥

**अस2.58**
ज्वरः पञ्चविधः प्रोक्तो मलकालबलाबलात्।
प्रायः स सन्निपातेन भूयसा त्वपदिश्यते॥

**अस2.59**
सन्ततः सततोऽन्येद्युस्तृतीयकचतुर्थकौ॥

**अस2.60**
धातुमूत्रशकृद्वाहिस्रोतसां व्यापिनो मलाः।
तापयन्तस्तनुं सर्वां तुल्यदूष्यादिवर्धिताः॥

**अस2.61**
बलिनो गुरवः स्तब्धा विशेषेण रसाश्रिताः।
सन्ततं निष्प्रतिद्वन्दा ज्वरं कुर्युः सुदुस्सहम्॥

**अस2.62**
मलाञ्ज्वरोष्मा धातून् वा स शीघ्रं क्षपयस्ततः।
सर्वाकारं रसादीनां शुध्याशुध्यापि वा क्रमात्॥

**अस2.63**
वातपित्तकफैः सप्त दश द्वादशवासरान्।
प्रायोऽनुयाति मर्यादां मोक्षाय च वधाय च॥

**अस2.64**
इत्यग्निवेशस्य मतं हारीतस्य पुनः स्मृतिः॥

**अस2.65**
द्विगुणा सप्तमी यावन्नवम्येकादशी तथा।
एषा त्रिदोषमर्यादा मोक्षाय च वधाय च॥

**अस2.66**
शुध्यशुद्धौ ज्वरः कालं दीर्घमप्यनुवर्तते॥

**अस2.67**
कृशानां व्याधिमुक्तानां मिथ्याहारादिसेविनाम्।
अल्पोऽपि दोषो दूष्यादेर्लब्ध्वान्यतमतो बलम्॥

**अस2.68**
सप्रत्यनीको विषमं कुर्याद्वृद्धिक्षयान्वितः॥

**अस2.69**
सूक्ष्मसूक्ष्मतरास्येषु दूरदूरतरेषु च।
दोषो रक्तादिमार्गेषु शनैरल्पश्चिरेण यत्॥

**अस2.70**
याति देहं च नाशेषं भूयिष्ठं भेषजेऽपि च।
क्रमोऽयं तेन विच्छिन्नसन्तापो लक्ष्यते ज्वरः॥

**अस2.71**
विषमो विषमारम्भक्रियाकालोऽनुषङ्गवान्॥

**अस2.72**
यथोत्तरं मन्दगतिर्मन्दशक्तिर्यथा यथा।
कालेनाप्नोति सदृशान् स रसादींस्तथा तथा॥

**अस2.73**
दोषो ज्वरयति क्रुद्धश्चिराच्चिरतरेण च॥

**अस2.74**
भूमौ स्थितं जलैः सिक्तं कालमेव प्रतीक्षते।
अङ्कुराय यथा बीजं दोषबीजं रुजे तथा॥

**अस2.75**
वेगं कृत्वा विषं यद्वदाशये लीयतेऽबलम्।
कुप्यत्याप्तबलं भूयः काले दोषविषं तथा॥

**अस2.76**
एवं ज्वराः प्रवर्तन्ते विषमाः सततादयः॥

**अस2.77**
दोषः प्रवर्तते तेषां स्वे काले ज्वरयन् बली।
निवर्तते पुनश्चैष प्रत्यनीकबलाबलः॥

**अस2.78**
क्षीणे दोषे ज्वरः सूक्ष्मो रसादिष्वेव लीयते।
लीनत्वात् कार्श्यवैवर्ण्यजाड्यादीनादधाति सः॥

**अस2.79**
अतिलीनोऽतिमन्दत्वात् भवत्यह्नि न पञ्चमे॥

**अस2.80**
दोषो रक्ताश्रयः प्रायः करोति सततं ज्वरम्॥

**अस2.81**
अहोरात्रस्य स द्विः स्यात्सकृदन्येद्युराश्रितः॥

**अस2.82**
तस्मिन्मांसवहा नाडीर्मेदोनाडीस्तृतीयके।
ग्राही पित्तानिलान्मूर्ध्नस्त्रिकस्य कफपित्ततः॥

**अस2.83**
स पृष्ठस्यानिलकफात् स चैकाहान्तरः स्मृतः॥

**अस2.84**
चतुर्थको मले मेदोमज्जास्थ्यन्यतमस्थिते।
मज्जस्थ एवेत्यपरे प्रभावं स तु दर्शयेत्॥

**अस2.85**
द्विधा कफेन जङ्घाभ्यां प्रथमं शिरसोऽनिलात्।
गम्भीरधातुचारित्वात् सनिपातेन सम्भवात्॥

**अस2.86**
तुल्योच्छ्रायाच्च दोषाणां दुश्चिकित्स्यश्चतुर्थकः॥

**अस2.87**
अस्थिमज्जोमयगते चतुर्थकविपर्ययः।
त्रिधा द्व्यहं ज्वरयति दिनमेकं तु मुञ्चति॥

**अस2.88**
बलाबलेन दोषाणामन्नचेष्टादिजन्मना।
ज्वरः स्यान्मनसस्तद्वत्कर्मणश्च तदा तदा॥

**अस2.89**
उत्क्लेशो गौरवं दैन्यं भङ्गोऽङ्गानां विजृम्भणम्।
अरोचको वमिः सादः सर्वस्मिन् रसगे ज्वरे॥

**अस2.90**
रक्तनिष्ठीवनं तृष्णा रक्तोष्णपिटकोद्गमः।
दाहरागभ्रममदप्रलापा रक्तसंश्रिते॥

**अस2.91**
तृड् ग्लानिः सृष्टवर्चस्त्वमन्तर्दाहो भ्रमस्तमः।
दौर्गन्ध्यं गात्रविक्षेपो मांसस्थे मेदसि स्थिते॥

**अस2.92**
स्वेदोऽतितृष्णा वमनं स्वगन्धस्यासहिष्णुता।
प्रलापो ग्लानिररुचिरस्थिस्थे त्वस्थिभेदनम्॥

**अस2.93**
दोषप्रवृत्तिरूर्ध्वाधः श्वासाङ्गक्षेपकूजनम्।
अन्तर्दाहो बहिःशैत्यं श्वासो हिध्मा च मज्जगे॥

**अस2.94**
तमसो दर्शनं मर्मच्छेदनं स्तब्धमेढ्रता।
शुक्रप्रवृत्तिर्मृत्युश्च जायते शुक्रसंश्रये॥

**अस2.95**
उत्तरोत्तरदुस्साध्याः पञ्चात्रान्त्यौ तु वर्जयेत्।
प्रलिम्पन्निव गात्राणि श्लेष्मणा गौरवेण च॥

**अस2.96**
मन्दज्वरः प्रलेपस्तु सशीतः स्यात्प्रलेपकः।
नित्यं मन्दज्वरो रूक्षः शीतः कृच्छ्रेण सिध्यति॥

**अस2.97**
स्तब्धाङ्गः श्लेष्मभूयिष्ठो भवेद्वातबलासकः।
हरिद्राभेकवर्णाभस्तद्वर्णं यः प्रमेहति॥

**अस2.98**
स वै हारिद्रको नाम ज्वरभेदोऽन्तकः स्मृतः।
कफवातौ समौ यस्य हीनपित्तस्य देहिनः॥

**अस2.99**
तीक्ष्णो वा यदि वा मन्दो जायते रात्रिकोज्वरः।
दिवाकरापीतबले व्यायामाच्च विशोषिते॥

**अस2.100**
शरीरे नियतं वाताज्ज्वरः स्यात् पूर्वरात्रिकः।
आमाशये यदा दुष्टे श्लेष्मपित्ते व्यवस्थिते॥

**अस2.101**
तदार्धं शीतलं देहे स्वर्धज्चोष्णं प्रजायते।
काये पित्तं यदा दुष्टं श्लेष्मा चान्ते व्यवस्थितः॥

**अस2.102**
उष्णत्वं तेन देहस्य शीतत्वं करपादयोः॥

**अस2.103**
धातून् प्रक्षोभयन् दोषो मोक्षकाले विलीयते।
ततो नरः श्वसन् स्विद्यन् कूजन् वमति चेष्टते॥

**अस2.104**
वेपते प्रलपत्युष्णैः शीतैश्चाङ्गैर्हतप्रभः।
विसंज्ञो ज्वरवेगार्तः सक्रोध इव वीक्षते॥

**अस2.105**
सदोषशब्दञ्च शकृद् द्रवं सृजति वेगवत्॥

**अस2.106**
देहो लघुर्व्यपगतक्लमममोहतापः पाको मुखे करणसौष्ठवमव्यथत्वम्।
स्वेदः क्षवः प्रकृतियोगि मनोऽन्नलिप्सा कण्डूश्च मूर्ध्नि विगतज्वरलक्षणानि॥
इति द्वितीयोऽध्यायः॥

अथ तृतीयोऽध्यायः।

**अस3.1**
अथातो रक्तपित्तकासनिदानं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अस3.2**
भृशोष्णतीक्ष्णकट्वम्ललवणातिविदाहिभिः।
कोद्रवोद्दालकैश्चान्नैस्तद्युक्तैरतिसेवितैः॥

**अस3.3**
कुपितं पित्तलैः पित्तं द्रवं रक्तं च मूर्छिते।
ते मिथस्तुल्यरूपत्वमागम्य व्याप्नुतस्तनुम्॥

**अस3.4**
पित्तं रक्तस्य विकृतेः संसर्गाद् दूषणादपि।
गन्धवर्णानुवृत्तेश्च रक्तेन व्यपदिश्यते॥

**अस3.5**
प्रभवत्यसृजः स्थानात् प्लीहतो यकृतश्च तत्॥

**अस3.6**
शिरोगुरुत्वमरुचिः शीतेच्छा धूमकोऽम्लकः।
छर्दिश्छर्दितबैभत्स्यं कासश्वासौ भ्रमः क्लमः॥

**अस3.7**
लोहलोहितमत्स्यामगन्धास्यत्वं स्वरक्षयः।
रक्तहारिद्रहरितवर्णता नयनादिषु॥

**अस3.8**
नीललोहितपीतानां वर्णानामविवेचनम्।
स्वप्ने तद्वर्णदर्शित्वं भवत्यस्मिन् भविष्यति॥

**अस3.9**
ऊर्ध्वं नासाक्षिकर्णास्यैर्मेढ्रयोनिगुदैरधः।
कुपितं रोमकूपैश्च समस्तैस्तत् प्रवर्तते॥

**अस3.10**
ऊर्ध्वं साध्यं कफाद्यस्मात्तद्विरेचनसाधनम्।
बह्वौषधं च पित्तस्य विरेको हि वरौषधम्॥

**अस3.11**
अनुबन्धी कफो यश्च तत्र तस्यापि शुद्धिकृत्।
कषायाः स्वादवोऽप्यस्य विशुद्धश्लेष्मणो हिताः॥

**अस3.12**
किमु तिक्ताः कषाया वा ये निसर्गात् कफापहाः॥

**अस3.13**
अधो याप्यं चलाद्यस्मात्तत् प्रच्छर्दनसाधनम्।
स्वल्पौषधं च पित्तस्य वमनं न वरौषधम्॥

**अस3.14**
अनुबन्धी चलो यश्च शान्तयेपि न तस्य तत्।
कषायाश्च हितास्तस्य मधुरा एव केवलम्॥

**अस3.15**
कफमारुतसंसृष्टमसाध्यमुभयायनम्।
अशक्यप्रातिलोम्यत्वादभावादौषधस्य च॥

**अस3.16**
न हि संशोधनं किञ्चिदस्त्यस्य प्रतिलोमनम्।
शोधनं प्रतिलोमं च रक्तपित्ते भिषग्जितम्॥

**अस3.17**
एवमेवोपशमनं सर्वशो नास्य विद्यते।
संसृष्टेषु हि दोषेषु सर्वजिच्छमनं हितम्॥

**अस3.18**
तत्र दोषानुगमनं सिरास्र एव लक्षयेत्।
उपद्रवांश्च विकृतिज्ञानतः तेषु चाधिकम्॥

**अस3.19**
आशुकारी यतः कासस्तमेवातः प्रवक्ष्यते॥

**अस3.20**
पञ्च कासाः वातपित्तश्लेष्मक्षतक्षयैः।
क्षयायोपेक्षिताः सर्वे बलिनश्चोत्तरोत्तरम्॥

**अस3.21**
तेषां भविष्यतां रूपं कण्ठे कण्डूररोचकः।
शूकपूर्णाभकण्ठत्वमस्वास्थ्यं हृदयस्य च॥

**अस3.22**
कषायविज्जलासात्म्यकट्वम्ललवणोषणैः।
रूक्षशीतगुरुस्निग्धोत्क्लेदिपर्युषिताशनैः॥

**अस3.23**
धारणोदीरणायासरात्र्यहःस्वप्नजागरैः।
अन्यैश्च तद्विधैर्धातुक्षयावरणकारिभिः॥

**अस3.24**
क्रुद्धः प्रतिहतोऽपाने यदापानः प्रपद्यते।
ऊर्ध्वं रसस्य स स्थाने तिष्ठन्नुरसि पीड्यते॥

**अस3.25**
उदानेन संजस्तत्र कण्ठे चानुप्रपूर्य च।
वाहिनीर्गलमूर्धस्थास्ततोऽङ्गान्युत्क्षिपन्निव॥

**अस3.26**
क्षिपन्निवाक्षिणी पृष्ठमुरःपार्श्वे च पीडयन्।
विवृतत्वान्मुखेनैति भिन्नकांस्योपमध्वनिः॥

**अस3.27**
यस्मात्तस्मात्स वर्णौजोबलमांसक्षयावहः॥

**अस3.28**
हेतुभेदात् प्रतीघातभेदो वायोः संरहसः।
यद्रुजाशब्दवैषम्यं कासानां जायते ततः॥

**अस3.29**
कुपितो वातलैर्वायुः शुष्कोरःकण्ठवक्त्रताम्।
हृत्पार्श्वोरःशिरःशूलं मोहक्षोभस्वरक्षयान्॥

**अस3.30**
करोति शुष्ककासं च महावेगरुजास्वनम्।
सोऽङ्गहर्षी कफं शुष्कं कृच्छ्रान्मुक्त्वाल्पतां व्रजेत्॥

**अस3.31**
पित्तात् पीताक्षिकफता तिक्तास्यत्वं ज्वरो भ्रमः।
पित्तासृग्वमनं तृष्णा वैस्वर्यं धूमको मदः॥

**अस3.32**
प्रततं कासवेगेन ज्योतिषामिव दर्शनम्।
कफादुरोऽल्परुङ्मूर्धहृदयं स्तिमितं गुरु॥

**अस3.33**
कण्ठोपलेपः सदनं पीनसच्छर्दयरोचकाः।
रोमहर्षो घनस्निग्धश्वेतश्लेष्मप्रवर्तनम्॥

**अस3.34**
युद्धाद्यैः साहसैस्तैस्तैः सेवितैरयथाबलम्।
उरस्यन्तःक्षते वायुः पित्तेनानुगतो बली॥

**अस3.35**
कुपितः कुरुते कासं कफं तेन सशोणितम्।
पीतं श्यावं च शुष्कं च ग्रथितं कुथितं बहु॥

**अस3.36**
ष्ठीवेत् कण्ठेन रुजता विभीन्नेनेव चोरसा।
सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना॥

**अस3.37**
पर्वभेदज्वरश्वासतृष्णावैस्वर्यकम्पवान्।
पारावत इवाकूजन् पार्श्वशूली ततोऽस्य च॥

**अस3.38**
क्रमाद्वीर्यं रुचिः पक्तिर्बलं वर्णश्च हीयते।
पक्षीणस्य सासृङ्मूत्रत्वं स्याच्च पृष्ठकटीग्रहः॥

**अस3.39**
वायुप्रधानाः कुपिता धातवो राजयक्ष्मिणः।
कुर्वन्ति यक्ष्मायतनैः कासं ष्ठीवेत् कफं ततः॥

**अस3.40**
पूतिपूतोपमं पीतं विस्रं हरितलोहितम्।
लुप्येत इव पार्श्वे च हृदयं पततीव च॥

**अस3.41**
अकस्मादुष्णशीतेच्छा बह्वाशित्वं बलक्षयः।
स्निग्धप्रसनवक्त्रत्वं श्रीमद्दशननेत्रता॥

**अस3.42**
ततोऽस्यक्षयरूपाणि सर्वाण्याविर्भवन्ति च॥

**अस3.43**
इत्येष क्षयजः कासः क्षीणानां देहनाशनः।
याप्यो वा बलिनां तद्वत् क्षतजोऽभिनवौ तु तौ॥

**अस3.44**
सिध्येतामपि सानाथ्यात् साध्या दोषैः पृथक् त्रयः।
मिश्रा याप्या द्वयात्सर्वे जरसा स्थविरस्य च॥

**अस3.45**
कासाच्छ्वासक्षयच्छर्दिस्वरसादादयो गदाः।
भवन्त्युपेक्षया यस्मात्तस्मात्तं त्वरया जयेत्॥
इति तृतीयोऽध्यायः॥

अथ चतुर्थोऽध्यायः।

**अस4.1**
अथातः श्वासहिध्मानिदानं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अस4.2**
कासवृध्या भवेच्छ्वासः पूर्वैर्वा दोषकोपनैः।
आमातिसारवमथुविषपाण्डुज्वरैरपि॥

**अस4.3**
रजोधूमानिलैर्मर्मघातादतिहिमाम्बुना।
क्षुद्रकस्तमकश्छिन्नो महानूर्ध्वश्च पञ्चमः॥

**अस4.4**
कफोपरुद्धगमनः पवनो विष्वगास्थितः।
प्राणोदकान्नवाहीनि दुष्टः स्रोतांसि दूषयन्॥

**अस4.5**
उरस्थः कुरुते श्वासमामाशयसमुद्भवम्॥

**अस4.6**
प्राग्रूपं तस्य हृत्पार्श्वशूलं प्राणविलोमता।
आनाहः शङ्खभेदश्च तत्रायासातिभोजनैः॥

**अस4.7**
प्रेरितः प्रेरयेत् क्षुद्रं स्वयंसंशमनं मरुत्॥

**अस4.8**
प्रतिलोमं सिरा गच्छन्नुदीर्य पवनः कफम्।
परिगृह्य शिरोग्रीवमुरःपार्श्वे च पीडयन्॥

**अस4.9**
कासं घुर्घुरकं मोहमरुचिं पीनसं तृषम्।
करोति तीव्रवेगं च श्वासं प्राणोपतापिनम्॥

**अस4.10**
प्रताम्येत्तस्य वेगेन निष्ठ्यूतान्ते क्षणं सुखी।
कृच्छ्राच्छयानः श्वसिति निषण्णः स्वास्थ्यमृच्छति॥

**अस4.11**
उच्छ्रिताक्षो ललाटेन स्विद्यता भृशमर्तिमान्।
विशुष्कास्यो मुहुः श्वासी काङ्क्षत्युष्णं सवेपथुः॥

**अस4.12**
मेघाम्बुशीतप्राग्वातैः श्लेष्मलैश्च विवर्धते।
स याप्यस्तमकः साध्यो नवो वा बलिनो भवेत्॥

**अस4.13**
ज्वरमूर्छायुतः शीतैः शाम्येत् प्रतमकस्तु सः॥

**अस4.14**
छिन्नाच्छ्वसिति विच्छिन्नं मर्मच्छेदरुजार्दितः।
सस्वेदमूर्छः सानाहो बस्तिदाहनिरोधवान्॥

**अस4.15**
अधोदृग्विप्लुताक्षश्च मुह्यन् रक्तैकलोचनः।
शुष्कास्यः प्रलपन्दीनो नष्टच्छायो विचेतनः॥

**अस4.16**
महता महता दीनो नादेन श्वसिति क्रथन्।
उद्धूयमानः संरब्धो मत्तर्षभ इवानिशम्॥

**अस4.17**
प्रणष्टज्ञानविज्ञानो विभ्रान्तनयनाननः।
वक्षः समाक्षिपन् बद्धमूत्रवर्चा विशीर्णवाक्॥

**अस4.18**
शुष्ककण्ठो मुहुर्मुह्यन् कर्णशङ्खशिरोऽतिरुक्॥

**अस4.19**
दीर्घमूर्ध्वं श्वसित्यूर्ध्वान्न च प्रत्याहरत्यधः।
श्लेष्मावृतमुखस्रोताः क्रुद्धगन्धवहार्दितः॥

**अस4.20**
मर्मसु छिद्यमानेषु परिदेवी निरुद्धवाक्॥

**अस4.21**
एते सिध्येयुरव्यक्ता व्यक्ताः प्राणहरा ध्रुवम्॥

**अस4.22**
श्वासैकहेतुप्राग्रूपसङ्ख्याग्रकृतिसंश्रयाः।
हिध्मा भक्तोद्भवा क्षुद्रा यमला महतीति च॥

**अस4.23**
गम्भीरा च मरुत्तत्र त्वरयायुक्तिसेवितैः।
रूक्षतीक्ष्णखरासात्म्यैरन्नपानैः प्रपीडितः॥

**अस4.24**
करोति हिध्मामरुजां मन्दशब्दां क्षवानुगाम्।
शमं सात्म्यान्नपानेन या प्रयाति च सान्नजा॥

**अस4.25**
आयासात् पवनः क्रुद्धः क्षुद्रां हिध्मां प्रवर्तयेत्।
जत्रुमूलप्रविसृतामल्पवेगां मृदुं च सा॥

**अस4.26**
वृद्धिमायास्यतो याति भुक्तमात्रे च मार्दवम्॥

**अस4.27**
चिरेण यमलैर्वेगैराहारे या प्रवर्तते।
परिणामोन्मुखे वृद्धिं परिणामे च गच्छति॥

**अस4.28**
कम्पयन्ती शिरोग्रीवामाध्मातस्यातितृष्यतः।
प्रलापच्छर्द्यतीसारनेत्रविप्लुतिजृम्भिणः॥

**अस4.29**
यमला वेगिनी हिध्मा परिणामवती च सा॥

**अस4.30**
ध्वस्तभ्रूशङ्खयुग्मस्य सास्रविप्लुतचक्षुषः।
स्तम्भयन्ती तनुं वाचं स्मृतिं संज्ञां च मुष्णती॥

**अस4.31**
रुन्धती मार्गमन्नस्य कुर्वती मर्मघट्टनम्।
पृष्ठतो नमनं शोषं महाहिध्मा प्रवर्तते॥

**अस4.32**
महामूला महाशब्दा महावेगा महाबला।
षक्वाशयाद्वा नाभेर्वा पूर्ववद्या प्रवर्तते॥

**अस4.33**
तद्रूपा सा मुहुः कुर्यात् जृम्भामङ्गप्रसारणम्।
गम्भीरेणानुनादने गम्भीरा तासु साधयेत्।
आद्ये द्वे वर्जयेदन्त्ये सर्वलिङ्गां च वेगिनीम्॥

**अस4.34**
सर्वाश्च सञ्चितामस्य स्थविरस्य व्यवायिनः।
व्याधिभिः क्षीणदेहस्य भक्तच्छेदक्षतस्य वा॥

**अस4.35**
सर्वेऽपि रोगा नाशाय नत्वेवं शीघ्रकारिणः।
हिध्माश्वासौ यथा तौ हि मृत्युकाले कृतालयौ॥
इति चतुर्थोऽध्यायः।

अथ पञ्चमोऽध्यायः।

**अस5.1**
अथातो राजयक्ष्मादिनिदानं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अस5.2**
अनेकरोगानुगतो बहुरोगपुरोगमः।
राजयक्ष्मा क्षयः शोषो रोगराडिति च स्मृतः॥

**अस5.3**
नक्षत्राणां द्विजानां च राज्ञोऽभूद्यदयं पुरा।
यच्च राजा च यक्ष्मा च राजयक्ष्मा ततो मतः॥

**अस5.4**
देहौषधक्षयकृतेः क्षयस्तत्सम्भवाच्च सः।
रसादिशोषणाच्छोषो रोगराट् तेषु राजनात्॥

**अस5.5**
साहसं वेगसंरोधः शुक्रौजःस्नेहसङ्क्षयः।
अन्नपानविधित्यागश्चत्वारस्तस्य हेतवः॥

**अस5.6**
तैरुदीर्णोऽनिलः पित्तं कफं चोदीर्य सर्वतः।
शरीरसन्धीनाविश्य तान् सिराश्च प्रपीडयन्॥

**अस5.7**
मुखानि स्रोतसां रुध्वा तथैवातिविवृत्य वा।
सर्पन्नूर्ध्वमधस्तिर्यग्यथास्वं जनयेत् गदान्॥

**अस5.8**
रूपं भविष्यतस्तस्य प्रतिश्यायो भृशं क्षवः।
प्रसेको मुखमाधुर्यअ सदनं वह्निदेहयोः॥

**अस5.9**
स्थाल्यमत्रान्नपानादौ शुचावप्यशुचीक्षणम्।
मक्षिकातृणकेशादिपातः प्रायोऽन्नपानयोः॥

**अस5.10**
हृल्लासश्छर्दिररुचिरश्नतोऽपि बलक्षयः।
पाण्योरवेक्षा पादस्य शोफोऽक्ष्णोरतिशुक्लता॥

**अस5.11**
बाह्वोः प्रमाणजिज्ञासा काये बैभत्स्यदर्शनम्।
स्त्रीमद्यमांसप्रियता घृणित्वं मूर्धगुण्ठनम्॥

**अस5.12**
नखकेशातिवृद्धिश्च स्वप्ने चाभिभवो भवेत्।
पतङ्गकृकलासाहिकपिश्वापदपक्षिभिः॥

**अस5.13**
केशास्थितुषभस्मादिराशौ समधिरोहणम्।
शून्यानां ग्रामदेशानां दर्शनं शुष्यतोऽम्भसः॥

**अस5.14**
ज्योतिर्गिरीणां पततां ज्वलतां च महीरुहाम्॥

**अस5.15**
पीनसश्वासकासांसमूर्धस्वररुजोऽरुचिः।
ऊर्ध्वं विट्स्रंससंशोषावधश्छरिदिस्तु कोष्ठगे॥

**अस5.16**
तिर्यक्स्थे पार्श्वरुक्दोषे सन्धिगे भवति ज्वरः।
रूपाण्येकादशैतानि जायन्ते राजयक्ष्मिणः॥

**अस5.17**
तेषामुपद्रवान् विद्यात् कण्ठोद्ध्वंसमुरोरुजम्। जृम्भाङ्गमर्दनिष्ठीववह्निसादास्यपूतिताः॥

**अस5.18**
तत्र वाताच्छिरःपार्श्वशूलमंसाङ्गमर्दनम्।
कण्ठोद्ध्वंसः स्वरभ्रंशः पित्तात् पादास्यपाणिषु॥

**अस5.19**
दाहोतिसारोऽसृक्छर्दिर्मुखगन्धो ज्वरो मदः।
कफादरोचकश्छर्दिः कासो मूर्धाङ्गगौरवम्॥

**अस5.20**
प्रसेकः पीनसः श्वासः स्वरसादोऽल्पवह्निता॥

**अस5.21**
दोषैर्मन्दानलत्वेन सोपलेपैः कफोल्बणैः।
स्रोतोमुखेषु रुद्धेषु धातूष्मस्वल्पकेषु च॥

**अस5.22**
विदह्यमानः स्वस्थाने रसस्तांस्तानुपद्रवान्।
कुर्यादगच्छन् मांसादीनसृक् चोर्ध्वं प्रधावति॥

**अस5.23**
पच्यते कोष्ठ एवान्नमन्नपक्त्रैव चास्य यत्।
प्रायोऽस्मान्मलतां यातं नैवालं धातुपुष्टये॥

**अस5.24**
रसोऽप्यस्य न रक्ताय मांसाय कुत एव तु।
अवष्टब्धः स शकृता केवलं वर्तते क्षयी॥

**अस5.25**
लिङ्गेष्वल्पेष्वपि क्षीणं व्याध्यौषधबलाक्षमम्।
वर्जयेत् साधयेदेव सर्वेष्वपि ततोऽन्यथा॥

**अस5.26**
दोषैर्व्यस्तैः समस्तैश्च क्षयात् षष्ठश्च मेदसा।
स्वरसादो भवेत्तत्र क्षामो रूक्षश्चलः स्वरः॥

**अस5.27**
शूकपूर्णाभकण्ठत्वं स्निग्धोष्णोपशयोऽनिलात्।
पित्तात्तालुगले दाहः शोष उक्तावसूयनम्॥

**अस5.28**
लिम्पन्निव कफात् कण्ठं मन्दः खुरखुरायते।
स्वरो विबद्धः सर्वैस्तु सर्वलिङ्गः क्षयात् कषेत्॥

**अस5.29**
धूमायतीव चात्यर्थं मेदसा श्लेष्मलक्षणः।
कृच्छ्रलक्ष्याक्षरश्चात्र सर्वैरन्त्यं च वर्जयेत्॥

**अस5.30**
अरोचको भवेद्दोषैर्जिह्वाहृदयसंश्रयैः।
सन्निपातेन मनसः सन्तापेन च पञ्चमः॥

**अस5.31**
कषायतिक्तमधुरं वातादिषु मुखं क्रमात्।
सर्वोत्थे विरसं शोकक्रोधादिषु यथामलम्॥

**अस5.32**
छर्दिर्दोषैः पृथक् सर्वैर्द्विष्टैरर्थैश्च पञ्चमी।
उदानो विकृतो दोषान् यूसर्वास्वप्यूर्ध्वमस्यति॥

**अस5.33**
तासूत्क्लेशास्यलावण्यप्रसेकारुचयोऽग्रगाः।
नाभिं पृष्ठं रुजन् वायुः पार्श्वेचाहारमुत्क्षिपेत्॥

**अस5.34**
ततो विच्छिन्नमल्पाल्पं कषायं फेनिलं वमेत्।
शब्दोद्गारयुतं कृष्णमच्छं कृच्छ्रेण वेगवत्॥

**अस5.35**
कासास्यशोषहृन्मूर्धस्वरपीडाक्लमान्वितः।
पित्तात् क्षारोदकनिभं धूम्रं हरितपीतकम्॥

**अस5.36**
सासृगम्लं कटूष्णं च तृण्मूर्छादाहतापवान्।
कफात् स्निग्धं घनं श्वेतं श्लेष्मतन्तुगवाक्षितम्॥

**अस5.37**
मधुरं लवणं भूरिप्रसक्तं लोमहर्षणम्।
मुखश्वयथुमाधुर्यतन्द्राहृल्लासकासवान्॥

**अस5.38**
सर्वलिङ्गा मलैः सर्वै रिष्टोक्ता याच तां त्यजेत्।
पूत्यमेध्याशुचिद्विष्टदर्शनश्रवणादिभिः॥

**अस5.39**
तप्ते चित्ते हृदि क्लिष्टे छर्दिर्द्विष्टार्थयोगजा॥

**अस5.40**
वातादीनेव विमृशेत् कृमितृष्णामदौहृदे।
शूलवेपथुहृल्लासैर्विशेषात् कृमिजां वदेत्॥

**अस5.41**
कृमिहृद्रोगलिग्गैश्च स्मृताः पञ्च तु हृद्गदाः।
तेषां गुल्मनिदानोक्तैः समुत्थानैश्च सम्भवः॥

**अस5.42**
वातेन शूल्यतेऽत्यर्थं तुद्येते स्फुटतीव च।
भिद्यते शुष्यति स्तब्धं हृदयं शून्यता द्रवः॥

**अस5.43**
अकस्माद्दीनता शोको भयं शब्दासहिष्णुता।
वेपथुर्वेष्टनं मोहः श्वासरोधोऽल्पनिद्रता॥

**अस5.44**
पित्तात्तृष्णा भ्रमो मूर्च्छा स्वेदोऽम्लकःक्लमः।
छर्दनं चाम्लपित्तस्य धूमकः पीतता ज्वरः॥

**अस5.45**
श्लेष्मणा हृदयं स्तब्धं भारि कंसाश्मगर्भवत्।
कासाग्निसादनिष्ठीवनिद्रालस्यारुचिज्वराः॥

**अस5.46**
सर्वलिङ्गस्त्रिभिर्दोषैः कृमिभिः श्यावनेत्रता।
तमःप्रवेशो हृल्लासः शोषः कण्डूः कफस्रुतिः॥

**अस5.47**
हृदयं प्रततञ्चात्र क्रकचेनेव दार्यते।
चिकित्सेदामयं घोरं तं शीघ्रं शीघ्रकारिणम्॥

**अस5.48**
वातात् पित्तात् कफात् तृष्णा सन्निपाताद्रसक्षयात्।
षष्ठी स्यादुपसर्गाच्च वातपित्ते तु कारणम्॥

**अस5.49**
सर्वासु तत्प्रकोपो हि सौम्यधातुप्रशोषणात्।
सर्वदेहभ्रमोत्कम्पतापतृट्दाहमोहकृत्॥

**अस5.50**
जिह्वामूलगलक्लोमतालुतोयवहाः सिराः।
संशोष्य तृष्णा जायन्ते तासां सामान्यलक्षणम्॥

**अस5.51**
मुखशोषो जलातृप्तिरन्नद्वेषः स्वरक्षयः।
कण्ठौष्ठजिह्वाकार्कश्यं जिह्वानिष्क्रमणं क्लमः॥

**अस5.52**
प्रलापश्चित्तविभ्रंशस्तृड्ग्रहोक्तास्तथामयाः॥

**अस5.53**
मारुतात् क्षामता दैन्यं शङ्खतोदः शिरोभ्रमः।
गन्धाज्ञानास्यवैरस्यश्रुतिनिद्राबलक्षयाः॥

**अस5.54**
शीताम्बुपानाद्वृद्धिश्च पित्तान्मूर्छास्यतिक्तता।
रक्तेक्षणत्वं प्रततं शोषो दाहोऽतिधूमकः॥

**अस5.55**
कफो रुणद्धि कुपितस्तोयवाहिषु मारुतम्।
स्रोतस्सु सकफस्तेन पङ्कवच्छोष्यते ततः॥

**अस5.56**
शूकैरिवाचितः कण्ठो निद्रा मधुरवक्त्रता।
आध्मानं शिरसो जाड्यं स्तैमित्यच्छर्द्यरोचकाः।
आलस्यमविपाकश्च सर्वैः स्यात् सर्वलक्षणा॥

**अस5.57**
आमोद्भवा च भक्तस्य संरोधाद्वातपित्तजा।
उष्णक्लान्तस्य सहसा शीताम्भो भजतस्तृषम्॥

**अस5.58**
ऊष्मा रुद्धो गतः कोष्ठं यां कुर्यात् पित्तजैव सा।
या च पानातिपानोत्था तीक्ष्णाग्नेःस्नेहजा च या॥

**अस5.59**
स्निग्धगुर्वम्ललवणभोजनेन कफोद्भवा।
तृष्णा रसक्षयोक्तेन लक्षणेन क्षयात्मिका॥

**अस5.60**
शोषमेहज्वराद्यन्यदीर्घरोगोपसर्गतः।
या तृष्णा जायते तीव्रा सोपसर्गात्मिका स्मृता॥

**इति पञ्चमोऽध्यायः॥**

# अष्टाङ्गसंग्रहः निदानस्थानम् अध्याय ६-१०

https://sa.wikisource.org/s/9zk

**अष्टाङ्गसंग्रहः**

अथ षष्ठोऽध्यायः।

**अस6.1**
अथातो मदात्ययनिदानं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अस6.2**
तीक्ष्णोक्ष्णरूक्षसूक्ष्माम्लं व्यवाय्याशुकरं लघु।
विकाशि विशदं मद्यमोजसोऽस्माद्विपर्ययः॥

**अस6.3**
तीक्ष्णादयो विषेऽप्युक्ताश्चित्तोपप्लाविनो गुणाः।
जीवितान्ताय जायन्ते विषे तूत्कर्षवृत्तितः॥

**अस6.4**
तीक्ष्णादिभिर्गुणैर्मद्यं मन्दादीनोजसो गुणान्।
दशभिर्दश सङ्क्षोभ्य चेतो नयति विक्रियाम्॥

**अस6.5**
आद्ये मदे द्वितीये तु प्रमादायतने स्थितः।
दुर्विकल्पहतो मूढः सुखमित्यवबुध्यते॥

**अस6.6**
मध्यमोत्तमयोः सन्धिं प्राप्य राजसतामसः।
निरङ्कुश इव व्यालो न किञ्चिन्नाचरेज्जडः॥

**अस6.7**
इयं भूमिरवद्यानां दौश्शील्यस्येदमास्पदम्।
एकोऽयं बहुमार्गाया दुर्गतेर्देशिकः परम्॥

**अस6.8**
निश्चेष्टः शववच्छेते तृतीये तु मदे स्थितः।
मरणादपि पापात्मा गतः पापतरां दशाम्॥

**अस6.9**
धर्माधर्मं सुखं दुःखमर्थानर्थं हिताहितम्।
यदासक्तो न जानाति कथं तच्छीलयेद्बुधः॥

**अस6.10**
मद्ये मोहो भयं शोकः क्रोधो मृत्युश्च संश्रिताः।
सोन्मादमदमूर्च्छायाः सापस्मारापतानकाः॥

**अस6.11**
यत्रैकः स्मृतिविभ्रंशस्तत्र सर्वमसाधु यत्।
अयुक्तियुक्तमन्नं हि व्याधये मरणाय वा।
मद्यं त्रिवर्गधीधैर्यलज्जादेरपि नाशनम्॥

**अस6.12**
नातिमाद्यन्ति बलिनः कृताहारा महाशनाः।
स्निग्धाः सत्ववयोयुक्ता मद्यनित्यास्तदन्वयाः।
मेदःकफाधिका मन्दवातपित्ता दृढाग्नयः॥

**अस6.13**
विपर्ययेऽतिमाद्यन्ति विस्रब्धाः कुपिताश्च ये।
मद्येन चाम्लरूक्षेण साजीर्णे बहुनाति च॥

**अस6.14**
वातात् पित्तात् कफात् सर्वैश्चत्वारः स्युर्मदात्ययाः।
सर्वेऽपि सर्वैर्जायन्ते व्यपदेशस्तु भूयसा॥

**अस6.15**
सामान्यं लक्षणं तेषां प्रमोहो हृदयव्यथा।
विड्भेदः सततं तृष्णा सौम्याग्नेयो ज्वरोऽरुचिः॥

**अस6.16**
शिरःपार्श्वास्थिरुक्कम्पो मर्मभेदस्त्रिकग्रहः।
उरोविबन्धस्तिमिरं कासश्वासप्रजागराः॥

**अस6.17**
स्वेदोऽतिमात्रं विष्टम्भः श्वयथुश्चित्तविभ्रमः।
प्रलापश्छर्दिरुत्क्लेशो भ्रमो दुःस्वप्नदर्शनम्॥

**अस6.18**
विशेषाज्जागरश्वासकम्पमूर्धरुजोऽनिलात्।
स्वप्ने भ्रमत्युत्पतति प्रेतैश्च सह भाषते॥

**अस6.19**
पित्ताद्दाहज्वरस्वेदमोहातीसारतृड्भ्रमाः।
देहो हरितहारिद्रो रक्तनेत्रकपोलता।
श्लेष्मणा छर्दिहृल्लासनिद्रोदर्दाङ्गगौरवम्॥

**अस6.20**
सर्वजे सर्वलिङ्गत्वम् मुक्त्वा मद्यं पिबेत्तु यः।
सहसानुचितं चान्यत्तस्य ध्वंसकविक्षयौ॥

**अस6.21**
भवेतां मारुतात् कष्टौ दुर्बलस्य विशेषतः।
ध्वंसके श्लेष्मनिष्ठीवः कण्ठशोषोऽतिनिद्रता॥

**अस6.22**
शब्दासहत्वं तन्द्रा च विक्षयेऽङ्गशिरोऽतिरुक्।
हृत्कण्ठरोधः सम्मोहः कासस्तृष्णा वमिर्ज्वरः॥

**अस6.23**
निवृत्तो यस्तु मद्येभ्यो जितात्मा बुद्धिपूर्वकृत्।
विकारैः स्पृश्यते जातु न स शारीरमानसैः॥

**अस6.24**
रजोमोहाहिताहारपरस्य स्युस्त्रयो गदाः।
रसासृक्चेतनावाहिस्रोतोरोधसमुद्भवाः।
मदमूर्च्छायसन्यासा यथोत्तरबलोत्तराः॥

**अस6.25**
मदोऽत्र दोषैः सर्वैश्च रक्तमद्यविषैरपि।
सक्तानल्पद्रुताभाषश्चलस्खलितचेष्टितः॥

**अस6.26**
रूक्षश्यावारुणतनुर्मदे वातोद्भवे भवेत्।
पित्तेन क्रोधनो रक्तपीताभः कलहप्रियः॥

**अस6.27**
स्वल्पसम्बद्धवाक् पाण्डुः कफाद् ध्यानपरोऽलसः।
सर्वात्मा सन्निपातेन रक्तात् स्तब्धाङ्गदृष्टिता॥

**अस6.28**
पित्तलिङ्गं च मद्येन विकृतेहास्वराङ्गता।
विषात्कम्पोऽतिनिद्रा च सर्वेभ्योऽभ्यधिकश्च सः।
लक्षयेल्लक्षणोत्कर्षाद्वातादीन् शोणितादिषु॥

**अस6.29**
अरुणं नीलकृष्णं वा खं पश्यन् प्रविशेत्तमः।
शीघ्रं च प्रतिबुध्येत हृत्पीडा वेपथुर्भ्रमः॥

**अस6.30**
कार्श्यं श्यावारुणा छाया मूर्च्छाये मारुतात्मके।
पित्तेन रक्तं पीतं वा नभः पश्यन् विशेत्तमः॥

**अस6.31**
विबुध्येत च सस्वेदो दाहतृट्तापपीडितः।
भिन्नविण्नीलपीताभो रक्तपीताकुलेक्षणः॥

**अस6.32**
कफेन मेघसङ्क्शाशं पश्यन्नाकाशमाविशेत्।
तमश्चिराच्च बुध्येत सहृल्लासप्रसेकवान्॥

**अस6.33**
गुरुभिः स्तमितैरङ्गैरार्द्रचर्मावनद्धवत्।
सर्वाकृतिस्त्रिभिर्दोषैरपस्मार इवापरः॥
पातयत्याशु निश्चेष्टं विना बीभत्सचेष्टितैः॥

**अस6.34**
दोषेषु मदमूर्च्छायाः कृतवेगेषु देहिनाम्।
स्वयमेवोपशाम्यन्ति सन्न्यासो नौषधैर्विना॥

**अस6.35**
वाग्देहमनसां चेष्टामाक्षिप्यातिबला मलाः।
सन्न्यासं सन्निपतिताः प्राणायतनसंश्रयाः॥

**अस6.36**
कुर्वन्ति तेन पुरुषः काष्ठभूतो मृतोपमः।
म्रियेत शीघ्रं शीघ्रं चेच्चिकित्सा न प्रयुज्यते॥

**अस6.37**
अगाधे ग्राहबहुले सलिलौघ इवातटे।
सन्न्यासे विनिमज्जन्तं नरमाशु निवर्तयेत्॥

**अस6.38**
मदमानरोषतोषप्रभृतिभिररिभिर्निजैः परिष्वङ्गः।
युक्तायुक्तं च समं युक्तिवियुक्तेन मद्येन॥

**अस6.39**
बलकालदेशसात्म्यप्रकृतिसहायामयवयांसि।
प्रविभज्य तदनुरूपं यदि पिबति ततः पिबत्यमृतम्॥
इति षष्ठोऽध्यायः॥

अथ सप्तमोऽध्यायः।

**अस7.1**
अथातोऽर्शसां निदानं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अस7.2**
अरिवद्विशसन्तीत्यर्शांसि तानि पुनर्बहुप्रकाराणि सुबहूपद्रवाणि च पायुमेढ्रादिसंश्रया मांसकीलाः।
समासतस्तु द्विविधान्यर्शांसि सहजानि जन्मोत्तरकालजानि च।
पुनश्च द्विविधानि शुष्काण्यार्द्राणि च।
सर्वेषां पुनरधिष्ठानं मेदो मांसं त्वक् च।
स्थूलान्त्रप्रतिबद्धोऽर्धपञ्चाङ्गुलो हि गुदः।
तस्मिन् पूर्व मुक्ता वलीसंज्ञास्तिस्रः पेश्योऽध्यर्धाङ्गुलाः।
ताः प्रवाहिणी विसर्जनी संवरणी च।
रोमान्तादध्यर्धयवं गुदौष्ठमाहुः।
प्रथमा तु गुदौष्ठादङ्गुलमात्रो॥

**अस7.3**
तत्र सहजानां गुदवलीबीजोपतप्तिरायतनम्।
तस्या द्विविधो हेतुः मातापित्रोरपचारो दैवं च।
ताभ्यां सन्निपातप्रकोपः।
तस्मात्तान्यसाध्यानि।
एतेन कुलजाः सर्वे विकारा व्याख्याताः॥

**अस7.4**
विशेषतस्तु सहजानि दुर्दर्शनपरुषपाण्डूपचितदारुणान्यन्तर्मुखानि बहूपद्रवोपद्रुतानि भवति॥

**अस7.5**
अथेतराणि षड्विधानि पृथग्दोषैः संसृष्टैः सन्निपतितैः शोणितेन च।
तत्र वातश्लेष्मोत्तराणि शुष्काणि रक्तपित्तोत्तराण्यार्द्राणि॥

**अस7.6**
दोषप्रकोपहेतुस्तु प्रागुक्तः।
स यदा मलोपचयमादधाति पुनश्चोत्कटकविषमकठिनासनसेवनादुद्भ्रान्तयानोष्ट्रादिप्रयाणादतिव्यवायद्बास्तिनेत्रासम्यक्प्रणिधानादिना गुदक्षणनादभीक्ष्णं शीताम्बुसंस्पर्शाच्चैललोष्टतृणादिसङ्घर्षात् प्रततातिप्रवाहणाद्वातमूत्रपुरीषवेगोदीरणधारणात् स्त्रीणां चमगर्भभ्रंशाद्गर्भोत्पीडनाद्विषमप्रसूतेरेवंविधश्चापरः कुपितो वायुरपानस्तं मलमुपचितमधोगतमासाद्य गुदवलीष्वाधत्ते।
ततस्तास्वभिष्यण्णास्वर्शांसि सम्भवन्ति॥

**अस7.7**
तेषां पूर्वरूपाणि कृच्छ्रात् पक्तिरान्त्रकूजनमुद्गारबाहुल्यमम्लकोऽन्नाश्रद्धाविष्टम्भोश्मगर्भाभनाभित्वमाटोपोऽधस्तात् कृच्छ्रेण सशब्दस्य च वायोः प्रवृत्तिर्बहुमूत्रत्वमल्पपुरीषता गुदपरिकर्तनं सक्थिरदनमक्ष्णोः श्वयथुरविमलेन्द्रियत्वमालस्यं तन्द्रा कार्श्यं दौर्बल्यमाशङ्का ग्रहणीदोषशोफोदरपाण्डुरोगगुल्मेषु।
जातेषु चैतानि लिङ्गानि प्रव्यक्ततराणि भवन्ति॥

**अस7.8**
तैः खल्वधोमार्गोपरोधाद्वायुरपानो निवर्तमानः समानव्यानोदानप्राणान् पित्तश्लेष्माणौ च प्रकोपयन्नन लमुपमृद्नाति॥

**अस7.9**
अथ सर्व एवार्शसो भवत्यतिकृशो विवर्णः क्षामो दीनः प्रचुरविबद्धवातमूत्रपुरीषोऽश्मरीशर्करावाननियतविबद्धमुक्तामपक्वभिन्नशुष्कवर्चास्तथान्तराश्वेतपाण्डुहरितपीतरक्तारुणतनुसान्द्रीपच्छिलोपवेशी नाभिवङ्क्षणोद्देशप्रचुरपरिकर्तिकान्वितः सगुदशूलप्रवाहिकाप्रहर्षप्रमोहोऽल्पशुक्रप्रजोऽल्पभुक् सिरासन्ततगात्रः क्रोधनो दुरुपचारः क्रोधनो दुरुपचारः कासश्वासपीनसतृष्णारोचकपाणिपादवदनाक्षिकूटश्वयथुक्षवथुवेपथुवमथुपरीतस्तैमिरिकः शिरःशूली क्षामभिन्नस्वरः कर्णरोगी सज्वरः साङ्गमर्दः सर्वपर्वास्थिशूलोऽन्तरान्तरा हृदयकुक्षिपार्श्वपृष्ठबस्तित्रिकग्रहोपतप्तः प्रध्यानपरः परमलसश्च॥

**अस7.10**
तत्र वातोल्बणानि शुष्कम्लानकठिनपरुषरूक्षश्यावारुणानि तीक्ष्णस्फुटितमुखानि विषममध्यानि कदम्ब पुष्पतुण्डिकेरीकर्कन्धुसिद्धार्थविम्बीखर्जूरफलप्रमाणानि वक्राणि मिथो विसदृशानि कटीपार्श्वादिष्वधिकवेदनानि सशूलोदावर्तकराणि गुल्माष्ठीलाप्लीहोदराणि चास्य तन्निमित्तान्येव।
कृष्णत्वङ्नखनयनवदनमलाश्च भवन्ति॥

**अस7.11**
पित्तोल्बणानि नीलाग्राणि रक्तपीतकृष्णानि मृदुशिथिलानि स्पर्शासहानि विस्रगन्धीनि तनूनि तनुरक्तस्रावीणि दाहपाकवन्ति ज्वरमोहारुचिकराणि यकृत्प्रकाशानि शुकजिह्वाजलौकावक्त्रसदृशानि यवमध्यानि प्रक्लिन्नानि भिन्नपीतवर्चांसि हारिद्रत्वङ्नखादिकराणि च॥

**अस7.12**
श्लेष्मोल्बणानि महामूलानि स्थिरस्निग्धपाण्डुवृत्तोपचितानि गुरुस्तब्धश्लक्ष्णपिच्छिलानि सुप्तसुप्तानि स्पर्शक्षमाणि करीरपनसास्थिगोस्तनाकाराण्यतिमात्रोत्थानप्रवाहिकावङ्क्षणानाहनाभिपरिकर्तिकाहृल्लासप्रसके
कासश्वासपीनसारुचिच्छर्दिकृछ्रमूत्रप्रमेहशीतज्वरशोफशिरोगौरवेन्द्रियोपलेपाग्निमार्दवक्लैब्यामविकारप्रबलानि न भिद्यन्ते न स्रवन्ति कण्डूबहुलानि सश्लेष्मवसाप्रकाशातिमलोपवेशीनि शुक्लत्वङ्नखादि कराणिच।
लक्षणसङ्करात् संसर्गसन्निपातजानि विभजेत्॥

**अस7.13**
रक्तोल्बणानि तु वटप्ररोहविद्रुमकाकनन्दिकाफलाभानि पित्तलक्षणानि च तथा गाढपुरीषप्रतिपीडितान्यत्यर्थं दुष्टमुष्णमसृक् सहसा विसृजन्ति।
तस्यातिप्रवृत्तौ रक्तक्षयोपद्रवा भवन्तीति।
भवति चात्र श्लोकः॥

**अस7.14**
मुद्गकोद्रवजूर्णाह्वकरीरचणकादिभिः।
रूक्षैः सङ्ग्राहिभिर्वायुः स्वे स्थाने कुपितो बली॥

**अस7.15**
अधोवहानि स्रोतांसि संसुध्याधः प्रशोषयन्।
पुरीषं वातविण्मूत्रसङ्गं कुर्वीत दारुणम्॥

**अस7.16**
तेन तीव्ररुजा कोष्ठपृष्ठहृत्पार्श्वगा भवेत्।
आध्मानमुदरावेष्टो हृल्लासः परिकर्तनम्॥

**अस7.17**
बस्तौ च सुतरां शूलं गण्डे श्वयथुसम्भवः।
पवनस्योर्ध्वगामित्वं ततश्छर्द्यरुचिज्वराः॥

**अस7.18**
हृद्रोगग्रहणीदोषमूत्रसङ्गप्रवाहिकाः।
बाधिर्यतिमिरश्वासशिरोरुक्कासपीनसाः॥

**अस7.19**
मनोविकारस्तृष्णास्रपित्तगुल्मोदरादयः।
ते ते च वातजा रोगा जायन्ते भृशदारुणाः॥

**अस7.20**
दुर्नाम्नामित्युदावर्तः परमोऽयमुपद्रवः।
वाताभिभूतकोष्ठानां तैर्विनापि स जायते॥

**अस7.21**
सहजानि त्रिदोषाणि यानि चाभ्यन्तरे बलौ।
स्थितानि तान्यसाध्यनि याप्यन्तेग्निबलादिभिः॥

**अस7.22**
द्वन्द्वजानि द्वितीयायां बलौ यान्याश्रितानि च।
कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च॥

**अस7.23**
बाह्यायां तु बलौ जातान्येकदोषोल्बणानि च।
अर्शांसि सुखसाध्यानि नचिरोत्पतितानि च॥

**अस7.24**
मेढ्रादिष्वपि वक्ष्यन्ते यथास्वं नाभिजानि तु।
गण्डूपदास्यरूपाणि पिच्छिलानि मृदूनि च॥

**अस7.25**
व्यानो गृहीत्वा श्लेष्माणं करोत्यर्शस्त्वचो बहिः।
कीलोपमं स्थिरखरं चर्मकीलं तु तं विदुः॥

**अस7.26**
वातेन तोदपारुष्यं पित्तादसितरक्तता।
श्लेष्मणा स्निग्धता तस्य ग्रथितत्वं सवर्णता॥

**अस7.27**
अर्शसां प्रशमे यत्नमाशु कुर्वीत बुद्धिमान्।
तान्याशु हि गुदं बध्वा कुर्युर्बद्धगुदोदरम्॥
इति सप्तमोऽध्यायः॥

अथाष्टमोऽध्यायः।

**अस8.1**
अथातोऽतीसारग्रहणीदोषनिदानं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अस8.2**
अतीसारः स सुतरां जायतेऽत्यम्बुपानतः॥

**अस8.3**
कृशशुष्कामिषासात्म्यतिलपिष्टविरूढकः।
मद्यरूक्षातिमात्रान्नैरर्शोभिः स्नेहविभ्रमात्॥

**अस8.4**
कृमिभ्यो वेगरोधाच्च तद्विधैः कुपितोऽनिलः।
विस्रंसयत्यधोब्धातुं हत्वा तेनैव चानलम्॥

**अस8.5**
व्यापद्यानुशकृत् कोष्ठं पुरीषं द्रवतां नयन्।
प्रकल्पतेऽतिसाराय लक्षणं तस्य भाविनः॥

**अस8.6**
तोदो हृद्गुदकोष्ठेषु गात्रसादो मलग्रहः।
आध्यानमविपाकश्च तत्र वातेन विज्जलम्॥

**अस8.7**
अल्पाल्पं शब्दशूलाढ्यं विबद्धमुपवेश्यते।
रूक्षं सफेनमच्छं च ग्रथितं वा मुहुर्मुहुः॥

**अस8.8**
तथा दग्धगुडाभासं सपिच्छापरिकर्तिकम्।
शुष्कास्यो भ्रष्टपायुश्च हृष्टरोमा विनिष्टनन्॥

**अस8.9**
पित्तेन पीतमसितं हारिद्रं शाद्वलप्रभम्।
सरक्तमतिदुर्गन्धं तृण्मूर्च्छास्वेददाहवान्॥

**अस8.10**
सशूलः पायुसन्तापपाकवान् श्लेष्मणा घनम्।
पिच्छिलं तन्तुमच्छवेतं स्निग्धमामं कफान्वितम्॥

**अस8.11**
अभीक्ष्णं गुरु दुर्गन्धं विबद्धमनुबद्धरुक्।
निद्रालुरलसोऽन्नद्विडल्पाल्पं सप्रवाहिकम्॥

**अस8.12**
सरोमहर्षः सोत्क्लेशो गुरुबस्तिगुदोदरः।
कृतेऽप्यकृतसंज्ञश्च सर्वात्मा सर्वलक्षणः॥

**अस8.13**
भयेन क्षोभिते चित्ते सपित्तो द्रावयेच्छकृत्।
वायुस्ततोऽतिसार्येत क्षिप्रमुष्णं द्रवं प्लवम्॥

**अस8.14**
वातपित्तसमं लिङ्गैराहुस्तद्वच्च शोकतः।
अतीसारः समासेन द्वेधा सामो निरामकः॥

**अस8.15**
सासृङ्निरस्रस्तत्राद्ये गौरवादप्सु मज्जति।
शकृद्दुर्गन्धमाटोपविष्टम्भार्तिप्रसेकिनः॥

**अस8.16**
विपरीतो निरामस्तु कफात् पक्वोऽपि मज्जति॥

**अस8.17**
अतीसारेषु यो नातियत्नवान् ग्रहणीगदः।
तस्य स्यादग्निविध्वंसकरैरन्यस्य सेवितैः॥

**अस8.18**
सामं शकृन्निरामं वा जीर्णे येनातिसार्यते।
सोऽतिसारोऽतिसरणादाशुकारी स्वभावतः॥

**अस8.19**
सामं सान्नमजीर्णेऽन्ने जीर्णे पक्वं तु नैव वा।
अकस्माद्वा मुहुर्बद्धमकस्माच्छिथिलं मुहुः॥

**अस8.20**
चिरकृद्ग्रहणीदोषः सञ्चयाच्चोपवेशयेत्॥

**अस8.21**
स चतुर्धा पृथग्दोषैः सन्निपाताच्च जायते।
प्राग्रूपं तस्य सदनं चिरात् पचनमम्लकः॥

**अस8.22**
प्रसेको वक्त्रवैरस्यमरुचिस्तृट् क्लमो भ्रमः।
आनद्धोदरता छर्दिःकर्णक्ष्वेडान्त्रकूजनम्॥

**अस8.23**
सामान्यलक्षणं कार्श्यं धूमकस्तमको ज्वरः।
मूर्छा शिरोरुग्विष्टम्भः श्वयथुः करपादयोः॥

**अस8.24**
तत्रानिलात्तालुशोषस्तिमिरं कर्णयोः स्वनः।
पार्श्वोरुवङ्क्षणग्रीवारुजाभीक्ष्णं विषूचिका॥

अस8.25। रसेषु गृद्धिः सर्वेषु क्षुत्तृष्णा परिकर्तिका।
जीर्णे जीर्यति चाध्मानं भुक्ते स्वास्थ्यं समश्नुते॥

**अस8.26**
वातहृद्रोगगुल्मार्शः प्लीहपाण्डुत्वशाङ्कितः।
चिराद्दुःखं द्रवं शुष्कः तन्वामं शब्दफेनवत्॥

**अस8.27**
पुनःपुनः सृजेद्वर्चः पायुरुक्श्वासकासवान्।
पित्तेन नीलं पीताभं पीताभः सृजति द्रवम्॥

**अस8.28**
पूत्यम्लोद्गारहृत्कण्ठदाहारुचितृडर्दितः।
श्लेष्मणा पच्यते दुःखमन्नं छर्दिररोचकः॥

**अस8.29**
आस्योपदेहनिष्ठीवकासहृल्लासपीनसाः।
हृदयं मन्यते स्त्यानमुदरं स्तिमितं गुरु॥

**अस8.30**
उद्गारो दुष्टमधुरः सदनं स्त्रीष्वहर्षणम्।
भिन्नामश्लेष्मसंसृष्टगुरुवर्चःप्रवर्तनम्॥

**अस8.31**
अकृशस्यापि दौर्बल्यं सर्वजे सर्वसङ्करः॥

**अस8.32**
सिराविभागे ये चोक्ता विषमाद्यास्त्रयोऽग्नयः।
तेऽपि स्युर्ग्रहणीदोषाः समस्तु स्वास्थ्यकारणम्॥

**अस8.33**
वातव्याध्यश्मरीकुष्ठमेहोदरभगन्दराः।
अर्शांसि ग्रहणीत्यष्टौ महारोगाः सुदुस्तराः॥
इति अष्टमोऽध्यायः॥

अथ नवमोऽध्यायः।

**अस9.1**
अथातो मूत्रघातनिदानं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अस9.2**
विंशतिर्मूत्राघाता भवन्ति।
तद्यथा।
वातपित्तकफसन्निपातकृच्छ्राणि।
वातपित्तश्लेष्मशुक्राश्मर्यः।
वातबस्त्यष्ठीलाकुण्डलिकामूत्रातीतजठरोत्सङ्गग्रन्थिशुक्रविड्विघातोष्णवातमूत्रक्षयावसादाश्चेति॥

**अस9.3**
तत्र वातबस्त्यादयो नव वातोल्बणाः।
ततो द्वौ वातपित्तोल्बणौ।
अन्त्यः कफपित्तोल्बणः॥

**अस9.4**
सर्वेषां पुनर्मूत्ररोगाणामधिष्ठानं बस्तिः।
स मर्मस्वभिहितः प्राक्।
स चाधोमुखोऽपि मूत्रवहासु नाडिषु सूक्ष्ममुखसहस्रनिष्यन्देन मूत्राख्येनाविरतं नवो घट इवाप्सु निमग्नमुखोपि पार्श्वेभ्योऽम्भसापूर्यते तैरेव च स्रोतोभिर्वातादयोऽपि दुष्टाः प्रविश्य बस्तिं यथास्वमाघातान् प्रमेहांश्च जनयन्ति॥

**अस9.5**
तत्राल्पशो मुहुर्मुहुर्बस्तिमेढ्रवङ्क्षणेषु तीव्रशूलः कृच्छ्रान्मूत्रयति वातकृच्छ्रे।
सदाहं सरुजं रक्तं पीतं कृष्णं वा पित्तकृच्छ्रे।
बस्तिमेढ्रयोर्गौरवं शोफो मूत्रं च सपिच्छं मेहति कफकृच्छ्रे।
सर्वलक्षणसन्निपातेन सन्निपातकृच्छ्रे।
स च कृच्छ्रतमः॥

**अस9.6**
यदा तु वायुर्बस्तिमुखमावृत्य सपित्तं सकफं सशुक्रं वा मूत्रं परिशोषयति तदा क्रमेण गोरिव पित्ताद्रोचना मणिकस्येव स्वच्छादपि जलात् पङ्कस्तद्वदश्मर्यभिनिर्वर्तते।
सर्वा च सा श्लेष्माश्रया।
अथास्याः पूर्वरूपाणि ज्वरो बस्त्याध्मानमरुचिर्मूत्रकृच्छ्रं बस्तिशिरोमुष्कशेफसां वेदना बस्तगन्धित्वं मूत्रस्येति॥

**अस9.7**
सामान्यलिङ्गानि तु नाभिबस्तिमेवनीषु मेहतस्तया मार्गनिरोधने वेदना मूत्रधारासङ्गस्तद्व्यपाये च गोमेदकप्रकाशमनाविलमसितं सुसुखं मूत्रं विसृजति।
तत्सङ्क्षोभणाच्च सरुधिरम्।
धावनलङ्घनादिभिश्चास्य विविधा वेदना भवन्ति।
यथैव च पक्वाशयात् स्रस्तेन शकृताधिष्ठिते बस्तौ मूत्रं न प्रवर्तते तहाश्मर्यापि॥

**अस9.8**
तत्र वायुना बस्तिसेवनीमेहनेषु तीव्रवेदनार्दितो दन्तान् खादति नाभिं प्रपीडयति मेढ्रं मृद्नाति।
मुहुर्मुहुर्वेपथुमान् कृच्छ्रात्सवातं शकृद्विमुञ्चति।
विशीर्णधारं च मूत्रयत्यश्मरी चास्य श्यावा परुषा विषमा कदम्बपुष्पवत् कण्टकाचिता भवति।

पित्तेन पच्यमान इव दह्यते बस्तिः।
अश्मरी च रक्ता पीतावभासा कृष्णा भल्लातकास्थिसंस्थाना।
श्लेष्मणा भिद्यते निस्तुद्यत इव गुरुः शीतश्च बस्तिरश्मरी च श्वेता महती कुक्कुटाण्डप्रतिमा मधुवर्णा वा भवति।
प्रायेणैतास्तिस्रोऽश्मर्यो बालानां जायन्ते।
तेषामेव चाल्पबस्तित्वादल्पमांसोपचयत्वाच्च सुखग्रहणाहरणा भवन्ति॥

**अस9.9**
महतां तु शुक्राश्मरी शुक्रनिमित्ता भवति।
मैथुनविघाताच्छुक्रमुपस्थितमनिरस्यमानं विमार्गगमनिलो विगृह्य वृषणयोरन्तरे संहरति संहृत्योपशोषयति ततः शुष्कमश्मरी भवति।
सा शुक्रमार्गमावृणोति मूत्रकृच्छ्रं बस्तिवेदनां वृषणयोश्च श्वयथुमापादयति।
उत्पन्नमात्रायां च शुक्रं निरेति।
प्रपीडितमात्रे च तस्मिन्नेवावकाशे विलीयत इति॥

**अस9.10**
अश्मर्येव तु वायुनाअणुशो विभिन्ना शर्करेत्युच्यते।
अनुलोमे च मारुते सा सिकतेव मूत्रेण सह च्यवते॥

**अस9.11**
वायुस्तु मूत्रवेगरोधाद्बस्तिमुखमावृणोति।
ततो मूत्रसङ्गं वेदनां कण्डूं च करोति।
कदाचिच्च बस्तिं स्वस्थानात् प्रच्याव्य गर्भमिवोद्वृत्तं स्थूलं परिप्लुतं च कुरुते।
तत्र शूलस्पन्दनदाहोद्वेष्टनानि बिन्दुशश्च मूत्रस्रवणम्।
पीडिते च बस्तौ धारया प्रवृत्तिरयं द्विविधोऽपि वातबस्तिः कृच्छ्रसाध्यः तयोरपि द्वितीयोऽनिलप्रबलः कृच्छ्रसाध्यतरः॥

**अस9.12**
बस्तिविण्मार्गान्तरे वायुर्घनोन्नतं तीव्ररुजमचलमष्ठीलाभं ग्रन्थिं करोति।
तेनानिलविण्मूत्रसङ्गो भवत्याध्मानं च।
सा वाताष्ठीला।
विगुणो वायुः बस्तौ कुण्डलीभूतस्तीव्रशूलस्तम्भगौरवान्वितो मूत्रमाविध्याल्पशो वा प्रवर्तयन् भ्रमति सा वातकुण्डलिका।
मूत्रमतिवेलं विधार्य विमुच्यमानं न प्रवर्तते वाहमानस्य तु कृच्छ्रादल्पं प्रवर्तते तन्मूत्रातीतम्॥

**अस9.13**
मूत्ररोधादपानो वायुर्नाभेरधस्तात्तीव्ररुजमाध्मानं मलसङ्गं च कुर्वन्नुदरमभिपूरयेत् तन्मूत्रजठरम्।
मारुतेनाक्षिप्तं छिद्रवैगुण्येन वा मूत्रयतो मूत्रमल्पं बस्तौ नाले मणौ वा स्थित्वा तच्छेषगुरुमेढ्रस्य सरुजमरुजं वा शनैः स्रवेत् स मूत्रोत्सङ्गः।
बस्तिद्वारेऽल्पो वृत्तः शीघ्रसम्भवोऽश्मरीतुल्यलिङ्गो मूत्रग्रन्थिः॥

**अस9.14**
मूत्रितस्य व्यवायगमनाद्वातोद्धतं स्वस्थानाच्च्युतं शुक्रं मेहतो मूत्रस्य प्राक् पश्चाद्वा भस्मोदकसङ्काशं प्रवर्तते तन्मूत्रशुक्रम्।
वायुना पीडितं शकृन्मूत्रस्रोतः प्रपद्यते ततो विट्गन्धि विट्संसृष्टं च कृच्छ्रान्मूत्रयति स विड्विघातः।
अत्यध्वातपोष्णभोजनादिभिः पित्तं प्रवृद्धमनिलेरितं बस्तिमेढ्रगुददाहं कुर्वद्धरितहारिद्रक्तं सरक्तं वा मूत्रं कृच्छ्रात् प्रवर्तयेत् स तूष्णवातः।
वातपित्तं बस्तिमाश्रित्य मूत्रं सशूलदाहं क्षपयति स मूत्रक्षयः।
पित्तं श्लेष्मोभयमपि वा वातेन बस्तौ संहन्यते ततो मूत्रं सदाहं सरक्तं पीतं श्वेतं सान्द्रं कृच्छ्रप्रवृत्ति शुष्कं च शङ्खरोचनान्यतरचूर्णवर्णं सर्ववर्णयुक्तं वा भवति।
स मूत्रावसादः॥

**अस9.15**
इति विस्तरतः प्रोक्ता रोगा मूत्राप्रवृत्तिजाः।
निदानलक्षणैरूर्ध्वं वक्ष्यन्तेऽतिप्रवृत्तिजाः॥
इति नवमोऽध्यायः॥

अथ दशमोऽध्यायः।

**अस10.1**
अथातः प्रमेहनिदानं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अस10.2**
विंशतिः प्रमेहा भवन्ति।
तद्यथा।
कफादुदकेक्षुसान्द्रसुरापिष्टशुक्रसिकताशीतशनैर्लालाप्रमेहाः दश।
पित्तात् क्षारकालनीलहारिद्रमाञ्जिष्ठशोणितमेहाः षट्।
वाताद्वसामज्जहस्तिमधुमेहाश्चत्वार इति॥

**अस10.3**
तेषां यत्किञ्चिदाहारविहारजातं श्लेष्ममेदोमूत्रजननं स हेतुः।
तत्र वातपित्तमेदःक्लेदमांसशुक्ररसैरन्वितो बस्तिगतः श्लेष्मा प्रमेहान् जनयति।
तैः कफशोणिताभ्यां च युक्तं पित्तम्।
तैर्वसालसीकामज्जौजोभिश्च वायुः॥

**अस10.4**
त्रयाणामपि दोषाणां श्लेष्मा प्रमेहेषु प्राक् प्रकोपमापद्यते श्लेष्माधिष्ठानत्वान्मूत्रस्य।
तद्वृद्धेर्मेद एव च तेन प्रथमं दूष्यतेऽत्यन्तसभागत्वात्।
तदनन्तरं देहक्लेदादयः।
ततः श्लेष्मादिक्षये पित्तं प्रबलीभवच्छोणितमपि दूषयति।
तत्क्षयेऽपि वायुर्वसादीन् धातून् शरीरस्य परमसारभूतान् बस्तिमाकृष्य मूत्रेण सह विसृजति॥

**अस10.5**
तस्मात् कफपित्तवातजाः क्रमेण साध्ययाप्यासाध्याः।
तथा पित्तजाः संसृष्टदोषमेदःस्थानत्वाद्विरुद्धोपक्रमत्वाच्च।
वातजः पुनः क्षीणेषु धातुषु महात्ययतया विरुद्धोपक्रमत्वाच्च।
मेदसि तु नातिदुष्टे पित्तजा अपि साध्यतां गच्छेयुः॥

**अस10.6**
धातुसम्पर्कात् पुनः सर्वमेहेषु मूत्रमाविलं भूरि च भवति।
दोषाणां दूष्याणां चोत्कृष्टापकृष्टसंयोगेन मूत्रवर्णरसस्पर्शगन्धविशेषाद्वर्णानामिव शुक्लकृष्णादीनां शबलकल्माषादयः प्रमेहाणां प्रभेदा भवन्ति॥

**अस10.7**
तेषां पूर्वरूपाण्यतिवृद्धिर्नखादीनां जटिलीभावश्च केशानां माधुर्यमास्यस्य तालुकण्ठशोषः।
पिपासा मलाधिक्यं बहिःकाये कायच्छिद्रेषु च शीतेच्छा स्नेहः स्वेदः सुप्तता चाङ्गेषु पाणिपाददाहोतिमाधुर्यात् पिपीलिकोपसर्पणं विस्रगन्धता च मूत्रशरीरयोः शुक्लता च मूत्रे श्वासनिद्रातन्द्रालस्यप्रकर्षश्च॥

**अस10.8**
तत्र शीतं श्वेतमगन्धमच्छमुदकमिवोदकमेही मेहति।
इक्षुरसमिवातिमधुरं शीतमीषत्पिच्छिलाविलामिक्षुमेही।
पर्युषितं सान्द्रीभवत् सान्द्रमेही।
सुरातुल्यमुपरि प्रसन्नमधःसान्द्रं सुरामेही।
हृष्टरोमा पिष्टमिव सान्द्रं सितं च पिष्टमेही।
शुक्राभं शुक्रमिश्रं वा शुक्रमेही।
सरुजं ससिकतं सिकतामेही।
प्रायो मधुरमतिशीतं शीतमेही।
मन्दंमन्दं शनैःशनैः शनैर्मेही।
पिच्छिलं तन्तुबद्धमिव लालामेही।
वर्णगन्धरसस्पर्शैः स्रुतक्षारोपमं क्षारमेही।
उष्णं मषीकालं कालमेही।

सफेनमच्छमम्लं चाषपत्रनीलं नीलमेही।
कटुकं सदाहं हरिद्रायुक्तमिव हारिद्रमेही।
विस्रं मञ्जिष्ठोदकवर्णमिव मञ्जिष्ठामेही।
विस्रमुष्णं सलवणं शोणितसङ्काशं शोणितमेही।
वसामिश्रं वसां वा वसामेही।
मज्जमिश्रं मज्जानं वा मज्जमेही।
सलसीकं मधुरमवेगं लसीकयैव च विबद्धमनुबद्धमजस्रं मत्त इव हस्ती स्रवति हस्तिमेही॥

**अस10.9**
औजः स्निग्धमधुरं तद्रौक्ष्याद्वायुः कषायत्वेनोपसृजति तेन कषायमधुरानुयातं मध्विव मेहति मधुमेही।
स तु द्विधा कैश्चिदिष्यते।
धातुक्षयेणानिलकोपाद्दोषावरणेन वा।
तदावृतो हि वायुराहारप्रसादमादाय मुहुर्मुहुरनिमित्तं दोषलिङ्गानि वृद्धिक्षयौ चाविर्भावयन् कृच्छ्रसाध्यं मधुमेहं प्रवर्तयति।
सर्व एव चोपेक्ष्यमाणा मधुमेहत्वमायान्ति।
तस्मात्सर्वेऽपि मधुमेहशब्देनोच्यन्ते।
यतः सर्वेष्वपि प्राज्ञधिविव मधुरं मेहति मधुररसश्चास्य देहो भवतीति॥

**अस10.10**
तत्र प्रतिश्यायः शरीरशैथिल्यमरोचकाविपाकौ प्रसेकच्छर्दिर्निद्रा कासश्च श्लेष्मजानामुपद्रवा भवन्ति।
वृषणावदरणं बस्तिर्मेढ्रतोदोऽम्लकः पिपासा ज्वरो दाहो मूर्च्छातीसारः पाण्डुरोगश्च पित्तजानाम्।
हृद्ग्रहो लौल्यमनिद्रता कम्पः शूलं बद्धपुरीषत्वं शोषः कासः श्वासश्च वातजानाम्॥

**अस10.11**
अथैवमस्य मेदःक्लेदादिभिरभिष्यण्णदहेस्य दोषैरनुगतधातोः प्रमेहाभिवृद्धौ मांसलेष्ववकाशेषु सन्धिमर्मसु च प्रदेशविशेषाश्रयत्वात् प्राणापहारिण्यो भूयः कष्टतमोपद्रवा दश पिटका जायन्ते।
सुतरां चाधःकाये।
तदभिमुखा हि प्रमेहिणां दोषाः।
तद्यथा।
शराविका कच्छपिका जालिनी पुत्रिणी विदारिका सर्षपिका मसूरिकालजी विनता विद्रधिश्च॥

**अस10.12**
तत्र श्यावा क्लेदवेदनायुक्ता निम्नमध्योन्नतौष्ठा शरावसंस्थानप्रमाणा शराविका।
महामूलावगाढार्तितोदा श्लक्ष्णा कच्छपपृष्ठनिभा कच्छपिका।
महाशयार्तितोदा स्तब्धा स्निग्धस्राविणी सूक्ष्मच्छिद्रा मांससिराजालावृता जालिनी।
महती पिटकाभिरल्पाभिराचिता पुत्रिणी।
कंठिना विदारीकन्दवद्वृत्ता विदारिका।
शीघ्रपाका महावेदना सर्षपाकृतिप्रमाणा तद्विधाभिश्च पिटकाभिश्चिता सर्षपिका।
मसूराकार प्रमाणा मसूरिका।
त्वचमुत्थान एव दहन्ती स्फोटैरावृता विसर्पन्ती रक्ता कृष्णातितृण्मोहज्वरकरी दाहभूयिष्ठातिकष्टा चालजी।
महती नीलावगाढरुजाक्लेदा पृष्ठोदरान्यतराधिष्ठाना विनता विनता।
विद्रधिस्तु वक्ष्यते पृथगेव॥

**अस10.13**
तासामाद्याः पञ्चातिबलश्लेष्ममेदःसम्भवेन मूलव्याध्येकरूपत्वात्तद्वृद्धिकारितया दुःसहाः।
न त्वितराः पित्तोल्बणतयाल्पकफमेदोभावात्।
प्रमेहवशाच्च पिटकासु यथास्वं दोषोद्रेको भवतीति।
भवति चात्र श्लोकः॥

**अस10.14**
प्रमेहेण विनाप्येता जायन्ते दुष्टमेदसः।
तावच्च नोपलक्ष्यन्ते यावद्वस्तुपरिग्रहः॥

**अस10.15**
हारिद्रवर्णं रक्तं वा मेहप्राग्रूपवर्जितम्।
यो मूत्रयेन्न तं मेहं रक्तपित्तं तु तं विदुः॥

**अस10.16**
दृष्ट्वा प्रमेहं मधुरं सपिच्छं मधूपमं स्यात् द्विविधो विचारः।
सम्पूरणाच्छ्लेष्मसमुद्भवः स्यात् क्षीणेषु दोषोष्वनिलात्मको वा॥

**अस10.17**
सपूर्वरूपाः कफपित्तमेहाः क्रमेण ये वातकृताश्च मेहाः।
साध्या न ते पित्तकृतास्तु याप्याः साध्यास्तु मेदो यदि नातिदुष्टम्॥

**इति दशमोऽध्यायः॥**

# अष्टाङ्गसंग्रहः निदानस्थानम् अध्याय ११-१६

https://sa.wikisource.org/s/9zl

**अष्टाङ्गसंग्रहः**

अथैकादशोऽध्यायः।

**अस11.1**
अथातो विद्रधिवृद्धिगुल्मनिदानं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अस11.2**
भुक्तैः षर्युषितास्युष्णरूक्षशुष्कविदाहिभिः।
जिह्मशय्याविचेष्टाभिस्तैस्तैश्चासृक्प्रदूषणैः॥

**अस11.3**
दुष्टत्वङ्मांसमेदोस्थिस्नावासृक्कण्डराश्रयः।
यः शोफो बहिरन्तर्वा महामूलो महारुजः॥

अस11.4। वृत्तः स्यादायतो यो वा स्मृतः षोढा स विद्रधिः।
दोषैः पृथक् समुदितैः शोणितेन क्षतेन च॥

**अस11.5**
बाह्योऽत्र तत्र तत्राङ्गे दारुणो ग्रथितोन्नतः।
आन्तरो दारुणतरो गम्भीरो गुल्मवद्घनः॥

**अस11.6**
वल्मीकवत् समुच्छ्रायी शीघ्रघात्यग्निशस्त्रवत्।
नाभिबस्तियकृत्प्लीहक्लोमहृत्कुक्षिवङ्क्षणे॥

**अस11.7**
स्याद्वृक्कयोरपाने वा वातात्तत्रातितीव्ररुक्।
श्यावारुणश्चिरोत्थानपाको विषमसंस्थितिः॥

**अस11.8**
व्यधच्छेदभ्रमानाहस्पन्दसर्पणशब्दवान्।
रक्तताम्रासितः पित्तात्तृण्मोहज्वरदाहवान्॥

**अस11.9**
क्षिप्रोत्थानप्रपाकश्च पाण्डुः कण्डूयुतः कफात्।
सोत्क्लेशशीतकस्तम्भजृम्भारोचकगौरवः॥

**अस11.10**
चिरोत्थानविदाहशच् सङ्कीर्णः सन्निपाततः।
सामर्थ्याच्चात्र विभजेद्बाह्याभ्यन्तरलक्षणम्॥

**अस11.11**
कृष्णस्फोटावृतः श्यावस्तीव्रदाहरुजाज्वरः।
पित्तलिङ्गोऽसृजा बाह्यः स्त्रीणामेव तथान्तरः॥

**अस11.12**
शस्त्राद्यैरभिघातेन क्षते वापथ्यकारिणः।
क्षतोष्मा वायुविक्षिप्तः सरक्तं पित्तमीरयन्॥

**अस11.13**
पित्तासृग्लक्षणं कुर्याद्विद्रधिं भूर्यपद्रवम्।
तेषूपद्रवभेदश्च स्मृतोऽधिष्ठानभेदतः॥

**अस11.14**
नाभ्यां हिध्मा भवेद्बस्तौ मूत्रं कृच्छ्रेण पूति च।
श्वासो यकृति रोधस्तु प्लीहन्युच्छ्वासस्यतृट्पुनः॥

**अस11.15**
गलग्रहश्च क्लोम्नि स्यात् सर्वाङ्गप्रग्रहो हृदि।
प्रमेहस्तमकः कासो हृदयोद्घटनं व्यथा॥

**अस11.16**
कुक्षिपार्श्वान्तरांसार्तिः कुक्षावाटोपजन्म च।
सक्थ्नोर्ग्रहो वङ्क्षणयोर्वृक्कयोः कटिपृष्ठयोः॥

**अस11.17**
पार्श्वयोश्च व्यथा पायौ पवनस्य निरोधनम्।
आमपक्वविदग्धत्वं तेषां शोफवदादिशेत्॥

**अस11.18**
नाभेरूर्ध्वं मुखात् पक्वाः प्रस्रवन्त्यधरे गुदात्।
गुदास्यान्नाभिजो विद्याद्दोषं क्लेदाच्च विद्रधौ॥

**अस11.19**
यथास्वं व्रणवत्तत्र विवर्ज्यः सन्निपातजः।
पक्वो हृन्नाभिबस्तिस्थो भिन्नोऽन्तर्बहिरेव वा॥

**अस11.20**
पक्वश्चान्तःस्रवन् वक्त्रात् क्षीणस्योपद्रवान्वितः॥

**अस11.21**
एवमेव स्तनसिरा विवृताः प्राप्य योषिताम्।
सूतानां गर्भिणीनां वा सम्भवेच्छ्वयथुर्घनः॥

**अस11.22**
नाडीनां सूक्ष्मवक्त्रत्वात् कन्यानां तु न जायते॥

**अस11.23**
क्रुद्धो रुद्धगतिर्वायुः शोफशूलकरश्चरन्।
मुष्कौ वङ्क्षणतः प्राप्य फलकोशाभिवाहिनीः॥

**अस11.24**
प्रपीड्य धमनीर्वृद्धिं करोति फलकोशयोः।
दोषास्रमेदोमूत्रान्त्रैः स वृद्धिः सप्तधा गदः॥

**अस11.25**
मूत्रान्त्रजावप्यनिलाद्धेतुभेदस्तु केवलम्।
वातपूर्णदृतिस्पर्शो रूक्षो वातादहेतुरुक्॥

**अस11.26**
पक्वोदुम्बरसङ्काशः पित्ताद्दाहोष्मपाकवान्।
कफाच्छीतो गुरुः स्निग्धः पण्डूमान्कठिनोल्परुक्॥

**अस11.27**
कृष्णस्फोटावृतः पित्तवृद्धिलिङ्गश्च रक्ततः।
कफवन्मेदसा वृद्धिर्मृदुस्तालफलोपमः॥

**अस11.28**
मूत्रधारणशीलस्य मूत्रजः स तु गच्छतः।
अम्भोभिः पूर्णदृतिवत्क्षोभं याति सरुङ्मृदुः॥

**अस11.29**
मूत्रकृच्छ्रमधः स्याच्च वलयः फलकोशयोः।
वातकोपिभिराहारैः शीततोयावगाहनैः॥

**अस11.30**
धारणेरणभाराध्वविषमाङ्गप्रवर्तनैः।
क्षोभणैः क्षुभितोऽन्यैश्च क्षुद्रान्त्रावयवं यदा॥

**अस11.31**
पवनो विगुणीकृत्य स्वनिवेशादधो नयेत्।
कुर्याद्वङ्क्षणसन्धिस्थो ग्रन्थ्याभं श्वयथुं तदा॥

**अस11.32**
उपेक्षमाणस्य च मुष्कवृद्धिमाध्मानरुक्स्तम्भवतीं स वायुः।
प्रपीडितोऽन्तः स्वनवान् प्रयाति प्रध्मापयन्नोति पुनश्च मुक्तः॥

**अस11.33**
आन्त्रवृद्धिरसाध्योऽयं वातवृद्धिसमाकृतिः।
रूक्षकृष्णारुणसिरातन्तुजालगवाक्षितः॥

**अस11.34**
गुल्मोऽष्टधा पृथग्दोषैः संसृष्टैर्निचयं गतैः।
आर्तवस्य च दोषेण नारीणां जायतेऽष्टमः॥

**अस11.35**
अथ यो ज्वरातिसारादिभिर्वमनादिभिर्वा कर्मभिः कर्शितो वातलान्याहारयत्याहाराभिलाषी वा शीतमुदकं पिबत्यन्नपानानन्तरं वा लङ्घनप्लवनव्यवाययानयानादीन् देहविक्षोभिणः सेवतेऽनुदीर्णां वा छिर्दिमुदीरयत्युदीर्णान् वा वातादीन् निश्वासोच्छवासौ वा निगृह्णात्यस्नेहपूर्वं वा वमनविरेचने करोति तथा शोधित एव वातिविदाहिनोऽभिष्यन्दिनो वा निषेवते तस्य यथास्वं वातप्रधानाः कुपिता दोषाः पृथक् संसृष्टाः समस्ताः सरक्ता वा महास्रोतोऽनुप्रविश्यावृत्योर्ध्वमधश्च मार्गमवश्यं शूलमुपजनयन्तो गुल्ममभिनिर्वर्तयन्ति।
यतश्च तस्मिन् शूलविद्ध इव व्यथते तीव्रवेदनार्दितः कृच्छ्रोच्छवासस्तस्माच्छूलमित्युच्यते॥

**अस11.36**
तत्रातिकर्शनात् कफपित्ताभ्यां वा मार्गनिरोधाल्लब्धाश्रयो वायुरुत्प्लुतो रौक्ष्यात् कठिनीभूतः स्वाश्रये स्वतन्त्रः परतन्त्रो वा पित्तश्लेष्माश्रये स्पर्शोपलभ्यः पिण्डितत्वादमूर्तोऽपि मूर्ततामिवोपगतो ग्रन्थिरूपेणावतिष्ठमानो गुल्मसंज्ञां लभते।
तस्य पञ्च स्थानानि बस्तिर्नाभिः पार्श्वे हृदयं च।
अथास्य पूर्वरूपाणि सदनमग्निशरीरयोररुचिः सौहित्यासहिष्णुता कुक्षिशूलमाध्मानमुद्गिरणं बहुशो विदग्धेऽन्ने छर्दिराटोपो मलस्य प्रादुर्भावोऽप्रवृत्तिश्च॥

**अस11.37**
तत्र वातात् सूच्येव च शङ्कुनेव च व्यधो मन्याशिरःशङ्खशूलज्वराङ्गमर्दप्लीहाटोपान्त्रकूजोदावर्तोच्छवासोपरोधमुखशोषस्तब्धगात्रताः वायुकालेषूपद्रववृद्धिर्विषमाग्निता कृष्णारुणपरुषत्वङ्नखादित्वं गुल्मश्चास्य चलत्वाद्वायोरनियतस्थानसंस्थानोदयप्रलयाल्पमहारुजः पिपीलिकापरिगत इव तोदस्फुरणबहुलो विस्ताअरयतीव स्वदेशे चर्म कदाचित् कदाचित्सङ्कोचयतीव हर्षयति रोमाणि वेदनातिप्रवृत्तौ तु सर्वस्मिन्नपि देहे प्रायो बस्त्याश्रयश्च भवति॥

**अस11.38**
पित्ताद्दाहो धूमकोऽम्लकस्तृष्णा ज्वरः स्वेदो विड्भेदो मूर्च्छा शीतोपशयता हरितहारिद्रत्वगादित्वं गुल्मश्चास्य तप्तायःपिण्ड इव तमवकाशं दहति दूयते धूमायत ऊष्मायते शिथिल इव व्रण इवास्पर्शसहो निर्लोमा प्रायो नाभ्याश्रयश्च॥

**अस11.39**
कफात् स्तैमित्यमरोचकाविपाकौ हृदयोपलेपः शीतज्वरस्तृप्तिः सदनं कासो हृल्लासः पीनसोनिद्रालस्यं नखादिशुक्लता गुल्मश्च सुप्तस्थिरगुरुकठिनोऽवगाढोऽल्परुक् प्रायो हृत्पार्श्वाश्रयश्च।
संसृष्टलिङ्गः संसर्गात्।
स त्रिविधः।
सर्वलिङ्गनिचये निचयगुल्मः सोऽसाध्यः॥

**अस11.40**
रक्तगुल्मस्तु गर्भकोष्ठार्तवागमनवैशेष्यात् पारतन्त्र्यादवैशारद्यादुपचारानुरोधाच्च स्त्रिया एव भवति॥

**अस11.41**
तत्र यदासावृतुमती नवप्रसूता योनिरोगिणी वा वातलान्यासेवेत तदास्या वायुः प्रकुपितो योन्या मुखमनुप्रविश्यार्तवमपरुणद्धि।
तदुपरुध्यमानं मासे मासे कुक्षिमभिनिर्वर्तयति गर्भलिङ्गानि च हृल्लासतन्द्राङ्गसाददौहृदस्तन्यदर्शनादीनि।
वायुसंसर्गात् पुनः पित्तैकप्रकोपतया च वातपित्तगुल्मरूपाणि क्रमाच्छूलस्तम्भदाहातीसारादीनि गर्भाशये च सुतरां शूलं तया योन्या दौर्गन्ध्यमास्रावं च करोति।
गुल्मश्च न गर्भ इवाङ्गैः पिण्डित इव तु चिरेण सशूलं स्पन्दते।
गुल्म एव वर्द्धते न कुक्षिः॥

**अस11.42**
स्वदोषाधिष्ठानश्च सर्वो भवति गुल्मः।
तस्माच्चिचरेण नैव वा पाकमेति।
भृशदुष्टरक्ताश्रयत्वात्तु विद्रधिः शीघ्रपाको भवतीति।
भवति चात्र॥

**अस11.43**
गुल्मेऽन्तराश्रये बस्तिकुक्षिहृत्प्लीहवेदनाः।
अग्निवर्णबलभ्रंशो वेगानां चाप्रवर्तनम्॥

**अस11.44**
अतो विपर्ययो बाह्ये कोष्ठाङ्गेषु तु नातिरुक्।
वैवर्ण्यमवकाशस्य बहिरुन्नतताधिकम्॥

**अस11.45**
साटोपमत्युग्ररुजमाध्मानमुदरे भृशम्।
ऊर्ध्वाधोवातरोधेन तमानाहं प्रचक्षते॥

**अस11.46**
घनोऽष्ठीलोपमो ग्रन्थिरष्ठीलोर्ध्वं समुन्नतः।
आनाहलिङ्गस्तिर्यक् तु प्रत्यष्ठीला तदाकृतिः॥

**अस11.47**
पक्वाशयात् गुदोपस्थं वायुस्तीव्ररुजश्चरन्।
तूनी प्रतूनी तु भवेत्स एवातो विपर्यये॥
इति एकादशोऽध्यायः॥

अथ द्वादशोऽध्यायः।

**अस12.1**
अथात उदरनिदानं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अस12.2**
रोगाः सर्वेऽपि मन्देऽग्नौ सुतरामुदराणि तु।
अजीर्णान्मलिनैश्चान्नैर्जायन्ते मलसञ्चयात्॥

**अस12.3**
ऊर्ध्वाधो धातवो रुध्वा वाहिनीरम्बुवाहिनीः।
प्राणाग्न्यपानान् सन्दूष्य कुर्युस्त्वङ्मांससन्धिगाः॥

**अस12.4**
आध्माप्य कुक्षिमुदरम् अष्टधा तच्च भिद्यते॥

**अस12.5**
पृथग्दोषैः समस्तैश्च प्लीहबद्धक्षतोदकैः।
तेनार्ताः शुष्कताल्वोष्ठाः शूनपादकरोदराः॥

**अस12.6**
नष्टचेष्टाबलाहाराः कृशाः प्रध्मातकुक्षयः।
स्युः प्रेतरूपाः पुरुषा भाविनस्तस्य लक्षणम्॥

**अस12.7**
क्षुन्नाशोऽन्नं चिरात्सर्वं सविदाहं च पच्यते।
जीर्णाजीर्णं न जानाति सौहित्यं सहते न च॥

**अस12.8**
क्षीयते बलतः शश्वच्छ्वसित्यल्पेऽपि चेष्टिते।
वृद्धिर्विशोऽप्रवृत्तिश्च किञ्चिच्छोफश्च पादयोः॥

**अस12.9**
रुग्बस्तिसन्धौ ततता लघ्वल्पाभोजनैरपि।
राजीजन्म वलीनाशो जठरे जठरेषु तु॥

**अस12.10**
सर्वेषु तन्द्रा सदनं मलसङ्गोऽल्पवह्निता।
दाहः श्वयथुराध्मानमन्ते सलिलसम्भवः॥

**अस12.11**
सर्वं त्वतोयमरुणमशोफं नातिभारिकम्।
गवाक्षितं सिराजालैः सदा गुडुगुडायते॥

**अस12.12**
नाभिमन्त्रं च विष्टभ्य वेगं कृत्वा प्रणश्यति।
मारुतो हृत्कटीनाभिपायुवङ्क्षणवेदनः॥

**अस12.13**
सशब्दो निश्चरेद्वायुर्विड् बद्धा मूत्रमल्पकम्।
नातिमन्दोऽनलो लौल्यं न च स्याद्विरसं मुखम्॥

**अस12.14**
तत्र वातोदरे शोफः पाणिपान्मुष्कसन्धिषु।
कुक्षिपार्श्वोदरकटीपृष्ठरुक् पर्वभेदनम्॥

**अस12.15**
शुष्ककासोऽङ्गमर्दोऽधोगुरुता मलसङ्ग्रहः।
श्यावारुणत्वगादित्वमकस्माद्धासवृद्धिमत्॥

**अस12.16**
सतोदभेदमुदरं तनुकृष्णसिराततम्।
आध्मातदृतिवच्छब्दमाहतं प्रकरोति च॥

**अस12.17**
वायुश्चात्र सरुक्शब्दो विचरेत्सर्वतोगतिः।
पित्तोदरे ज्वरो मूर्च्छा दाहस्तृट् कटुकास्यता॥

**अस12.18**
भ्रमोऽतिसारः पीतत्वं त्वगादावुदरं हरित्।
पीतताम्रसिरानद्धं सस्वेदं सोष्म दह्यते॥

**अस12.19**
धूमायति मृदुस्पर्शं क्षिप्रपाकं प्रदूयते।
श्लेष्मोदरेऽङ्गसदनं स्वापः श्वयथुगौरवम्॥

**अस12.20**
निद्रोत्क्लेशारुचिश्वासकासशुक्लत्वगादिता।
उदरं स्तिमितं स्निग्धं शुक्लराजीततं महत्॥

**अस12.21**
चिराभिवृद्धि कठिनं शीतस्पर्शं गुरु स्थिरम्।
त्रिदोषकोपनैस्तैस्तैःस्त्रीदत्तैश्च रजोमलैः॥

**अस12.22**
गरदूषीविषाद्यैश्च सरक्ताः सञ्चिता मलाः।
कोष्ठं प्राप्य विकुर्वाणाः शोफमूर्च्छाभ्रमान्वितम्॥

**अस12.23**
कुर्युस्त्रिलिङ्गमुदरं शीघ्रपाकं सुदारुणम्।
बाधते तच्च सुतरां शीतवाताभ्रदर्शने॥

**अस12.24**
अत्याशितस्य सङ्क्षोभाद्यानयानादिचेष्टितैः।
अतिव्यवायभाराध्वगमनव्याधिकर्शनैः॥

**अस12.25**
वामपार्श्वाश्रितः प्लीहा च्युतः स्थानाद्विवर्द्धते।
शोणितं वा रसादिभ्यो विवृद्धं तं विवर्द्धयेत्॥

**अस12.26**
सोऽष्ठीलेवातिकठिनः प्रोन्नतः कूर्मपृष्ठवत्।
क्रमेण वर्धमानश्च कुक्षावुदरमावहेत्॥

**अस12.27**
श्वासकासपिपासास्यवैरस्याध्मानरुग्ज्वरैः।
पाण्डुत्वमूर्च्छाच्छर्दीभिर्दाहमोहैश्च संयुतम्॥

**अस12.28**
अरुणाभं विवर्णं वा नीलहारिद्रराजिमत्।
उदावर्तरुजानाहैर्मोहतृड्दहनज्वरैः॥

**अस12.29**
गौरवारुचिकाठिन्यैर्विद्यात्तत्र मलान् क्रमात्।
प्लीहवद्दक्षिणात् पार्श्वात् कुर्याद्यकृदपि च्युतम्॥

**अस12.30**
पक्ष्मवालैः सहान्नेन भुक्तैर्बद्धायने गुदे।
दुर्नामभिरुदावर्तैरन्यैर्वान्त्रोपलेपिभिः॥

**अस12.31**
वर्चः पित्तकफान् रुध्वा करोति कुपितोऽनिलः।
अपानो जठरं तेन स्युर्दाहज्वरतृट्क्षवाः॥

**अस12.32**
कासश्वासोरुसदनं शिरोहृन्नाभिपायुरुक् मलसङ्गोऽरुचिच्छर्दिरुदरं मूढमारुतम्॥

**अस12.33**
स्थिरं नीलारुणसिराराजीनद्धमराजि वा।
नाभेरुपरि च प्रायो गोपुच्छाकृति जायते॥

**अस12.34**
अस्थ्यादिशल्यैः सान्नैश्च भुक्तैरत्यशनेन वा।
भिद्यते पच्यते चान्त्रं तच्छिद्रैश्च स्रवन् बहिः॥

**अस12.35**
आम एव गुदादेति ततोल्पाल्पं सविड्रसः।
तुल्यः कुणपगन्धेन पिच्छिलः पीतलोहितः॥

**अस12.36**
शेषश्चापूर्य जठरं जठरं घोरमावहेत्।
वर्धते तदधोनाभेराशु चैति जलात्मताम्॥

**अस12.37**
उद्रिक्तदोषरूपं च व्याप्तं च श्वासतृट्भ्रमैः।
छिद्रोदरमिदं प्राहुः परिस्रावीति चापरे॥

**अस12.38**
प्रवृत्तस्नेहपानादेः सहसामाम्बुपायिनः।
अत्यम्बुपानान्मन्दाग्नेः क्षीणस्यातिकृशस्य वा॥

**अस12.39**
रुध्वाम्बुमार्गाननिलः कफश्च जलमूर्च्छितः।
वर्द्धयेतां तदेवाम्बु तत्स्थानादुदराश्रितौ॥

**अस12.40**
ततः स्यादुदरं तृष्णागुदस्रुतिरुजान्वितम्।
कासश्वासारुचियुतं नावणसिराततम्॥

**अस12.41**
तोयपूर्णदृतिस्पर्शशब्दप्रक्षोभवेपथु।
दकोदरं महत् स्निग्धं स्थिरमावृत्तनाभि तत्॥

**अस12.42**
उपेक्षया च सर्वेषु दोषाः स्वस्थानतश्च्युताः।
पाकाद्द्रवा द्रवीकुर्युः सन्धिस्रोतोमुखान्यपि॥

**अस12.43**
स्वेदश्च बाह्यस्रोतस्सु विहतस्तिर्यगास्थितः।
तदेवोदकमाप्याय्य पिच्छां कुर्यात्तदा भवेत्॥

**अस12.44**
गुरूदरं स्थिरं वृत्तमाहतं च न शब्दवत्।
मृदु व्यपेतराजीकं नाभ्यां स्पृष्टं च सर्पति॥

**अस12.45**
तदनूदकजन्मास्मिन् कुक्षिवृद्धिस्ततोऽधिकम्।
सिरान्तर्द्धानमुदकजठरोक्तं च लक्षणम्॥

**अस12.46**
वातपित्तकफप्लीहसन्निपातदकोदरम्।
कृच्छ्रं यथोत्तरं पक्षात् परं प्रायोऽपरे हतः॥

**अस12.47**
सर्वं च जातसलिलं रिष्ठोक्तोपद्रवान्वितम्।
जन्मनैवोदरं सर्वं प्रायः कृच्छ्रतमं मतम्॥

**अस12.48**
बलिनस्तदजाताम्बु यत्नसाध्यं नवोत्थितम्॥
इति द्वादशोऽध्यायः॥

अथ त्रयोदशोऽध्यायः।

**अस13.1**
अथातः पाण्डुशोफविसर्पनिदानं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अस13.2**
पित्तप्रधानाः कुपिता यथोक्तैः कोपनैर्मलाः।
तत्रानिलेन बलिना क्षिप्तं पित्तं हृदि स्थितम्॥

**अस13.3**
धमनीलेन सम्प्राप्य व्याप्नुवत्सकलां तनुम्।
श्लेष्मत्वग्रक्तमांसानि प्रदूष्यान्तरमाश्रितम्॥

**अस13.4**
त्वङ्मांसयोस्तत् कुरुते त्वचि वर्णान्पृथग्विधान्।
पाण्डुहारिद्रहरितान् पाण्डुत्वं तेषु चाधिकम्॥

**अस13.5**
यतोऽतः पाण्डुरित्युक्तः स रोगः तेन गौरवम्।
धातूनां स्याच्च शैथिल्यमोजसश्च गुणक्षयः॥

**अस13.6**
ततोऽल्परक्तमेदस्को निःसारः स्याच्छलथेन्द्रियः।
मृद्यमानैरिवाङ्गैर्ना द्रवता हृदयेन च॥

**अस13.7**
शूनाक्षिकूटवदनः कोपनः ष्ठीवनोल्पवाक्।
अन्नद्विट्शिशिरद्वेषी शीर्णरोमा हतानलः॥

**अस13.8**
सन्नसक्थी ज्वरी श्वासी कर्णक्ष्वेडी श्रमी भ्रमी।
स पञ्चधा पृथग्दोषैः समस्तैर्मृत्तिकादनात्॥

**अस13.9**
प्राग्रूपमस्य हृदयस्पन्दनं रूक्षता त्वचि।
अरुचिः पीतमूत्रत्वं स्वेदाभावोऽल्पवाह्निता॥

**अस13.10**
सादः श्रमोऽनिलात्तत्र गात्ररुक्तोदकम्पनम्।
कृष्णरूक्षारुणसिरानखविण्मूत्रनेत्रता॥

**अस13.11**
शोफानाहास्यवैरस्यविट्शोषाः पार्श्वमूर्धरुक्।
पित्ताद्धरितपीताभसिरादित्वं ज्वरस्तमः॥

**अस13.12**
तृट्स्वेदमूर्च्छा शीतेच्छा दौर्गन्ध्यं कटुवक्त्रता।
वर्चोभेदोऽम्लको दाहः कफाच्छुक्लसिरादिता॥

**अस13.13**
तन्द्रा लवणवक्त्रत्वं रोमहर्षः स्वरक्षयः।
कासश्छर्दिश्च निचयान्मिश्रलिङ्गोऽतिदुस्सहः॥

**अस13.14**
मृत् कषायानिलं पित्तमूषरा मधुरा कफम्।
दूषयित्वा रसादींश्च रौक्ष्याद्भुक्तं विरूक्ष्य च॥

**अस13.15**
स्रोतांस्यपक्वैवापूर्य कुर्याद्रुध्वा च पूर्ववत्।
पाण्डुरोगं ततः शूननाभिपादास्यमेहनः॥

**अस13.16**
पुरीषं कृमिवन्मुञ्चेद्भिन्नं सासृक्ककफं नरः।
यः पाण्डुरोगी सेवेत पित्तलं तस्य कामलाम्॥

**अस13.17**
कोष्ठशाखाश्रयं पित्तं दग्ध्वासृङ्मांसमावहेत्।
हारिद्रनेत्रमूत्रत्वङ्नखवक्त्रशकृत्तया॥

**अस13.18**
दाहाविपाकतृष्णावान् भेकाभो दुर्बलेन्द्रियः।
भवेत् पित्तोल्बणस्यासौ पाण्डुरोगादृतेऽपि च॥

**अस13.19**
उपेक्षया च शोफाढ्या सा कृच्छ्रा कुम्भकामला।
हरितश्यावपीतत्वं पाण्डुरोगे यदा भवेत्॥

**अस13.20**
वातपित्ताद्भ्रमस्तृष्णा स्त्रीष्वहर्षो मृदुज्वरः।
तन्द्राबलानलभ्रंशो लोढरं तं हलीमकम्॥

**अस13.21**
अलसं चेति शंसन्ति तेषां पूर्वमुपद्रवाः।
शोफप्रधानाः कथिताः स एवातो निगद्यते॥

**अस13.22**
पित्तरक्तकफान् वायुर्दुष्टो दुष्टान् बहिःसिराः।
नीत्वा रुद्धगतिस्तैर्हि कुर्यात् त्वङ्मांससंश्रयम्॥

**अस13.23**
उत्सेधं संहतं शोफं तमाहुर्निचयादतः।
सर्वम् हेतुविशेषैस्तु रूपभेदान्नवात्मकम्॥

**अस13.24**
दोषैः पृथग्द्वयैः सर्वैरभिघाताद्विषादपि।
द्विधा वा निजमागन्तुं सर्वाङ्गैकाङ्गजं च तम्॥

**अस13.25**
पृथून्नतग्रथितताविशेषैश्च त्रिधा विदुः।
सामान्यहेतुः शोफानां दोषजानां विशेषतः॥

**अस13.26**
व्याधिकर्मोपवासादिक्षीणस्य भजतो द्रुतम्।
अतिमात्रमथान्यस्य गुर्वम्लस्निग्धशीतलम्।
लवणक्षारतीक्ष्णोष्णशाकाम्बुस्वप्नजागरम्॥

**अस13.27**
मृद्ग्राम्यमांसवल्लूरमजीर्णश्रममैथुनम्।
पदातेर्मार्गगमनं यानेन क्षोभिणापि वा॥

**अस13.28**
श्वासकासातिसारार्शोजठरप्रदरज्वराः।
विषूच्यलसकच्छर्दिगर्भवीसर्पपाण्डवः॥

**अस13.29**
अन्ये च मिथ्योपक्रान्तास्तैर्दोषा वक्षसि स्थिताः।
ऊर्ध्वं शोफमधो बस्तौ मध्ये कुर्वन्ति मध्यगाः॥

**अस13.30**
सर्वाङ्गाः सर्वगतं प्रत्यङ्गेषु तदाश्रयाः।
तत्पूर्वरूपं दवथुः सिरायामोऽङ्गगौरवम्॥

**अस13.31**
वाताच्छोफश्चलो रूक्षः खररोमारुणासितः।
सङ्कोचस्पन्दहर्षार्तितोदभेदप्रसुप्तिमान्॥

**अस13.32**
क्षिप्रोत्थानशमः शीघ्रमुन्नमेत् पीडितस्तनुः।
स्निग्धोष्णमर्दनैः शाम्येद्रात्रावल्पो दिवा महान्॥

**अस13.33**
त्वक्च सर्षपलिप्तेव तस्मिंश्चिमिचिमायते।
पीतरक्तासिताभासः पित्तादाताम्ररोमकृत्॥

**अस13.34**
शीघ्रानुसारप्रशमो मध्ये प्राग्जायते तनोः।
सतृड्दाहज्वरस्वेददवक्लेदमदभ्रमः॥

**अस13.35**
शीताभिलाषी विड्भेदी गन्धी स्पर्शासहो मृदुः।
कण्डूमान् पाण्डुरोमत्वक्कठिनः शीतलो गुरुः॥

**अस13.36**
स्निग्धः श्लक्ष्णः स्थिर स्त्यानो निद्राच्छर्द्यग्निसादकृत्।
आक्रान्तो नोन्नमेत् कृच्छ्रशमजन्मा निशाबलः॥

**अस13.37**
स्रवेन्नासृक् चिरात् पिच्छां कुशशस्त्रादिविक्षतः।
स्पर्शोष्णकाङ्क्षी च कफाद्यथास्वं द्वन्द्वजास्त्रयः॥

**अस13.38**
सङ्कराद्धेतुलिङ्गानां निचयान्निचयात्मकः।
अभिघातेन शस्त्रादिच्छेदभेदक्षतादिभिः॥

**अस13.39**
हिमानिलोदध्यनिलैर्भल्लातकपिकच्छुजैः।
रसैश्शूकैश्चसंस्पर्शाच्छ्वयथुः स्याद्विसर्पवान्॥

**अस13.40**
भृशोष्मा लोहिताभासः प्रायशः पित्तलक्षणः॥

**अस13.41**
विषजः सविषप्राणिपरिसर्पणमूत्रणात्।
दंष्ट्रादन्तनखापातादविषप्राणिनामपि॥

**अस13.42**
विण्मूत्रशुक्रोपहतमलवद्वस्त्रसङ्करात्।
विषवृक्षानिलस्पर्शाद्गरयोगावचूर्णनात्॥

**अस13.43**
मृदुश्चलोऽवलम्बी च शीघ्रदाहरुजाकरः।
नवोऽनुपद्रवः शोफः साध्योऽसाध्यः पुरेरितः॥

**अस13.44**
स्याद्विसर्पोऽभिघातान्तैर्दोषैर्दूष्यैश्च शोफवत्।
त्र्यधिष्ठानं च तं प्राहुर्बाह्यान्तरुभयाश्रयात्॥

**अस13.45**
यथोत्तरं च दुःसाध्यास्तत्र दोषा यथायथम्।
प्रकोपणैः प्रकुपिता विशेषेण विदाहिभिः॥

**अस13.46**
देहे शीघ्रं विसर्पन्ति तेऽन्तरन्तःस्थिता बहिः।
बहिःस्था द्वितये द्विस्थाः विद्यात्तत्रान्तराश्रयम्॥

**अस13.47**
मर्मोपतापात्सम्मोहादयनानां विघट्टनात्।
तृष्णातियोगाद्वेगानां विषमं च प्रवर्तनात्॥

**अस13.48**
आशु चाग्निबलभ्रंशादतो बाह्यं विपर्ययात्।
तत्र वातात् परीसर्पो वातज्वरसमव्यथः॥

**अस13.49**
शोफस्फुरणनिस्तोदभेदायामार्तिहर्षवान्।
पित्ताद्द्रुतगतिः पित्तज्वरलिङ्गोऽतिलोहितः॥

**अस13.50**
कफात्कण्डूयुतः स्निग्धः कफज्वरसमानरुक्।
स्वदोषलिङ्गैश्चीयन्ते सर्वे स्फोटैरुपेक्षिताः॥

**अस13.51**
ते पक्वभिन्नाः स्वं स्वं च बिभ्रति व्रणलक्षणम्।
वातपित्ताज्ज्वरच्छर्दिमूर्छातीसारतृड्भ्रमैः॥

**अस13.52**
अस्तिभेदाग्निसदनतमकारोचकैर्युतः।
करोति सर्वमङ्गं च दीप्ताङ्गारावकीर्णवत्॥

**अस13.53**
यं यं देशं विसर्पश्च विसर्पति भवेत्स सः।
शान्ताङ्गारासितो नीलो रक्तो वाशु च चीयते॥

**अस13.54**
अग्निदग्ध इव स्फोटैः शीघ्रगत्वाद्द्रुतञ्च सः।
मर्मानुसारी वीसर्पः स्याद्वातोऽतिबलस्ततः॥

**अस13.55**
व्यथेताङ्गं हरेत्संज्ञां निद्रां च श्वासमीरयेत्।
हिध्मां च स गतोऽवस्थामीदृशीं लभते न ना॥

**अस13.56**
क्वचिच्छर्मारतिग्रस्तो भूमिशय्यासनादिषु।
चेष्टमानस्ततः क्लिष्टो मनोदेहश्रमोद्भवाम्॥

**अस13.57**
दुष्प्रबोधोऽश्नुते निद्रां सोऽग्निवीसर्प उच्यते॥

**अस13.58**
कफेन रुद्धः पवनो भित्वा तं बहुधा कफम्।
रक्तं वा वृद्धरक्तस्य त्वक्सिरास्नावमांसगम्॥

**अस13.59**
दूषयित्वा च दीर्घाणुवृत्तस्थूलखरात्मनाम्।
ग्रन्थीनां कुरुते मालां रक्तानां तीव्ररुग्ज्वराम्॥

**अस13.60**
श्वासकासातिसारास्यशोषहिध्मावमिभ्रमैः।
मोहवैवर्ण्यमूर्च्छाङ्गभङ्गाग्निसदनैर्युताम्॥

**अस13.61**
इत्ययं ग्रन्थिवीसर्पः कफमारुतकोपजः॥

**अस13.62**
कफपित्तात् ज्वरः स्तम्भो तन्द्रानिद्राशिरोरुजः।
अङ्गावसादविक्षेपप्रलापारोचकभ्रमाः॥

**अस13.63**
मूर्छाग्निहानिर्भेदोऽस्थ्नां पिपासेन्द्रियगौरवम्।
आमोपवेशनं लेपः स्रोतसां स च सर्पति॥

**अस13.64**
प्रायेणामाशये गृह्णन्नेकदेशञ्च नातिरुक्।
पिटकैरवकीर्णोऽतिपीतलोहितपाण्डुरैः॥

**अस13.65**
मेचकाभोऽसितःस्निग्धो मलिनःशोफवान् गुरुः।
गम्भीरपाकः प्राज्योष्मा स्पृष्टः क्लिन्नोऽवदीर्यते॥

**अस13.66**
पङ्कवच्छीर्णमांसश्च स्पष्टस्नायुसिरागणः।
शवगन्धी च वीसर्पः कर्दमाख्यमुशन्ति तम्॥

**अस13.67**
सर्वजो लक्षणैः सर्वैः सर्वधात्वभिदर्पणः।
बाह्यहेतोः क्षतात् क्रुद्धः सरक्तं पित्तमीरयन्॥

**अस13.68**
विसर्पं मारुतः कुर्यात् कुलत्थसदृशैश्चितम्।
स्फोटैः शोफज्वररुजादाहाढ्यं श्यावलोहितम्॥

**अस13.69**
असाध्यौ क्षतसर्वोत्थौ सर्वे चाक्रान्तमर्मकाः॥

**अस13.70**
शीर्णस्नायुसिरामांसाः प्रक्लिन्नाः शवगन्धयः॥
इति त्रयोदशोऽध्यायः॥

अथ चतुर्दशोऽध्यायः।

**अस14.1**
अथातः कुष्ठश्वित्रकृमिनिदानं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अस14.2**
मिथ्याहारविहारेण विशेषेण विरोधिना।
साधुनिन्दावधान्यस्वहरणाद्यैश्च सेवितैः॥

**अस14.3**
पाप्मभिः कर्मभिः सद्यः प्राक्तनैर्वेरिता मलाः।
सिराः प्रपद्य तिर्यग्गास्त्वग्लसीकासृगामिषम्॥

**अस14.4**
दूषयन्तः श्लथीकृत्य निश्चरन्तस्ततो बहिः।
त्वचः कुर्वन्ति वैवर्ण्यं दुष्टाः कुष्ठमुशन्ति तत्॥

**अस14.5**
कालेनोपेक्षितं यस्मात् सर्वं कुष्णाति तद्वपुः।
प्रपद्य धातून्व्याप्यान्तः सर्वान्सङ्क्लेद्यचावहेत्॥

**अस14.6**
सस्वेदक्लेदसङ्कोथान् कृमीन् सूक्ष्मान् सुदारुणान्।
लोमत्वक्स्नायुधमनीतरुणास्थीनि यैः क्रमात्॥

**अस14.7**
भक्षयेत् श्वित्रमस्माच्च कुष्ठबाह्यमुदाहृतम्।
कुष्ठानि सप्तधा दोषैः पृथङ्मिश्रैः समागतैः॥

**अस14.8**
सर्वेष्वपि त्रिदोषेषु व्यपदेशोऽधिकत्वतः।
वातेन कुष्ठं कापालं पित्तादौदुम्बरं कफात्॥

**अस14.9**
मण्डलाख्यं विचर्चीं च ऋष्याख्यं वातापित्तजम्।
चर्मैककुष्ठकिटिभसिध्मालसविपादिकाः॥

**अस14.10**
वातश्लेष्मोद्भवाः श्लेष्मपित्ताद्दद्रुशतारुषी।
पुण्डरीकं सविस्फोटं पामा चर्मदलं तथा॥

**अस14.11**
सर्वैः स्यात् काकणं पूर्वं त्रिकं दद्रु सकाकणम्।
पुण्डरीकर्ष्यजिह्वे च महाकुष्ठानि सप्त तु॥

**अस14.12**
अतिश्लक्ष्णखरस्पर्शस्वेदास्वेदविवर्णताः।
दाहः कण्डूस्त्वचि स्वापस्तोदः कोठोन्नतिःश्रमः॥

**अस14.13**
व्रणानामधिकं शूलं शीघ्नोत्पत्तिश्चिरस्थितिः।
रूढानामपि रूक्षत्वं निमित्तेऽल्पेऽपि कोथनम्॥

**अस14.14**
रोमहर्षोऽसृजः कार्ष्ण्यं कुष्ठलक्षणमग्रजम्।
कृष्णारुणकपालाभं रूक्षं सुप्तं खरं तनु॥

**अस14.15**
विस्तृतासमपर्यन्तं हृषितैर्लोमभिश्चितम्।
तोदाढ्यमल्पकण्डूकं कापालं शीघ्रसर्पि च॥

**अस14.16**
पक्वोदुम्बरताम्रत्वग्रोमगौरसिराचितम्।
बहलं बहुलक्लेदं रक्तं दाहरुजाकरम्॥

**अस14.17**
आशूत्थानावदरणकृमि विद्यादुदुम्बरम्॥

**अस14.18**
स्थिरं स्त्यानं गुरु स्निग्धं श्वेतरक्तमनाशुगम्।
अन्योन्यासक्तमुत्सन्नं बहुकण्डूस्रुतिक्रिमि॥

**अस14.19**
श्लक्ष्णपीताभपर्यन्तं मण्डलं परिमण्डलम्।
सकण्डूपिटका श्यावा लसीकाढ्या विचर्चिका॥

**अस14.20**
परुषं तनुरक्तान्तमन्तःश्यावं समुन्नतम्।
सतोददाहरुक्क्लेदं कर्कशैः पिटकैश्चितम्॥

**अस14.21**
ऋष्यजिह्वाकृति प्रोक्तमृष्यजिह्वं बहुक्रिमि।
हस्तिचर्मखरस्पर्शं चमकाख्यं महाश्रयम्॥

**अस14.22**
अस्वेदं मत्स्यशकलसन्निभं किटिभं पुनः।
रूक्षं किणखरस्पर्शं कण्डूमत् परुषासितम्॥

**अस14.23**
सिध्म रूक्षं बहिःस्निग्धमन्तर्घृष्टं रजः किरेत्।
श्लक्ष्णस्पर्शं तनुश्वेतताम्रं दौग्धिकपुष्पवत्॥

**अस14.24**
प्रायेण चोर्ध्वकाये स्याद्व्रणैः कण्डूयुतैश्चितम्।
रक्तैरलसकं पाणिपाददार्यो विपादिकाः॥

**अस14.25**
तीव्रार्त्यो मन्दकण्ड्वश्च सरागपिटकाचिताः।
दीर्घप्रताना दूर्वावदतसीकुसुमच्छविः॥

**अस14.26**
उत्सन्नमण्डला दद्रुः कण्डूमत्यनुषङ्गिणी।
स्थूलमूलं सदाहार्ति रक्तश्यावं बहुव्रणम्॥

**अस14.27**
शतारुः क्लेदजन्त्वाढ्यं प्रायशः पर्वजन्म च।
रक्तान्तमन्तरापाण्डुकण्डुदाहरुजान्वितम्॥

**अस14.28**
सोत्सेधमाचितं रक्तैः पद्मपत्रमिवांशुभिः।
घनभूरिलसीकासृक्प्रायमाशु विभेदि च॥

**अस14.29**
पुण्डरीकम् तनुत्वग्भिश्चितं स्फोटैः सितारुणैः।
विस्फोटं पिटकाः पामाकण्डूक्लेदरुजाधिकाः॥

**अस14.30**
सूक्ष्माः श्यावारुणा बह्व्यः प्रायः स्फिक्पाणिकूर्परे।
सस्फोटमस्पर्शसहं कण्डूषातोददाहवत्॥

**अस14.31**
रक्तं दलच्चर्मदलं काकणं तीव्रदाहरुक्।
पूर्वं रक्तं च कृष्णं च काकणन्तीफलोपमम्॥

**अस14.32**
कुष्ठलिङ्गैर्युतं सर्वैर्नैकवर्णं ततो भवेत्।
दोषभेदीयविहितैरादिशेल्लिङ्गकर्मभिः॥

**अस14.33**
कुष्ठेषु दोषोल्बणतां सर्वदोषोल्बणं त्यजेत्।
रिष्ठोक्तं यच्च यच्चास्थिमज्जशुक्रसमाश्रयम्॥

**अस14.34**
याप्यं मेदोगतं कृच्छ्रं पित्तद्वन्द्वास्रमांसगम्।
अकृच्छ्रं कफवाताढ्यं त्वक्स्थमेकमलं च यत्॥

**अस14.35**
तत्र त्वचि स्थिते कुष्ठे तोदवैवर्ण्यरूक्षताः।
स्वेदस्वापश्वयथवः शोणिते पिशिते पुनः॥

**अस14.36**
पाणिपादाश्रिताः स्फोटाः क्लेदः सन्धिषु चाधिकम्।
कौण्यं गतिक्षयोऽङ्गानां दलनं स्याच्च मेदसि॥

**अस14.37**
नासाभङ्गोऽस्थिमज्जस्थे नेत्ररागः स्वरक्षयः।
क्षते च कृमयः शुक्रे स्वदारापत्यबाधनम्॥

**अस14.38**
यथापूर्वं च सर्वाणि स्युर्लिङ्गान्यसृगादिषु।
कुष्ठैकसम्भवं श्वित्रं किलासं चारुणं च तत्॥

**अस14.39**
निर्दिष्टमपरिस्रावि त्रिधातूद्भवसंश्रयम्॥

**अस14.40**
वाताद्रूक्षारुणं पित्तात्ताम्रं कमलपत्रवत्।
सदाहं रोमविध्वंसि कफाच्छ्वेतं घनं गुरु॥

**अस14.41**
सकण्डु च क्रमाद्रक्तमांसमेदस्सु चादिशेत्।
वर्णेनैवेदृगुभयं कृच्छ्रं तच्चोत्तरोत्तरम्॥

**अस14.42**
अशुक्लरोमाबहुलमसंसृष्टं मिथो नवम्।
अनग्निदग्धजं साध्यं श्वित्रं वर्ज्यमतोऽन्यथा॥

**अस14.43**
गुह्यपाणितलौष्ठेषु जातमप्यचिरन्तनम्।
स्पर्शैकाहारशय्यादिसेवनात् प्रायशो गदाः॥

**अस14.44**
सर्वे सञ्चारिणो नेत्रत्वग्विकारा विशेषतः।
कृमयस्तु द्विधा प्रोक्ता बाह्याभ्यन्तरभेदतः॥

**अस14.45**
बहिर्मलकफासृग्विड्जन्मभेदाच्चतुर्विधाः।
नामतो विंशतिविधा बाह्यास्तत्रामृजोद्भवाः॥

**अस14.46**
तिलप्रमाणसंस्थानवर्णाः केशाम्बराश्रयाः।
बहुपादाश्च सूक्ष्माश्च यूका लिक्षाश्च नामतः॥

**अस14.47**
द्विधा ते कोठपिटकाकण्डूगण्डान् प्रकुर्वते।
कुष्ठैकहेतवोऽन्तर्जाः श्लेष्मजास्तेषु चाधिकम्॥

**अस14.48**
मधुरान्नगुडक्षीरदधिसक्तुनवोदनैः।
शकृज्जा बहुविड्धान्यपर्णशाकौकुलादिभिः॥

**अस14.49**
कफादामाशये जाता वृद्धाः सर्पन्ति सर्वतः।
पृथुव्रद्ध्ननिभाः केचित् केचित् गण्डूपदोपमाः॥

**अस14.50**
रूढधान्याङ्कुराकारास्तनुदीर्घास्तथाणवः।
श्वेतास्ताम्रावभासाश्च नामतः सप्तधा तु ते॥

**अस14.51**
अन्त्रादा उदरावेष्टा हृदयादा महारुहाः।
चुरवो दर्भकुसुमाः सुगन्धास्ते तु कुर्वते॥

**अस14.52**
हृल्लासमास्यस्रवणमविपाकमरोचकम्।
मूर्छाच्छर्दिज्वरानाहकार्श्यक्षवथुपीनसान्॥

**अस14.53**
रक्तवाहिसिरास्थाना रक्तजा जन्तवोऽणवः।
अपादा वृत्तताम्राश्च सौक्ष्म्यात् केचिददर्शनाः॥

**अस14.54**
केशादा लोमविध्वंसा लोमद्वीपा उदुम्बराः।
षट् ते कुष्ठैककर्माणः सहसौरसमातरः॥

**अस14.55**
पक्वाशये पुरीषोत्था जायन्तेऽधोविसर्पिणः।
वृद्धास्ते स्युर्भवेयुश्च ते यदामाशयोन्मुखाः॥

**अस14.56**
तदास्योद्गारनिश्वासा विड्गन्धानुविधायिनः।
पृथुवृत्ततनुस्थूलाः श्यावपीतसितासिताः॥

**अस14.57**
ते पञ्च नाम्ना कृमयः ककेरुकमकेरुकाः।
सौसुरादाः सलूनाख्या लेलिहा जनयन्ति च॥

**अस14.58**
विड्भेदशूलविष्टम्भकार्श्यपारुष्यपाण्डुताः।
रोमहर्षाग्निसदनगुदकण्डूर्विनिर्गमात्॥
इति चतुर्दशोऽध्यायः॥

अथ पञ्चदशोऽध्यायः।

**अस15.1**
अथातो वातव्याधिनिदानं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अस15.2**
सर्वार्थानर्थकरणे विश्वस्यास्यैककारणम्।
अदुष्टदुष्टः पवनः शरीरस्य विशेषतः॥

**अस15.3**
स विश्वकर्मा विश्वात्मा विश्वरूपः प्रजापतिः।
स्रष्टा धाता विभुर्विष्णुः संहर्ता मृत्युरन्तकः॥

**अस15.4**
तददुष्टौ प्रयत्नेन यतितव्यमतः सदा।
तस्योक्तं दोषविज्ञाने कर्म प्राकृतवैकृतम्॥

**अस15.5**
समासाद्व्यासतो दोषभेदीये नाम धाम च।
प्रत्येकं पञ्चधा चारो व्यापारश्चेह वैकृतम्॥

**अस15.6**
तस्योच्यते विभागेन सनिदानं सलक्षणम्।
असङ्ख्यमपि सङ्ख्यायै यदशीत्या पुरेरितम्॥

**अस15.7**
धातुक्षयकरैर्वायुः कुप्यत्यतिनिषेवितैः।
चरन् स्रोतःसु रिक्तेषु भृशं तान्येव पूरयन्॥

**अस15.8**
तेभ्योऽन्यदोषपूर्णेभ्यः प्राप्य वावरणं बली।
तत्र पक्वाशयं क्रुद्धः शूलानाहान्त्रकुजनम्॥

**अस15.9**
मलरोधाश्मवर्ध्मार्शस्त्रिकपृष्ठकटीग्रहम्।
करोत्यधरकाये च तांस्तान् कृच्छ्रानुपद्रवान्॥

**अस15.10**
आमाशये तृड्वमथुश्वासकासविषूचिकाः।
कण्ठोपरोधमुद्गारान् व्याधीनूर्ध्वं च नाभितः॥

**अस15.11**
श्रोत्रादिष्विन्द्रियवधं त्वचि स्फुटनरूक्षते।
रक्ते तीव्रां रुजां स्वापं तापं रागं विवर्णताम्॥

**अस15.12**
अरुंष्यन्नस्य विष्टम्भमरुचिं कृशतां भ्रमम्।
मांसमेदोगतो ग्रन्थींस्तोदाढ्यान् कर्कशान् भ्रमम्॥

**अस15.13**
गुर्वङ्गं चातिरुक् स्तब्धं मुष्टिदण्डहतोपमम्।
अस्थिस्थः सक्थिसन्ध्यस्थिशूलं तीव्रं बलक्षयम्॥

**अस15.14**
मज्जस्थोऽस्थिषु सौषिर्यमस्वप्नं सन्ततं रुजम्।
शुक्रस्य शीघ्रमुत्सर्गं सङ्गं विकृतिमेव वा॥

**अस15.15**
तद्वद्गर्भस्य शुक्रस्थः सिरास्वाध्मानरिक्तते।
तत्स्थः स्नावस्थितः कुर्यात्गृध्रस्यायामकुब्जताः॥

**अस15.16**
वातपूर्णदृतिस्पर्शं शोफं सन्धिगतोऽनिलः।
प्रसारणाकुञ्चनयोः प्रवृत्तिं च सवेदनाम्॥

**अस15.17**
सर्वाङ्गसंश्रयस्तोदभेदस्फुरणभञ्जनम्।
स्तम्भनाक्षेपणस्वापसन्ध्याकुञ्चनकम्पनम्॥

**अस15.18**
यदा तु धमनीः सर्वाः क्रुद्धोऽभ्येति मुहुर्मुहुः।
तदाङ्गमाक्षिपत्येष व्याधिराक्षेपकः स्मृतः॥

**अस15.19**
अधःप्रतिहतो वायुर्व्रजन्नूर्ध्वं हृदाश्रिताः।
नाडीः प्रविश्य हृदयं शिरः शङ्खौ च पीडयन्॥

**अस15.20**
आक्षिपेत् परितो गात्रं धनुर्वच्चास्य नामयेत्।
कृच्छ्रादुच्छ्वसिति स्तब्धस्रस्तमीलितदृक् ततः॥

**अस15.21**
कपोत इव कूजेच्च निस्संज्ञः सोऽपतन्त्रकः॥

**अस15.22**
स एव चापतानाख्यो मुक्ते तु मरुता हृदि।
अश्नुवीत मुहुः स्वास्थ्यं मुहुरस्वास्थ्यमावृते॥

**अस15.23**
गर्भपातसमुत्पन्नः शोणितातिस्रवोत्थितः।
अभिघातसमुत्थश्च दुश्चिकित्स्यतमो हि सः॥

**अस15.24**
मन्ये संस्तभ्य वातोऽन्तरायच्छन् धमनीर्यदा।
व्याप्नोति सकलं देहं जत्रुरायम्यते तदा॥

**अस15.25**
अन्तर्धनुरिवाङ्गं च वेगैः स्तम्भं च नेत्रयोः।
करोति जृम्भां दशनं दशनानां कफोद्वमम्॥

**अस15.26**
पार्श्वयोर्वेदनां वाक्यहनुपृष्ठशिरोग्रहत्।
अन्तरायाम इत्येष बाह्यायामश्च तद्विधः॥

**अस15.27**
देहस्यबहिरायामात् पृष्ठतो ह्रियते शिरः।
उरश्चेत्क्षिप्यते तत्र कन्धरा चावमृद्यते॥

**अस15.28**
दन्तेष्वास्ये च वैवर्ण्यं प्रस्वेदः स्तब्धगात्रता।
बाह्यायामं धनुष्कम्पं ब्रुवते वेगिनं च तम्॥

**अस15.29**
व्रणं मर्माश्रितं प्राप्य समीरणसमीरणात्।
व्यायच्छन्ति तनुं दोषाः सर्वामापादमस्तकम्॥

**अस15.30**
तृष्यतः पाण्डुगात्रस्य व्रणायामः स वर्जितः।
गते वेगे भवेत् स्वास्थ्यं सर्वेष्वाक्षेपकेषु तु॥

**अस15.31**
जिह्वातिलेखनाच्छुष्कभक्षणादभिघाततः।
कुपितो हनुमूलस्थः स्रंसयित्वानिलो हनू॥

**अस15.32**
करोति विवृतास्यत्वमथवा संवृतास्यताम्।
हनुस्रंसः स तेन स्यात् कृच्छ्राच्चर्वणभाषणम्॥

**अस15.33**
वाग्वाहिनीसिरासंस्थो जिह्वां स्तम्भयतेऽनिलः।
जिह्वास्तम्भः स तेनान्नपानवाक्येष्वनीशता॥

**अस15.34**
शिरसा भारभरणादतिहास्यप्रभाषणात्।
उत्त्रासवक्रक्षवथुखरकार्मुककर्षणात्॥

**अस15.35**
विषमादुपधानाच्च कठिनानां च चर्वणात्।
वायुर्विवृद्धस्तैस्तैश्च वातलैरूर्ध्वमास्थितः॥

**अस15.36**
वक्रीकरोति वक्त्रार्धमुक्तं हसितमीक्षितम्।
ततोऽस्य कम्पते मुर्धा वाक्सङ्गः स्तब्धनेत्रता॥

**अस15.37**
दन्तचालः स्वरभ्रंशः श्रुतिहानिः क्षवग्रहः।
गन्धाज्ञानं स्मृतेर्मोषस्त्रासः सुप्तस्य जायते॥

**अस15.38**
निष्ठीवः पार्श्वतो यायादेकस्याक्ष्णोर्निमीलनम्।
जत्रोरूर्ध्वं रुजास्तीव्राः शरीरार्धेऽधरेऽपि वा॥

**अस15.39**
तमाहुरर्दितं केचिदेकायाममथापरे।
रक्तमाश्रित्य पवनः कुर्यान्मूर्धधराः सिराः॥

**अस15.40**
रूक्षाः सवेदनाः कृष्णाः सोऽसाध्यः स्यात् सिराग्रहः।
गृहीत्वार्धं तनोर्वायुः सिराः स्नायूर्विशोष्य च॥

**अस15.41**
पक्षमन्यतरं हन्ति सन्धिबन्धान् विमोक्षयन्।
कृत्स्नोऽर्धकायस्तस्य स्यादकर्मण्यो विचेतनः॥

**अस15.42**
एकाङ्गरोगं तं केचिदन्ये पक्षवधं विदुः।
सर्वाङ्गरोगं तद्वच्च सर्वकायाश्रितेऽनिले॥

**अस15.43**
शुद्धवातहतः पक्षः कृच्छ्रसाध्यतमो मतः।
कृच्छ्रस्त्वन्येन संसृष्टो विवर्ज्यः क्षतहेतुकः॥

**अस15.44**
आमबद्धायनः कुर्यात् संस्तभ्याङ्गं कफान्वितः।
असाध्यं हतसर्वेहं दण्डवद्दण्डकं मरुत्॥

**अस15.45**
अंसमूलस्थितो वायुः सिराः सङ्कोच्य तत्रगाः।
बाहुप्रस्पन्दितहरं जनयत्यपवाहुकम्॥

**अस15.46**
तलं प्रत्यङ्गुलीनां या कण्डरा बाहुपृष्ठतः।
बाहुचेष्टापहरणी विश्वाची नाम सा स्मृता॥

**अस15.47**
वायुःकट्यां स्थितः सक्थ्नः कण्डरामाक्षिपेद्यदा।
तदा खञ्जो भवेज्जन्तुः पङ्गुः सक्थ्नोर्द्वयोरपि॥

**अस15.48**
कम्पते गमनारम्भे खञ्जन्निव च याति यः।
कलायखञ्जं तं विद्यान्मुक्तसन्धिप्रबन्धनम्॥

**अस15.49**
शीतोष्णद्रवसंशुष्कगुरुस्निग्धैर्निषेवितैः।
जीर्णाजीर्णे तथायाससङ्क्षोभस्वप्नजागरैः॥

**अस15.50**
सश्लेष्ममेदःपवनमाममत्यर्थसञ्चितम्।
अभिभूयेतरं दोषमुरू चेत् प्रतिपद्यते॥

**अस15.51**
सक्थ्यास्थना प्रपूर्यान्तः श्लेष्मणा स्तिमितेन तत्।
तदा स्तभ्नाति तेनोरू स्तब्धौ शीतावचेतनौ॥

**अस15.52**
परकीयाविव गुरू स्यातामतिभृशव्यथौ।
ध्यानाङ्गमर्दस्तैमित्यतन्द्राच्छर्द्यरुचिज्वरैः॥

**अस15.53**
संयुतः पादसदनकृच्छ्रोद्धरणसुप्तिभिः।
तमूरुस्तम्भमित्याहुराढ्यवातमथापरे॥

**अस15.54**
वातशोणितजः शोफो जानुमध्ये महारुजः।
ज्ञेयः क्रोष्टुकणीर्षस्तु स्थूलः क्रोष्टुकशीर्षवत्॥

**अस15.55**
रुक् पादे विषमन्यस्ते श्रमाद्वा जायते यदा।
वातेन गुल्फमाश्रित्य तमाहुर्वातकण्टकम्॥

**अस15.56**
पार्ष्णि प्रत्यङ्गुलीनां या कण्डरा मारुतार्दिता।
सक्थ्युत्क्षेपं निगृह्णाति गृध्रसीं तां प्रचक्षते॥

**अस15.57**
विश्वाची गृद्ध्रसी चोक्ता खल्ली तीव्ररुजान्विता।
हृष्येते चरणौ यस्य भ्वेतां च प्रसुप्तवत्॥

**अस15.58**
पादहर्षः स विज्ञेयः कफमारुतकोपजः।
पादयोः कुरुते दाहं पित्तासृकसहितोऽनिलः॥

**अस15.59**
विशेषतश्चङ्क्रमिते पाददाहं तमादिशेत्॥
इति पञ्चदशोऽध्यायः॥

अथ षोडशोऽध्यायः।

**अस16.1**
अथातो वातशोणितनिदानं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अस16.2**
विदाह्यन्नं विरुद्धं च तत्तच्चासृक्प्रदूषणम्।
भजतां विधिहीनं च स्वप्नजागरमैथुनम्॥

**अस16.3**
प्रायेण सुकुमारणामचङ्क्रमणशीलिनाम्।
अभिघातादशुद्धेश्च नृणामसृजि दूषिते॥

**अस16.4**
वातलैः शीतलैर्वायुर्वृद्धः क्रुद्धो विमार्गगः।
तादृशेनासृजा रुद्धः प्राक्तदेव प्रदूषयेत्॥

**अस16.5**
आढ्यरोगं खुडं वातबलासं वातशोणितम्।
तदाहुर्नामभिस्तच्च पूर्वं पादौ प्रधावति॥

**अस16.6**
विशेषाद्यानयानाद्यैः प्रलम्बौ तस्य लक्षणम्।
भविष्यतः कुष्ठसमं तथा सादः श्लथाङ्गता॥

**अस16.7**
जानुजङ्घोरुकट्यंसहस्तपादाङ्गसन्धिषु।
कण्डूस्फुरणनिस्तोदभेदगौरवसुप्तताः॥

**अस16.8**
भूत्वा भूत्वा प्रणश्यन्ति मुहुराविर्भवन्ति च।
पादयोर्मूलमास्थाय कदाचिद्धस्तयोरपि॥

**अस16.9**
आखोरिव विषं क्रुद्धं कृत्स्नं देहं प्रधावति।
त्वङ्मांसाश्रयमुत्तानं तत् पूर्वं जायते ततः॥

**अस16.10**
कालान्तरेण गम्भीरं सर्वान् धातूनाभिद्रवत्।
कण्ड्वादिसंयुतोत्ताने त्वक् ताम्रश्यावलोहिता॥

**अस16.11**
सायामा भृशदाहोषा गम्भीरेऽधिकपूर्वरुक्।
श्वयथुर्ग्रथितः पाकी सन्ध्यस्थिमज्जसु॥

**अस16.12**
भिन्दन्निव चरत्यन्तर्वक्रीकुवश्च वेगवान्।
करोति खञ्जं पङ्गुं वा शरीरे सर्वतश्चरन्॥

**अस16.13**
वातेऽधिकेऽधिकं तत्र शूलस्फुरणतोदनम्।
शोफस्य रौक्ष्यकृष्णत्वश्यावतावृद्धिहानयः॥

**अस16.14**
धमन्यङ्गुलिसन्धीनां सङ्कोचोऽङ्गग्रहोऽतिरुक्।
शीतद्वेषानुपशयौ स्तम्भवेपथुसुप्तयः॥

**अस16.15**
रक्ते शोफोऽतिरुक् तोदस्ताम्रश्चिमिचिमायते।
स्निग्धरूक्षैः शमं नैति कण्डूक्लेदसमन्वितः॥

**अस16.16**
पित्ते विदाहःसम्मोहः स्वेदो मूर्छा मदः सतृट्।
स्पर्शाक्षमत्वं रुग्रागः शोफः पाको भृशोष्मता॥

**अस16.17**
कफे स्तैमित्यगुरुतासुप्तिस्निग्धत्वशीतताः।
कण्डूर्मन्दा च रुग्द्वन्द्वसर्वलिङ्गं च सङ्करे॥

**अस16.18**
एकदोषानुगं साध्यं नवं याप्यं द्विदोषजम्।
त्रिदोषजं त्यजेत् स्रावि स्तब्धमर्बुदकारि च॥

**अस16.19**
रक्तमार्गं निहन्त्याशु शाखासन्धिषु मारुतः।
निविश्यान्योन्यमावार्य वेदनाभिर्हरत्यसून्॥

**अस16.20**
वायौ पञ्चात्मके प्राणो रौक्ष्यव्यायामलङ्घनैः।
अत्याहाराभिघाताध्ववेगोदीरणधारणैः॥

**अस16.21**
कुपितश्चक्षुरादीनामुपघातं प्रवर्तयेत्।
पीनसार्दिततृट्कासश्वासादींश्चामयान्बहून्॥

**अस16.22**
उदानः क्षवथूद्गारच्छर्दिनिद्राविधारणैः।
गुरुभारातिरुदितहास्याद्यैर्विकृतो गदान्॥

अस16.23। कण्ठरोधमनोभ्रंशच्छर्द्यरोचकपनिसान्।
कुर्याच्च गलगण्डादीन्तांतान्जत्रूर्ध्वसंश्रयान्॥

**अस16.24**
व्यानोऽतिगमनस्थानक्रीडाविषमचेष्टितैः।
विरोधिरूक्षभीहर्षविषादाद्यैश्च दूषितः॥

**अस16.25**
पुंस्त्वोत्साहबलभ्रंशशोफचित्तोत्प्लवज्वरान्।
सर्वाङ्गरोगनिस्तोदरोमहर्षाङ्गसुप्तताः॥

**अस16.26**
कुष्ठं विसर्पमन्यांश्च कुर्यात्सर्वाङ्गगान् गदान्।
समानो विषमाजीर्णशीतसङ्कीर्णभोजनैः॥

**अस16.27**
करोत्यकालशयनजागराद्यैश्च दूषितः।
शूलगुल्मग्रहण्यादीन् पक्वामाश्यजान् गदान्॥

**अस16.28**
अपानो रूक्षगुर्वन्नवेगाघातातिवाहनैः।
यानयानासनस्थानचङ्क्रमैश्चातिसेवितैः॥

**अस16.29**
कुपितः कुरुते रोगान्कृच्छ्रान्पक्वाशयाश्रयान्।
मूत्रशुक्रप्रदोषार्शोगुदभ्रंशादिकान् बहून्॥

**अस16.30**
सर्वं च मारुतं सामं तन्द्रास्तैमित्यगौरवैः।
स्निग्धत्वारोचकालस्यशैत्यशोफाग्निहानिभिः॥

**अस16.31**
कटुरूक्षाभिलाषेण तद्विधोपशयेन च।
युक्तं विद्यान्निरामं तु तन्द्रादीनां विपर्ययात्॥

**अस16.32**
वायोरावरणं चातो बहुभेदं प्रवक्ष्यते।
लिङ्गं पित्तावृते दाहस्तृष्णा शूलं भ्रमस्तमः॥

**अस16.33**
कटुकोष्णाम्ललवणैर्विदाहः शीतकमता।
शैत्यगौरवशूलानि कट्वाद्युपशयोऽधिकम्॥

**अस16.34**
लङ्घनायासरूक्षोष्णकामता च कफावृते।
रक्तावृते सदाहार्तिस्त्वङ्मांसान्तरजा भृशम्॥

**अस16.35**
भवेच्च रागी श्वयथुर्जायन्ते मण्डलानि च।
मांसेन कठिनः शोफो विवर्णः पिटकास्तथा॥

**अस16.36**
हर्षः पिपीलिकानां च सञ्चार इव जायते।
चलः स्निग्धो मृदुः शीतः शोफो गात्रेष्वरोचकः॥

**अस16.37**
आढ्यवात इति ज्ञेयः स कृच्छ्रो मेदसावृते।
स्पर्शमस्थ्यावृतेऽत्युष्णं पीडनं चाभिनन्दति॥

**अस16.38**
सूच्येव तुद्यतेऽत्यर्थमङ्गं सीदति शूल्यते।
मज्जावृते विनमनं जृम्भणं परिवेष्टनम्॥

**अस16.39**
शूलं च पीड्यमाने च पाणिभ्यां लभते सुखम्।
शुक्रावृतेऽतिवेगो वा न वा निष्फलतापि वा॥

**अस16.40**
भुक्ते कुक्षौ रुजा जीर्णे शाम्यत्यन्नावृतेऽनिले।
मूत्राप्रवृत्तिराध्मानं बस्तेर्मूत्रावृते भवेत्॥

**अस16.41**
विडावृते विबन्धोऽधः स्वे स्थाने परिकृन्तति॥

**अस16.42**
व्रजत्याशु जरां स्नेहो भुक्ते चानह्यते नरः।
शकृत्पीडितमन्नेन दुःखं शुष्कं चिरात्सृजेत्॥

**अस16.43**
सर्वधात्वावृते वायौ श्रोणिवङ्क्षणपृष्ठरुक्।
विलोमो मारुतोऽस्वास्थ्यं हृदयं पीड्यतेऽतिच॥

**अस16.44**
भ्रमो मूर्छा रुजा दाहः पित्तेन प्राण आवृते।
विदग्धेऽन्ने च वमनमुदाने विभ्रमादयः॥

**अस16.45**
दाहोऽन्तरूर्जाभ्रंशश्च दाहो व्याने तु सर्वगः।
क्लमोऽङ्गचेष्टासङ्गश्च सन्तापः सहवेदनः॥

**अस16.46**
समान उष्मोपहतिरतिस्वेदोऽरतिः सतृट्।
दाहश्च स्यादपाने तु मले हारिद्रवर्णता॥

**अस16.47**
रुजोऽतिवृद्धिस्तापश्च योनिमेहनपायुषु॥

**अस16.48**
श्लेष्मणा त्वावऋते प्राणे सादस्तन्द्रारुचिर्वमिः।
ष्ठीवनक्षवथूद्गारनिश्वासोच्छवाससङ्ग्रहः॥

**अस16.49**
उदाने गुरुगात्रत्वमरुचिर्वाक्स्वरग्रहः।
बलवर्णप्रणाशश्च व्याने पर्वास्थिवाग्ग्रहः॥

**अस16.50**
गुरुताङ्गेषु सर्वेषु स्खलितं च गतौ भृशम्।
समानेऽतिहिमाङ्गत्वमस्वेदो मन्दवह्निता॥

**अस16.51**
अपाने सकफं मूत्रशकृतोः स्यात् प्रवर्तनम्।
इति द्वाविंशतिविधं वायोरावरणं विदुः॥

**अस16.52**
प्राणादयस्तथान्योन्यमावृण्वन्ति यथाक्रमम्।
सर्वेपि विंशतिविधं विद्यादावरणं च तत्॥

**अस16.53**
निश्वासोच्छववाससंरोधःप्रतिश्यायःशिरोग्रहः।
हृद्रोगो मुखशोषश्च प्राणेनोदान आवृते॥

**अस16.54**
उदानेनावृते प्राणे वर्णौजोबलसङ्क्षयः।
दिशानया च विभजेत् सर्वमावरणं भिषक्॥

**अस16.55**
स्थानान्यवेक्ष्य वातानां वृद्धिं हानिं च कर्मणाम्।
प्राणादीनां च पञ्चानां मिश्रमावरणं मिथः॥

**अस16.56**
पित्तादिभिर्द्वादशभिर्मिश्राणां मिश्रितैश्च तैः।
मिश्रैः पित्तादिभिस्तद्वन्मिश्रणाभिरनेकधा॥

**अस16.57**
तारतम्यविकल्पाच्च यात्यावृतिरसङ्ख्यताम्।
तां लक्षयेदवहितो यथास्वं लक्षणोदयात्॥

**अस16.58**
शनैश्शनैश्चोपशयाद् गूढामपि मुहुर्मुहुः।
विशेषाज्जीवितं प्राण उदानो बलमुच्यते॥

**अस16.59**
स्यात्तयोः पीडनाद्धानिरायुषश्च बलस्य च॥

**अस16.60**
आवृता वायवोऽज्ञाता ज्ञाता वा वत्सरं स्थिताः।
प्रयत्नेनापि दुःसाध्या भवेयुर्वानुपक्रमाः॥

**अस16.61**
विद्रधिप्लीहहृद्रोगगुल्माग्निसदनादयः।
भवन्त्युपद्रवास्तेषामावृतानामुपेक्षणात्॥

# अष्टाङ्गसंग्रहः चिकित्सितस्थानम् अध्याय १-५

https://sa.wikisource.org/s/9zm

**अष्टाङ्गसंग्रहः**

अष्टाङ्गसङ्ग्रहः

चिकित्सितस्थानम्।

**अचि1.1**
अथातो ज्वरचिकित्सितं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अचि1.2**
आमाशयस्थो हत्वाग्निं सामो मार्गान् पिधाय यत्।
विदधाति ज्वरं दोषस्तस्मात् कुर्वीत लङ्घनम्॥

**अचि1.3**
प्राग्रूपेषु ज्वरादौ वा बलं यत्नेन पालयन्।
बलाधिष्ठानमारोग्यमारोग्यार्थः क्रियाक्रमः॥

**अचि1.4**
लङ्घनैः क्षपिते दोषे दीप्तेऽग्नौ लाघवे सति।
स्वास्थ्यं क्षुत्तृड् रुचिः पक्तिर्बलेमाजश्च जायते॥

**अचि1.5**
तत्रोत्कृष्टे समुत्क्लिष्टे कफप्राये चले मले।
सहृल्लासप्रसेकान्नद्वेषकासविषूचिके॥

**अचि1.6**
सद्योभुक्तस्य सञ्जाते ज्वरे सामे विशेषतः।
वमनं वमनार्हस्य शस्तं कुर्यात्तदन्यथा॥

**अचि1.7**
श्वासातीसारसन्मोहहृद्रोगविषमज्वरान्॥

**अचि1.8**
पिप्पलीभिर्युतां गालां कलिङ्गैर्मधुकेन वा।
पीत्वोष्णतोयेन वमेन्मध्वम्बु लवणाम्बु वा॥

**अचि1.9**
पटोलनिम्बकर्कोटवेत्रपत्रजलानि वा।
पेयां मण्डं रसं चेक्षोर्मद्यं कल्पोदितानि वा॥

**अचि1.10**
वमनानि प्रयुञ्जीत बलकालविभागवित्।
कृतेऽकृते वा वमने ज्वरी कुर्याद्विशोषणम्॥

**अचि1.11**
दोषाणां समुदीर्णानां पाचनाय शमाय च।
आमेन भस्मनेवाग्नौ छन्नेऽन्नं न विपच्यते॥

**अचि1.12**
तस्मादादोषपचनाज्ज्वरितानुपवासयेत्।
तृष्णगल्पाल्पमुष्णाम्बु पिबेद्वातकफज्वरे॥

**अचि1.13**
तत् कफं विलयं नीत्वा तृष्णामाशु निवर्तयेत्।
उदीर्य चाग्निं स्रोतांसि मृदूकृत्य विशोधयेत्॥

**अचि1.14**
लीनपित्तानिलस्वेदशकृन्मूत्रानुलोमनम्।
निद्राजाड्यारुचिहरं प्राणानामवलम्बनम्॥

**अचि1.15**
विपरीतमतः शीतं दोषसङ्घातवर्धनम्॥

**अचि1.16**
उष्णमेवंगुणत्वेऽपि युञ्ज्यान्नैकान्तपित्तले।
उद्रिक्तपित्ते दवथुदाहमोहातिसारिणि॥

**अचि1.17**
विषमद्योत्थिते ग्रीष्मे क्षतक्षीणेऽस्रपित्तिनि।
घनचन्दनशुण्ठ्यम्बुपर्पटोशीरसाधितम्॥

**अचि1.18**
शीतं तेभ्यो हितं तोयं पाचनं तृड्ज्वरापहम्।
ऊष्मा पित्तादृते नास्ति ज्वरो नास्त्यूष्मणा विना॥

**अचि1.19**
तस्मात् पित्तविरुद्धानि त्यजेत् पित्ताधिकेऽधिकम्।
स्नानाभ्यङ्गप्रदेहांश्च परिशेषं च लङ्घनम्॥

**अचि1.20**
अजीर्ण इव शूलघ्नं सामे तीव्ररुजि ज्वरे।
न पिबेदौषधं तद्धि भूय एवाममावहेत्॥

**अचि1.21**
आमाभिभूतकोष्ठस्य क्सीरं विषमहेरिव।
सोदर्दपीनसश्वासे जङ्घापर्वास्थिशूलिनि।
वातश्लेष्मात्मके स्वेदः प्रशस्तः स प्रवर्तयेत्॥

**अचि1.22**
स्वेदमूत्रशकृद्वातान् कुर्यादग्नेश्च पाटवम्।
स्नेहोक्तमाचारविधिं सर्वतश्चानुपालयेत्॥

**अचि1.23**
लङ्घनं स्वेदनं कालो यवाग्वस्तिक्तको रसः।
मलानां पाचनानि स्युर्यथावस्थं क्रमेण वा॥

**अचि1.24**
शुद्धवातक्षयागन्तुजीर्णज्वरिषु लङ्घनम्।
नेष्यते तेषु हि हितं शमनं यन्न कर्शनम्॥

**अचि1.25**
तत्रसामज्वराकृत्या जानीयादविशोषितम्।
द्विधिधोपक्रमज्ञानमवेक्षेत च लङ्घने॥

**अचि1.26**
युक्तं लङ्घितलिग्गैस्तु तं पेयाभिरुपाचरेत्।
यथास्वौषधसिद्धाभिर्मण्डपूर्वाभिरादितः॥

**अचि1.27**
षडहं वा मृदुत्वं वा ज्वरो यावदवाप्नुयात्।
तस्याग्निर्दीप्यते ताभिः समिद्भिरिव पावकः॥

**अचि1.28**
ताश्च भेषजसंयोगाल्लघुत्वाच्चाग्निदीपनाः।
वातमूत्रपुरीषाणां दोषाणां चानुलोमकाः॥

**अचि1.29**
स्वेदनाय द्रवोष्णत्वान्मृदुत्वात्तृट्प्रशान्तये।
आहारभावात् प्राणाय सरत्वाल्लाघवाय च॥

**अचि1.30**
ज्वरघ्ना ज्वरसात्म्यत्वात् तस्मात् पेयाभिरादितः।
उपक्रमेज्ज्वरान् सर्वानृते मद्यसमुत्थितात्॥

**अचि1.31**
प्राग्लाजपेयां सुजरां सशुण्ठीधान्यपिप्पलीम्।
ससैन्धवां तथाम्लार्थी तां पिबेत् सहदाडिमाम्॥

**अचि1.32**
सृष्टविड्बहुपित्तो वा सशुण्ठीमाक्षिकां हिमाम्।
बस्तिपार्श्वशिरःशूली व्याघ्रीगोक्षुरसाधिताम्॥

**अचि1.33**
पृश्नि पर्णीबलाबिल्वनागरोत्पलधान्यकैः।
सिद्धां ज्वरातिसार्यम्लां पेयां दीपनपाचनीम्॥

**अचि1.34**
ह्रस्वेनपञ्चमूलेन हिक्कारुक्श्वासकासवान्।
पञ्चमूलेन महता कफार्तो यवसाधिताम्॥

**अचि1.35**
विबद्धवर्चाः सयवां पिप्पल्यामलकैः कृताम्।
यवागूं सर्पिषा भृष्टां मलदोषानुलोमनीम्॥

**अचि1.36**
चविकापिप्पलीमूलद्राक्षामलकनागरैः।
कोष्ठे विबद्धे सरुजि पिबेत्तु परिकर्तिनि॥

**अचि1.37**
कोलवृक्षाम्लकलशीधावनीश्रीफलैः कृताम्।
अस्वेदनिद्रस्तृष्णार्तः सितामलकनागरैः॥

**अचि1.38**
सिताबदरमृद्वीकासारिवामुस्तचन्दनैः।
तृष्णाच्छर्दिपरीदाहज्वरघ्नीं क्षौद्रसंयुताम्॥

**अचि1.39**
कुर्यात् पेयौषधैरेव रसयूषादिकानपि।
मद्योद्भवे मद्यनित्ये पित्तस्थानगते कफे॥

**अचि1.40**
ग्रीष्मे तयोर्वाधिकयोस्तृट्छर्दिदाहपीडिते।
ऊर्ध्वं प्रवृत्ते रक्ते च पेयां नेच्छन्ति तेषु तु॥

**अचि1.41**
द्राक्षादाडिमकाश्मर्यपथ्या पीलुपरूषकैः।
समधूकैः सबदरैः सक्षौद्रान् ससितोपलान्॥

**अचि1.42**
ज्वरघ्नैस्तोयमृदितैरद्भिर्वा लाजतर्पणान्।
पिबेत् सुसूक्ष्मरजसस्ततो जीर्णे तु तर्पणे॥

**अचि1.43**
यवाग्वां वौदनं क्षुद्वानश्नीयाद्भृष्टतण्डुलम्।
दकलावणिकैर्यूषैः रसैर्वा मुद्गलावजैः॥

**अचि1.44**
इत्ययं षडहो नेयो बलं दोषं च रक्षता।
ततः पक्वेषु दोषेषु लङ्घनाद्यैः प्रशस्यते॥

**अचि1.45**
कषायो दोषशेषस्य पाचनः शमनोऽथवा।
तिक्तः पित्ते विशेषेण प्रयोज्यः कटुकः कफे॥

**अचि1.46**
पित्तश्लेष्महरत्वेऽपि कषायः स न शस्यते।
नवज्वरे मलस्तम्भात् कषायो विषमज्वरान्॥

**अचि1.47**
कुरुतेऽरुचिहृल्लासहिध्माध्मानादिकानपि।
न च्यवन्ते न पच्यन्ते कषायस्तम्भिता मलाः॥

**अचि1.48**
तिर्यग्गता विमार्गा वा वर्धयन्त्यपि च ज्वरम्।
बद्धामकफवातत्वाच्छूलानाहादिकानपि॥

**अचि1.49**
सप्ताहादौषधं केचिदाहुरन्ये दशाहतः।
केचिल्लघ्वन्नभुक्तस्य योज्यमामोल्बणे न तु॥

**अचि1.50**
तीव्रज्वरपरीतस्य दोषवेगोदये यतः।
दोषेऽथवातिनिचिते तन्द्रास्तैमित्यकारिणि॥

**अचि1.51**
अपच्यमानं भैषज्यं भूयो ज्वलयति ज्वरम्।
यदा ज्वरो मृदुर्देहो लघुः प्रचलिता मलाः॥

**अचि1.52**
अचिरज्वरितस्यापि योजयेद्भेषजं तदा।
मुस्तया पर्पटं युक्तं शुण्ठ्या दुस्पर्शयापि वा॥

**अचि1.53**
पाक्यं शीतकषायं वा पाठोशीरं सवालकम्।
पिबेत्तद्वच्च भूनिम्बगुडूचीमुस्तनागरम्॥

**अचि1.54**
यथायोगमिमे योज्याः कषाया दोषपाचनाः।
ज्वरारोचकतृष्णास्यवैरस्यापक्तिनाशनाः॥

**अचि1.55**
पाठेन्द्रयवभूनिम्बमुस्तपर्पटकामृताः।
जयन्त्याममतीसारं ज्वरं च समहौषधाः॥

**अचि1.56**
दुरालभामृतामुस्तानागरं वातजे ज्वरे।
अथवा पिप्पलीमूलगुडूचीविश्वभेषजम्॥

**अचि1.57**
कनीयः पञ्चमूलं च पित्ते क्षौद्रसमन्विताः।
कलिङ्गमुस्तकटुका मुस्तापर्पटकं तथा॥

**अचि1.58**
सधन्वयासभूनिम्बं वत्सकाद्यो गणः कफे।
अथवा वृषगाङ्गेयी शृङ्गवेरदुरालभाः॥

**अचि1.59**
रुग्विबन्धानिलश्लेष्मयुक्ते दीपनपाचनम्।
अभयापिप्पलीमूलशम्याककटुकाघनम्॥

**अचि1.60**
कलिङ्गकाः पटोलस्य पत्रं कटुकरोहिणी।
पटोलं सारिवा मुस्ता पाठा कटुकरोहिणी॥

**अचि1.61**
पटोलनिम्बत्रिफलामृद्वीकामुस्तवत्सकाः।
किराततिक्तममृता चन्दनां विश्वभेषजम्॥

**अचि1.62**
धात्री मुस्तामृताक्षौद्रमर्धश्लोकसमापनाः।
पञ्चैते सन्ततादीनां पञ्चानां शमना मताः॥

**अचि1.63**
पटोलेन्द्रयवारिष्टभद्रमुस्तामृताद्वयम्।
सारिवाद्वितयं पाठा त्रायन्ती कटुरोहिणी॥

**अचि1.64**
पटोलारिष्टमृद्वीकाशम्याकत्रिफलावृषम्।
चन्दनोशीरधान्याब्दगुडूचीविश्वभेषजम्॥

**अचि1.65**
देवदारुस्थिराशुण्ठीवासाधात्रीहरीतकीः।
पञ्च पञ्च ज्वरान् घ्नन्ति योगा मधुसितोत्कटाः॥

**अचि1.66**
सगुडाः सारिवाद्राक्षाशताह्वाकणरेणुकाः।
काश्मर्यसारिवाद्राक्षात्रायमाणामृतागुडाः॥

**अचि1.67**
शतपुष्पावचाकुष्ठदेवदारुहरेणुकाः।
शर्करामधुसंयुक्ताः समांसीमुस्तधान्यकाः॥

**अचि1.68**
कृष्णापुनर्नवाद्राक्षाशताह्वागुडसारिवाः।
शालिपर्णीबलाद्राक्षासारिवाच्छिन्नसम्भवाः॥

**अचि1.69**
आरग्वधो बला रास्ना काश्मर्यं मधुकं गुडः।
शतावरीच्छिन्नरुहास्वरसो वा गुडान्वितः॥

**अचि1.70**
सकृष्णाजीरकसितानागरश्चामृतारसः।
वातज्वरं जयन्यूशु केवलो वामृतारसः॥

**अचि1.71**
भार्ङ्गीसरलगाङ्गेयीदारुकुष्ठैलवालुकम्।
कोष्णं घृतगुडोपेतं पिबेद्वा वातजे ज्वरे॥

**अचि1.72**
पटोलादिगुडूच्यादी सूत्रोक्तौ पित्तजे ज्वरे।
अञ्जनादिः सकाश्मर्यः सारिवादिः सशर्करः॥

**अचि1.73**
सितामधुककाश्मर्यशीतोशारिपरूषकम्।
गुडूचीसारिवालोद्ध्रकमलोत्पलशर्कराः॥

**अचि1.74**
द्राक्षाभयातिक्तघनशम्याकफलपर्पटम्।
श्यामापर्पटदुःस्पर्शातिक्तातिक्तसितावृषाः॥

**अचि1.75**
शर्करातिक्तकटुकात्रायमाणाबिभीतकम्।
गुडूच्यामलकैर्युक्तः केवलो वापि पर्पटः॥

**अचि1.76**
कषायो वा हिमस्तिक्ताद्राक्षामधुकनिम्बजः।
पित्तज्वरघ्नी कटुका श्लक्ष्णापिष्टा सशर्करा॥

**अचि1.77**
कफजेऽतिविषोशीरपटोलमरिचक्षपाः।
समूर्वेन्द्रयवद्वीपिकुष्ठनिम्बवचागुडाः॥

**अचि1.78**
सप्तच्छदामृतानिम्बस्फूर्जातं माक्षिकान्वितम्।
निशात्रिकटुकं तिक्तानागपुष्पकलिङ्गकाः॥

**अचि1.79**
सारिवातिविषाकुष्ठदुःस्पर्शामुस्तगुग्गुलुः।
परूषं त्रिफला तिक्ता बीजं वृषकजं घनम्॥

**अचि1.80**
नागरत्रिफलामुस्तामूर्वापाठाः समाक्षिकाः।
संसर्गसन्निपातेषु मिश्रानेतान् विकल्पयेत्॥

**अचि1.81**
गोकण्टकबलादर्भाः ससिता वातपित्तजे।
द्राक्षामलकभूनिम्बाः सगुडूचीशठीगुडाः॥

**अचि1.82**
त्रायन्ती सारिवाद्राक्षा काश्मर्यच्छिन्नजागुडाः।
द्राक्षामसूरत्रायन्तीगुडूचीसारिवाबलाः॥

**अचि1.83**
द्राक्षामधूकमधुकलोद्ध्रकाश्मर्यसारिवाः।
मुस्तामलकद्द्रीबेरपद्मकेसरपद्मकम्॥

**अचि1.84**
मृणालचन्दनोशीरनीलोत्पलपरूषकम्।
फाण्टो हिमो वा द्राक्षादिर्जातीकुसुमवासितः॥

**अचि1.85**
युक्तो मधुसितालाजैर्जयत्यनिलपित्तजम्।
ज्वरं मदात्ययं छर्दिं मूर्छां दाहं श्रमं भ्रमम्।
ऊर्ध्वगं रक्तपित्तं च पिपासां कामलामपि॥

**अचि1.86**
कफवाते वचातिक्तापाठारग्वधवत्सकाः॥

**अचि1.87**
पिप्पलीचूर्णयुक्तो वा क्वाथश्छिन्नोद्भवोद्भवः।
व्याघ्रीशुण्ठ्यमृताक्वाथः पिप्पलीचूर्णसंयुतः॥

**अचि1.88**
वातश्लेष्मज्वरश्वासकासपीनसशूलजित्।
पथ्या कुस्तुम्बरीमुस्ताशुण्ठीकतृणपर्पटम्॥

**अचि1.89**
सकट्फलवचाभार्ङ्गीदेवाह्वं मधुहिङ्गुमत्।
कफवातज्वरष्ठीवकुक्षिहृत्पार्श्ववेदनाः॥

**अचि1.90**
कण्ठामयास्यश्वयथुकासश्वासान्नियच्छति॥

**अचि1.91**
आरग्वधादिः सक्षौद्रः कफपित्तज्वरं जयेत्।
तथा तिक्तावृषोशीरत्रायन्तीत्रिफलामृताः।
पटोलातिविषानिम्बमूर्वाधन्वयवासकाः॥

**अचि1.92**
वृषपुष्पच्छदरसः शर्करामाक्षिकान्वितः।
पित्तश्लेष्मज्वरं हन्ति सासृक्पित्तं सकामलम्॥

**अचि1.93**
अनन्ताविश्वभैषज्यकटुकातोयतोयदाः।
ज्वरतृड्भ्रमसम्मोहधूमकाम्लकनाशनाः॥

**अचि1.94**
सन्निपातज्वरे व्याघ्नीदेवदारुनिशाद्वयम्।
पटोलपत्रनिम्बत्वक् त्रिफलाकटुकायुतम्॥

**अचि1.95**
मुस्तापर्पटकं पथ्या मृद्वीका कटुरोहिणी।
त्रायन्तीकणतन्मूलद्राक्षापथ्यामधूलिकाः॥

**अचि1.96**
त्रिफलोशीरषड्ग्रन्थायष्टीमधुबलाघनाः।
नागरं पौष्करं मूलं गुडूची कण्टकारिका॥

**अचि1.97**
सकासश्वासपार्श्वार्तौ वातश्लेष्मोत्तरे ज्वरे।
मधूकपुष्पमृद्वीका त्रायमाणा परूषकम्॥

**अचि1.98**
सोशीरतिक्तात्रिफलाकाश्मर्यं कल्पयेद्धिमम्।
कषायं तं पिबन् काले ज्वरान् सर्वानपोहति॥

**अचि1.99**
जात्यामलकमुस्तानि तद्वद्धन्वयवासकम्।
बद्धविट् कटुकाद्राक्षात्रायन्तीत्रिफलागुडान्॥

**अचि1.100**
जीर्णौषधोऽन्नं पेयाद्यमाचरेच्छलेष्मवान्न तु।
पेया कफं वर्धयति पङ्कं पांसुषु वृष्टिवत्॥

**अचि1.101**
श्लेष्माभिष्यण्णदेहानामतः प्रागपि योजयेत्।
यूषान् कुलत्थचणककलायादिकृतान् लघून्।
रूक्षांस्तिक्तरसोपेतान् हृद्यान् रुचिकरान् पटून्॥

**अचि1.102**
रक्ताद्याः शालयो जीर्णाः षष्टिकाश्च ज्वरे हिताः।
श्लेष्मोत्तरे वीततुषास्तथा वाट्यकृता यवाः॥

**अचि1.103**
ओदनस्तैः स्रुतो द्विस्त्रिः प्रयोक्तव्यो यथायथम्।
दोषदूष्यादिबलतो ज्वरघ्नक्वाथसाधितः॥

**अचि1.104**
मुद्गाद्यैर्लघुभिर्यूषाः कुलत्थैश्च ज्वरापहाः।
कारवेल्लककर्कोटबालमूलकपर्पटैः।
वार्ताकनिम्बकुसुमपटोलफलपल्लवैः॥

**अचि1.105**
अत्यन्तलघुभिर्मांसैर्जाङ्गलैश्च हिता रसाः।
व्याघ्रीपरूषतर्कारीद्राक्षामलकदाडिमैः॥

**अचि1.106**
संस्कृताः पिप्पलीशुण्ठीधान्यजीरकसैन्धवैः।
सितामधुभ्यां प्रायेण संयुता वा कृताकृताः॥

**अचि1.107**
अनम्लतक्रसिद्धानि रुच्यानि व्यञ्जनानि च।
अच्छान्यनलसम्पन्नान्यनुपानेऽपि योजयेत्।
तानि क्वथितशीतं च वारि मद्यं च सात्म्यतः॥

**अचि1.108**
कषायपानपथ्यान्नैर्दशाह इति लङ्घते।
सर्पिर्दद्यात् कफे मन्दे वातपित्तोत्तरे ज्वरे।
पक्वेषु दोषेष्वमृतं तद्विषोपममन्यथा॥

**अचि1.109**
दशाहे स्यादतीतेऽपि ज्वरोपद्रववृद्धिकृत्।
लङ्घनादिक्रमं तत्र कुर्यादा कफसङ्क्षयात्॥

**अचि1.110**
सज्वरं ज्वरमुक्तं वा दिनान्ते भोजयेल्लघु।
श्लेष्मक्षयविवृद्धोष्मा बलवाननलस्तदा॥

**अचि1.111**
यथोचितेऽथवा काले दोषसात्म्यानुरोधतः।
प्रागल्पवह्निर्भुञ्जानो न ह्यजीर्णेन पीड्यते॥
इति प्रथमोऽध्यायः॥

अथ द्वितीयोऽध्यायः।

**अचि2.1**
अथातो जीर्णज्वरचिकित्सितं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अचि2.2**
देहधात्वबलत्वेन ज्वरो जीर्णोऽनुवर्तते॥

**अचि2.3**
रूक्षं हि तेजो ज्वरकृत्तेजसा रूक्षितस्य च।
वमनस्वेदकालाम्बुकषायलघुभोजनैः॥

**अचि2.4**
यः स्यादतिबलो धातुः सहचारी सदागतिः।
तस्य संशमनं सर्पिर्दीप्तस्येवाम्बु वेश्मनः॥

**अचि2.5**
वातपित्तजितामग्र्यं संस्कारमनुरुध्यते।
सुतरां तद्ध्यतो दद्याद्यथास्वौषधसाधितम्॥

**अचि2.6**
विपरीतं ज्वरोष्माणं जयेत् पित्तं च शैत्यतः।
स्नेहाद्वातं घृतं तुल्यं योगसंस्कारतः कफम्॥

**अचि2.7**
पूर्वे कषायाः सघृताः सर्वे योज्या यथामलम्।
त्रिफलापिचुमन्दत्वङ्मधुकं बृहतीद्वयम्।
समसूरदलं क्वाथः सघृतो ज्वरकासहा॥

**अचि2.8**
निदिग्धिकातामलकीत्रायमाणाकलिङ्गकैः।
कृष्णांशुमत्यतिविषाकटुकासेव्यचन्दनैः॥

**अचि2.9**
धात्रीबिल्वघनद्राक्षासारिवाभिश्च साधितम्।
हन्ति सद्यो घृतं जीर्णज्वरं कासं हलीमकम्।
अरुचिं विषमं वह्निं यक्ष्माणं च नवोत्थितम्॥

**अचि2.10**
वासागुडूचीत्रिफलात्रायमाणायवासकात्।
क्वाथे क्षीरे च विपचेत् ज्वरघ्नं कल्कितैर्घृतम्।
पिप्पलीमुस्तमृद्वीकाचन्दनोत्पलनागैरः॥

**अचि2.11**
बलादुरालभामुस्तात्रायतीनिम्बपर्पटम्।
पञ्चमूलद्वयं यच्च क्वाथयित्वा घृतं पचेत्।
सक्षीरं कल्कितैर्द्राक्षामेदामलकपौष्करैः॥

**अचि2.12**
शठीतामलकीयुक्तैस्तच्च ज्वरहरं परम्।
क्षयकासशिरःपार्श्वहृच्छूलांसाभितापनुत्॥

**अचि2.13**
कुलत्थकोलत्रिफलादशमूलयवान् पचेत्।
द्विपलान् सलिलद्रोणे पूते पिष्ट्वाक्सकान् क्षिपेत्॥

**अचि2.14**
पञ्चकोलकसप्ताह्वयस्थानिम्बतुम्बुरून्।
शठीपुष्करमूलार्कमूलप्रतिविषावचाः॥

**अचि2.15**
किराततिक्तकं मुस्तं कर्कटाख्यां दुरालभाम्।
नक्तमालमुभे पाठे कटुकाशिग्रुतेजनीः॥

**अचि2.16**
सोमवल्कद्विरजनीकण्टकीकण्टकारिकाः।
पटोलहिङ्गुगोजिह्वाकेबुकं मदनाज्झटा॥

**अचि2.17**
लवणानि पलांशानि क्षारानर्धपलोन्मितान्।
प्रस्थं चाज्यस्य तत्सिद्धं दीपनं कफवातजित्॥

**अचि2.18**
हृत्प्लीहग्रहणीगुल्मकासश्वासार्शसां हितम्।
दीर्घज्वराभिभूतानां ज्वरिणाममृतोपमम्॥

**अचि2.19**
मञ्जिष्ठातिविषापथ्यावचानागररोहिणीः।
देवदारु हरिद्रां च द्रोणेऽपां पालिकान् पचेत्।
क्वाथेऽस्मिन् साधयेत् पिष्टैर्घृतप्रस्थं पिचून्मितैः॥

**अचि2.20**
शृङ्गवेरकणाहिङ्गुद्विक्षारपटुपञ्चकैः।
तत्कफावृतसर्वोत्थज्वरिणाममृतोपमम्॥

**अचि2.21**
वर्ध्महिध्मारुचिश्वासकासपाण्डुविकारिणाम्।
गलग्रह (ग्रन्थि) प्रमेहार्शः प्लीहापस्मारशोफिनाम्।
उदावर्तपरीतानां मन्दाग्निकृमिकोष्ठिनाम्॥

**अचि2.22**
गुडूच्या रसकल्काभ्यां त्रिफलाया वृषस्य च।
मृद्वीकाया बलायाश्च सिद्धाः स्नेहा ज्वरच्छिदः॥

**अचि2.23**
जीर्णे घृते च भुञ्जीत मृदुमांसरसौदनम्।
बलं ह्यलं दोषहरं परं तच्च बलप्रदम्॥

**अचि2.24**
कफपित्तहरा मुद्गकारवेल्लादिजा रसाः।
प्रायेण तस्मान्न हिता जीर्णे वातोत्तरे ज्वरे।
शूलोदावर्तविष्टम्भजनना ज्वरवर्धनाः॥

**अचि2.25**
न शाम्यत्येवमपि चेज्ज्वरः कुर्वीत शोधनम्।
शोधनार्हस्य वमनं प्रागुक्तं तस्य योजयेत्।
आमाशयगते दोषे बलिनः पालयन् बलम्॥

**अचि2.26**
सन्तर्पणोत्थे वमनं पिप्पलीलवणाम्बुना।
शर्करामाक्षिकाम्भोभिर्दाहतृष्णोल्बणे ज्वरे॥

**अचि2.27**
पक्वे तु शिथिले दोषे ज्वरे वा विषमद्यजे।
मोदकं त्रिफलाश्यामात्रिवृत्पिप्पलिकेसरैः॥

**अचि2.28**
ससितामधुभिर्दद्याद्व्योषाद्यं वा विरेचनम्।
द्राक्षाधात्रीरसं तद्वत्सद्राक्षां वा हरीतकीम्।
रसमामलकानां वा घृतभृष्टं ज्वरापहम्॥

**अचि2.29**
लिह्याद्वा त्रिवृतश्चूर्णं कृष्णात्रिफलयोस्तथा।
सर्पिर्मधुभ्यां त्रिफलां पिबेद्राक्सारसेन वा॥

**अचि2.30**
आरग्वधं वा पयसा मृद्वीकानां रसेन वा।
त्रिफलां त्रायमाणां वा पयसा ज्वरितः पिबेत्॥

**अचि2.31**
सघृतं त्रिफलाक्वाथं सर्पिषा वा विना शृतम्।
पयोऽनुपानमुष्णं वा मृद्वीकास्वरसं पिबेत्।
विरिक्तानां च संसर्गी मण्डपूर्वा यथाक्रमम्॥

**अचि2.32**
च्यवमानं ज्वरोत्क्लिष्टमुपेक्षेत मलं सदा।
पक्वोऽपि हि विकुर्वीत दोषः कोष्ठे कृतास्पदः॥

**अचि2.33**
अतिप्रवर्तमानं वा पाचयन् सङ्ग्रहं नयेत्॥

**अचि2.34**
आमसङ्ग्रहणे दोषा दोषोपक्रम ईरिताः॥

**अचि2.35**
पाययेद्दोषहरणं मोहादामज्वरे तु यः।
प्रसुप्तं कृष्णसर्पं स कराग्रेण परामृशेत्॥

**अचि2.36**
ज्वरक्षीणस्य न हितं वमनं न विरेचनम्।
कामं तु पयसा तस्य निरूहैर्वा हरेन्मलान्॥

**अचि2.37**
क्षीरोचितस्य प्रक्षीणश्लेष्मणो दाहतृड्वतः।
क्षीरं पित्तानिलार्तस्य पथ्यमप्यतिसारिणः॥

**अचि2.38**
तद्वपुर्लंघनोत्तप्तं प्लुष्टं वनमिवाग्निना।
दिव्याम्बु जीवयेत्तस्य ज्वरं चाशु नियच्छति॥

**अचि2.39**
संस्कृतं शीतमुष्णं वा तस्माद्धारोष्णमेव वा।
विभज्य काले युञ्जीत ज्वरिणं हन्त्यतोऽन्यथा॥

**अचि2.40**
पयः सशुण्ठीखर्जूरमृद्वीकाशर्कराघृतम्।
शृतशीतं मधुयुतं तृड्दाहज्वरनाशनम्॥

**अचि2.41**
तद्वद्द्राक्षाबलायष्टीसारिबाकणचन्दनैः।
चतुर्गुणेनाम्भसा वा पिप्पल्या वा शृतं पिबेत्॥

**अचि2.42**
कासाच्छ्वासाच्छिरश्शूलान् पार्श्वशूलाच्चिरज्वरात्।
मुच्यते ज्वरितः पीत्वा पञ्चमूलीशृतं पयः॥

**अचि2.43**
शृतमरेण्डमूलेन बालविल्वेन वा ज्वरात्।
धारोष्णं वा पयः पीत्वा विबद्धानिलवर्चसः।
सरक्तपिच्छातिसृतेः सतृट्शूलप्रवाहिकात्॥

**अचि2.44**
सिद्धं शुण्ठीबलाव्याघ्नीगोकण्टकगुडैः पयः।
शोफमूत्रशकृद्वातविबन्धज्वरकासजित्॥

**अचि2.45**
वृश्चीवबिल्ववर्षाभूसाधितं ज्वरशोफनुत्।
शिंशिपासारसिद्धं च क्षीरमाशु ज्वरापहम्॥

**अचि2.46**
निरूहस्तु बलं वह्निं विज्वरत्वं मुदं रुचिम्।
दोषे युक्तः करोत्याशु पक्वे पक्वाशयं गते॥

**अचि2.47**
पित्तं वा कफपित्तं वा पक्वाशयगतं हरेत्।
स्रंसनं त्रीनपि मलान् बस्तिः पक्वाशयाश्रयान्॥

**अचि2.48**
प्रक्षीणकफपित्तस्य त्रिकपृष्ठकटीग्रहे। दीप्ताग्नेर्बद्धशकृतः प्रयुञ्जीतानुवासनम्॥

**अचि2.49**
पटोलनिम्बच्छदनकटुकाचतुरङ्गुलैः।
स्थिराबलागोक्षुरकमदनोशीरवालकैः॥

**अचि2.50**
पयस्यर्धोदके क्वाथं क्षीरशेषं विमिश्रितम्।
कल्कितैर्मुस्तमदनकृष्णामधुकवत्सकैः।
बस्तिं मधुघृताभ्यां च पीडयेज्ज्वरनाशनम्॥

**अचि2.51**
चतस्रः पर्णिनीर्यष्टीफलोशीरनृपद्रुमान्।
क्वाथयेत् कल्कयेद्यष्टीशताह्वाफलिनीफलम्।
मुस्तं च बस्तिः सगुडक्षौद्रसर्पिर्ज्वरापहः॥

**अचि2.52**
त्रायमाणामृतायष्टीमदनांशुमतीद्वयैः।
सबलाचन्दनवृषैर्जाङ्गलैश्च मृगद्विजैः॥

**अचि2.53**
क्वाथे कृते क्षिपेत् पिष्ट्वा फलयष्टीकणाघनम्।
स सद्यो ज्वरहा बस्तिः साज्यक्षौद्रोऽल्पसैन्धवः॥

**अचि2.54**
आम्रादीनां त्वचं शङ्खं चन्दनं मधुकोत्पलम्।
स्वर्णगौरिकमाञ्जिष्ठामृणालाञ्जनपद्मकम्॥

**अचि2.55**
क्षीरेण कल्कितं बस्तिं शीतं समधुशर्करम्।
दाहज्वरहरं दद्यात्सिद्धं तैश्चानुवासनम्॥

**अचि2.56**
जीवन्तीं मदनं मेदां पिप्पलीं मधुकं वचाम्।
ऋद्धिं रास्नां बिल्वं शतपुष्पां शतावरीम्॥

**अचि2.57**
पिष्ट्वा क्षीरं जलं सर्पिस्तैलं चैकत्र साधितम्।
ज्वरेऽनुवासनं कुर्यात्तथा स्नेहं यथामलम्॥

**अचि2.58**
चन्दनागरुकाश्मर्यपटोलमदनोत्पलैः।
पटोलारिष्टमदनगुडूचीमधुकैरपि।
ये च सिद्धिषु वक्ष्यन्ते बस्तयो ज्वरनाशनाः॥

**अचि2.59**
शिरोरुग्गौरवश्लेष्महरमिन्द्रियबोधनम्।
जीर्णज्वरे रुचिकरं दद्यान्नस्यं विरेचनम्।
स्नैहिकं शून्यशिरसो दाहार्ते पित्तनाशनम्॥

**अचि2.60**
धूमगण्डूषकवलान् यथादोषं च कल्पयेत्।
प्रतिश्यायास्यवैरस्यशिरः कण्ठामयापहान्॥

**अचि2.61**
अरुचौ मातुलुङ्गस्य केसरं साज्यसैन्धवम्।
धात्रीद्राक्षासितानां वा कल्कमास्येन धारयेत्॥

**अचि2.62**
यथोपशयसंस्पर्शान् शीतोष्णद्रव्यकल्पितान्।
अभ्यङ्गालेपसेकादीन् ज्वरे जीर्णे त्वगाश्रिते।
कुर्यादञ्जनधूपांश्च तथैवागन्तुजेऽपि तान्॥

**अचि2.63**
दाहे सहस्रधौतेन सर्पिषाभ्यङ्गमाचरेत्॥

**अचि2.64**
सूत्रोक्तैश्च गणैस्तैस्तैर्मधुराम्लकषायकैः।
दूर्वादिभिर्वा पित्तघ्नैः शोधनादिगणोदितैः॥

**अचि2.65**
शीतवीर्यैर्हिमस्पर्शैः क्वाथकल्कीकृतैः पचेत्।
तैलं सक्षीरमभ्यङ्गात्सद्यो दाहज्वरापहम्॥

**अचि2.66**
चन्दनं मधुकं काला द्राक्षा मधुरसा निशा।
तत्सिद्धं पूर्ववत्तैलं दाहज्वरहरं परम्॥

**अचि2.67**
शिरो गात्रं च तैरेव नातिपिष्टैः प्रलेपयेत्।
तत्क्वाथेन परीषेकमवगाहं च योजयेत्।
तथारनालसलिलक्षीरशुक्तघृतादिभिः॥

**अचि2.68**
कपित्थमातुलुङ्गाम्लविदारीलोध्रदाडिमैः।
बदरीपल्लवोत्थेन फेनेनारिष्टकस्य वा॥

**अचि2.69**
कर्पूरपद्मकोशीरकालीयाम्बुकुचन्दनैः।
तुङ्गप्रियङ्गुशैवालकमलोत्पलकर्दमैः॥

**अचि2.70**
वेत्राग्रलोध्रपुण्ड्राह्वैरारनालेन कल्कितैः।
लेपा व्यस्तैः समस्तैर्वा दाहघ्ना वर्णकारिणः॥

**अचि2.71**
धात्रीत्वक्पत्रनलदशङ्खव्याघ्रनखोत्पलैः।
चन्दनाञ्जनमुस्तैश्च सवृक्षाम्लाम्लवेतसैः॥

**अचि2.72**
सजीवकैः समधुकैः सपलाशैः सदाडिमैः।
बीजपूररसक्षौद्रशुक्तयुक्तैः प्रलेपितैः॥

**अचि2.73**
शिरस्यङ्गे च तृट्छर्दिदाहमोहशिरोरुजः।
नश्यन्ति गण्डाः पिटकाः प्रलापश्च ज्वरार्तिजः॥

**अचि2.74**
गौरामलककल्कश्च साम्लः साज्यश्च तद्गुणः।
मधूकमधुकोदीच्यनीलोत्पलमधूलिकाः॥

**अचि2.75**
जयन्ति मधुसर्पिर्भ्यां लीढा दाहज्वरभ्रमान्।
कासासृक्पित्तवीसर्पश्वासहिध्मावमीरपि॥

**अचि2.76**
वाम्यं च वामयेदाशु शीतेन मधुवारिणा।
यो वर्णितः पित्तहरो दोषोपक्रमणे क्रमः।
तं च शीलयतः शीघ्रं सदाहो नश्यति ज्वरः॥

**अचि2.77**
वल्लकीमधुरं गीतं चन्द्रिका हर्म्यमस्तकम्।
हरन्ति दाहं हाराश्च हरिचन्दनशीतलाः॥

**अचि2.78**
दाहं मन्दानिलोद्धूताः कुल्याः सलिलमालिनः।
चलत्प्रवालाङ्गुलिभिस्तर्जयन्ति महाद्रुमाः॥

**अचि2.79**
वाचः शिशूनामव्यक्ता योषितो मदनातुराः।
दाहं निर्भत्सयन्त्याशु सज्जनानां च सूनृताः॥

**अचि2.80**
रुचिभेदानुरोधेन नानाशक्तिसमन्वितः।
दाहशीतज्वरहरः कान्ताकान्ताङ्गसङ्गमः।
दाहशीतव्युपशमे तास्ततोऽपनयेत् पुनः॥

**अचि2.81**
वीर्योष्णैरुष्णसंस्पर्शैस्तगरागरुकुङ्कुमैः।
कुष्ठस्थौणेयशैलेयसरलामरदारुभिः॥

**अचि2.82**
नखरास्नापुरवचाचण्डलौद्वयचोरकैः।
पृथ्वीकाशिग्रुसुरसहिंस्राध्यामकसर्षपैः॥

**अचि2.83**
दशमूलमृतैरण्डद्वयपत्तूररोहिषैः।
तमालपत्रपूतीकसल्लकीधान्यदीप्यकैः॥

**अचि2.84**
मिसिमाषकुलत्थाग्निप्रकीर्यानाकुलीद्वयैः।
अन्यैश्च तद्विधैर्द्रव्यैः शीते तैलं ज्वरे पचेत्॥

**अचि2.85**
क्वथितैः कल्फितैर्युक्तैः सुरासौवीरकादिभिः।
तेनाभ्यज्यात् सुखोष्णेन तैः सुपिष्टैश्च लेपयेत्॥

**अचि2.86**
कवोष्णैस्तैः परीषेकमवगाहं च योजयेत्।
केवलैरपि तद्वच्च शुक्तगोमूत्रमस्तुभिः॥

**अचि2.87**
कुङ्कुमागरुकस्तूरीनखैलासुरदारुभिः।
शैलेयचण्डात्वङ्मुस्तरास्नाकपिवचामयैः॥

**अचि2.88**
पृथक् प्रदेहाः सर्वैर्वा शीतघ्ना दृढकल्किताः।
यवचूर्णं घृताभ्यक्तं पचेत् क्षीरे चतुर्गुणे॥

**अचि2.89**
दर्वीप्रलेपनं लेपं ज्वरार्तस्य प्रयोजयेत्।
आरग्वधादिवर्गं च पानाभ्यञ्जनलेपने॥

**अचि2.90**
धूपानगरुजान्ये च वक्ष्यन्ते विषमज्वरे।
अग्न्यनग्निकृतान् स्वेदान् स्वेदि भेषजभोजनम्॥

**अचि2.91**
संसर्गबलयोगे च वातश्लेष्मनिबर्हणम्।
गर्भभूवेश्मशयनं कुथकम्बलरल्लकान्॥

**अचि2.92**
निर्धूमदीप्तैरङ्गारैर्हसन्तीश्च हसन्तिकाः।
मद्यं सत्र्यूषणं तक्रं कुलत्थव्रीहिकोद्रवान्॥

**अचि2.93**
संशीलयेद्वेपथुमान् यच्चान्यदपि पित्तलम्।
अजाज्याः सगुडं कल्कं सगुडं वामृतारसम्॥

**अचि2.94**
रसं वार्ताकफलजं पिबेद्वा मधुसंयुतम्।
मधुकागरुकौन्तीनां कल्को व्याघ्रनखस्य च॥

**अचि2.95**
मद्येन पीतः सक्षौद्रस्तीव्रशीतज्वरापहः।
दयिताः स्तनशालिन्यः पीना विभ्रमभूषणाः॥

**अचि2.96**
यौवनासवमत्ताश्च तमालिङ्गेयुरङ्गनाः।
वीतशीतं च विज्ञाय तास्ततोऽपनयेत् पुनः॥

**अचि2.97**
आनाहे कालवित् कुर्यात् क्रियामलसकोदिताम्।
पिप्पलीपिप्पलीमूलयवानीचित्रसाधिताम्॥

**अचि2.98**
यवागूं पाययेच्चैनमनिलस्यानुलोमनीम्।
सोपद्रवोऽपि चेदेवं ज्वरः शीतो न शाम्यति॥

**अचि2.99**
अत्युदीर्णेऽनिलकफे स्वस्थाने पित्तधाम्नि वा।
तक्रानुपानं त्रपुसं भक्षयित्वानलं भजेत्॥

**अचि2.100**
आ स्वेदसम्भवात्तिष्ठेत् प्रावृतस्तद्वदातपे।
ततो विमृदितस्नातो युक्ताशी स्याद्गते ज्वरो॥

**अचि2.101**
शमं तौ पित्तवृध्यैव प्रपद्येते स्वधाम च।
निवर्तते ततः शीघ्रं वातश्लेष्मोद्भवो ज्वरः॥

**अचि2.102**
स्वर्ज्जिकाकुष्ठमञ्जिष्ठालाक्षामूर्वानिशौषधैः।
सतक्रं साधितं तैलमभ्यङ्गाद्दाहशीतजित्॥

**अचि2.103**
वमनैश्च विरेकैश्च बस्तिभिश्च यथाक्रमम्।
ज्वरानुपचरेद्धीमान् कफपित्तानिलोद्भवान्॥

**अचि2.104**
संसृष्टैः सन्निपतितैरेकानेकोल्बणैः समैः।
ज्वरान् दोषक्रमापेक्षी यथोक्तैरौषधैर्जयेत्॥

**अचि2.105**
वर्धनेनैकदोसस्य क्षपणेनोच्छ्रितस्य वा।
कफस्थानानुपूर्व्या वा सन्निपातज्वरं जयेत्॥

**अचि2.106**
निद्रानिवारणोपायः सन्यासाभिहितो हितः।
सन्निपाते विशेषेण दारुणोऽयमुपद्रवः॥

**अचि2.107**
सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः।
शोफः सञ्जायते तेन कश्चिदेव विमुच्यते॥

**अचि2.108**
रक्तावसेचनैः शीघ्रं सर्पिष्पानैश्च तं जयेत्।
प्रदेहैः कफपित्तघ्नैर्नावनैः कवलग्रहैः॥

**अचि2.109**
शीतोष्णस्निग्धरूक्षाद्यैर्ज्वरो यस्य न शाम्यति।
शाखानुसारी तस्याशु मुञ्चेद्बाह्वाःक्रमात्सिराम्॥

**अचि2.110**
अयमेव विधिः कार्यो विषमेऽपि यथायथम्।
ज्वरे विभज्य वातादीन्यश्चानन्तरमुच्यते॥

**अचि2.111**
पटोलकटुकामुस्ताप्राणदामधुकैः कृताः।
त्रिचतुष्पञ्चशः क्वाथा विषमज्वरनाशनाः॥

**अचि2.112**
योजयेत्त्रिफलां पथ्या गुडूचीं पिप्पलीं पृथक्।
तैस्तैर्विधानैः सगुडं भल्लातकमथापि वा॥

**अचि2.113**
लङ्घनं बृंहणं वापि ज्वरागमनवासरे।
प्रातः सतैलं लशुनं प्राग्भक्तं वा तथा घृतम्॥

**अचि2.114**
जीर्णं तद्वद्दधि पयस्तक्रं सर्पिश्च षट्पलम्।
कल्याणकं पञ्चगव्यं तिक्ताख्यं वृषसाधितम्॥

**अचि2.115**
पञ्चगव्यस्य महतो विधिना पञ्चमाहिषम्।
पञ्चाजं चतुरौष्ट्रं च सिद्धं सिद्धं घृतं तथा॥

**अचि2.116**
कटुरोहिणिमञ्जिष्ठावृषग्रन्थिकचित्रकैः।
पाठास्वगुसाद्विनिशैः पञ्चगव्यस्य पञ्चसु॥

**अचि2.117**
प्रस्थेषु संयुतैः सेव्यं विषमज्वरजित् परम्।
वाक्स्वरस्मृतिमेधाग्निबलारोग्यवृषत्वकृत्॥

**अचि2.118**
कोलाग्निमन्थत्रिफलाक्वाथे दध्ना घृतं पचेत्।
तिल्वकावापमेतच्च विषमज्वरनाशनम्॥

**अचि2.119**
शृतक्षीरघृतक्षौद्रसिताकृष्णाः स्वजाहताः।
विषमज्वरहृद्रोगक्षतकासक्षयापहाः॥

**अचि2.120**
सुरां तीक्ष्णं च यन्मयंअ शिखितित्तिरिदक्षजम्।
मांसं मेध्योष्णवीर्यं च सहान्नेन प्रकामतः॥

**अचि2.121**
सेवित्वा तदहः स्वप्यादथवा पुनरुल्लिखेत्।
सर्पिषो महतीं मात्रां पीत्वा वा छर्दयेत् पुनः॥

**अचि2.122**
नीलिनीमजगन्धां च त्रिवृतां कटुरोहिणीम्।
पिबेज्ज्वरस्यागमने स्नेहस्वेदोपपादितः॥

**अचि2.123**
आस्थापनं वा तदहर्दद्यात्स्विन्नस्य यापनम्।
पयसा वृपदंशस्य शकृद्वा तदहः पिबेत्॥

**अचि2.124**
मस्तुना वा वृषशकृत् सुरया वाथ सैन्धवम्।
मनोह्वा सैन्धवं कृष्णा तैलेन नयनाञ्जनम्॥

**अचि2.125**
योज्या हिङ्गुसमा व्याघ्रीवसा नस्ये ससैन्धवा।
पुराणसर्पिः संहस्य वसा तद्वत् ससैन्धवा॥

**अचि2.126**
पलङ्कषा निम्बपत्रं वचा कुष्ठं हरीतकी।
सर्षपाः सयवाः सर्पिर्धूपो विड्वा बिडालजा॥

**अचि2.127**
पुरध्यामवचासर्जनिम्बार्कागरुदारुभिः।
धूपो ज्वरेषु सर्वेषु कार्योऽयमपराजितः॥

**अचि2.128**
सहदेवावचाभद्रानाकुलीभिःप्रयोजयेत्।
धूपनोद्वर्तनालेपान् सर्वज्वरनिबर्हणान्॥

**अचि2.129**
धूमनस्याञ्जनोत्तासा ये चोक्ताश्चित्तवैकृते।
दवाश्रयं च भैषज्यं ज्वरान् सर्वानपोहति।
विशेषाद्विषमान् प्रायस्ते ह्यागन्त्वनुबन्धजाः॥

**अचि2.130**
यथास्वं च सिरां विध्येदशान्तौ विषमज्वरे॥

**अचि2.131**
रससंस्थे तु सर्वस्मिन् कुर्याद्वमनलङ्घने।
सेकसंशमनालेपरक्तमोक्षानसृक्स्थिते॥

**अचि2.132**
तीक्ष्णान् विरेकान् मांसस्थे मेदोघ्नं मेदसि स्थिते।
अस्थिस्थे वातशमनमभ्यङ्गस्वेदमर्दनम्।
ज्वरे वातार्तिशमनं विशेषाद्वस्तिकर्म च॥

**अचि2.133**
केवलानिलवीसर्पविस्फोटाभिहतज्वरे।
सर्पिष्पानहिमालेपसेकमांसरसाशनम्॥

**अचि2.134**
कुर्याद्यथास्वमुक्तं च रक्तमोक्षादिसाधनम्।
ग्रहोत्थे भूतविद्योक्तं मणिमन्त्रादिसाधनम्।
औषधीगन्धजे पित्तशमनं विषजिद्विषे॥

**अचि2.135**
इष्टैरर्थैर्मनोज्ञैश्च यथादोसशमेन च।
हिताहितविवेकैश्च ज्वरं क्रोधादिजं जयेत्॥

**अचि2.136**
क्रोधजो याति कामेन शान्तिं क्रोधेन कामजः।
भयशोकोद्भवौ ताभ्यां भीशोकाभ्यां तथेतरौ।
शापाथर्वणमन्त्रोत्थे विधिर्दैवव्यपाश्रयः॥

**अचि2.137**
ते ज्वराः केवलाःपूर्व व्याप्यन्तेऽनन्तरं मलैः।
तस्माद्दोषानुसारेण तेष्वाहारादि कल्पयेत्।
न हि ज्वरोऽनुबध्नाति मारुताद्यैर्विनाकृतः॥

**अचि2.138**
कथास्त्रिवर्गसंयुक्ता रुङ्निद्रादिविनोदिनीः।
शस्ता विचित्राः शृणुयान्न प्रेतव्याधिताश्रयाः॥

**अचि2.139**
ज्वरकालस्मृतिं चास्य हारिभिर्विषयैर्हरेत्।
त्यजेदाबललाभाच्च व्यायामस्नानमैथुनम्॥

**अचि2.140**
गुर्वसात्म्यं विदाह्यन्नं यच्चान्यज्ज्वरकारणम्।
न विज्वरोऽपि सहसा सर्वान्नीनो भवेत् तथा॥

**अचि2.141**
सद्यः प्राणहरो यस्मात्तस्मात्तस्य विशेषतः।
तस्यां तस्यामवस्थायां कुर्यात्तत्धिषग्जितम्॥

**अचि2.142**
मनोभिरामा विषया वचनं ह्लादि दक्षिणम्।
करुणार्द्रं मनः शुद्धं सर्वज्वरनिषूदनम्॥

**अचि2.143**
मातरं पितरं देवान् वैद्यान् विप्रान् हरं हरिम्।
पूजयेच्छीलयेद्दानदमसत्यदयार्जवान्।
धारयेच्च सदा मन्त्रमणिरत्नमहौषधीः॥

**अचि2.144**
आर्यावलोकितं पर्णशबरीमपराजिताम्।
प्रणमेदार्यतारां च सर्वज्वरनिवृत्तये॥

**अचि2.145**
जपंस्तथा गतोष्णीषं सर्वव्याधिचिकित्सितम्।
आगन्तुदोषसहजैः सर्वरोगैर्विमुच्यते॥
इति द्वितीयोऽध्यायः॥

अथ तृतीयोऽध्यायः।

**अचि3.1**
अथातो रक्तपित्तचिकित्सितं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अचि3.2**
ऊर्ध्वगं बलिनोऽवेगमेकदोषानुगं नवम्।
रक्तपित्तं सुखे काले साधयेन्निरुपद्रवम्॥

**अचि3.3**
अधोगं यापयेद्रक्तं यच्च दोषद्वयानुगम्।
शान्तं शान्तं पुनः कुप्यन्मार्गान्मार्गान्तरञ्च यत्॥

**अचि3.4**
अतिप्रवृत्तं मन्दाग्नोस्त्रिदोषं द्विपथं त्यजेत्।
ज्ञात्वा निदानमयनं मलावनुबलौ बलम्॥

**अचि3.5**
देशकालाद्यवस्थां च रक्तपित्ते प्रयोजयेत्।
लङ्घनं बृंहणं चादौ शोधनं शमनं तथा॥

**अचि3.6**
सन्तर्पणोत्थं बलिनो बहुदोषस्य साधयेत्। ऊर्ध्वभागं विरेकेण वमनेन त्वधोगतम्।
शमनैर्बृहणैश्चान्यल्लङ्घ्यबृंह्यानवेक्ष्य च॥

**अचि3.7**
ऊर्ध्वं प्रवृत्ते शमनौ रसौ तिक्तकषायकौ।
उपवासश्च निःशुण्ठीषडङ्गोदकपायिनः॥

**अचि3.8**
अधोगे रक्तपित्ते तु बृंहणो मधुरो रसः।
ऊर्ध्वगे तर्पणं योज्यं पेया पूर्वमधोगते॥

**अचि3.9**
अश्नतो बलिनोऽशुद्धं न धार्यं तद्धि रोगकृत्।
धारयेदन्यथा शीघ्रमग्निवच्छीघ्रकारि तत्॥

**अचि3.10**
त्रिवृतात्रिफलाधात्रीत्रायन्त्यारग्वधाभयाः।
गवाक्षीक्षुरसक्षीरद्राक्षाक्षौद्रसितोत्कटाः।
यथास्वं कल्पविहिता विरेकार्थं प्रयोजयेत्॥

**अचि3.11**
त्रिवृच्छ्यामाकषायेण कल्केन च सशर्करम्।
साधयेद्विधिवल्लेहं लिह्यात् पाणितलं ततः॥

**अचि3.12**
त्रिफला त्रिवृता श्यामा पिप्पली शर्करा मधु।
मोदकः सन्निपातोर्ध्वरक्तपित्तज्वरापहः॥

**अचि3.13**
त्रिवृत्समसिता तद्वत् पिप्पलीपादसंयुता।
वमनं फलसंयुक्तं तर्पणं ससितामधु॥

**अचि3.14**
ससितं वा जलं क्षौद्रयुक्तं वा मधुकोदकम्।
फलेन्द्रयवगाङ्गेयीमधुकं वा समाक्षिकम्॥

**अचि3.15**
क्षीरं वा रसमिक्षोर्वा शुद्धस्यानन्तरो विधिः।
यथास्वं मन्थपेयादिः प्रयोज्यो रक्षता बलम्॥

**अचि3.16**
मन्थो ज्वरोक्तो द्राक्षादिः पित्तघ्नैर्वा फलः कृतः।
मधुखर्जूरमृद्वीकापरूषकसिताम्भसा॥

**अचि3.17**
मन्थो वा पञ्चसारेण सघृतैर्लाजसक्तुभिः।
दाडिमामलकाम्लो वा मन्दाग्न्यम्लाभिलाषिणः॥

**अचि3.18**
कमलोत्पलकिञ्जल्कपृश्निपर्णीप्रियङ्गुकाः।
उशीरं शाबरं लोध्रं शृङ्गवेरं कुचन्दनम्॥

**अचि3.19**
ह्रीबेरं धातकीपुस्पं बिल्वमध्यं दुरालभा।
अर्धार्धैर्विहिताः पेया वक्ष्यन्ते पादयौगिकाः॥

**अचि3.20**
भूनिम्बसेव्यजलदाश्चन्दनाम्बुप्रियङ्गवः।
शालिपर्ण्या युता मुद्गाः पृश्निपर्ण्या मसूरकाः॥

**अचि3.21**
तुवर्यो वातिबलया बलया वा हरेणवः।
तत्कषाये हिताः पेया मांसपेयास्तथा रसाः॥

**अचि3.22**
अनम्लाः किञ्चिदम्ला वा सघृतक्षौद्रशर्कराः।
शूकशिम्बीभवं धान्यं शाकं मांसं च शस्यते॥

**अचि3.23**
अन्नस्वरूपविज्ञाने यदुक्तं लघु शीतलम्।
पूर्वोक्तमम्बु पानीयं पञ्चमूलेन वा शृतम्॥

**अचि3.24**
लघुना शृतशीतं वा मध्वम्भो वा फलाम्बु वा।
पद्मकाद्यञ्जनादिं च सारिवादिं च कल्पयेत्॥

**अचि3.25**
अन्नपाने गणं तद्वद्दशकं दाहनाशनम्।
कफानुगे यूषशाकं मारुतानुगते रसः॥

**अचि3.26**
अभीरोरङ्कुरैर्लावाः सहमुद्गाः पटोलजैः।
मकुष्ठाधन्वयासोत्थैरस्रपित्ते परं मताः॥

**अचि3.27**
शशः सवास्तुकः शस्तो विबन्धे तित्तिरिः पुनः।
उदुम्बरस्य निर्यूहे साधितो मारुतेऽधिके॥

**अचि3.28**
प्लक्षस्य बर्हिणस्तद्वन्न्यग्रोधस्य च कुक्कुटः।
बिसोत्पलमृणालानां वर्तकक्रकरौ हितौ॥

**अचि3.29**
वर्तिकाम्भोजनालानामश्वत्थस्य कपिञ्जलः।
यत्किञ्चिद्रक्तपित्तस्य निदानं तच्च वर्जयेत्॥

**अचि3.30**
वासारसेन फलिनीमृल्लोध्राञ्जनमाक्षिकम्।
पित्तासृक् शमयेत् पीतं निर्यासो वाटरूषकात्॥

**अचि3.31**
शर्करामधुसंयुक्तः केवलो वा शृतोऽपि वा।
वृषः सद्यो जयत्यस्रं स ह्यस्य परमौषधम्॥

**अचि3.32**
वासारसेन भूनिम्बकटुकाशर्कराः पिबेत्।
तेनैव वा क्षौद्रयुतं पद्मकेसरपद्मकम्॥

**अचि3.33**
सलोध्रनागकुसुमशाड्वलोत्पलवास्तुकम्।
लिह्याद्वा मधुसर्पिर्भ्यां गवाश्वशकृतो रसम्॥

**अचि3.34**
पथ्यारजन्यहिंस्रा वा पलाण्डुं तद्वदेव वा।
फलिनीलोध्रखदिरशाल्मकोविदारजम्॥

**अचि3.35**
शिरीषशेलुककुभीसिन्दुवारातिमुक्तजम्।
पलाशयूथिकाशिग्रुमधूकासनजन्म च॥

**अचि3.36**
मधुना चूर्णितं पुष्पमेकत्र पृथगेव वा।
पुष्पैरेभिर्विपक्वं च सक्षौद्रं माहिषं घृतम्॥

**अचि3.37**
लिह्यात् क्षौद्रेण पथ्यां वा किञ्जल्कं कमलस्य वा।
लाजाः शृङ्गाटकं मुस्तं खर्जूरं कृष्णमृत्तिकाम्॥

**अचि3.38**
क्षीरिवृक्षाङ्कुरान् द्राक्षां तवक्षीरीं सितोपलाम्।
गैरिकं मधुकं लोध्रं शङ्खं शम्बूकमञ्जनम्॥

**अचि3.39**
तण्डूलीयकमूलं वा बीजं वा वास्तुकोद्भवम्।
पटोलमालतीनिम्बचन्दनद्वयपद्मकम्॥

**अचि3.40**
लोध्रो वृषस्तण्डुलीयः कृष्णा मृन्मदयन्तिका।
शतावरी गोपकन्याकाकोल्यौ मधुयष्टिका॥

**अचि3.41**
रक्तपित्तहराः क्वाथास्त्रयः समधुशर्कराः।
सक्षौद्रं ग्रथिते रक्ते लिह्यात् पारावताच्छकृत्॥

**अचि3.42**
अतिनिस्रुतरक्तो वा क्षौद्रेण रुधिरं पिबेत्।
जाङ्गलं भक्षयेद्वाजं मासं पित्तयुतं यकृत्॥

**अचि3.43**
लोध्रकालीयकोशीरफलिनीशङ्खगैरिकम्।
पटोलपत्रं दुस्पर्शा समङ्गा सारिवालता॥

**अचि3.44**
त्वग्जम्बुवेतसाश्वत्थहयाह्वोदुम्बरार्जुनात्।
किराततिक्तक्रमुकमुस्तकट्फलपद्मकम्॥

**अचि3.45**
प्रपौण्डरीकद्द्रीबेरकमलोत्पलपर्पटम्।
चन्दनेन पृथग्युक्तं समस्तं वा सशर्करम्॥

**अचि3.46**
फाण्टीकृतं शृतं शीतं चूर्णं वा तण्डुलाम्भसा।
पीतमाशु जयत्यस्रं तृड्दाहतमकानपि॥

**अचि3.47**
चन्दनोशीरजलदलाजमुद्गकणायवैः।
बलाजले पर्युषितैः कषायो रक्तपित्तहा॥

**अचि3.48**
प्रसादश्चन्दनाम्भोजसेव्यमृद्भृष्टलोष्टजः।
सुशीतः ससिताक्षौद्रः शोणितातिप्रवृत्तिजित्॥

**अचि3.49**
तद्वदच्छः सितालोध्रमधुकोशीरचन्दनात्।
मृच्छयामासारिवामुस्ताधातकीयष्टिकान्वितात्॥

**अचि3.50**
वैडूर्यमुक्तामृच्छङ्खगैरिकामलकोदकम्।
मधूदकं रसं चेक्षोः पिबेन् जयति शोणितम्॥

**अचि3.51**
आपोथ्य वा नवे कुम्भे प्लावयेदिक्षुगण्डिकाः।
स्थितं तत् गुप्तमाकाशे रात्रिं प्रातः स्रुतं जलम्॥

**अचि3.52**
मधुमद्विकचाम्भोजकृतोत्तंसं च तद्गुणम्।
त्रपुसीमूलकल्कं वा सक्षौद्रं तण्डुलाम्बुना॥

**अचि3.53**
पिबेत् करञ्जबीजं वा तेनक्षौद्रसितायुतम्।
लोध्रचन्दनयष्ट्याह्वं तेन यष्ट्याह्वमेव वा॥

**अचि3.54**
नीलोत्पलं सिता यष्टी मधुकं पद्मकेसरम्।
छिन्नोद्भवा च शीतोऽयं कषायो रक्तपित्तजित्॥

**अचि3.55**
ये च पित्तज्वरे प्रोक्ताः कषायास्तांश्च योजयेत्।
कषायैर्विविधैरेभिर्दीप्तेऽग्नौ विजिते कफे॥

**अचि3.56**
रक्तपित्तं न चेच्छाम्येत्तत्र वातोल्बणे पयः।
युञ्ज्याच्छागं शृतं तद्वत् गव्यं पञ्चगुणेऽम्भसि॥

**अचि3.57**
पञ्चमूलेन लघुना शृतं वा ससितामधु।
जीवकर्षभकद्राक्षाबलागोक्षुरनागरैः॥

**अचि3.58**
पृथक् पृथक् शृतं शीतं सघृतं सितयाथवा।
क्षीरेण वमनीपुष्पं मधुकं मधुशर्कराम्॥

**अचि3.59**
गोकण्टकाभीरुशृतं पर्णिनीभिस्तथा पयः।
हन्त्याशु रक्तं सरुजं विशेषान्मूत्रमार्गगम्॥

अस3.60। विण्मार्गगे विशेषेण हितं मोचरसेन तु।
वटप्ररोहैः शुङ्गैर्वा शुण्ठ्युदीच्योत्पलैरपि॥

**अचि3.61**
रक्तातिसारदुर्नामचिकित्सां चात्र कल्पयेत्।
पीत्वा कषायान् पयसा भुञ्जीत पयसैव तु।
कषाययोगैरेभिर्वा विपक्वं पाययेत् घृतम्॥

**अचि3.62**
समूलमस्तकं क्षुण्णं वृषमष्टगुणेऽम्भसि।
पक्त्वाष्टांशावशेषेण घृतं तेन विपाचयेत्॥

**अचि3.63**
तत्पुष्पगर्भं तच्छीतं सक्षौद्रं पित्तशोणितम्।
पित्तगुल्मज्वरश्वासकासहृद्रोगकामलाः॥

**अचि3.64**
तिमिरभ्रमवीसर्पस्वरसादांश्च नाशयेत्।
पलाशवृन्तस्वरसे तद्गर्भं च घृतं पचेत्॥

**अचि3.65**
सक्षौद्रं तच्च रक्तघ्नं तद्वद्वत्सकसाधितम्।
लोध्रोत्पलसमङ्गाभिस्तथैव त्रायमाणया॥

**अचि3.66**
लाजगोधूममधुकसिताचूर्णं पयोद्रवम्।
घृतेनोत्करिकां कृत्वा खादेत् पित्तास्रवारिणीम्॥

**अचि3.67**
रक्ते सपिच्छे सकफे ग्राथिते कण्ठमार्गगे।
लिह्यान्माक्षिकसर्पिर्भ्यां क्षारमुत्पलनालजम्॥

**अचि3.68**
मृणालाम्भोजकिञ्जल्कश्यामासनमधूकजम्।
तद्वत् पृथक् पृथक् क्षारं घृतं क्षीरेण साधयेत्॥

**अचि3.69**
पिष्टैरभीरुकाकोलीमेदावृक्षाम्लदाडिमैः।
फलपूरकमूलेन विदार्या मधुकेन च॥

**अचि3.70**
तद्विबन्धज्वरानाहशूलकासास्रपित्तजित्।
पञ्चभिः पञ्चमूलैश्च सिद्धमाद्यैस्तदर्थकृत्॥

**अचि3.71**
गुदागमे विशेषेण शोणिते बस्तिरिष्यते।
मधुकाञ्जनमाञ्जिष्ठामृणालोत्पलगैरिकैः॥

**अचि3.72**
सुवर्णलोध्रकालीयसमङ्गाम्बुजचन्दनैः।
सौगन्धिकसिताशङ्खैः पिष्टैर्मधुघृतान्वितैः॥

**अचि3.73**
क्षीरेणास्थापयेदेनं स्नातं च शिशिराम्भसा।
क्षीरेणैवाशयेच्छालीस्ततो मधुकसर्पिषा॥

**अचि3.74**
कालेऽनुवासयेदेवमतिसारेऽपि दुस्तरे।
जीर्णेऽसृक्प्रबले कुर्याद्विरेके चातियोगिनि॥

**अचि3.75**
विदार्यादिगणेनेष्टं शृतं वास्थापने पयः।
सक्षौद्रशर्करासर्पिः सर्पिश्चैवानुवासने॥

**अचि3.76**
मूत्राशयस्थं शमयेद्रक्तमुत्तरबस्तिभिः।
ईदृशैरेव तद्वच्च प्रदरेऽपि विधिः स्मृतः॥

**अचि3.77**
छेदभेदादिभिश्चातिप्रवृत्ते शुद्धशोणिते।
विशेषात् प्रदरस्योक्तं योनिरोगेषु चैषधम्॥

**अचि3.78**
घ्राणगे रुधिरे शुद्धे नावनं चानुषेचयेत्।
कषाययोगान् पूर्वोक्तान् क्षीरेक्ष्वादिरसाप्लुतान्॥

**अचि3.79**
क्षीरादीन् ससितं तोयं केवलं वा हितं जलम्।
रसो दाडिमपुष्पाणामाम्रास्थ्नः शाड्वलस्य च॥

**अचि3.80**
कल्पयेच्छीतवर्गं च प्रदेहाभ्यञ्जनादिषु।
यच्च पित्तज्वरे प्रोक्तं बहिरन्तश्च भेषजम्।
रक्तपित्ते हितं तच्च क्षतक्षीणे हितं च यत्॥
इति तृतीयोऽध्यायः॥

चतुर्थोऽध्यायः।

**अचि4.1**
अथातः कासचिकित्सितं व्याख्यास्यामः।
इति हस्माहुरात्रेयादयो महर्षयः॥

**अचि4.2**
केवलानिलजं कासं स्नेहैरादावुपाचरेत्।
वातघ्नसिद्धैः स्निग्धैश्च पेयायूषरसादिभिः॥

**अचि4.3**
लेहैर्धूमैस्ततहाभ्यङ्गस्वेदसेकावगाहनैः।
बस्तिभिर्बद्धविड्वातं सपित्तं त्वौर्ध्वभक्तिकैः॥

**अचि4.4**
गुडूचीकण्टकारीभ्यां पृथक् त्रिंशत्पलाद्रसे।
प्रस्थः सिद्धो घृताद्वातकासनुद्वह्निदीपनः॥

**अचि4.5**
क्षाररास्नावचाहिङ्गुपाठायष्ट्याह्वधान्यकैः।
द्विशाणैः सर्पिषः प्रस्थं पञ्चकोलयुतैः पचेत्॥

**अचि4.6**
दशमूलस्य निर्यूहे पीतं मण्डानुपायिना।
सकासश्वासहृत्पार्श्वग्रहणीरोगगुल्मनुत्॥

**अचि4.7**
काश्मर्यत्रिफलाव्योषशठीद्राक्षापरूषकम्।
द्वे पाठे देवदार्वृद्धिस्वगुसाग्निकगोक्षुरम्॥

**अचि4.8**
व्याघ्नीतामलकीमेदाकाकनासाशतावरीः।
विदारी च घृतप्रस्थः कर्षांशैस्तैर्विपाचितः॥

**अचि4.9**
क्षीरेण च जयत्याशु ज्वरकासहलीमकान्।
गुल्मारुचियकृत्प्लीहशिरोहृत्पार्श्ववेदनाः॥

**अचि4.10**
कामलार्शोनिलाष्ठीलाक्षतशोफक्षयांश्च सः।
द्रोणेऽपां साधयेद्रास्नादशमूलशतावरीः।
पलोन्मिता द्विकुडवं कुलत्थं बदरं यवम्॥

**अचि4.11**
तुलार्धं चाजमांसस्य तेन साध्यं घृताढकम्।
समक्षीरं पलांशैश्च जीवनीयैः समीक्ष्य तत्॥

**अचि4.12**
प्रयुक्तं वातरोगेषु पाननावनबस्तिभिः।
पञ्चकासान् शिरःकम्पं योनिवङ्क्षणवेदनाम्।
सर्वाङ्गैकाङ्गरोगांश्च सप्लीहोर्ध्वानिलान् जयेत्॥

**अचि4.13**
विदार्यादिगणक्वाथकल्कसिद्धं च कासजित्।
अशोकबीजक्षवकजन्तुघ्नाञ्जनपद्मकैः॥

**अचि4.14**
सबिडैश्च घृतं सिद्धं तच्चूर्णं वा घृताप्लुतम्।
लिह्यात् पयश्चानुपिबेदाजं कासाभिपीडितः॥

**अचि4.15**
विडङ्गं नागरं रास्नां पिप्पली हिङ्गु सैन्धवम्।
भाङ्गर्क्षीरश्च तच्चूर्णं पिबेद्वा घृतमात्रया।
सकफेऽनिलजे कासे श्वासहिध्माहताग्निषु॥

**अचि4.16**
दुरालभां शृङ्गवेरं शठीं रास्नां सितोपलाम्।
लिह्यात् कर्कटशृङ्गीं च कासे तैलेन वातजे॥

**अचि4.17**
दुस्पर्शां पिप्पलीं मुस्तं भार्ङ्गीं कर्कटकीं शठीम्।
पुराणगुडतैलाभ्यां चूर्णितान्यवलेहयेत्॥

**अचि4.18**
तद्वत् सकृष्णां शुण्ठीं च सभार्ङ्गीं तद्वदेव च।
पिबेत् कृष्णां च कोष्णेन सलिलेन ससैन्धवाम्॥

**अचि4.19**
मुस्तुना ससितां शुण्ठीं दध्ना वा कणरेणुकाः।
पिबेत् बदरमज्ञो वा मदिरादधिमस्तुभिः।

अथवा पिप्पलीकल्कं घृतभृष्टं ससैन्धवम्॥

**अचि4.20**
कासी सपीनसो धूमं स्नैहिकं विधिना पिबेत्।
हिध्माश्वासोक्तधूमांश्च क्षीरमांसरसाशनः॥

**अचि4.21**
ग्राम्यानूपौदकैः शालियवगोधूमषष्टिकान्।
रसैर्माषात्मगुप्तानां यूषैर्वा भोजयेद्धितान्॥

**अचि4.22**
यवानीपिप्पलीबिल्वमध्यनागरचित्रकैः।
रास्नाजाजीपृथक्पर्णीपलाशशाठिपौष्करैः॥

**अचि4.23**
सिद्धां स्निग्धाम्ललवणां पेयामनिलजे पिबेत्।
कटीहृत्पार्श्वकोष्ठार्तिश्वासहिध्माप्रणाशिनीम्॥

**अचि4.24**
दशमूलरसे तद्वत् पञ्चकोलगुडान्विताम्।
पिबेत् समतिलां पेयां क्षैरेयीं वा ससैन्धवाम्।
मात्स्यकौक्कुटवाराहैर्मांसैर्वा साज्यसैन्धवाम्॥

**अचि4.25**
वास्तुको वायसीशाकं कासघ्नः सुनिषण्णकः।
कण्टकार्याः फलं पत्रं बालं शुष्कं च मूलकम्॥

**अचि4.26**
स्नेहास्तैलादयो भक्ष्याः क्षीरेक्षुरसगौडिकाः।
दधिमस्त्वारनालाम्लफलाम्बुमदिराः पिबेत्॥

**अचि4.27**
पित्तकासे तु सकफे वमनं सर्पिषा हितम्।
तथा मदनकाश्मर्यमधुकक्वथितैर्जलैः।
फलयष्ट्याह्वकल्कैर्वा विदारीक्षुरसाप्लुतैः॥

**अचि4.28**
पित्तकासे तनुकफे त्रिवृतां मधुरैर्युताम्।
युञ्ज्याद्विरेकाय युतां घनश्लेष्मणि तिक्तकैः॥

**अचि4.29**
हृतदोषो हिमं स्निग्धं स्वादु संसर्जनं भजेत्।
घने कफे तु शिशिरं रूक्षं तिक्तोपसंहितम्॥

अस4.30। पिप्पलीमुस्तयष्ट्याह्वद्राक्षामूर्वामहौषधम्।
लाकामृताफलद्राक्षात्वक्क्षीरीपिप्पलीसिताः॥

**अचि4.31**
दुस्पर्शाकर्कटीशुण्ठीशठीद्राक्षासिताबलाः।
निदिग्धिकामूलफलं वटबीजं रसाञ्जनम्॥

**अचि4.32**
खर्जूरं पिप्पली वांशी श्वदंष्ट्रा चेति पञ्च ते।
घृतक्षौद्रयुता लेहाः श्लोकार्धैः पित्तकासिनाम्।

पयोऽनुपानां शृङ्गीं वा लिह्यात्साज्यसितामधु॥

**अचि4.33**
लेहः पैत्ते सिताधात्रीक्षौद्रद्राक्षाहिमोत्पलैः।
सकफे साब्दमरिचः सघृतः सानिले हितः॥

**अचि4.34**
मृद्वीकार्धशतं त्रिंशत् पिप्पलीः शर्करापलम्।
लेहयेन्मधुना गोर्वा क्षीरपस्य शकृद्रसम्॥

**अचि4.35**
त्वगेलाव्योषमृद्वीकापिप्पलीमूलपौष्करैः।
लाजमुस्तशठीरास्नाधात्रीफलबिभीतकैः।
शर्कराक्षौद्रसर्पिर्भिर्लेहो हृद्रोगकासहा॥

**अचि4.36**
पिप्पल्यामलकद्राक्षालाजलाक्षासितोपलाः।
सञ्चूर्ण्य पक्त्वा पयसा लिह्यात् क्षौद्राष्टभागिकाः॥

**अचि4.37**
विदारीक्षुमृणालानां रसान् क्षीरं सितोपलाम्।
पिबेत् क्षौद्रेण संयोज्य पित्तकासमपोहति॥

**अचि4.38**
मधुरैर्जाङ्गलरसैर्यवश्यामाककोद्रवाः।
मुद्गादियूषैः शाकैश्च तिक्तकैर्मात्रया हिताः॥

**अचि4.39**
घनश्लेष्मणि लेहाश्च तिक्तका मधुसंयुताः।
शालयः स्युस्तनुकफे षष्टिकाश्च रसादिभिः।
शर्कराम्भोऽनुपानार्थं द्राक्षेक्षुस्वरसः पयः॥

**अचि4.40**
काकोलीबृहतीमेदाद्वयैः सवृषनागरैः।
पित्तकासे रसक्षीरपेयायूषान् प्रकल्पयेत्॥

**अचि4.41**
द्राक्षां कणां पञ्चमूलं तृणाख्यं च पचेज्जले।
तेन क्षीरं शृतं शीतं पिबेत् समधुशर्करम्॥

**अचि4.42**
साधितां तेन पेयां वा सुशीतां मधुनान्विताम्।
शठीदद्रीबेरबृहतीशर्कराविश्वभेषजम्।
पिष्ट्वा रसं पिबेत् पूतं वस्त्रेण घृतमूर्छितम्॥

**अचि4.43**
महिष्यजावीगोक्षीरधात्रीफलरसैः समैः।
सर्पिः सिद्धं पिबेत् तद्वन्मधुरेण गणेन वा॥

**अचि4.44**
क्वाथीकृतेनेक्षुरसे क्षीरयुक्तेन साधितम्।
सशर्करं पिबेत् प्रातर्लिह्याद्वा माक्षिकान्वितम्॥

**अचि4.45**
क्षीरिवृक्षाङ्कुरक्वाथे पक्वं क्षीरसमं घृतम्।
पाययेत् पित्तकासार्तं मधुना वावलेहयेत्॥

**अचि4.46**
मेदां विदारीं काकोलीं स्वयंगुप्ताफलं बलाम्।
शर्करां जीवकं मुद्गमाषपर्ण्यौ दुरालभाम्॥

**अचि4.47**
कल्कीकृत्य पचेत् सर्पिः क्षीरेणाष्टगुणेन तत्।
पानभोजनलेहेषु प्रयुक्तं पित्तकासजित्॥

**अचि4.48**
लिह्याद्वा चूर्णमेतेषां कषायमथवा पिबेत्।
कफकासी पिबेदादौ सुरकाष्ठात् प्रदीपितात्॥

**अचि4.49**
स्नेहं परिस्रुतं व्योषयवक्षारावचूर्णितम्।
स्निग्धं विरेचयेदूर्ध्वमधो मूर्ध्नि च युक्तितः॥

**अचि4.50**
तीक्ष्णैर्विरेकैर्बलिनं संसर्गीं चास्य योजयेत्।
यवमुद्गकुलत्थान्नैरुष्णरूक्षैः कटूत्कटैः॥

**अचि4.51**
कासमर्दकवार्ताकव्याघ्नीक्षारकणान्वितैः।
धान्वबैलरसैःस्नेहौस्तिलसर्षपनिम्बजैः॥

**अचि4.52**
दशमूलाम्बु घर्माम्बु मद्य मध्वम्बु वा पिबेत्।
मूलैः पौष्करशम्याकपटोलैरन्वितं निशाम्॥

**अचि4.53**
पिबेद्वारि सहक्षौद्रं कालेष्वन्नस्य वा त्रिषु।
पिप्पलीपिप्पलीमूलं शृङ्गवेरं बिभीतकम्॥

**अचि4.54**
देवदार्वभया मुस्तं पिप्पलीविश्वभेषजम्।
गुडूची पिप्पलीभाङ्गीशृङ्गीकर्कटकस्य च॥

**अचि4.55**
व्योषदारुचिडङ्गानि त्रिफलाशर्कराबलाः।
निदिग्धिकाया मूलत्वङ्मरिचैः सह योजिता॥

**अचि4.56**
शिखिकुक्कुटपिञ्छानां मषी क्षारो यवोद्भवः।
विशाला पिप्पलीमूलं त्रिवृता च मधुद्रवाः॥

**अचि4.57**
कफकासहरा लेहाः सप्त श्लोकार्धयोजिताः।
मधुना मरिचं लिह्यान्मधुनैव च जोङ्गकम्॥

**अचि4.58**
पृथग्रसांश्च मधुना व्याघ्रीवार्ताकभृङ्गजान्।
कासघ्नस्याश्वशकृतः सुरसस्यासितस्य च॥

**अचि4.59**
देवदारुशठीरास्नाकर्कटाख्यादुरालभाः।
पिप्पली नागरं मुस्तं पथ्याधात्रीसितोपलाः॥

**अचि4.60**
मधुतैलयुतावेतौ लेहौ वातानुगे कफे।
विडङ्गं सैन्धवं हिङ्गु कुष्ठं व्योषं मनःशिलाम्॥

**अचि4.61**
कासे श्वासे च हिध्मायां लिह्यात् क्षौद्रघृताप्लुतम्।
गुडक्षारोषणकणादाडिमं श्वासकासजित्।
क्रमात्पलद्वयार्धाक्षकर्षार्धाक्षपलोन्मितम्॥

**अचि4.62**
द्वे पले दाडिमादष्टA उ गुडाद्व्योषात् पलत्रयम्।
रोचनं दीपनं स्वर्यं पीनसश्वासकासजित्॥

**अचि4.63**
पाठाशुण्ठीशठीमूर्वागवाक्षीपिप्पलीघनम्।
पिष्ट्वा घर्माम्बुना हिङ्गुसैन्धवाभ्यां युतं पिबेत्।
तद्वन्मुस्ताशठीशुण्ठीनागरातिविषभयाः॥

**अचि4.64**
पिबेज्ज्वरोक्तं पथ्यादि सशृङ्गीकं च पाचनम्।
अथवा दीप्यकत्रिवृद्विशालाघनपौष्करम्॥

**अचि4.65**
सकणं क्वथितं मूत्रे कफकासी जलेऽपि वा।
तैलभृष्टं च वैदेहीकल्काक्षं ससितोपलम्॥

**अचि4.66**
पाययेत् कफकासघ्नं कुलत्थसलिलाप्लुतम्।
सौवर्चलाभयाधात्रीपिप्पलीक्षारनागरम्॥

**अचि4.67**
चूर्णितं सर्पिषा वातकफकासहरं पिबेत्।
दशमूलाढके प्रस्थं घृतस्याक्षसमैः पचेत्॥

**अचि4.68**
पुष्कराह्वशठीविल्वसुरसव्योषहिङ्गुभिः।
पेयानुपानं तत् सर्ववातश्लेष्मामयापहम्॥

**अचि4.69**
निर्गुण्डीपत्रनिर्यासससाधितं कासजिद्घृतम्।
घृतं रसे विडङ्गानां व्योषगर्भं च साधितम्॥

**अचि4.70**
पुनर्नवसिताटिकासुरसकासमर्दामृता।
पटोलबृहतीफणिज्जकरसैः पयःसंयुतैः।

घृतं त्रिकटुना च सिद्धमुपयुज्य सञ्जायते।
न कासविषमज्वरक्षयगुदाङ्कुरेभ्यो भयम्॥

**अचि4.71**
समूलफलपत्रायाः कण्टकार्या रसाढके।
घृतप्रस्थं बलाव्योषविडङ्गशठिदाडिमैः॥

**अचि4.72**
सौवर्चलयवक्षारमूलामलकपौष्करैः।
वृश्चीवबृहतीपथ्यायवानीचित्रकर्धिभिः॥

**अचि4.73**
मृद्वीकाचव्यवर्षाभूदुरालम्भाम्लवेतसैः।
शृङ्गीतामलकीभार्ङ्गीरास्नागोक्षुरकैः पचेत्॥

**अचि4.74**
कल्कैस्तत् सर्वकासेषु श्वासहिध्मासु चेष्यते॥

**अचि4.75**
कण्टकार्यास्तुलां क्षुण्णां पक्त्वा द्रोणेऽम्भसः पचेत्।
तेनाढकेन क्वाथस्य घृतप्रस्यं पिचून्मितैः॥

**अचि4.76**
रास्नादुस्पर्शषड्ग्रन्थापिप्पलीद्वयचित्रकैः।
सौवर्चलयवक्षारकृष्णामूलैश्च तज्जयेत्॥

**अचि4.77**
कासश्वासकफष्ठीवहिध्मारोचकपीनसान्।
पचेद्व्याघ्नीतुलां क्षुण्णां वहेऽपामाढकस्थिते॥

**अचि4.78**
क्षिपेत् पूते तु सञ्चूर्ण्य व्योषरास्नामृताग्निकान्।
शृङ्गीर्भार्ङ्गीघनग्रन्थिधन्वयासान् पलार्धकान्॥

**अचि4.79**
सर्पिषः षोडशपलं चत्वारिंशत्पलानि च।
मत्स्यण्डिकायाः शुद्धायाः पुनश्च तदधिश्रयेत्॥

**अचि4.80**
दर्वीलेपिनि शीते च पृथक् द्विकुडवं क्षिपेत्।
पिप्पलीनां तवक्षीर्या माक्षिकस्यानवस्य च॥

**अचि4.81**
लेहोऽयं गुल्महृद्रोगदुर्नामश्वासकासजित्।
त्रिफलापिप्पलीपाठासारिवाबृहतीद्वयम्।
मरिचं पद्मकं मुस्तमुशीरं चाक्षसम्मितम्॥

**अचि4.82**
पक्त्वा जलाढके पादशेषे क्षीरपलाष्टकम्।
दत्वा गुडस्य च पलं पचेदादर्विलेपनात्॥

**अचि4.83**
लेहः कफोल्बणं कासं सर्वमेव नियच्छति।
साधितं क्षीरमेभिर्वा तिलक्षौद्रयुतं पिबेत्॥

**अचि4.84**
शमनं च पिबेद्धूमं शोधनं बहले कफे॥

**अचि4.85**
मनःशिलालमधुकमांसीमुस्तेऽङ्गुदीत्वचः।
धूमं कासघ्नविधिना पीत्वा क्षीरं पिबेदनु॥

**अचि4.86**
निष्ठ्यूतान्ते गुडयुतं कोष्णं धूमो निहन्ति सः।
वातश्लेष्मोत्तरान् कासानचिरेण चिरन्तनान्॥

**अचि4.87**
प्रपौण्डरीकं मधुकं शार्ङ्गेष्टालं मनःशिलाम्।
मरिचं पिप्पलीं द्राक्षामेलां सुरसमञ्जरीम्॥

**अचि4.88**
कृत्वा वर्तिं पिबेद्धूमं क्षौमचैलानुवर्तिनी।
घृताक्तामनु च क्षीरं पिबेत् तद्वत् गुडाम्बु वा॥

**अचि4.89**
नेपालीतालमरिचलाक्षाञ्जनकुटन्नटैः।
उशीररोहिषफलद्रामिलीवंशलेखनैः॥

**अचि4.90**
पूर्वकल्पेन धूमोऽयं सानुपानो विधीयते।
कार्पासास्थ्यश्वगन्धा च धूमः कासविनाशनः।
कोशातकीफलान्मध्यैः पिबेद्वा समनःशिलैः॥

**अचि4.91**
तमकः कफकासे तु स्याच्चेत् पित्तानुबन्धजः।
पित्तकासक्रियां तत्र यथावस्थं प्रयोजयत्॥

**अचि4.92**
कफानुबन्धे पवने कुर्यात् कफहरां क्रियाम्।
पित्तानुबम्धयोर्वातकफयोः पित्तनाशिनीम्॥

**अचि4.93**
वातश्लेष्मात्मके शुष्के स्निग्धमार्द्रं विरूक्षणम्।
कासे कर्म सपित्ते तु कफजे तिक्तसंयुतम्॥
इति चतुर्थोऽध्यायः॥

अथ पञ्चमोऽध्यायः।

**अचि5.1**
अथातः क्षतक्षयकासचिकित्सितं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अचि5.2**
उरस्यन्तःक्षते सद्यो लाक्षां क्षौद्रयुतां पिबेत्।
क्षीरणे शालीन् जीर्णेऽद्यात् क्षीरेणैव सशर्करान्॥

**अचि5.3**
पार्श्वबस्तिसरुक्चाल्पपित्ताग्निस्तां सुरायुताम्।
भिन्नविट् तु समुस्तातिविषापाठां सवत्सकाम्॥

**अचि5.4**
लाक्षां सर्पिर्मधूच्छिष्टं जीवनीयगणं सिताम्।
त्वक्क्षीरीं समितं क्षीरे पक्त्वा दीप्तानलः पिबेत्॥

**अचि5.5**
इक्ष्वालिकाबिसग्रन्थिपद्मकेसरचन्द्रनैः।
शृतं पयो मधुयुतं सन्धानार्थं पिबेत् क्षती॥

**अचि5.6**
यवानां चूर्णमामानां क्षीरसिद्धं घृतान्वितम्।
ज्वरदाहे सिताक्षौद्रसक्तून् वा पयसा पिबेत्॥

**अचि5.7**
कासवांस्तु पिबेत्सर्पिर्मधुरौषधसाधितम्।
गुडोदकं वा क्वथितं सक्षौद्रमरिचं हिमम्॥

**अचि5.8**
चूर्णमामलकानां वा क्षीरे पक्वं घृतान्वितम्।
रसायनविधानेन पिप्पलीर्वा प्रयोजयेत्॥

**अचि5.9**
कासी पर्वास्थिशूली च लिह्यात्सघृतमाक्षिकाः।
मधूकमधुकद्राक्षात्वक्क्षीरीपिप्पलीबलाः॥

**अचि5.10**
त्रिजातमर्धकर्षांशं पिप्पल्यर्धपलं सिता।
द्राक्षा मधूकं खर्जूरं पलांशं श्लक्ष्णचूर्णितम्॥

**अचि5.11**
मधुना गुटिका घ्नन्ति ता वृष्याः पित्तशोणितम्।
कासश्वासारुचिच्छार्दिमूर्छाहिध्मामदभ्रमान्॥

**अचि5.12**
क्षतक्षयस्वरभ्रंशप्लीहशोषाढ्यमारुतान्।
रक्तनिष्ठीवहृत्पार्श्वरुक्पिपासाज्वरानपि॥

**अचि5.13**
रक्तेऽतिवृद्धे च्छागं वा जाङ्गलं वा पिबेदसृक्।
वर्षाभूशर्करारक्तशालितण्डुलजं रजः॥

**अचि5.14**
रक्तष्ठीवी पिबेत् सिद्धं द्राक्षारसपयोघृतैः।
मधूकमधुकक्षीरसिद्धं वा तण्डुलीयकम्॥

**अचि5.15**
यथास्वं मार्गविसृते रक्ते कुर्याच्च भेषजम्।
पिप्पलीमधुकं पिष्टं कार्षिकं ससितोपलम्॥

**अचि5.16**
प्रास्थिकं गव्यमाजं च क्षीरमिक्षुरसं तथा।
यवगोधूममृद्वीकाचूर्णमामलकाद्रसः॥

**अचि5.17**
तैलं च प्रसृतांशानि तत् सर्वं मृदुनाग्निना।
पचेल्लेहो घृतक्षौद्रयुतः स क्षतकासनुत्॥

**अचि5.18**
श्वासहृद्रोगकासघ्नो हितो वृद्धाल्परेतसाम्।
मूढवातस्त्वजामेदः सुराभृष्टं ससैन्धवम्॥

**अचि5.19**
क्षामः क्षीणः क्षतोरस्को मन्दनिद्रोऽग्निदीप्तिमान्।
शतक्षीरसरेणाद्यात् सघृतक्षौद्रशर्करम्॥

**अचि5.20**
शर्करायवगोधूमं जीवकर्षभकौ मधु।
घृतक्षीरानुपानं वा लिह्यात् क्षीणः क्षती कृशः॥

**अचि5.21**
क्रव्यात्पिशितनिर्यूहं घृतभृष्टं पिबेच्च सः।
पिप्पलीक्षौद्रसंयुक्तं मांसशोणितवर्धनम्॥

**अचि5.22**
न्यग्रोधोदुम्बराश्वत्थप्लक्षसालप्रियङ्गुभिः।
तालमस्तकजम्वूत्वक्प्रियालैश्च सपद्मकैः॥

**अचि5.23**
साश्वकर्णैः शृतात् क्षीरादद्याज्जातेन सर्पिषा।
शाल्योदनं क्षतोरस्कः क्षीणशुक्रबलेन्द्रियः॥

**अचि5.24**
वातपित्तार्दितेऽभ्यङ्गो गात्रभेदे घृतैर्मतः।
तैलैश्चानिलरोगघ्नैः पीडिते मातरिश्वना॥

**अचि5.25**
हृत्पार्श्वार्तिषु पानं स्यात् जीवनीयस्य सर्पिषः।
कुर्याद्वा वातरोगघ्नं पित्तरक्तविरोधि यत्॥

**अचि5.26**
यष्ट्याह्वनागबलयोः क्वाथे क्षीरसमं घृतम्।
पयस्यापिप्पलीवांशीकल्कसिद्धं क्षते हितम्॥

**अचि5.27**
घृतं वाष्टगुणे क्षीरे कोललाक्षरसान्वितम्।
कल्कैः कट्वङ्गदार्वीत्वग्वत्सकत्वक्दलैर्घृतम्॥

**अचि5.28**
जीवनीयो गणः शुण्ठी वरी वीरापुनर्नवौ।
बलाभार्ङ्गीस्वगुप्तर्धिशठीतामलकीकणाः॥

**अचि5.29**
शृङ्गाटकं पयस्या च पञ्चमूलं च यल्लघु।
द्राक्षाक्षोडादि च फलं मधुरस्निग्धबृंहणम्॥

**अचि5.30**
तैः पचेत् सर्पिषः प्रस्थं कार्षांशैः श्लक्ष्णकल्कितैः।
क्षीरधात्रीविदारीक्षुच्छागमांसरसान्वितम्॥

**अचि5.31**
प्रस्थार्धं मधुनः शीते शर्करार्धतुलारजः।
पलार्धिकं च मरिचत्वगेलापत्रकेसरम्॥

**अचि5.32**
विनीय चूर्णितं तस्माल्लिह्यान्मात्रां यथानलम्।
अमृतप्राशमित्येतन्नराणाममृतं घृतम्॥

**अचि5.33**
सुधामृतरसं प्राश्यं क्षीरमांसरसाशिना।
नष्टशुक्रक्षतक्षीणदुर्बलव्याधिकर्शितान्॥

**अचि5.34**
स्त्रीप्रसक्तान् कृशान् वर्णस्वरहीनांश्च बृंहयेत्।
कासहिध्माज्वरश्वासदाहतृष्णास्रपित्तनुत्।
पुत्रदं छर्दिमूर्छाहृद्योनिमूत्रामयापहम्॥

**अचि5.35**
श्वदंष्ट्रोशीरमञ्जिष्ठाबलाकाश्मर्यकत्तृणम्।
दर्भमूलं पृथक्पर्णीं पलाशर्षभकौ स्थिराम्॥

**अचि5.36**
पालिकानि पचेत्तेषां रसे क्षीरचतुर्गुणे।
कल्कैः स्वगुप्ताजीवन्तीमेदर्षभकजीवकैः॥

**अचि5.37**
शतावर्यृद्धिमृद्वीकाशर्कराश्रावणीबिसैः।
प्रस्थः सिद्धो घृताद्वातपित्तहृद्रोगशूलनुत्॥

**अचि5.38**
मूत्रकृच्छ्रप्रमेहार्शः कासशोषक्षयापहः।
धनुःस्त्रीमद्यभाराध्वखिन्नानां बलमांसदः॥

**अचि5.39**
मधुकाष्टपलद्राक्षाप्रस्थक्वाथे पचेद् घृतम्। पिप्पल्यष्टपले कल्के प्रस्थं सिद्धे च शीतले॥

**अचि5.40**
पृथगष्टपलं क्षौद्रशर्कराभ्यां च मिश्रयेत्।
समसक्तु क्षतक्षीणरक्तगुल्मेषु तद्धितम्॥

**अचि5.41**
धात्रीफलविदारीक्षुजीवनीयरसात् घृतात्।
गव्याजयोश्च पयसोः प्रस्थं प्रस्थं विपाचयेत्॥

**अचि5.42**
सिद्धशीते सिताक्षौद्रद्विप्रस्थं विनयेत्ततः।
यक्ष्मापस्मारपित्तासृक्कासमेहक्षयापहम्।
वयःस्थापनमायुष्यं मांसशुक्रबलप्रदम्॥

**अचि5.43**
घृतं तु पित्तेऽभ्यधिके लिह्याद्व्यतेऽधिके पिबेत्।
लीढं निर्वापयेत् पित्तमल्पत्वाद्धन्ति नानलम्।
आक्रामत्यनिलं पीतमूष्माणं निरुणाद्धि च॥

**अचि5.44**
क्षामक्षीणकृशाङ्गानामेतान्येव घृतानि तु।
त्वक्क्षीरीपिप्पलीलाजचूर्णैः स्त्यानानि योजयेत्॥

**अचि5.45**
सर्पिर्गुडान् समध्वंशान् कृत्वा दद्यात् पयोनु च।
रेतोवीर्यं बलं पुष्टिं तैराशुतरमाप्नुयात्॥

**अचि5.46**
बला विदारी ह्रस्वं च पञ्चमूलं पुनर्नवम्।
पञ्चानां क्षीरिवृक्षाणां शुङ्गा मुष्ट्यंशकास्तथा॥

**अचि5.47**
एषां कषाये द्विक्षीरे विदार्याजरसांशके।
जीवनीयैः पचेत् पिष्टैरक्षमात्रैर्घृताढकम्॥

**अचि5.48**
सितापलानि पूते च शीते द्वात्रिंशदावपेत्।
गोधूमपिप्पलीवांशीचूर्णं शृङ्गाटकस्य च॥

**अचि5.49**
समाक्षिकं कौडविकं तत्सर्वं खजमूर्च्छितम्।
स्त्यानं सर्पिर्गुडान् कृत्वा भूर्जपत्रेण वेष्टयेत्॥

**अचि5.50**
तान् जग्ध्वा पालिकान् क्षीरं मद्यंत्वनुपिबेत् कफे।
शोषे कासे क्षते क्षीणे श्रमस्त्रीभारकर्शिते॥

**अचि5.51**
रक्तनिष्ठीवने तापे पीनसे चोरसि स्थिते।
शस्ताः पार्श्वशिरःशूले भेदे च स्वरवर्णयोः॥

**अचि5.52**
सशर्कराशृते क्षीरघृततैलाढकत्रये।
चूर्णीकृताः क्षिपेत् पक्वसान्द्रे दशपलाः पृथक्॥

**अचि5.53**
द्राक्षात्मगुप्तावर्षाभूसमङ्गाभीरुपिप्पलीः।
तद्वद्विदार्यामलके प्रस्थार्धं विश्वभेषजम्॥

**अचि5.54**
क्षामः क्षीणः क्षतः शुष्यंस्तान्खादेत् पालिकैर्गुडैः।
तथा सद्यो रसादीनां वृध्या पुष्टिं समश्नुते॥

**अचि5.55**
गोक्षीरार्धाढकं सर्पिः प्रस्थमिक्षुरसाढकम्।
रसाद्विदार्याः कुडवं रसात् प्रस्थं च तैत्तिरात्॥

**अचि5.56**
दद्यात् सिध्यति तस्मिंस्तु पिष्टानिक्षुरसैरिमान्।
मधूकषुष्पं कुडवं कुडवं च प्रियालतः॥

**अचि5.57**
पलद्वयं तवक्षीर्याः खर्जूराणि च विंशतिः।
पृथग्विभीतकान्मज्ञः पिप्पल्याश्च चतुर्थिकाम्॥

**अचि5.58**
त्रिंशत्पलानि खण्डाच्च मधुकात् पाणिमानिकाम्।
तथार्धपलिकान्यत्र जीवनीयानि दापयेत्॥

**अचि5.59**
सिद्धे द्विकुडवं क्षौद्राच्छीते दत्वा च मोदकान्।
कारयेन्मरिचाजाजीपलचूर्णावचूर्णितान्॥

**अचि5.60**
वातासृक्पित्तरोगेषु क्षतकासक्षयेषु च।
क्षीणौजःस्वरशुक्रेषु योनिदोषेषु संस्रवे।
मृतप्रजासु वन्ध्यासु हितं गर्भस्य च स्रुतौ॥

**अचि5.61**
वीतत्वगास्थिकूष्माण्डतुलां स्विन्नां पुनः पचेत्॥

**अचि5.62**
घट्टयन् सर्पिषः प्रस्थे क्षौद्रवर्णेऽत्र च क्षिपेत्।
स्वण्डाच्छतं कणाशुण्ठ्योर्द्विपलं जीरकादपि॥

**अचि5.63**
त्रिजातधान्यमरिचं पृथगर्धपलांशकम्।
अवतारितशीते च दत्वा क्षौद्रं घृतार्धिकम्॥

**अचि5.64**
स्वजेनामथ्य च स्थाप्यं तन्निहन्त्युपयोजितम्।
कासहिध्माज्वरश्वासरक्तपित्तक्षतक्षयान्॥

**अचि5.65**
उरःसन्धानजननं मेधास्मृतिबलप्रदम्।
अश्विभ्यांन्निर्मितं हृद्यं कूष्माण्डकरसायनम्॥

**अचि5.66**
पिवेन्नागबलामूलस्यार्धकर्षाभिवर्धितम्।
पलं क्षीरयुतं मासं क्षीरवृत्तिरनन्नभुक्॥

**अचि5.67**
एष प्रयोगः पुष्ट्यायुर्बलवर्णकरः परम्।
मण्डूकपर्ण्याः कल्पोऽयं यष्ट्या वित्तौषधस्य च॥

**अचि5.68**
पादशेषं जलद्रोणे पचेन्नागबलातुलाम्।
तेन क्वाथेन तुल्यांशं घृतं क्षीरं च साधयेत्॥

**अचि5.69**
पलार्धिकैश्चातिबलाबलायष्टीपुनर्नवैः।
प्रपौण्डरीककाश्मर्यप्रियालकपिकच्छुभिः॥

**अचि5.70**
अश्वगन्धासिताभीरुमेदायुग्मत्रिकण्टकैः।
काकोलीक्षीरकाकोलीक्षीरशुक्लाद्विजीरकैः॥

**अचि5.71**
मृणालबिसखर्जूरशृङ्गाटककशेरुकैः।
एतन्नागबलासर्पिः पित्तरक्तं क्षतक्षयम्॥

**अचि5.72**
जयेत्तृड्भ्रमदाहांश्च बलपुष्टिकरं परम्।
वर्ण्यमायुष्यमोजस्यं वलीपलितनाशनम्।
उपयुज्य तु षण्मासाद् वृद्धोऽपि तरुणायते॥

**अचि5.73**
शर्करा पिप्पलीचूर्णैः सर्पिषा माक्षिकेण च।
संयुतं वा शृतं क्षीरं पिबेत् कासज्वरापहम्॥

**अचि5.74**
फलाम्लं सर्पिषा भृष्टं विदारीक्षुरसे कृतम्।
स्त्रीषु क्षीणः पिबेद्यूषं जीवनं बृंहणं परम्॥

**अचि5.75**
सक्तूनां वस्त्रपूतानां मन्थं क्षौद्रघृतावितम्।
यवान्नसात्म्यो दीप्ताग्निः क्षतक्षीणः पिबेन्नरः॥

**अचि5.76**
जीवनीयोपसिद्धं वा जाङ्गलं घृतभर्जितम्।
रसं प्रयोजयेत् क्षीणे व्यञ्जनार्थं सशर्करम्॥

**अचि5.77**
गोमहिष्यश्वनागाजैः क्षीरैर्मांसरसैस्तथा।
यवान्नं भोजयेद्यूषैः फलाम्लैर्वा घृताप्लुतैः॥

**अचि5.78**
दीप्तेऽग्नौ विधिरेष स्यान्मन्दे दीपनपाचनः।
यक्ष्मोक्तः क्षतिनां शस्तो ग्राही शकृति तु द्रवे॥

**अचि5.79**
दशमूलं स्वयंगुप्तां शंखपुष्पीं शठीं बलाम्।
हस्तिपिप्पल्यपामार्गपिप्पलीमूलचित्रकान्॥

**अचि5.80**
भार्ङ्गी पुष्करमूलं च द्विपलांशान्यवाढकम्।
हरीतकीशतं चैकं जलपञ्चाढके पचेत्॥

**अचि5.81**
यवस्वेदे कषायं तं पूतं तच्चाभयाशतम्।
पचेद्गुडतुलां दत्वा कुडवं च पृथग्घृतात्॥

**अचि5.82**
तैलात् सपिप्पलीचूर्णात् सिद्धशीते च माक्षिकात्।
लेहाद्द्वे चाभये नित्यमतः खादेद्रसायनात्॥

**अचि5.83**
तद्वलीपलितं हन्याद्वर्णायुर्बलवर्धनम्।
पञ्चकासान् क्षयं श्वासं सहिध्मं विषमज्वरम्॥

**अचि5.84**
मेहगुल्मग्रहण्यर्शोहृद्रोगरुचिपीनसान्।
अगस्त्यविहितं धन्यमिदं श्रेष्ठं रसायनम्॥

**अचि5.85**
दशमूलं बलां मूर्वां हरिद्रे पिप्पलीद्वयम्।
पाठाश्वगन्धापामार्गस्वगुप्तातिविषामृताः॥

**अचि5.86**
बालबिल्वं त्रिवृद्दन्तीमूलं पत्रं च चित्रकात्।
पयस्यां कुटजं हिंस्रां पुष्पं सारं च बीजकात्॥

**अचि5.87**
बोलस्थविरभल्लातविकङ्कतशतावरीः।
पूतीकरञ्जशम्याकचन्द्रलेखासहाचरम्॥

**अचि5.88**
सौभाञ्जनकनिम्बत्वगिक्षुरं च पलांशकम्।
पथ्यासहस्रं सशतं यवानां चाढकद्वयम्॥

**अचि5.89**
पचेदष्टगुणे तोये यवस्वेदेऽवतारयेत्।
पूते क्षिपेत् सपथ्ये च तत्र जीर्णगुडात्तुलाम्॥

**अचि5.90**
तैलाज्यधात्रीरसतः प्रस्थं प्रस्थं ततः पुनः।
अधिश्रयेन्मृदावग्नौ दर्वीलेपेऽवतार्य च॥

**अचि5.91**
शीते प्रस्थद्वयं क्षौद्रात् पिप्पलीकुडवं क्षिपेत्।
चूर्णीकृतात्त्रिजाताच्च त्रिपलं निखनेत्ततः॥

**अचि5.92**
धान्ये पुराणकुम्भस्थं मासं खादेच्च पूर्ववत्।
रसायनं वसिष्ठोक्तमेतत् पूर्वगुणाधिकम्।
स्वस्थानां निष्परीहारं सर्वर्तुषु च शस्यते॥

**अचि5.93**
पालिकं सैन्धवं शुण्ठी द्वे च सौवर्चलात् पले।
कुडवांशानि वृक्षाम्लं दाडिमं पत्रमार्जकात्॥

**अचि5.94**
एकैका मरिचाजाज्योर्धान्यकाद्वे चतुर्थिके।
शर्करायाः पलान्यत्र दश द्वे च प्रदापयेत्॥

**अचि5.95**
कृत्वा चूर्णमतो मात्रामन्नपानेषु दापयेत्।
रुच्यं तद्दीपनं बल्यं पार्श्वार्तिश्वासकासनुत्॥

**अचि5.96**
एकां षोडशिकां धान्याद् द्वे द्वे चाजाजिदीप्यकात्।
ताभ्यां दाडिमवृक्षाम्ले द्विर्द्विस्सौवर्चलात् पले॥

**अचि5.97**
शुण्ठ्याः कर्षं दधित्थस्य मध्यात् पञ्चपलानि च।
तच्चूण षोडशपलैः शर्कराया विमिश्रयेत्॥

**अचि5.98**
षाडवोयं प्रदेयः स्यादन्नपानेषु पूर्ववत्।
विधिश्च यक्ष्मपित्तास्रविहितः शस्यते क्षते॥

**अचि5.99**
निवृत्ते क्षतदोषे तु कफे वृद्ध उरः शिरः।
दाल्येते कासिनो यस्य स ना धूमानिमान्पिबेत्॥

**अचि5.100**
द्विमेदाद्विबलायष्टीकल्कैः क्षौमे सुभाविते।
वर्तिं कृत्वा पिबेद्धूमं जीवनीयघृतानुपः॥

**अचि5.101**
मनःशिला बला साजगन्धा त्वक्क्षीरिनागरैः।
तद्वदेवानुपानं तु शर्करेक्षुगुडोदकम्॥

**अचि5.102**
पिष्ट्वा मनःशिलां तुल्यामार्द्रया वटशुङ्गया।
ससर्पिष्कं पिबेद्धूमं तित्तिरिप्रतिभोजनः॥

**अचि5.103**
क्षयजे बृंहणं पूर्वं कुर्यादग्नेश्च वर्धनम्।
बहुदोषाय सस्नेहं मृदु दद्याद्विरेचनम्॥

**अचि5.104**
शम्याकेन त्रिवृतया मृद्वीकारसयुक्तया।
तिल्वकस्य कषायेण विदारीस्वरसेन च।
सर्पिः सिद्धं पिबेद्युक्त्या क्षीणदेहो विशोधनम्॥

**अचि5.105**
पित्ते कफे धातुषु च क्षीणेषु क्षयकासवान्।
घृतं कर्कटकीक्षीरद्विबलासाधितं पिबेत्॥

**अचि5.106**
विदारीभिः कदम्बैर्वा तालसस्यैश्च साधितम्।
घृतं पयश्च मूत्रस्य वैवर्ण्ये कृच्छ्रनिर्गमे॥

**अचि5.107**
शूने सवेदने मेढ्रे पायौ सश्रोणिवङ्क्षणे।
घृतमण्डेन लघुनानुवास्यो मिश्रकेण वा॥

**अचि5.108**
जाङ्गलैः प्रतिभुक्तस्य वर्तकाद्या बिलेशयाः।
क्रमशः प्रसहास्तद्वत् प्रयोज्याः पिशिताशिनः॥

**अचि5.109**
औष्ण्यात् प्रमाथिभावाच्च स्रोतोभ्यश्च्यावयन्ति ते।
कफं शुद्धैश्च तैः पुष्टिं कुर्यात् सम्यग्वहन् रसः॥

**अचि5.110**
चविकात्रिफलाभार्ङ्गीदशमूलैः सचित्रकैः।
कुलत्थपिप्पलीमूलपाठाकोलयवैर्जले॥

**अचि5.111**
शृतैर्नागरदुस्पर्शापिप्पलीशठिपौष्करैः।
पिष्टैः कर्कटशृङ्ग्या च समैः सर्पिर्विपाचयेत्॥

**अचि5.112**
सिद्धेऽस्मिंश्चूर्णितौ क्षारौ द्वौ पञ्च लवणानि च।
दत्वा युक्त्या पिबेन्मात्रां क्षयकासनिपीडितः॥

**अचि5.113**
कासमर्दाभयामुस्तापाठाकट्फलनागरैः।
पिप्पल्या कटुरोहिण्या काश्मर्या सुरसेन च॥

**अचि5.114**
अक्षमात्रैर्घृतप्रस्थं क्षीरद्राक्षारसाढके।
पचेच्छोषज्वरप्लीहसर्वकासहरं शिवम्॥

**अचि5.115**
वृषव्याघ्रीगुडूचीनां पत्रमूलफलाङ्कुरात्।
रसकल्कैर्घृतं पक्वं हन्ति कासज्वरारुचीः॥

**अचि5.116**
द्विगुणे दाडिमरसे सिद्धं वा व्योषसंयुतम्।
पिबेदुपरिभक्तस्य यवक्षारयुतं नरः॥

**अचि5.117**
पिप्पलीनुडसिद्धं वा छागक्षीरयुतं घृतम्।
एतान्यग्निविवृध्यर्थं सर्पींषि क्षयकासिनाम्।
स्युर्दोषबद्धकण्ठोरःस्रोतसां च विशुद्धये॥

**अचि5.118**
श्वाविदां सूचयो दग्धाः सघृतक्षौद्रशर्कराः।
श्वासकासहरा बर्हिपादौ वा क्षौद्रसर्पिषा॥

**अचि5.119**
एरण्डपत्रक्षारं वा व्योषतैलगुडान्वितम्।
लेहयेत् क्षारमेवं वा सुरसैरण्डपत्रजम्॥

**अचि5.120**
लिह्यात्त्र्यूषणचूर्णं वा पुराणगुडसर्पिषा।
चित्रकत्रिफलाजाजी कर्कटाख्या कटुत्रिकम्।
द्राक्षां च क्षौद्रसर्पिर्भ्यां लिह्यादद्याद्गुडेन वा॥

**अचि5.121**
पाठामधुकजीवन्तीत्वक्क्षीरीत्रिफलाघनम्।
शठीद्विबृहतीद्राक्षापिप्पल्येलावितुन्नकम्॥

**अचि5.122**
सारिवापुष्करजटाकर्कटाख्यारसाञ्जनम्।
पुनर्नवालोहरजस्त्रायमाणायवानिका॥

**अचि5.123**
ऋद्धिस्तामलकी भार्ङ्गी विडङ्गं धन्वयासकम्।
क्षारचित्रकचव्याम्लवेतसव्योषदारु च।
सर्वकासान् जयेल्लीढं तच्चूर्णं मधुसर्पिषा॥

**अचि5.124**
पद्मकं त्रिफला व्योषं विडङ्गं देवदारु च।
बलारास्ना च तच्चूर्णं समस्तसमशर्करम्॥

**अचि5.125**
स्वादेन्मधुघृताभ्यां वा लिह्यात् कासहरं परम्।
तद्वन्मारिचचूर्णं वा सघृतक्षौद्रशर्करम्॥

**अचि5.126**
पथ्याशुण्ठीघनगुदैर्गुटिकां धारयेन्मुखे।
सर्वेषु कासश्वासेषु केवलं वा बिभीतकम्॥

**अचि5.127**
कल्के तिल्वकपत्राणां घृतभृष्टे सशर्करे।
पेयोत्कार्यथवा च्छर्दितृट्कासामातिसारजित्॥

**अचि5.128**
गौरसर्षपगण्डीरविडङ्गव्योषचित्रकान्।
साभयान् साधयेत्तोये यवागूस्तेन चाम्भसा॥

**अचि5.129**
ससर्पिर्लवणा कासे हिध्माश्वासे सपीनसे।
पाण्ड्वामये क्षये शोफे कर्णशूले च शस्यते॥

**अचि5.130**
कण्टकारीरसे सिद्धो मुद्गयूषः सुसंस्कृतः।
सगौरामलकः साम्लः सर्वकासभिषग्जितम्॥

**अचि5.131**
वातघ्नौषधनिःक्वाथे क्षीरं यूषान् रसानपि।
वैष्किरान् प्रातुदान् बैलान् दापयेत् क्षयकासिने॥

**अचि5.132**
क्षतकासे च ये धूमाः सानुपाना निदर्शिताः।
क्षयकासेऽपि ते योज्या वक्ष्यते यच्च यक्ष्मणि॥

**अचि5.133**
बृंहणं दीपनं चाग्नेः स्रोतसां च विशोधनम्।
व्यत्यासात् क्षयकासिभ्यो बल्यं सर्वं प्रशस्यते॥

**अचि5.134**
सन्निपातोद्भवो घोरः क्षयकासो यतस्ततः।
यथादोषबलं तस्य सन्निपातहितं हितम्॥

**इति पञ्चमोऽध्यायः॥**

# अष्टाङ्गसंग्रहः चिकित्सितस्थानम् अध्याय ६-१०

https://sa.wikisource.org/s/9zn

**अष्टाङ्गसंग्रहः**

अथ षष्ठोऽध्यायः।

**अचि6.1**
अथातः श्वासहिध्माचिकित्सितं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अचि6.2**
श्वासहिध्मा यतस्तुल्यहेत्वाद्याः साधनं ततः।
तुल्यमेव तदार्तं च पूर्वं स्वेदैरुपाचरेत्॥

**अचि6.3**
स्निग्धैर्लवणतैलाक्तं स्रोतस्सु ग्रथितः कफः।
तैर्लीनोऽपि विलीनोस्य कोष्ठं प्राप्तः सुनिर्हरः॥

**अचि6.4**
भवेत् खेषु मृदुत्वं च मारुते चानुलोमता।
स्विन्नं च भोजयेदन्नं स्निग्धमानूपजै रसैः॥

**अचि6.5**
दध्युत्तरेण वा दद्यात्ततोऽस्मै वमनं मृदु।
विशेषात् कासवमथुहृद्ग्रहस्वरसादिने॥

**अचि6.6**
पिप्पलीसैन्धवक्षौद्रयुक्तं वाताविरोधि यत्।
निर्हृते सुखमाप्रोति सकफे दुष्टविग्रहे॥

**अचि6.7**
स्रोतःसु च विशुद्धेषु चरत्यविहतोऽनिलः।
ध्मानोदावर्ततमके मातुलुङ्गाम्लवेतसैः॥

**अचि6.8**
हिङ्गुपीलुबिडयुक्तमन्नं स्यादनुलोमनम्। ससैधवं फलाम्लं वा कोष्णं दद्याद्विरेचनम्॥

**अचि6.9**
एते हि कफसंरुद्धगतिप्राणप्रकोपजाः।
तस्मात्तन्मार्गशुध्यर्थमूर्ध्वाधः शोधनं हितम्॥

**अचि6.10**
उदीर्यते भृशतरं मार्गरोधाद्वहज्जलम्।
यथा तथानिलस्तस्य मार्गमस्माद्विशोधयेत्॥

**अचि6.11**
अशान्तौ कृतसंशुद्धेर्धूमैर्लीनं मलं हरेत्।
हरिद्रापत्रमेरण्मूलं लाक्षां मनःशिलाम्॥

**अचि6.12**
सदेवदार्वलं मांसीं पिष्ट्वा वर्तिं प्रकल्पयेत्।
तां घृताक्तां पिबेद्धूमं यवान् वा घृतसंयुतान्॥

**अचि6.13**
मधूच्छिष्टं सर्जरसं घृतं वा गुरुवागुरु।
चन्दनंवाजशृङ्गं वा बालान्वा स्नाव वा गवाम्॥

**अचि6.14**
ऋष्यगोधकुरङ्गैणचर्मशृङ्गखुराणि वा।
गुग्गुलुं वा मनोह्वां वा सालनिर्यासमेव वा॥

**अचि6.15**
सल्लकीं गुग्गुलुं लोहं पद्मकं च घृताप्लुतम्॥

**अचि6.16**
अवश्यं स्वेदनीयानामस्वेद्यानामपि क्षणम्।
स्वेदयेत् ससिताक्षीरसुखोष्णस्नेहसेचनैः॥

**अचि6.17**
उत्कारिकोपनाहैश्च स्वेदाध्यायोक्तभेषजैः।
उरः कण्ठं च मृदुभिः सामे त्वामविधिं चरेत्॥

**अचि6.18**
अतियोगोद्धतं वातं दृष्ट्वा पवननाशनैः।
स्निग्धै रसाद्यैर्नात्युष्णैरभ्यङ्गैश्च शमं नयेत्॥

**अचि6.19**
अनुत्क्लिष्टकफास्विन्नदुर्बलानां हि शोधनात्।
वायुर्लब्धास्पदो मर्म संशोष्याशु हरेदसून्॥

**अचि6.20**
कषायलेहस्नेहाद्यैस्तेषां संशमयेदतः।
क्षीणक्षतातिसारासृक्पित्तदाहानुबन्धजान्॥

**अचि6.21**
मधुरस्निग्धशीताद्यैर्हिध्माश्वासानुपाचरेत्।
कुलत्थदशमूलानां क्वाथे स्युर्जाङ्गला रसाः।
यूषाश्च शिग्रुवार्ताककासघ्नवृषमूलकैः॥

**अचि6.22**
पल्लवैर्निम्बकुलकबृहतीमातुलुङ्गजैः।
व्याघ्रीदुरालभाशृङ्गीबिल्वमध्यत्रिकण्टकैः॥

**अचि6.23**
सामृताग्निकुलत्थैश्च यूषः स्यात् क्वथितैर्जलै।
तद्वद्रास्नाबृहत्यादिबलामुद्गैः सचित्रकैः॥

**अचि6.24**
पेया च चित्रकाजाजीशृङ्गीसौवर्चलैर्हिता।
दशमूलेन वा कासश्वासहिध्मारुजापहा॥

**अचि6.25**
दशमूलशठीरास्नाभार्ङ्गीबिल्वर्धिपौष्करैः।
कुलीरशृङ्गीचपलातामलक्यमृतौषधैः॥

**अचि6.26**
पिबेत् कषायं जीर्णेऽस्मिन् पेयां तैरेवसाधिताम्।
शालिषष्टिकगोधूमयवमुद्गकुलत्थभुक्॥

**अचि6.27**
कासहृद्ग्रहपार्श्वार्तिहिध्माश्वासप्रशान्तये।
सक्तून्वार्काङ्कुरक्षीरभावितानां समाक्षिकान्।
यवानां दशमूलादिनिःक्वाथलुलितान् पिबेत्॥

**अचि6.28**
अन्ने च योजयेत् क्षारहिङ्वाज्यबिडदाडिमान्।
सपौष्करशठीव्योषमातुलुङ्गाम्लवेतसान्॥

**अचि6.29**
दशमूलस्य वा क्वाथमथवा देवदारुणः।
पिबेद्वा वारुणीमण्डं हिध्माश्वासी पिपासितः॥

**अचि6.30**
पिप्पलीपिप्पलीमूलपथ्याजन्तुघ्नचित्रकैः।
कल्कितैर्लेपिते रूढे निक्षिपेत् घृतभाजने॥

**अचि6.31**
तक्रं मासस्थितं तद्धि दीपनं श्वासकासजित्।
पाठां मधुरसां दारु सरलं च निशि स्थितम्॥

**अचि6.32**
सुरामण्डेऽल्पलवणं पिबेत् प्रसृतसम्मितम्।
शिरीषकुन्दकदलीकुसुमं पिप्पलीयुतम्॥

**अचि6.33**
तण्डुलाम्बुप्लुतं हिध्माश्वासकासहरं परम्।
आरनालेन पिष्ट्वा वा मातुलुङ्गरसान्वितान्॥

**अचि6.34**
हिङ्गुसौवर्चलकणाकोलमुद्गान् जलेन वा।
कोष्णेन भार्ङ्गीं शुण्ठीं च क्षारं वा मरिचान्वितम्॥

**अचि6.35**
स्वक्वाथपिष्टां लुलितां बाष्पिकां पाययेत वा।
स्वरसं सप्तपर्णस्य पुष्पाणां वा शिरीषतः॥

**अचि6.36**
हिध्वाश्वासे मधुकणायुक्तं पित्तकफानुगे।
उत्कारिका तुगाकृष्णामधूलीगुडनागरैः॥

**अचि6.37**
पित्तानुबन्धे योक्तव्या पवने त्वनुबन्धिनि।
श्वाविट्छशामिषकणाघृतशल्यकशोणितैः॥

**अचि6.38**
सुवर्चलारसव्योषसर्पिर्भिः सहितं पयः।
अनुशाल्योदनं पेयं वातपित्तेऽनुबन्धिनि॥

**अचि6.39**
चतुर्गुणाम्बुसिद्धं वा छागं सगुडनागरम्।
पिप्पलीमूलमधुकगुडगोश्वशकृद्रसान्।
हिध्माभिष्यन्दकासघ्नान् लिह्यान्मधुघृतान्वितान्॥

**अचि6.40**
गोगजाश्ववराहोष्ट्रखरमेषाजविड्रसान्॥

**अचि6.41**
समध्वैकैकशो लिह्याद्बहुश्लेष्माथवा पिबेत्।
चतुष्पाच्चर्मरोमस्थिखुरशृङ्गोद्भवां मषीम्॥

**अचि6.42**
तथैव वाजिगन्धाया लिह्याच्छ्वासी कफोल्बणः।
क्षारं वा त्रिफलापाठाबृहतीफलमूलजम्॥

**अचि6.43**
मुक्ताप्रवालवैडूर्यशङ्खसौगन्धिकाञ्जनम्।
मसारगल्लस्फटिककाचैलालवणद्वयम्॥

**अचि6.44**
अपामार्गफलं ताम्रमयो रूप्यं शणात् फलम्।
ज्योतीरसेन तल्लिह्यादयो वैकं मधुद्रवम्॥

**अचि6.45**
शठीपौष्करधात्रीर्वा पौष्करं वा कणान्वितम्।
गैरिकाञ्जनकृष्णा वा स्वरसं वा कपित्थजम्॥

**अचि6.46**
रसेन वा कपित्थस्य धात्रीसैन्धवपिप्पलीः।
घृतक्षौद्रेण वा पथ्या विडङ्गोषणपिप्पलीः॥

**अचि6.47**
लिह्याद्वा पिप्पलीद्राक्षापथ्याशृङ्गीदुरालभाः।
घृतमाक्षिकतैलैर्वा त्र्यूषणं क्षारसंयुतम्।
पिप्पलीक्षौद्रयुक्तौ वा रसौ धात्रीकपित्थयोः॥

**अचि6.48**
सितोपलात्वामलकी द्राक्षा गोश्वशकृद्रसम्।
कोललाजमधुद्राक्षापिप्पलीनागराणि वा॥

**अचि6.49**
गुडतैलनिशाद्राक्षाकणारास्नोषणानि वा।
पिबेद्रसाम्बुमद्याद्यैर्लेहौषधरजांसि वा॥

**अचि6.50**
जीवन्तीमुस्तसुरसत्वगेलाद्वयपौष्करम्।
चण्डातामलकीलोहभार्ङ्गीनागरवालकम्॥

**अचि6.51**
कर्कटाख्याशठीकृष्णानागकेसरचोरकम्।
उपयुक्तं यथाकामं चूर्णं द्विगुणशर्करम्॥

**अचि6.52**
पार्श्वरुग्ज्वरकासघ्नं हिध्माश्वासहरं परम्।
जीवन्ती चोरकः शृङ्गी पौष्करं सुरसः शठी॥

**अचि6.53**
पिप्पलीत्वग्बिडक्षारशुण्ठीहिङ्ग्वम्लवेतसम्।
एलातामलकीभार्ङ्गीवृक्षाम्लं चेति चूर्णितम्॥

**अचि6.54**
रसेन मातुलुङ्गस्य मद्येन हविषाथवा।
लीढं प्रयुक्तमन्ने वा केवलं चोपयोजितम्॥

**अचि6.55**
हिध्माश्वासविबन्धार्शःकासहृत्पार्श्वशूलनुत्।
शठीतामलकीभार्ङ्गीचण्डावालकपौष्करम्॥

**अचि6.56**
शर्कराष्टगुणं चूर्णं हिध्माश्वासहरं परम्।
तुल्यं गुडं नागरं च भक्षयेन्नावयेत वा॥

**अचि6.57**
लशुनस्य पलाण्डोर्वा मूलं गृञ्जनकस्य वा।
चन्दनाद्वा रसं दद्यान्नारीक्षीरेण नावनम्॥

**अचि6.58**
सशर्करां पिप्पली वा मधुकं वा मधुद्रवम्।
स्तन्येन मक्षिकाविष्ठामलक्तकरसेन वा॥

**अचि6.59**
ससैन्धवं घृताच्छं वा सिद्धं स्तन्येन वा घृतम्।
कल्कितैर्मधुरद्रव्यैस्तत् पिबेन्नावयेत वा॥

**अचि6.60**
सकृदुष्णं सकृच्छीतं व्यत्यासात् ससितं मधु।
तद्वत् पयस्तहासिद्धमधोभागौषधैर्घृतम्॥

**अचि6.61**
कणासौवर्चलक्षारवयस्थाहिङ्गुचोरकैः।
सकायस्थैर्घृतं मस्तु दशमूलरसे पचेत्॥

**अचि6.62**
तत् पिबेज्जीवनीयैर्वा लिह्यात् समधु साधितम्।
तेजोवत्यभया कुष्ठं पिप्पली कटुरोहिणी॥

**अचि6.63**
पूकीकं पौष्करं मूलं पलाशश्चित्रकः शठी।
पटुद्वयं तामलकी जीवन्ती बैल्वपेशिका॥

**अचि6.64**
वचापत्रं च तालीसं कर्षांशैस्तैर्विपाचयेत्।
हिङ्गुपादैर्घृतप्रस्थं पीतमाशु निहन्ति तत्॥

**अचि6.65**
श्वासानिलार्शोग्रहणीहिध्माहृत्पार्श्ववेदनाः।
सिद्धं वा पुरमञ्जिष्ठालाक्षासर्जरसैः पिबेत्॥

**अचि6.66**
सपद्मकमनोह्वालैर्घृतप्रस्थं पिचून्मितैः।
वत्सकादिप्रतीवापं सिद्धं वा प्रथमे गणे॥

**अचि6.67**
सपञ्चलवणं सर्पिः श्वासकासानपोहति।
हिंस्राविडङ्गपूतीकत्रिकटुत्रिफलाग्निकैः॥

**अचि6.68**
कोलमात्रैर्घृतप्रस्थं पाचयेत् सलिलाढके।
क्षीरप्रस्थद्वयोपेतं तत् कासश्वासपीनसान्॥

**अचि6.69**
अर्शांस्यरोचकं गुल्मं क्षयं हिध्मां च नाशयेत्।
सैन्धवार्धांशयुक्तं वा पुराणं पाययेद्घृतम्।
धान्वन्तरं वृषघृतं दाधिकं त्र्यूषणादि वा॥

**अचि6.70**
शीताम्बुसेकः सहसा त्रासविक्षेपभीशुचः।
हर्षेर्ष्योच्छ्वासरोधाश्च हितं कीटैश्च दंशनम्॥

**अचि6.71**
यत् किञ्चित् कफवातघ्नमुष्णं वातानुलोमनम्।
तत् सेव्यं प्रायशो यच्च सुतरां मारुतापहम्॥

**अचि6.72**
वातकृद्वा कफहरं कफकृद्वानिलापहम्।
कार्यं नैकान्तिकं ताभ्यां प्रायः श्रेयोऽनिलापहम्॥

**अचि6.73**
सर्वेषां बृंहणे ह्यल्पः शक्यश्च प्रायशो भवेत्।
नात्यर्थं शमनेऽपायो भृशोशक्यश्च कर्शने॥

**अचि6.74**
शमनैर्बृंहणैश्चातो भूयिष्ठं तानुपाचरेत्।
कासश्वासक्षयच्छर्दिहिध्माश्चान्योन्यभेषजैः॥
इति षष्ठोऽध्यायः॥

अथ सप्तमोऽध्यायः।

**अचि7.1**
अथातो राजयक्ष्मचिकित्सितं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अचि7.2**
बलिनो बहुदोषस्य स्निग्धस्विन्नस्य शोधनम्।
ऊर्ध्वाधो यक्ष्मिणः कुर्यात् सस्नेहं यन्न कर्शनम्॥

**अचि7.3**
पयसा फलयुक्तेन मधुरेण रसेन वा।
सर्पिष्मत्या यवाग्वा वा वमनद्रव्यसिद्धया॥

**अचि7.4**
वमेद्विरेचनं दद्यात्त्रिवृच्श्यामानृपद्रुमान्॥
शर्करामधुसर्पिर्भिः पयसा तर्पणेन वा।
द्राक्षाविदारीकाश्मर्यमांसानां वा रसैर्युतान्॥

**अचि7.5**
शुद्धकोष्ठस्य युञ्जीत विधिं बृंहणदीपनम्।
हृद्यानि चान्नपानानि वातघ्नानि लघूनि च॥

**अचि7.6**
शालिषष्टिकगोधूमयवमुद्गं समास्थितम्।
लघुमच्युतवीर्यं च सुजरं बलकृच्च यत्॥

**अचि7.7**
आजं क्षीरं घृतं मांसं क्रव्यान्मांसं च शोषजित्।
काकोलूकवृकद्वीपिगवाश्वनकुलोरगम्॥

**अचि7.8**
गृध्रभासखरोष्ट्रं च हितं छद्म्नोपसंहितम्।
ज्ञातं जुगुप्सितं तद्धि छर्दिषे न बलौजसे॥

**अचि7.9**
मृगाद्याः पित्तकफयोः पवने प्रसहादयः।
वेशवारीकृताः पथ्या रसादिषु च कल्पिताः॥

**अचि7.10**
भृष्टाः सर्षपतैलेन सर्पिषा वा यथायथम्।
रसिका मृदवः स्निग्धाः पटुद्रव्याभिसंस्कृताः॥

**अचि7.11**
हिता मौद्गककौलत्थास्तद्वद्यूषाश्च साधिताः।
सपिप्पलीकं सयवं सकुलत्थं सनागरम्॥

**अचि7.12**
सदाडिमं सामलकं स्निग्धमाजं रसं पिबेत्।
तेन षड्विनिवर्तन्ते विकाराः पीनसादयः॥

**अचि7.13**
कोलदाडिमनिर्यासपिष्टयास्थिविहीनया।
द्राक्षया स्वच्छधान्याम्बुप्लुतालोडितकल्कया॥

**अचि7.14**
कार्यः सौवर्चलव्योषपत्रैलादीप्यकान्वितः।
समाक्षिकः सकर्पूरः सलवङ्कः सकेसरः॥

**अचि7.15**
चन्द्रकान्तो यथार्थाख्यः शोषहाग्निरुचिप्रदः।
शुक्ताम्लधात्रीस्वरसैर्द्राक्षायाः कल्कितं पलम्॥

**अचि7.16**
गुडषट्पलसंयुक्तं युक्तं श्लक्ष्णैश्च कार्षिकैः।
वृक्षाम्लधान्यद्रमिलीराजिकादाडिमोषणैः॥

**अचि7.17**
पलेन नागपुष्पस्य किञ्चित् सौवर्चलेन च।
ससेव्यपत्रत्वक्तोयः सुरसारसमूर्छितः॥

**अचि7.18**
भूरिभूस्तृणको रागः कण्ठ्यो रुच्यः समाक्षिकः।
पिबेच्च सुतरां मद्यं जीर्णं स्रोतोविशोधनम्॥

**अचि7.19**
पित्तादिषु विशेषेण मध्वरिष्टाच्छवारुणीः।
सिद्धं वा पञ्चमूलेन तामलक्याथवा जलम्॥

**अचि7.20**
पर्णिनीभिश्चतसृभिर्धान्यनागरकेण वा।
कल्पयेच्चानुकूलोऽस्य तेनान्नं शुचि यत्नवान्॥

**अचि7.21**
दशमूलेन पयसा सिद्धं मांसरसेन वा।
बलागर्भं घृतं योज्यं क्रव्यामांसरसेन वा॥

**अचि7.22**
सक्षौद्रं पयसा सिद्धं सर्पिर्दशगुणेन वा।
जीवन्तीं मधुकं द्राक्षां फलानि कुटजस्य च॥

**अचि7.23**
पुष्कराह्वं शठीं कृष्णां व्याघ्रीं गोक्षुरकं बलाम्।
नीलोत्पलं तामलकीं त्रायमाणां दुरालभाम्।
कल्कीकृत्य घृतं पक्वं रोगराजहरं परम्॥

**अचि7.24**
दुरालभां गोक्षुरकं चतस्रः पर्णिनीर्बलाम्।
भागान् पलोन्मितान् कृत्वा पलं पर्पटकस्य च॥

**अचि7.25**
पचेद्दशगुणे तोये दशभागावशेषिते।
पूते तस्मिन् घृतप्रस्थं क्षीरद्विगुणितं पचेत्॥

**अचि7.26**
गर्भं दत्वा शठीकृष्णाभूनिम्बोत्पलसारिवाः।
त्रायन्तीं पौष्करं मूलं सहपत्रफलां फलम्॥

**अचि7.27**
कुटजाच्च जयेत्तद्धि शिरःपार्श्वांसवेदनाम्।
तृष्णां छर्दिमतीसारं कासदाहभ्रमज्वरान्॥

**अचि7.28**
घृतं खर्जूरमृद्वीकामधुकैः सपरूसकैः।
सपिप्पलीकं वैस्वर्यकासश्वासज्वरापहम्॥

**अचि7.29**
दशमूलशृतात् क्षीरात् सर्पिर्यदुदियान्नवम्।
सपिप्पलीकं सक्षौद्रं तत् परं स्वरबोधनम्॥

**अचि7.30**
शिरःपार्श्वांसशूलघ्नं कासश्वासज्वरापहम्।
पञ्चभिः पञ्चमूलैर्वा शृताद्यदुदियात् घृतम्॥

**अचि7.31**
पञ्चानां पञ्चमूलानां रसे क्षीरचतुर्गुणे।
सिद्धं सर्पिर्जयत्येतद्यक्ष्मणः सप्तकं बलम्॥

**अचि7.32**
पञ्चकोलयवक्षारषट्पलेन पचेत् घृतम्।
प्रस्थोन्मितं तुल्यपयः स्रोतसां तद्विशोधनम्॥

**अचि7.33**
गुल्मज्वरोदरप्लीहग्रहणीपाण्डुपीनसान्।
कासश्वासाग्निसदनश्वयथूर्ध्वानिलान् जयेत्॥

**अचि7.34**
रास्नाबलागोक्षुरकस्थिरावर्षाभुवारिणि।
जीवन्तीपिप्पलीगर्भं सक्षीरं शोषजिद्घृतम्।
अश्वगन्धाशृतात् क्षीरात् घृतं चससितापयः॥

**अचि7.35**
साधारणामिषतुलां तोयद्रोणद्वये पचेत्।
तेनाष्टभागशेषेण जीवनीयैः पलोन्मितैः॥

**अचि7.36**
साधयेत् सर्पिषः प्रस्थं वातपित्तामयापहम्।
मांससर्पिरिदं पीतं युक्तं मांसरसेन वा।
कासश्वासस्वरभ्रंशशोषहृत्पार्श्वशूलजित्॥

**अचि7.37**
यष्टीबलागुडूच्यल्पपञ्चमूलतुलां पचेत्।
शूर्पेऽपामष्टभागस्थे तत्र पात्रं पचेत् घृतात्॥

**अचि7.38**
धात्रीविदारीक्षुरसत्रिपात्रे पयसोऽर्मणे।
सुपिष्टैर्जीवनीयैश्च पाराशरमिदं घृतम्।
ससैन्यं राजयक्ष्माणमुन्मूलयति शीलितम्॥

**अचि7.39**
मूर्वाहरिद्राखदिरक्वाथं सर्पिः शकृद्रसम्।
गोगजाजाविहयजं पयस्तुल्यान् दश द्रवान्॥

**अचि7.40**
स्वादुस्कन्धं त्रिकटुकं कल्कितं देवदारु च।
पचेत्तच्चाशु शोषघ्नं तद्द्वासावरीघृतम्॥

**अचि7.41**
द्विपञ्चमूलवरणयवबिल्वपुनर्नवाः।
करञ्जबोलस्थविरकुलस्थबदराग्निकाः॥

**अचि7.42**
गर्भं दत्वा स्नुहीक्षीरं शुकाख्याचव्यसैन्धवम्।
हरीतकीं च तच्छोषशोफमेहोदरापहम्॥

**अचि7.43**
यवाग्वा वा पिबेन्मात्रां लिह्याद्वा मधुनान्विताम्।
सिद्धानां सर्पिषामेषां दद्यादन्नेन वा सह॥

**अचि7.44**
एलाजमोदत्रिफलासौराष्ट्रीव्योषचित्रकान्।
सारानरिष्टगायत्रीसालबीजकसम्भवान्॥

**अचि7.45**
भल्लातकं विडङ्गं च पृथगष्टपलोन्मितम्।
सलिले षोडशगुणे षोडशांशस्थितं पचेत्॥

**अचि7.46**
पुनस्तेन घृतप्रस्थं सिद्धे चास्मिन् पलानि षट्।
तवक्षीर्याः क्षिपेत्त्रिंशत् सिताया द्विगुणं मधु॥

**अचि7.47**
घृतात्त्रिजातात्त्रिपलं ततो लीढं खजाहतम्।
पयोनुपानं तत् प्राह्णे रसायनमयन्त्रणम्॥

**अचि7.48**
मेध्यं चक्षुष्यमायुष्यं दीपनं हन्ति चाचिरात्।
मेहगुल्मक्षयव्याधिपाण्डुरोगभगन्दरान्।
ये च सर्पिर्गुडाः प्रोक्ताः क्षते योज्याः क्षयेऽपि ते॥

**अचि7.49**
खर्जूरपिप्पलीद्राक्षापथ्याशृङ्गीदुरालभाः।
त्रिफलापिप्पलीमुस्ताशृङ्गाटगुडशर्कराः॥

**अचि7.50**
वीराशठीपुष्कराख्यासुरसाशर्करागुडाः।
नागरं चित्रको लाजाः पिप्पल्यामलकं गुडः॥

**अचि7.51**
विडङ्गसारश्वविका त्र्यूषणं च विचूर्णितम्।
अर्धश्लोकैः स्मृता लेहाः पञ्चैते मधुसर्पिषा।
स्वर्याः कासक्षयश्वासपार्श्वरुक्कफनाशनः॥

**अचि7.52**
त्वगेलापिप्पलीक्षीरीशर्करा द्विगुणाः क्रमात्।
चूर्णिता भक्षयेल्लिह्यात् पूर्ववद्वा तथागुणाः॥

**अचि7.53**
तिलमाषाश्वगन्धा वा माक्षिकाजघृतद्रुताः।
पूर्वोक्तेष्वेव रोगेषु वातप्रायेषु पूजिताः॥

**अचि7.54**
स्वरसादचिकित्सितम्।
विशेषात् स्वरसादेऽस्य नस्यधूमादि योजयेत्।
तत्रापि वातजे कोष्णं पिबेदौत्तरभक्तिकम्॥

**अचि7.55**
कासमर्दकवार्ताकीमार्कवस्वरसैर्घृतम्।
साधितं कासजित् स्वर्यं सिद्धमार्तगलेन वा॥

**अचि7.56**
बदरीपत्रकल्कं वा घृतभृष्टं ससैन्धवम्।
तैलं वा मधुकद्राक्षापिप्पलीकृमिनुत्फलैः॥

**अचि7.57**
हंसपाद्याश्च मूलेन पक्वं नस्तो निषेचयेत्।
सुखोदकानुपानं च ससर्पिष्कं गुडौदनम्।
अश्नीयात् पायसं चैवं स्निग्धं स्वेदं च योजयेत्॥

**अचि7.58**
पित्तोद्भवे पिबेत् सर्पिः शृतशीतपयोनुपः।
क्षीरिवृक्षाङ्कुरक्वाथकल्कसिद्धं समाक्षिकम्॥

**अचि7.59**
अश्नीयाच्च ससर्पिष्कं यष्टीमधुकपायसम्।
बलाविदारिगन्धाभ्यां विदार्या मधुकेन च॥

**अचि7.60**
सिद्धं सलवणं सर्पिर्नस्यं स्वर्यमनुत्तमम्।
प्रपौण्डरीकं मधुकं पिप्पली बृहती बला॥

**अचि7.61**
साधितं क्षीरसर्पिश्च तत् स्वर्य्यं नावनं परम्।
लिह्यान्मधुरकाणां च चूर्णं मधुघृतान्वितम्॥

**अचि7.62**
वरीं बलां पयस्यां वा काकोलीमधुके तथा।
एवमस्यानुपशमे ललाटे व्यधयेत् सिराम्॥

**अचि7.63**
पिबेत् कटूनि मूत्रेण कफजे रूक्षभोजनः।
कट्कफलामलकव्योषं लिह्यात्तैलमधुप्लुतम्॥

**अचि7.64**
व्योषक्षाराग्निचविकाभार्ङ्गीपथ्यामधूनि वा।
यवैर्यवागूं यमके कणाधात्रीकृतां पिबेत्।
भुत्क्वाद्यात्पिप्पलीं शुण्ठीं तीक्ष्णं वा वमनं भजेत्॥

**अचि7.65**
शर्कराक्षौद्रमिश्राणि शृतानि मधुरैः सह।
पिबेत् पयांसि यस्योच्चैर्वदतो विहतः स्वरः॥

**अचि7.66**
अरोचकचिकित्सितम्।
विचित्रमन्नमरुचौ हितैरुपहितं हितम्।
बहिरन्तर्मृजां चित्तनिर्वाणं हृद्यमौषधम्॥

**अचि7.67**
द्वौ कालौ दन्तपवनं भक्षयेन्मुखधावनैः।
कषायैः क्षालयेदास्यं धूमं प्रायौगिकं पिबेत्॥

**अचि7.68**
तालीसपत्रवटकाः सकर्पूरसितोपलाः।
शशाङ्ककिरणाख्याश्च भक्ष्या रुचिकराः परम्॥

**अचि7.69**
वातादरोचके तत्र पिबेच्चूर्णं प्रसन्नया।
हरेणुकृष्णाकृमिजिद्द्राक्षासैन्धवनागरात्॥

**अचि7.70**
एलाभार्ङ्गीयवक्षारहिङ्गुयुक्ताद् घृतेन वा।
छर्दयेद्वा वचाम्भोभिः पित्ताच्च गुडवारिभिः॥

**अचि7.71**
लिह्याद्वा शर्करासर्पिर्लवणोत्तममाक्षिकम्।
कफाद्वमेन्निम्बजलैर्दीप्यकारग्वधोदकम्॥

**अचि7.72**
पानं समध्वरिष्टाश्च तीक्ष्णाः समधुमाधवाः।
पिबेच्चूर्णं च पूर्वोक्तं हरेण्वाद्युष्णवारिणा॥

**अचि7.73**
त्रिकटुत्रिफलारात्रीयवक्षारं मधुप्लुतम्।
प्रातराहारकाले च युञ्जीत मुखधावनम्॥

**अचि7.74**
बिडं सौवर्चलं कुष्ठमजाजी मरिचं सिता।
धात्र्येलापद्मकोशीरपिप्पलीचन्दनोत्पलम्॥

**अचि7.75**
लोध्रं तेजोवती पथ्या यवक्षारं कटुत्रयम्।
आर्द्रदाडिमनिर्यासः सजाजीसितशर्करः॥

**अचि7.76**
सतैलमाक्षिका युक्ताश्चत्वारः कवलग्रहाः।
चतुरोऽरोचकान् हन्युरेकदोषसमस्तजान्॥

**अचि7.77**
कारव्यजाजीमरिचद्राक्षवृक्षाम्लदाडिमम्।
सौवर्चलगुडक्षौद्रं सर्वारोचकनाशनम्॥

**अचि7.78**
एलात्वङ्नागकुसुमतीक्ष्णकृष्णामहौषधम्।
भागवृद्धं क्रमाच्चूर्णं निहन्ति समशर्करम्॥

**अचि7.79**
प्रसेकारुचिहृत्पार्श्वकासश्वासगलामयान्।
यवानीतिन्तिणीकाम्लवेतसौषधदाडिमम्॥

**अचि7.80**
कृत्वा कोलं च कर्षांशं सितायाश्च चतुष्पलम्।
धान्यसौवर्चलाजाजीवराङ्गं चार्धकार्षिकम्॥

**अचि7.81**
पिप्पलीनां शतं चैकं द्वे शते मरिचस्य च।
चूर्णमेतत् परं रुच्यं हृद्यं ग्राहि हिनस्ति च।
विबन्धकासहृत्पार्श्वप्लीहार्शोग्रहणीगदान्॥

**अचि7.82**
तालिसपत्रं मरिचं नागरं पिप्पली शुभा।
यथोत्तरं भागवृद्धास्त्वगेले चार्धभागिके॥

**अचि7.83**
तद्रुच्यं दीपनं चूर्णं कणाष्टगुणशर्करम्।
कासश्वासारुचिच्छर्दिप्लीहहृत्पार्श्वशूलजित्॥

**अचि7.84**
पाण्डुज्वरातिसारघ्नं मूढवातानुलोमनम्।
तालीसपत्रचविकामरिचानां पलं पलम्॥

**अचि7.85**
कृष्णातन्मूलयोर्द्वे द्वे पले शुण्ठीपलत्रयम्।
चतुर्जातमुशीरं च कर्षांशं श्लक्ष्णचूर्णितम्॥

**अचि7.86**
तत्र त्रिंशत् पलं दत्वा क्वथितादमलाद्गुडात्।
कुर्वीत मोदकानक्षसम्मितांस्तेऽपि तद्गुणाः॥

**अचि7.87**
प्रसेकचिकित्सितम्।
अर्कामृताक्षारजलेशर्वरीमुषितैर्यवैः।
प्रसेके कल्पितान् सक्तून् भक्ष्यांश्चाद्याद् बली वमेत्॥

**अचि7.88**
कटुतिक्तैस्तथा शूल्यं भक्षयेज्जाङ्गलं पलम्।
शुष्कांश्च भक्ष्यान् सुलघूंश्चणकादिरसानुपः॥

**अचि7.89**
श्लेष्मणोऽतिप्रसेकेन वायुः श्लेष्माणमस्यति। कफप्रसेकं तं विद्यात् स्निग्धोष्णैरेव निर्जयेत्॥

**अचि7.90**
पीनसेऽपि क्रममिमं वमथौ च प्रयोजयेत्।
विशेषात्पीनसेऽभ्यङ्गान् स्नेहान् स्वेदांश्च शीलयेत्॥

**अचि7.91**
स्निग्धानुत्कारिकापिण्डैः शिरःपार्श्वगलादिषु।
लवणाम्लकटूष्णांश्च रसान् स्नेहोपसंहितान्॥

**अचि7.92**
शिरोंऽसपार्श्वशूलेषु यथादोषविधिं चरेत्।
औदकानूपपिशितैरुपनाहाः सुसंस्कृताः॥

**अचि7.93**
शस्यन्ते सचतुस्नेहाः शिरःपार्श्वांसशूलिनाम्।
लेपश्च नतयष्ट्याह्वशताह्वाकुष्ठचन्दनैः॥

**अचि7.94**
बलारास्नातिलाः सर्पिर्मधुकं नीलमुत्पलम्।
पलङ्कषा देवदारु चन्दनं मधुकं घृतम्॥

**अचि7.95**
कृष्णगन्धा बला वीरा विदारी सपुनर्नवा।
अभीरुयष्टीमधुकं पयस्या कतृणं घृतम्॥

**अचि7.96**
इत्यर्धयोगैश्चत्वारः प्रदेहाः परिकीर्तिताः।
शस्ताः संसृष्टदोषाणां शिरःपार्श्वांसशूलिनाम्॥

**अचि7.97**
नावनं धूमपानानि स्नेहाश्चौत्तरभक्तिकाः।
तैलान्यभ्यङ्गयोगीनि बस्तिकर्म तथापरम्।
शृङ्गाद्यैर्वा यथादोषं दुष्टमेषां हरेदसृक्।
प्रदेहः सघृतैश्चेष्टः पद्मकोशीरचन्दनैः॥

**अचि7.98**
दूर्वामधुकमञ्जिष्ठाकेसरैर्वाघृताप्लुतैः।
चन्दनाद्येन तैलेन शतधौतेन सर्पिषा।
अभ्यङ्गः पयसासेकः शस्तश्चमधुकाम्बुना॥

**अचि7.99**
प्रायेणोपहताग्नित्वात् सपिच्छमतिसार्यते।
तस्यातिसारग्रहणीविहितं हितमौषधम्।
सनागरानिन्द्रयवान् पाययेत्तण्डुलाम्बना॥

**अचि7.100**
जीर्णेषु तेषु पेयां च चाङ्गेरीतक्रदाडिमः।
पाठानिम्बयवानीनां चूर्णं तक्रेण वा पिबेत्॥

**अचि7.101**
सुरया वाप्लुतां पाठां सनागरदुरालभाम्।
जम्ब्वाम्रबिल्वमध्यं वा सकपित्थं सनागरम्॥

**अचि7.102**
पेयामण्डेन योगैश्च पाठाद्यैः कारयेत् त्रिभिः।
ससूप्यधान्यान् सस्नेहान् साल्मान् सलवणान् खलान्।
वेतसार्जुनजम्बूनां मृणालीकृष्णगन्धयोः॥

**अचि7.103**
श्रापण्या मातुलुङ्गस्य धातक्या दाडिमस्य च।
चाङ्गेर्या मदयन्त्याश्च यूथिकायाश्च पल्लवैः॥

**अचि7.104**
कालविद्दुग्धिकायाश्च चुक्रिकायाश्च योजयेत्।
खलान्दधिसरोपेतान्ससर्पिष्कान्सदाडिमान्।
रोचनान् दीपनान् दद्यादतीसारहरान् परम्॥

**अचि7.105**
पुरीषं यत्नतो रक्षेच्छुष्यतो राजयक्ष्मिणः।
सर्वधातुक्षयार्तस्य बलं तस्य हि विड्बलम्॥

**अचि7.106**
ज्वरादिष्वपि कुर्वीत विकारेषु यथामयम्।
बह्वामयसमूहो हि यक्ष्मातः सोऽतिदुःसहः॥

**अचि7.107**
अजां वा पर्युपासीत षण्मासानुटजे वसन्।
तत्पयोमूत्रविड्वृत्तिपरिषेकप्रघर्षणः।
ताभिः परिवृतः स्वप्यात‍च्छकृद्रेणुसङ्करे॥

**अचि7.108**
एतद्रसायनं श्रेष्ठं रोगराजस्य नाशनम्।
अजाशकृद्रसक्षीरदधिमूत्रैः शृतं घृतम्॥

**अचि7.109**
सपञ्चपटु पञ्चाजं क्षयी क्षीरानुपः पिबेत्।
मांसमेवाश्नतो युक्त्या मार्द्वीकं पिबतोऽनु च॥

**अचि7.110**
अविधारितवेगस्य लक्ष्मा न लभतेऽन्तरम्।
सुरां समण्डां मार्द्वीकमरिष्टान् शीधुमाधवान्॥

**अचि7.111**
यथार्हमनुपानार्थं पिबेन्मांसानि भक्षयन्।
स्रोतोविबन्धमोक्षार्थं बलौजःपुष्टये च तत्॥

**अचि7.112**
स्नेहक्षीराम्बुकोष्ठेषु स्वभ्यक्तमवगाहयेत्।
उत्तीर्णं मिश्रकस्नेहैः पुनरक्तं सुखैः करैः।
मृद्गीयात् सुखमारीनं सुखं चोद्वर्तयेत् परम्॥

**अचि7.113**
जीवन्तीं शतवीर्यां च विकसां सपुनर्नवाम्।
अश्वगन्धामपामार्गं तर्कारीं मधुकं बलम्॥

**अचि7.114**
विदारीं सर्षपान् कुष्ठं तण्डुलानतसीफलम्।
माषांस्तिलांश्च किण्वं च सर्वमेकत्र चूर्णयेत्॥

**अचि7.115**
यवचूर्णं त्रिगुणितं दध्ना युक्तं समाक्षिकम्।
एतदुद्वर्तनं कार्यं पुष्टिवर्णबलप्रदम्॥

**अचि7.116**
गौरसर्षपकल्केन स्नानीयौषधिभिश्च सः।
स्नायादृतुसुखैस्तोयैर्जीवनीयोपसाधितैः॥

**अचि7.117**
गन्धमाल्यादिकां भूषामलक्ष्मीनाशनीं भजेत्।
सुहृदां दर्शनं गीतवादित्रोत्सवसंश्रुतीः॥

**अचि7.118**
बस्तयः क्षीरसर्पींषि मद्यं मांसं सुशीलता।
दैवव्यपाश्रयं तद्वदथर्वोक्तं च पूजितम्॥

**अचि7.119**
इष्ट्या यया च चन्द्रस्य राजयक्ष्मा पुरा जितः।
पुरोहितः प्रयुञ्जीत वेदोक्तां तां जितात्मनः॥
॥इति सप्तमोऽध्यायः॥

अथ अष्टमोऽध्यायः।

**अचि8.1**
अथातः छर्दिहृद्रोगतृष्णाचिकित्सितं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अचि8.2**
आमाशयोत्क्लेशभवाः प्रायश्छर्द्यो हितं ततः।
लङ्घनं प्रागृते वायोः वमनं तत्र योजयेत्॥

**अचि8.3**
बलिनो बहुदोषस्य वमतः प्रततं बहु।
ततो विरेकं क्रमशो हृद्यं मद्यैः फलाम्बुभिः॥

**अचि8.4**
क्षीरैर्वा सह स ह्यूर्ध्वं गतं दोषं नयत्यधः।
शमनं चौषधं रूक्षदुर्बलस्य तदेव तु॥

**अचि8.5**
परिशुष्कं प्रियं सात्म्यमन्नं लघु च शस्यते।
उपवासस्तथा यूषा रसाः काम्बलिकाः खलाः॥

**अचि8.6**
शाकानि लेहा भोज्यानि रागषाडवपानकाः।
भक्ष्याः शुष्का विचित्राश्च फलानि स्नानघर्षणम्॥

**अचि8.7**
गन्धाः सुगन्धयो गन्धफलपुष्पान्न पानजाः।
भुक्तमात्रस्य सहसा मुखे शीताम्बुसेचनम्॥

**अचि8.8**
हन्ति मारुतजां छार्दिं सर्पिः पीतं ससैन्धवम्।
किञ्चिदुष्णं विशेषेण सकासहृदयद्रवाम्॥

**अचि8.9**
व्योषत्रिलवणाढ्यं वा सिद्धं वा दाडिमाम्बुना।
सशुण्ठीदधिधान्येन पीतं तुल्याम्बु वा पयः॥

**अचि8.10**
व्यक्तसैन्धवसर्पिर्वा फलाम्लो वैष्किरो रसः।
स्निग्धं च भोजनं शुण्ठीदधिदाडिमसाधितम्।
कोष्णं सलवणं चात्र हितं स्नेहविरेचनम्॥

**अचि8.11**
पित्तजायां विरेकाथ द्राक्षेक्षुस्वरसैस्त्रिवृत्।
सर्पिर्वा तैल्वकं योज्यं वृद्धं च श्लेष्मधामगम्॥

**अचि8.12**
ऊर्ध्वमेव हरेत् पित्तं स्वादुतिक्तैर्विशुद्धिमान्।
पिबेन्मन्थं यवागूं वा लाजैः समधुशर्करैः।
गुद्गजाङ्गलजैरद्याद्व्यञ्जनैः शालिषष्टिकम्॥

**अचि8.13**
मृद्भृष्टलोष्टप्रभवं सुशीतं सलिलं पिबेत्।
मुद्गोशीरकणाधान्यैः सह वा संस्थितं निशाम्।
द्राक्षारसं रसञ्चेक्षोर्गुडूच्यम्बु पयोऽपि॥

**अचि8.14**
जम्ब्वाम्रपल्लवोशीरवटाश्वत्थाङ्कुरोद्भवः।
क्वाथः क्षौद्रयुतः पीतः शीतो वा विनियच्छति॥

**अचि8.15**
छर्दिं ज्वरमतीसारं मूर्छां तृष्णां च दुर्जयाम्।
धात्रीरसेन शीतं वा पिबेन्मुद्गदलाम्बु वा॥

**अचि8.16**
कोलमज्जासितालाजमक्षिकाविट्कणाञ्जनम्।
कोलास्थिमज्जास्रोतोजलाजोत्पलरजांसि वा॥

**अचि8.17**
लिह्यात् क्षौद्रेण पथ्यां वा द्राक्षां वा बदराणि वा।
पिबेच्छीताम्बुना शालिस्वर्णगैरिकजं रजः।
पिष्टं वा चन्दनद्राक्षामांसीसेव्याम्बुगैरिकम्॥

**अचि8.18**
शालितण्डुलतोयेन पिबेद्वाससितामधु।
मधूकमधुकद्राक्षाकमलामलकाम्बुदम्॥

**अचि8.19**
ससारिवापरूषाक्षं मूर्वां वा माक्षिकान्विताम्।
मधुकं सात्मगुसं वा शीतं धात्रीरसेन वा॥

**अचि8.20**
कफजायां वमेन्निम्बकृष्णापिण्डीतसर्षपैः।
युक्तेन कोष्णतोयेन दुर्बलं चोपवासयेत्॥

**अचि8.21**
आरग्वधादेर्निर्यूहं शीतं क्षौद्रयुतं पिबेत्।
त्रिफलाकणचव्याद्वा पेयां पत्रैः करञ्जजैः॥

**अचि8.22**
मन्थान्यवैर्वा बहुशश्छर्दिघ्नौषधभावितैः।
कफघ्नमन्नं हृद्यं च रागाः सार्जकभूस्तृणाः॥

**अचि8.23**
लीढं मनश्शिलाकृष्णामरिचं बीजपूरकात्।
स्वरसेन कपित्थाच्च सक्षौद्रेण वमिं जयेत्॥

**अचि8.24**
समुस्तां मधुना शृङ्गीं कोलाम्लं वा सजाम्बवम्।
तद्वद्विडङ्गत्रिफलाकृमिघ्नपरिपेलवम्॥

**अचि8.25**
तद्वद्दुरालभां खादेत् कपित्थं त्र्यूषणेन वा।
अनुकूलोपचारेण याति द्विष्टार्थजा शमम्॥

**अचि8.26**
कृमिजा कृमिहृद्रोगगदितैश्च भिषग्जितैः।
यथास्वं परिशिष्टाश्च तत्कृताश्च तथामयाः॥

**अचि8.27**
त्वरमाणो जयेच्छर्दिं प्रसक्तामनुबन्धिनीम्।
कोष्ठाश्रयमहामर्मपीडाकरतरा हि सा॥

**अचि8.28**
नचान्नेन विना कायस्तन्मयो वर्ततेऽपि च।
धातुक्षयोऽतिवमथौ समीरणसमीरणात्॥

**अचि8.29**
नियतं जायते तस्माद्द्रुतं तत्र प्रयोजयेत्।
प्रच्छर्दनातियोगोक्तं क्रमं स्तम्भनबृंहणम्॥

**अचि8.30**
सर्पिर्गुडान् रसान् क्षीरं घृतं कल्याणजीवनम्।
धान्वन्तरं त्र्यूषणं वा दोषदेहानुरोधतः॥

**अचि8.31**
हृद्रोगचिकित्सितम्।
हृद्रोगे वातजे तैलं मस्तुसौवीरतक्रवत्।
पिबेत् सुखोष्णं सबिडं गुल्मानाहार्तिजिच्च तत्॥

**अचि8.32**
तलं च लवणैः सिद्धं समूत्राम्लं तथागुणम्।
बिल्वं रास्नां यवान् कोलं देवदारु पुनर्नवम्॥

**अचि8.33**
कुलत्थान् पञ्चमूलं च पक्त्वा तस्मिन् जले पचेत्।
तैलं तन्नावने पाने बस्तौ च विनियोजयेत्॥

**अचि8.34**
शुण्ठीवयस्थालवणकायस्थाहिङ्गुपौष्करैः।
पथ्यया च शृतं पार्श्वहृद्रुजागुल्मजिद्घृतम्॥

**अचि8.35**
सौवर्चलस्य द्विपले पथ्यापञ्चाशदन्विते।
घृतस्य साधितः प्रस्था हृद्रोगश्वासगुल्मनुत्॥

**अचि8.36**
दाडिमं कृष्णलवणं हिङ्गुशुण्ठ्यम्लवेतसम्।
अपतन्त्रकहृद्रोगश्वासघ्नं चूर्णमुत्तमम्॥

**अचि8.37**
पुष्कराह्वशठीशुण्ठीबीजपूरजटाभयाः।
पीताः कल्कीकृताः क्षारघृताम्ललवणैर्युताः।
विकर्तिकाशूलहरा क्वाथः कोष्णश्च तद्गुणः॥

**अचि8.38**
यवानीलवणक्षारवचाजाज्यौषधैः कृतः।
सपीतदारुबीजाह्वपलाशशठिपौष्करैः॥

**अचि8.39**
पञ्चकोलशठीपथ्यागुडबीजाह्वपौष्करम्।
वारुणीकल्कितं भृष्टं यमके लवणान्वितम्॥

**अचि8.40**
हृत्पार्श्वयोनिशूलेषु खादेत् गुल्मोदरेषु च।
स्निग्धाश्चेह हिताः स्वेदाः संस्कृतानि घृतानि च॥

**अचि8.41**
लघुना पञ्चमूलेन शुण्ठ्या वा साधितं जलम्।
वारुणीदधिमण्डं वा धान्याम्लं वा पिबेत्तृषि॥

**अचि8.42**
सायामस्तम्भशूलामे हृदि मारुतदूषिते।
क्रियषा सद्रवायामपमोहे तु हिता रसाः॥

**अचि8.43**
स्नेहाढ्यास्तित्तिरिक्रौञ्चशिखिवर्तकदक्षजाः।
बलातैलं सहृद्रोगी पिबेद्वा सुकुमारकम्॥

**अचि8.44**
यष्ट्याह्वशतपाकं वा महास्नेहं तथोत्तमम्।
रास्नाजीवकजीवन्तीबलाव्याघ्रीपुनर्नवैः॥

**अचि8.45**
भार्ङ्गीस्थिरावचाव्योषैर्महास्नेहं विपाचयेत्।
दधिपादं तथाम्लैश्च लाभतः स निषेवितः।
तर्पणो बृंहणो बल्यो वातहृद्रोगनाशनः॥

**अचि8.46**
त्र्यूषणत्रिफलापाठमधूकं मधुकं चुटी।
पञ्चमूलं लघु बले मेदे ऋद्धिः शतावरी॥

**अचि8.47**
कण्डूकरी तामलकी जीवकं चाक्षसंमितैः।
तैः पचेत् सर्पिषः प्रस्थं दध्नः प्रस्थेन माहिषात्॥

**अचि8.48**
युक्तं सिद्धं च मधुना तन्निहन्ति निषेवितम्।
हृत्पाण्डुग्रहणीदोषकासश्वासहलीमकान्॥

**अचि8.49**
दीप्तेऽग्नौ सद्रवायामे हृद्रोगे वातिके हितम्।
क्षीरं दधि गुडः सर्पिरौदकानूपमामिषम्॥

**अचि8.50**
घृतान्येव च वर्ज्यानि हृद्रोगेषु चतुर्ष्वपि।
शेषेषु स्तम्भजाड्यामसंयुक्तेऽपि च वातिके।
कफानुबन्धे तस्मिंस्तु रूक्षोष्णामाचरेत् क्रियाम्॥

**अचि8.51**
पैत्ते द्राक्षेक्षुनिर्यासिसिताक्षाद्रपरूषकैः।
युक्तो विरेको हृद्यः स्यात् क्रमः शुद्धे च पित्तहा॥

**अचि8.52**
क्षतपित्तज्वरोक्तं च बाह्यान्तःपरिमार्जनम्।
कट्वीमधुककल्कं च पिबेत् ससितमम्भसा॥

**अचि8.53**
श्रेयसीशर्कराद्राक्षाजीवकर्षभकोत्पलैः।
बलाखर्जूरकाकोलीमेदायुग्मैश्च साधितम्॥

**अचि8.54**
सक्षीरं माहिषं सर्पिः पित्तहृद्रोगनाशनम्।
प्रपौण्डरीकमधुकबिसग्रन्थिकशेरुकाः॥

**अचि8.55**
सशुण्ठीशैवलास्ताभिः सक्षीरं विपचेत् घृतम्।
शीतं समधु तच्चेष्टं स्वादुवर्गकृतं च यत्।
बस्तिं च दद्यात् सक्षौद्रं तैलं मधुकसाधितम्॥

**अचि8.56**
कफोद्भवे वमेत् स्विन्नः पिचुमन्दवचाम्भसा।
कुलत्थधन्वोत्थरसतीक्ष्णमद्ययवाशनः॥

**अचि8.57**
पिबेच्चूर्णं वचाहिङ्गुलवणद्वयनागरात्।
सैला यवानककणा यवक्षारात् सुखाम्बुना॥

**अचि8.58**
फलधान्याम्लकौलत्थयूषमूत्रासवैस्तथा।
पुष्कराह्वाभयाशुण्ठीशठीरास्नावचाकणात्।
क्वाथं तथाभयाशुण्ठीमाद्रीपीतद्रुकट्फलात्॥

**अचि8.59**
क्वाथे रौहीतकाश्वत्थखदिरोदुम्बरार्जुने।
सपलाशवटे व्योषत्रिवृच्चूर्णान्विते कृतः॥

**अचि8.60**
सुखोदकानुपानः स्याल्लेहः कफविकारहा।
श्लेष्मगुल्मोदिताज्यानि क्षारांश्च विविधान् पिबेत्॥

**अचि8.61**
प्रयोजयेच्छिलाह्वं वा ब्राह्मं चात्र रसायनम्।
तथामलकलेहं वा प्राशं वागस्त्यनिर्मितम्॥

**अचि8.62**
स्याच्छूलं यस्य भुक्तेऽति जीर्यत्यल्पं जरां गते।
शाम्येत् सकुष्ठकृमिजिल्लवणद्वयतिल्वकैः॥

**अचि8.63**
सदेवदार्वतिविषैश्चूर्णमुष्णाम्बुना पिबेत्।
यस्य जीर्णेऽधिकं स्नेहैः स विरेच्यः फलैःपुनः॥

**अचि8.64**
जीर्यत्यन्ने तथा मूलैस्तीक्ष्णैः शूले सदाधिके।
प्रायोऽनिलो रुद्धगतिः कुप्यत्यामाशये यतः॥

**अचि8.65**
तस्यानुलोमनं कार्यं शुद्धिलङ्घनपाचनैः।
कृमिघ्नमौषधं सर्वं कृमिजे हृदयामये॥

**अचि8.66**
तृष्णाचिकित्सितम्।
तृष्णासु वातपित्तघ्नो विधिः प्रायेण शस्यते।
सर्वासु शीतो बाह्यान्तस्तथा शमनशोधनः॥

**अचि8.67**
दिव्याम्बु शीतं सक्षौद्रं तद्वद्धौमं च तद्गुणम्।
निर्वापितं तप्तलोष्टकपालसिकतादिभिः॥

**अचि8.68**
सशर्करं वा क्वथितं पञ्चमूलेन वा जलम्।
दर्भपूर्वेण मन्थश्च प्रशस्तो लाजसक्तुभिः॥

**अचि8.69**
वाट्यश्चामयवैः शीतः शर्करामाक्षिकान्वितः।
यवागूः शालिभिस्तद्वत् कोद्रवैश्च चिरन्तनैः॥

**अचि8.70**
शीतेन शीतवीर्यैश्च द्रव्यैः सिद्धेन भोजनम्।
हिमाम्बुपरिषिक्तस्य पयसा ससितामधु॥

**अचि8.71**
रसैश्चानम्ललवणैर्जाङ्गलैर्घृतभर्जितैः।
मुद्गादीनां तथा यूषैर्जीवनीयरसान्वितैः॥

**अचि8.72**
नस्यं क्षीरघृतं सिद्धं शीतैरिक्षोस्तथा रसः।
नारीक्षीरेण वा घृष्टमुष्ट्रास्थि ससितं हितम्॥

**अचि8.73**
निर्वापणाश्च गण्डूषाः सूत्रस्थानोदिता हिताः।
दाहज्वरोक्ता लेपाद्या निरीहत्वं मनोरतिः॥

**अचि8.74**
महासरिद्ध्रदादीनां दर्शनस्मरणादि च।
तृष्णायां पवनोत्थायां सगुडं दधि शस्यते।
रसाश्च बृंहणाः शीता विदार्यादिगणाम्बु च॥

**अचि8.75**
पित्तजायां सितायुक्तः पक्वोदुम्बरजो रसः।
तत्क्वाथो वा हिमस्तद्वत्सारिवादिगणाम्बु वा॥

**अचि8.76**
तद्विधैश्च गणः शीतकषायान् ससितामधून्।
मधुरैरौषधैस्तद्वत् क्षीरिवृक्षैश्च कल्पितान्॥

**अचि8.77**
बीजपूरकमृद्वीकावटवेतसपल्लवान्।
मूलानि कुशकाशानां यष्ट्याह्वं च जले शृतम्॥

**अचि8.78**
अपाकशर्कराच्छिन्नरुहालोद्ध्राञ्जनाम्बु वा।
कार्पसीफलकल्कं वा ससितक्षीरभोजनः॥

**अचि8.79**
ज्वरोदितं वा द्राक्षादिपञ्चसाराम्बु वा पिबेत्॥

**अचि8.80**
कफोद्भवायां वमनं निम्बप्रसववारिणा।
बिल्वाढकीपञ्चकोलदर्भपञ्चकसाधितम्॥

**अचि8.81**
जलं पिबेद्रजन्या वा सिद्धं सक्षौद्रशर्करम्।
मुद्गयूषं च सव्योषपटोलीनिम्बपल्लवम्।
यवान्नं तीक्ष्णकवलनस्यलेहांश्च शीलयेत्॥

**अचि8.82**
सर्वैरामाच्च तद्वन्त्री क्रियेष्टा वमनं तथा।
त्र्यूषणारुष्करवचाफलाम्लोष्णाम्बुमस्तुभिः॥

**अचि8.83**
अन्नात्ययान्मण्डमुष्णं हिमं मन्थं च कालवित्।
तृषि श्रमान्मांसरसं मन्थं वा ससितं पिबेत्॥

तत्रामजेषु लङ्घितवतो लघ्वन्नमशितस्य भद्रदारुनागरमरिचप्रतिविषाविडङ्गेन्द्रयवानुष्णाम्बुना।
नागरदेवदारुपथ्यावर्षाभ्वो वा।
पञ्चकोलकाजाजीनिदिग्धिकामुस्तपाठारजनीर्वा।
मूत्रवर्तिं वा नवायसं वा।
गुरुभिन्नपुरीषस्तु तक्रं सव्योषसौवर्चलक्षौद्रम्।
गुडहरीतकीं वा शीलयेत्॥

**अचि19.3**
इतरस्त्रिवृत्त्र्यूषणकटुरोहिण्ययश्चूर्णानि त्रिफलाक्वाथेन।
व्योषयवक्षारायोरजांसि वा।
बिभीतककल्कं वा तण्डुलाम्बुना।
गुग्गुलुं वा गोमूत्रेण।
हरीतकीं वा।
तुल्यगुडां वा शुण्ठीं पुनर्नवकषायानुपानाम्।
आर्द्रकं वा तुल्यगुडमर्धपलाभिवृद्धं पञ्चपलप्रकर्षं प्रयुञ्जीत।
मासमयं प्रयोगः शोफशोषार्शः श्वासकासप्रसेकपीनसालसकाग्निसादगुल्मोदरप्रमेहपाण्डुकामलामनोविकारानपहरति।
आर्द्रकरसं वा शालिक्षीराहारः पिबेत्॥

**अचि19.4**
निवृत्तामदोषः शृतानि पयांसि सर्पींषि च।
त्रिकटुकैरण्डश्यामामूलैः सिद्धं क्षीरम्।
महौषधमुरुङ्गीमूलाभ्यां वा।
वर्षाभूमयूरकपञ्चकोलैर्वा।
कुम्भनिकुम्भव्योषाग्निकैर्वा करभीक्षीरवृत्तिर्वा स्यात् गोमूत्रं महषीमूत्रं वा सक्षीरं क्षीराशनः पिबेत्॥

**अचि19.5**
दाडिमयवानीयवानकधनिकापाठाम्लवेतसमरिचपञ्चकोलबिल्वफलयावशूकानक्षमात्रान् सलिलाढके विपाच्य तत्कषायेण घृतप्रस्थं साधयेच्छोफार्शोगुल्ममेहाग्निसादहरम्।
अर्शोविहितविधिना चित्रकदध्नो नवनीतमाददीत।
तच्चित्रकमूलगर्भं सचित्रककल्कतक्रसिद्धं समानं पूर्वेण॥

**अचि19.6**
यथादोषोच्छ्रयं च धान्वन्तरं कल्याणकं पञ्चगव्यं तिक्तं महातिक्तमुदरोक्तानि वा तिल्वकचतुर्थानि घृतानि पाययेत्॥

**अचि19.7**
दशमूलक्वाथकंसे पथ्याशतं गुडतुलोन्मिश्रमाधिश्रयेत्।
लेहीभूते तत्र त्रिकटुकत्रिजातकयवक्षारचूर्णं प्रक्षिपेत् क्षौद्रार्धप्रस्थं च।
एता दशमूलहरीतक्योऽतिप्रवृद्धमपि श्वयथुमुदरारोचकाविपाकपाण्डुरोगगुल्ममेहश्वासकासकार्श्यामवाताम्लपित्तमूत्रशुक्रदोषांश्च निघ्नन्ति॥

**अचि19.8**
शठीपुष्करमूलकारवीचित्रकाजाजीजीवन्तीबिल्वमध्ययवक्षारवृक्षाम्लैर्दशमूलेन च परिगृहीतानि घृततैलभृष्टानि पेयादीन्यन्नान्यल्पस्नेहलवणान्युपकल्पयेत्।
स्पर्शसुखांश्चाभ्यङ्गप्रदेहसेकान्॥

**अचि19.9**
शैलेयस्थौणेयकश्रीवेष्टकागरुदेवदारुहरेणुकाकुष्ठध्यामकपद्मकमांसीमागधिकावन्यधान्यतालीसपत्रकचतुर्जातकपलाशाम्बुदाम्बुप्रियङ्गुस्पृक्कानखैः श्लक्ष्णपिष्टैस्तैलमभ्यङ्गं पचेत्।
तैश्च प्रदेहं कुर्यात्।
सर्षपसौवर्चलसैन्धवशार्ङ्गेष्टाभिश्च।
केवलैर्वाक्षमज्जाभिः॥

**अचि19.10**
विशेषतश्चैकाङ्गजेषु पुनर्नवहिंस्राकोशातकीकरवीरकिंशुकातिविषर्धिवृद्धिमूषिकपर्णीहस्तिकर्णनलिकानाकुलीस्थूलकाकादनीसालत्रिफलादेवदारुलोध्रतालपर्णीदशपत्रिकाजयन्तीभिः प्रलेपः॥

**अचि19.11**
मूलकतोयेन कवोष्णेन वृक्षकार्कनक्तमालनिम्बवर्षाभूक्वाथेन वा स्नानम्॥

**अचि19.12**
अथानिलजे श्वयथौ त्रिवृतमेरण्डतैलं वार्धमासं मासं वा पिबेत्।
एरण्डतैलमेव च विड्वातसङ्गे प्राग्भक्तं पयसा रसैर्वा।
वातहराभ्यङ्गस्वेदोपनाहांश्च कुर्यात्।
विशेषेण चैकाङ्गगे मातुलुङ्गाग्निमन्थशुण्ठी देवदारुहिंस्राप्रलेपः॥

**अचि19.13**
पित्तजे न्यग्रोधादिसिद्धं सर्पिः पिबेत्।
तिक्तकं वा।
मूर्छारतितृड्दाहेषु क्षीरम्।
तदेव तु स्रंसनार्थी मूत्रयुक्तम्। अभयामरदारुमधुककटुकादन्तीचन्दननिचुलपटोलमूर्वादार्वीत्रायमाणोपकुल्याविशालाक्वाथः ससर्पिरुपयुक्तः श्वयथुविषवीसर्पज्वरदाहपिपासान्तःसन्तापसन्निपातानुपशमयति।
घृतक्षीरक्षीरिवृक्षश्वेतसमञ्जिष्ठामृणालचन्दनादिभिः शीतवीर्यैः कल्पयेदभ्यङ्गादीन्॥

**अचि19.14**
कफोत्थे त्वारग्वधादिसाधितं तैलं पिबेत्।
क्षारमूत्रतक्रासवारिष्टांश्च।
भल्लातकचित्रकव्योषविडङ्गबृहतीफलानि पृथक् प्रस्थांशान्यच्छधान्याम्लद्रोणे गोमयाग्निना त्रिभागशेषमवतारयेत्।
तत्पूतशीतं मस्तुकलशेन सितोपलातुलया च युक्तमग्निकमागधिकाकल्कलिप्ते दृढे भाण्डे समावाप्य वैहायसे सुगुप्तं स्थापयेत्।
ततो दशाहस्थितोऽयमुपयुक्तो भल्लातकारिष्टः शोफोदरार्शोभगन्दरग्रहणीकृमिकुष्ठमेहकार्श्यकिक्कसान् सत्वरमपनयति॥

**अचि19.15**
त्रिफलामरिचद्राक्षापिप्पलीकाश्मर्यफलानां प्रत्येकं शतं गुडतुलामुदकद्रोणं च मधुलिप्तभाजनस्थं सप्ताहमुष्णे काले द्विसप्ताहं शीते धारयेत्।
अयमष्टशतरिष्टः समानः पूर्वेण।
पुराणपिण्याककृष्णाशिग्रुत्वगतसीसिकता मूत्रपिष्टाः सुखोष्णाः प्रलेपे दद्यात्।

एकाङ्गगे तु कालासरलाजशृङ्ग्यजगन्धाश्वगन्धैकैषिकाः।
शुण्ठीकुलत्थतर्कारीकुष्ठार्जकचित्रकजलमूत्राणि स्नाने।
चण्डागरुणी विलेपने॥

**अचि19.16**
संसर्गसन्निपातयोर्यथादोषोदयमिदमेव साधनम्।
एकदेशाश्रये च श्वयथौ यथासन्नं वमनादीनि रक्तावसेचनं च कुर्वीतेति।
भवति चात्र॥

**अचि19.17**
प्रायोऽभिघातादनिलः सरक्तः शोफं सरागं प्रकरोति तत्र।
विसर्पनुन्मारुतरक्तनुच्च कार्यं विषघ्नं विषजे च कर्म॥

**अचि19.18**
ग्राम्याब्जानूपं पिशितमबलं शुष्कशाकं तिलान्नं।
गौडं पिष्टान्नं दधिसलवणं पिच्छिलं मद्यमम्लम्।
धाना वल्लूरं समशनमथो गुर्वसात्म्यं विदाहि।
स्वप्नं चारात्रौ श्वयथुगदवान् वर्जयेन्मैथुनं च॥
॥इति एकोनविंशोऽध्यायः॥

अथ विंशोऽध्यायः।

**अचि20.1**
अथातो विसर्पचिकित्सितं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अचि20.2**
पूर्वरूपेष्वेव सर्वविसर्पाणां लङ्घनं रूक्षणं सिरामोक्षणमुल्लेखनं विरेचनं च कुर्यात्।
न तु कदाचिदपि स्नेहनम्॥

**अचि20.3**
निरामेषु क्षीणकफेषु च शीतवीर्याणि सर्पींषि तिक्तकत्रायमाणाघृतादीनि पाने दद्यात्।
तत्र मदनेन्द्रयवपटोलपिचुमन्दमधुकेक्षुरसान् वमनेऽवचारयेत्।
द्राक्षात्रिवृत्त्रिफलात्रायमाणा विरेचने॥

**अचि20.4**
मुस्तदेवदारुकुष्ठशताह्वावाराहीधान्याककृष्णगन्धावंशार्तगलान् लेपसेकेष्वनिलजे ह्रस्ववद्वल्लीकण्टकपञ्चमूलानि च॥

**अचि20.5**
पित्ते तु कमलोत्पलशैवालपङ्कदूर्वामृणालशृङ्गाटककशेरुकशर्करान्द्रीबेरकुचन्दनमुक्तामणिगैरिकपयस्याप्रपौण्डरीकमधुकपद्मकघृतक्षीराणि न्यग्रोधादिं च॥

**अचि20.6**
श्लेष्मण्यजगन्धाश्वगन्धासरलकालकैषिकागरुवोचरास्नावचाशीतशिवेन्द्रवल्लीगोमूत्राणि वरणादिं च संसर्गे यथादोषबलं विकल्पयेत्॥

**अचि20.7**
तत्र कफस्थानाश्रिते सामे पित्तस्थानगते च रूक्षा विशीताः प्रलेपपरिषेकाः॥

**अचि20.8**
पित्ते तनवः सुशीताः सघृता वस्त्रान्तरिताः क्षणे क्षणे चापनीयान्ये प्रयोज्याः॥

**अचि20.9**
द्वन्द्वजेषु यथायथं दोषांश्चिकित्सेत्।
विशेषेणाग्निविसर्पे महातिक्तकं पिबेत्।
ग्रन्थिविसर्पे रक्तपित्तसंसर्गमवेक्ष्य प्राग्लङ्घनादीनि विरेचनान्तानि शमनानि च योजयेत्।
ततो वातश्लेष्महरं कर्म॥

**अचि20.10**
शूले च तदा स्निग्धाम्लोष्णाभिरुत्कारिकाभिर्ग्रन्थीनामुपनाहनम्।
वातकफविसर्पोक्तैश्च लेपस्तैरेव वा सिद्धेन तैलेन तोयेन वा परिषेकः।
लिम्पेद्वा शुष्कमूलकस्य कल्केन नक्तमालत्वचो वा।
बिभीतकेन वा विजयाक्षनागबलाग्निमन्थभूर्जग्रन्थिवंशपत्राणां वा॥

**अचि20.11**
दन्तीचित्रकमूलत्वक्कासीसार्कस्नुहीक्षीरभल्लातकास्थिभिरुष्णैर्लेपः शिलामपि भिनत्ति।
दीर्घकालप्रसक्ते तु ग्रन्थौ त्रिफलां प्रयुञ्जीत।
मधुपिप्पलीर्वा।
मुस्तासक्तुभल्लातकानि वा।
सीधुमधुशर्करान् वा।
मातुलुङ्गरसानुविद्धां मदिरां वा।
गिरिजतुं वा गुल्मभेदनं वा।
तप्तलोहोपलादिपीडनं वा।
जत्रूर्ध्वगते तीक्ष्णधूमवमनानि च॥

**अचि20.12**
तथाप्यभेदे क्षारेणाग्निना वा दहेत्।
पाटयित्वा वा शस्त्रेण परिशोधयेत्।
विदग्धं वा रक्तमपनीयापनीय पुनःपुनः स्वेदयेत्।
एवं पर्यायेण रक्तपित्ते वातश्लेष्मणि चोत्तिष्ठेत॥

**अचि20.13**
सर्वस्मिन् विसर्पे पर्यागते विदारिते च व्रणवत्।
तैलं च दार्वीविडङ्गकम्पिल्लकैः ग्रन्थिव्रणसाधनं साधयेत्॥

**अचि20.14**
कर्दमके शीघ्रतरं सुतरां च वमनादीनि कृत्वा पुनर्जलौकोभिरसृगवसेचयेत्।
असृक्प्रक्लेदाद्धि त्वङ्मांससिरास्नावसङ्क्लेदो भवति।
पिबेच्च कषायं घनपटोलपिचुमन्दानाम्।
मुस्तोशीरामलकसारिवाणाम्।
चन्दनोत्पलयोः।
पटोलादिवर्गस्य वा।
घृतमिश्रं वा दार्वीत्वक्तिक्तापटोलयष्ट्याह्वारिष्टमसूरत्रिफलात्रायमाणानाम्॥

**अचि20.15**
विरेकार्थं च त्रिवृच्चूर्णं सर्पिषा पयसा द्राक्षारसेन घर्माम्भसा वा पाययेत्।
त्रायमाणाशृतं पित्तोद्वृत्तो क्षीरमिति।
भवति चात्र॥

**अचि20.16**
श्रेष्ठास्रस्रुतिरेवात्र विसर्पो ह्यसृगाश्रयः।
यच्च नासावसंसृष्टो रक्तपित्तेन जायते॥

**अचि20.17**
न घृतं बहुदोषाय देयं यन्न विरेचनम्।
तेन दोषो ह्युपस्तब्धस्त्वग्रक्तपिशितं पचेत्॥

**॥इति विंशोऽध्यायः॥**

**टीका**

*अचि16.14: भेलविहित*

# अष्टाङ्गसंग्रहः चिकित्सितस्थानम् अध्याय २१-२४

https://sa.wikisource.org/s/9zq

**अष्टाङ्गसंग्रहः**

अथ एकविंशोऽध्यायः।

**अचि21.1**
अथातः कुष्ठचिकित्सितं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अचि21.2**
पूर्वरूपेष्वेव कुष्ठिनं स्नेहपानेनोपक्रमेत।
तत्र वातोत्तरे मेषशृङ्गीशार्ङ्गेष्टैरण्डगुडूचीद्विपञ्चमूलसिद्धं तैलं घृतं वा पानाभ्यङ्गयोर्विदध्यात्॥

**अचि21.3**
पित्तोत्तरे धवाश्वकर्णककुभवचापुनर्नवपलाशपिचुमन्दमधुकलोध्रसमङ्गासिद्धं सर्पिः।
अथवा पटोलपिचुमन्ददार्वीदुरालभातिक्तरोहिणीपाठापर्पटकत्रायमाणानां पालिकान् भागान् जलाढकद्वयेऽष्टभागशेषं क्वाथयेत्।
तेन कार्षिकैश्चन्दनोपकुल्यामुस्तात्रायन्तीन्द्रयवभूनिम्बैः कल्कितैः सपिषो द्वादशपलं साधयेत्।
एतत्तिक्तकं सर्पिः
कुष्ठविसर्पविस्फोटगण्डगण्डमालाश्वयथुपिटकारक्तपित्तदुर्नामवातशोणितकामलापाण्ड्वामयोन्माददाहतृड्भ्रमकण्डूकुष्ठनाडीगुल्ममदतिमिरव्यङ्गश्वित्रापस्मारभगन्धरोदरप्रदरज्वरगरविद्रधिग्रहणीहृद्रोगानपहरति॥

**अचि21.4**
सप्तच्छदकटुकातिविषाशम्याकपाठामुस्तत्रिफलोशीरपटोलपर्पटकपिप्पलीद्वयद्विरजनीद्विसारिवा चन्दनदुरालभापद्मकवचाशतावरीविशालाकुटजबीजवृषमूर्वागुडूचीभूनिम्बत्रायमाणामधुकगर्भं
द्विगुणामलकरसमष्टगुणाम्बु सर्पिर्विपक्वं महातिक्तकाख्यं घृतमधिकगुणं पूर्वस्मात्।
गुग्गुलुपञ्चतिक्तं वा पिबेत्॥

**अचि21.5**
कफोत्तरे सालप्रियालशम्याकारिष्टसप्तपर्णचित्रकमरिचवचाकुष्ठैः साधितम्।
अथवा बृहतीद्वयकाकमाचीशुकनासाक्वाथे मरिचविडङ्गशिग्रुजातीदेवदारुक्षवकहरिद्राभयाकल्केन वाजिमूत्रेण च सिद्धं सर्पिः॥

**अचि21.6**
सर्वेषु च भल्लातकतुवरकसिद्धार्थकान्यतमतैलम्।
भल्लातकपथ्याकृमिघ्नसिद्धं वा हविः॥

**अचि21.7**
ततः स्निग्धस्य यथादोषं यथासन्नं च संशोधनानि प्रयुञ्जीत।
सिरां च बलापेक्षी विध्येदेकां द्वे तिस्रश्चतस्रः पञ्च वा।
अन्तरान्तरा च पुनःपुनः स्नेहं पिबेत्।
दुर्बलं हि शून्यकोष्ठं कुष्ठिनं वायुरभिभवति।
वमने त्वस्य मधुककुटजबीजनिम्बपटोलपल्लवानि विदध्यात्।
कुम्भनिकुम्भत्रिफला विरेचने माणिभद्रवटकांश्च॥

**अचि21.8**
पटोलविशालयोर्मूलं त्रिफला च पृथक् त्रिभागोनत्रिशाणाः कटुकात्रायमाणे शाणांशे शुण्ठ्यास्त्रिभागोनः शाणः तदेतत् पलमैकध्यं सलिले विपाच्य पाययेत्।
ऊर्ध्वाधोविरिक्तश्च जीर्णे जाङ्गलरसेनाश्नीयात्।
एवमेतत् षड्रात्रप्रयोगात् परं पित्तकफशोफकुष्ठदुष्टनाडीव्रणार्शोभगन्दरग्रहणीपाण्डुहलीमककामलाविषमज्वरहृद्बस्तिवेदनाघ्नम्॥

**अचि21.9**
उभयानुलोमनं वा ब्राह्मीस्वरससाधितं सर्पिः पिबेत्।
आवर्तकीतुलां सलिलार्मणेऽष्टांशशिष्टां विपाच्य तेन निर्यूहेण तन्मूलैश्च घृतप्रस्थं साधयेत्।
ततो मात्रामेकाहान्तरं पिबेत्।
ऊर्ध्वाधो विरिच्यमानस्तृषितः।
शीतलवणमारनालं जीर्णस्नेहश्च तेनैव कोद्रवौदनमश्नीयात्।
अनेन कुष्ठश्वित्रापचीभगन्दरनाडीव्रणाखुविषाणि सिध्यन्ति।
मेध्यं चैतत् पुंसवनं च॥

**अचि21.10**
दार्वीपटोलबृहतीसेव्यमदननिम्बकृतमालघनेन्द्रयवैः सस्नेहैरास्थापनम्।
एभिरेव च विपक्वः स्नेहोऽनुवासनार्हस्यानुवासनम्।
दन्तीमरिचफणिज्जकार्द्रककरञ्जबीजपिप्पलीविडङ्गसैन्धवैरूर्ध्वजत्रुगते कुष्ठे कृमिषु च शिरोविरेकः।
सूत्रस्थानोक्तो वैरेचनिकधूमश्च॥

**अचि21.11**
ततः सर्वतो विशुद्धस्यान्तर्बहिः शमनानि प्रयुञ्जीत॥

**अचि21.12**
खदिरकदरतिनिशासनशिरीषशिंशपाशाकसर्जार्जुनजम्बूकरवीरधवामलकीमुष्ककाक्षिकबदरीवञ्जुलनिम्बकरञ्जकदम्बमधूकसारान् सार्द्रान्
कृतमालनिचुलपटोलाङ्कोलबलाबिल्वकुटजकटभीपारिभद्रसहचरगृध्रनखीवरणवर्धमानार्कसौभञ्जनाटरूषकशतावरीश्वदंष्ट्राहिमाराश्वकर्णश्रीपर्णीस्वयंगुप्ताग्निमन्थेन्द्रवारुणीकाकोदुम्बरिकामेषशृङ्गीटुण्टुकगुडूचीवर्षाभूवा
च शकलयित्वा पृथक् त्रिंशत्पलिकानि सङ्क्षुद्य महति कटाहेऽष्टगुणेनाम्भसा क्वाथयेत्।
अष्टभागशेषं निर्यूहमवतार्य परिस्राव्य च तस्मिन् सर्पिषः पलशतत्रयं विपचेदीषदवशेषकषाये च विदलीकृतारुष्करसहस्रत्रयमत्रावाप्य पुनः पाचयेद्विगतस्वरसान्यरुष्कराण्यपास्य तस्मिन् स्नेहे सुचूर्णितानि प्रक्षिपेत्।
व्याधिघातव्योषनाकुलीमार्कवार्ककाकादनीतगरकटुकाकुष्ठबिल्वहिङ्गुविडङ्गचित्रकातिविषामुस्तेन्द्रयवेन्द्रवारुणीरूप्य
मललोहरजोलोहकान्तरसाञ्जनाभ्रशुकनासादेवदालीत्रिफलालाङ्गलिकीविशालाकुम्भनिकुम्भवचावाराहीमहाद्रुमकोशातकीप्रपुन्नाटसोमपर्णीनलिकाद्वयपटोलीजातीपल्लवताप्यकारवेल्लीकूलिकाकन्दकसप्तच्छदशार्ङ्गेष्टा
प्रत्येकं त्रिपलिकानि शृङ्गीविषपलं चैकं ततो दर्व्या समन्तादाघट्य सुगुप्तं भूमौ धान्ये वा मासं निखनेत्॥

**अचि21.13**
अथ कृतसंशुद्धिस्वस्त्ययनः कुष्ठी प्रातस्ततो मात्रामुपयुञ्जीत।
जीर्णे च यथेष्टमाहारं तेनास्य पूर्वमङ्गानि तुद्यन्ते भिद्यन्ते शूयन्ते स्फुरन्ति स्फुटन्ति च।

ततः सप्तरात्रात् पुनः स्वस्थीभवन्ति।
अपि च॥

**अचि21.14**
योगराजमवलिह्य समस्तं संज्ञयैव कथितोत्तमशक्तिम्।
हन्ति कुष्ठमतिपातितगात्रं स्नायुजालपरिशेषमशेषम्॥

**अचि21.15**
श्वासाग्निसादारुचिकासयक्ष्मगुल्माढ्यवातग्रहणीप्रमेहान्।
शोफं कृमीन् पाण्डुगदं ज्वरांश्च निवर्तयत्येष रसायनाग्र्यः॥

**अचि21.16**
त्रिफलादशमूलमूर्वामुस्तसप्तच्छददारुनिम्बत्वग्गवाक्षीचित्रकमञ्जिष्ठाव्योषचूर्णं नवगुणैः सक्तुभिर्युक्तं सक्षौद्रं शीलयेत्॥

**अचि21.17**
अथवा क्षुण्णान्यवान् निस्तुषान् रात्रौ गोमूत्रपर्युषितानहनि किलिञ्जे शोषयेदेवं सप्ताहं भावयेच्छोषयेच्च।
ततस्तान् सक्तून् कृत्वा भल्लातकप्रपुन्नाटावल्गुजचित्रकविडङ्गमुस्तचूर्णचतुर्भागयुक्तानसनादिकषायेण पाययेत्॥

**अचि21.18**
एवमसनादिक्वाथपीतानामारग्वधादिकषायपीतान वा गोजीर्णकानां वा यवानां सक्तूनरुष्करानिमन्थचूर्णमिश्रान् खदिरासनसाररोहितकगुडूचीनामन्यतमस्य कषायेण दाडिमाम्लवेतसाम्लेन सैन्धवलवणेन सितामधुमधुरेणालोड्य पाययेत्।
एष सर्वमन्थकल्पः।
यावकांश्च भक्ष्यानपूपपूर्णकोशशष्कुली प्रभृतीन् कुर्यात्।
यववच्च गोधूमैः॥

**अचि21.19**
सुरां कल्पयेत् पलाशक्षारभावितशालितण्डुलपिष्टेन क्षारोदकेनैव स्वेदितेन प्रियङ्गुगजपिप्पलीचित्रककेबुकैलावालुकपरिपेलवलोध्रमरिचविडङ्गचूर्णमिश्रेण नवे चैनां भाजने जतुसृते क्षौद्रपिप्पलीलिप्ते स्थापयेत्।
ततो गन्धरसोपपन्नां कुष्ठिने पातुं दद्यात्॥

**अचि21.20**
खदिरशिंशपासारमुत्तमकारणीं ब्रह्मीं कोशवतीं च कषायकल्पेन विपचेत्।
तेन क्वाथेन तण्डुलान् भावयेत्।
पिष्टं च स्वेदयेत्।
अभिषुणुयाच्च पूर्ववत्॥

**अचि21.21**
त्रिवृच्छयामाग्निमन्थसप्तलाकेबुकशङ्खिनीतिल्वकत्रिफलापलाशशिंशपानां रसमादाय पलाशद्रोण्यामभ्यासिचय खदिराङ्गारतप्तमयःपिण्डमेकविंशतिवारान्निर्वाप्य ततस्तं रसमासिच्य स्थाल्यां गोमयाग्निना साधयेत्।
सिध्यति चावपेत्।
पिप्पलीचूर्णस्य भागं द्वौ मधुनस्तावद्घृतस्य ततश्चतुर्भागावशिष्टेऽवतीर्णे भूयोऽग्नितप्तमयःपिण्डं तस्मिन् प्रक्षिपेत् प्रशान्तं च लोहपात्रे सुगुप्तं निदध्यात्।
इयमयस्कृतिः दुस्साधमपि कुष्ठं मेहं वा साधयति।
स्थूलं कर्शयति शोफमुपहन्ति सन्नमग्निमुद्धरति।
विशेषेण राजयक्ष्मिणामुपदिश्यते।
वर्षशतायुश्चैनामुपयुज्य पुरुषो भवति॥

**अचि21.22**
असनादिक्वाथमासिच्य पलाशद्रोण्यमयोघनैस्तप्तैः संयोज्य निर्वाप्य च कृतसंस्कारे कलशे प्रक्षिप्य वत्सकादिं प्रतिवाप्य क्षौद्रं च सुगुप्तं मासं निधायोपयुञ्जीत॥

**अचि21.23**
एवं न्यग्रोधादिष्वारग्वधादिषु चायस्कृतिं विदध्यात्।
खदिरसुरदारुक्वाथप्रस्थं क्षौद्रप्रस्थं मत्स्यण्डिकाप्रस्थं लोहचूर्णार्धप्रस्थं त्रिफलाचतुर्जातकमरिचानि च कार्षिकाणि प्रक्षिप्यायसे भाण्डे मासस्थितं तदुपयोजयेत्॥

**अचि21.24**
रसायनप्रयोगेण च लोहतुलां तुवरकास्थीनि भल्लातकान्यलम्बुषामवल्गुजं गुग्गुलुमर्शोविहितविधानेन वा चित्रकमिति॥

**अचि21.25**
भवति चात्र।
किलासकुष्ठग्रहणीप्रमेहस्थूलत्वदुर्नामभगन्दरेषु।
पाण्डुत्वशूनत्वकफामयेषु मन्थादियोगान् विदधीत धीमान्॥

**अचि21.26**
शालयो यवगोधूमकोरदूषाः प्रियङ्गवः।
मुद्गा मसूरास्तुवरी तिक्तशाकानि जाङ्गलम्॥

**अचि21.27**
त्रिफलारुष्करारिष्टक्षौद्रयोजितभावितम्।
धात्रीखदिरनिम्बाम्बुरसं मुद्गपटोलजम्॥

**अचि21.28**
मद्यान्यौषधगर्भाणि मथितं चेन्दुराजिमत्।
अन्नपानं हितं कुष्ठे न त्वम्ललवणोषणम्।
दधिदुग्धगुडानूपतिलमाषांस्त्यजेत्तराम्॥

**अचि21.29**
तुलार्धं निम्बपञ्चाङ्ग्यास्तथा खदिरसारतः।
हरीतकीदलतुलां भल्लातकतुलां दश॥

**अचि21.30**
कृष्णाविडङ्गकुडवावैकध्यं विपचेज्जले।
कषायं तं परिस्राव्य निदध्यात्ताम्रभाजने॥

**अचि21.31**
षण्मासतः पिबेत् कुष्ठकृमिमेहैर्विमुच्यते।
निम्बारिष्ट इति ख्यातो वरुणेनैष निर्मितः॥

**अचि21.32**
विडङ्गसारामलकाभयानां पलं पलं त्रीणि पलानि कुम्भात्।
गुडस्य च द्वादश मासमेष जितात्मना हन्त्युपयुज्यमानः॥

**अचि21.33**
कुष्ठश्वित्रश्वासकासोदरार्शोमेहप्लीहग्रन्थिरुग्जन्तुगुल्मान्।
सिद्धं योगं प्राह यक्षो मुमुक्षोर्भिक्षोः प्राणान् माणिभद्रः किलेमम्॥

**अचि21.34**
कटुकापटोलमूलोत्तमावचानिम्बरात्रिमञ्जिष्ठानाम्।
संशीलितःकषायस्त्वगामयान् श्लेष्मपित्तबहुलान् हन्ति॥

**अचि21.35**
वातोत्तरांस्तु सर्पिर्विपाचितं क्वथितकल्कितैश्च कटुकाद्यैः।
खदिरारिष्टगुडूचीसुरतरुदार्वीश्च कल्पयेत् पृथगेवम्॥

**अचि21.36**
शीतः कषायः खदिरस्य पीतः सक्षौद्रताक्ष्र्यो हरति प्रसह्य।
त्वक्कण्ठरोगापचिगुल्ममेहान् बलाहकान् वायुरिव प्रचण्डः॥

**अचि21.37**
सर्पिर्मधुभ्यां त्रिफलारसेन विडङ्गकल्केन च सम्प्रयुक्तः।
कुष्ठं कषायः खदिरस्य हन्ति तिष्ठन् कषायं मनसीव धर्मः॥

**अचि21.38**
खदिरस्य लूनशिरसो मूले खातस्य मध्यमं मूलम्।
छित्वाधोऽयःकुम्भं रससंग्रहणाय निदधीत॥

**अचि21.39**
लिप्तात् कृष्णमृदेन्धनैश्च निचितादादीपिताद्वह्निना।
तस्माद्यच्च्यवते रसः स सहितः क्षौद्राज्यधात्रीरसैः।
पीतः कुष्ठभगन्दरारुरपचीमेहास्रपाण्डून् जयेत्।
प्रस्थस्तस्य जरां च भोज्यमिह तु त्याज्यं च भल्लातवत्॥

**अचि21.40**
योज्य खदिरवन्निम्बशिंशपारग्वधासनम्।
रोहतिकं सुराह्वं च धदिरोदकपायिनः॥

**अचि21.41**
दार्वी रसाञ्जनं वा गोमूत्रेण प्रबाधते कुष्ठम्।
अभया प्रयोजिता वा मासं सव्योषगुडतैला॥

**अचि21.42**
दर्वीकलिङ्गकटुकातिविषाग्निपाठामूत्रेण सूक्ष्मरजसो धरणप्रमाणाः।
पीता जयन्ति गुदजोदरगुल्मकुष्ठकोष्ठानिलाढ्यपवनग्रहणीप्रमेहान्॥

**अचि21.43**
लाक्षादन्तीमधुरसवराद्वीपिपाठाविडङ्गप्रत्यक्पुष्पीत्रिकटुरजनीसप्तपर्णाटरूषम्॥

**अचि21.44**
रक्ता निम्बं सुरतरुकृतं पञ्चमूल्यौ च चूर्णं पीत्वा मासं जयति हितभुग्गव्यमूत्रेण कुष्ठम्॥

**अचि21.45**
दशपलमरिष्टपल्लवकुसुमजटात्वक्फलं यथाकालम्।
प्रयाहरेत् समस्तं कृतमालतरोश्च तत्तद्वत्॥

**अचि21.46**
सञ्चूर्ण्यासनखदिरक्वाथेनाप्लाव्य शोषयेदनिले।
चित्रकघनभल्लातकगोक्षुरकमहौषधत्रिफलाः॥

**अचि21.47**
लोहविडङ्गावल्गुजसितोपलाः पलसमा रजीकृत्य।
सप्ताहमेकतस्तद्रसेन भृङ्ग्यास्ततो भाव्यम्॥

**अचि21.48**
अथ पीतमक्षमात्रं घृतेन दुग्धेन कोष्णसलिलैर्वा।
अचिरात् करोति वह्निं मतिं स्मृतिं पाटवं मेधाम्॥

**अचि21.49**
कृमिकुष्ठगण्डपाण्डुप्रमेहवक्त्रामयारुचिच्छर्दीः।
अपचीभगन्दरस्थौल्यदुष्टनाडीव्रणव्यङ्गान्॥

**अचि21.50**
कफपित्तजान् विकारान् विशेषतः सुविषमान् निवर्तयति।
वर्षाद्विषगरकृत्या नित्याभ्यासेन खलतिपलितानि॥

**अचि21.51**
त्रिकटूतमातिलारुष्कराज्यमाक्षिकसितोपलाविहिता।
गुटिका रसायनं स्यात् कुष्ठजिच्च विष्या च सप्तसमा॥

**अचि21.52**
चन्द्रशकलाग्निरजनीविडङ्गतुवरास्थ्यरुष्करत्रिफलाभिः।
वटका गुडांशक्लृप्ताः समस्तकुष्ठानि नाशयन्त्यभ्यस्ताः॥

**अचि21.53**
विडङ्गभल्लातकबाकुचीनां सद्वीपिवाराहिहरीतकीनाम्।
सलाङ्गलीकृष्णतिकोपकुल्या गुडेन पिण्डी विनिहन्ति कुष्ठम्॥

**अचि21.54**
पथ्याकलिङ्गकपलाशफलेन्दुराजीभल्लातकास्थिचतुरङ्गुलचित्रकार्कैः।
सावर्तकीकृमिहरैः क्रमवर्धितांशैः मूत्रेण तुल्यतुवरैर्वटका गदघ्नाः॥

**अचि21.55**
शशाङ्कलेखा सविडङ्गसारा सपिप्पलीका सहुताशमूला।
सायोमला सामलका सतैला कुष्ठानि कृच्छ्राणि निहन्ति लीढा॥

**अचि21.56**
भूनिम्बनिम्बत्रिफलापद्मकातिविषाकणाः।
मूर्वापटोलीद्विनिशापाठातिक्तेन्द्रवारुणीः॥

**अचि21.57**
सकलिङ्गवचास्तुल्या द्विगुणाश्च यथोत्तरम्।
लिह्याद्दन्तीत्रिवृद्ब्राह्मीश्चूर्णिता मधुसर्पिषा॥

**अचि21.58**
कुष्ठमेहप्रसुप्तीनां परमं स्यात्तदौषधम्।
वराकणाविडङ्गान् वा लिह्यात्तैलाज्यमाक्षिकैः॥

**अचि21.59**
खदिरशकलचूर्णं क्षौद्रसर्पिर्विमिश्रं।
सगिरिजतुविडङ्गं मात्रया सेवमानः।
लघुमितहितभोजी ब्रह्मचारी जितात्मा।
श्वयथुकिटिभकोठश्वित्रकुष्ठानि हन्यात्॥

**अचि21.60**
खदिरासनसारस्य तुलां द्रोणेऽम्भसः क्षिपेत्।
अष्टमेऽहनि तत्तोयं पचेदादर्विलेपनात्॥

**अचि21.61**
त्रिफलार्धतुलाचूर्णं तत्पादेन तु बाकुचीम्।
तदर्धं द्वीपिनो मूलं तद्वद्ब्राह्मीं समार्कवाम्॥

**अचि21.62**
लोहक्रिमिघ्नद्विप्रस्थं क्षिप्त्वा तद्वटकीकृतम्।
कुष्ठमेहग्रहण्यर्शोभगन्दरिषु पूजितम्॥

**अचि21.63**
लाङ्गलीत्रिफलालोहचूर्णं दशपलं पृथक्।
गुटिकात्रिशतं षष्टिं कुर्याद्भृङ्गरसाप्लुतम्॥

**अचि21.64**
छायाशुष्कां च तत्रार्धगुटिकां भक्षयेत् पुरः।
जीर्णे रसेन रूक्षेण पेयापूर्वं च भोजयेत्॥

**अचि21.65**
यन्त्रितो ब्रह्मचर्याद्यैः क्रमेण गुटिकामपि।
खादेत् परस्तान्मासस्य भवेत् कामचरः क्रमात्॥

**अचि21.66**
एवं सर्वाणि कुष्ठानि जयत्यतिबलान्यपि।
धीमेधास्मृतियुक्तश्च नीरुग्जीवेत् समाः शतम्॥

**अचि21.67**
वासामृतानिम्बवरापटोलव्याघ्रीकरञ्जोदककल्कपक्वम्।
सर्पिर्विसर्पज्वरकामलास्रकुष्ठापहं वज्रकमामनन्ति॥

**अचि21.68**
त्रिफलात्रिकटुद्विकण्टकारीकटुकाकुम्भनिकुम्भराजवृक्षैः।
सवचातिविषाग्निकैः सपाठैः पिचुभागैर्नववज्रदुग्धमुष्ट्या॥

**अचि21.69**
पिष्टैः सिद्धं सर्पिषः प्रस्थमेभिः क्रूरे कोष्ठे स्नेहनं रेचनं च।
कुष्ठश्वित्रप्लीहवर्ध्माश्मगुल्मान् हन्यात् कृच्छ्रांस्तन्महावज्रकाख्यम्॥

**अचि21.70**
यतेर्लेलीतकवसा क्षौद्रजातीरसान्विता।
कुष्ठघ्नी समसर्पिर्वा सगायत्र्यसनोदका॥

**अचि21.71**
मूत्रे विनीता त्रिफलारसे वा सिद्धा घृते वाम्भसि केवले वा।
रसायनं पथ्यभुजो हरिद्रा निहन्ति पाण्ड्वामयकुष्ठमेहान्॥

**अचि21.72**
पिबेदमृतवल्या वा स्वरसं यन्त्रपीडितम्।
मेध्यं तत् कुष्ठमेहार्शश्छर्दिवातास्रनाशनम्॥

**अचि21.73**
स्थिरकठिनमण्डलानां कुष्ठानां पोट्टलैर्हितः स्वेदः।
स्विन्नोत्सन्नं विलिखेत् कुष्ठं तीक्ष्णेन शस्त्रेण॥

**अचि21.74**
रुधिरागमार्थमथवाशृङ्गालाबूभिरपहरेद्रक्तम्।
प्रच्छेदल्पं कुष्ठं निरेचयेद्वा जलौकोभिः॥

**अचि21.75**
ये लेपाः कुष्ठानां युज्यन्ते निर्हृतास्रदोषाणाम्।
संशोधिताशयानां सद्यः सिद्धिर्भवति तेषाम्॥

**अचि21.76**
येषु न शस्त्रं क्रमते स्पर्शेन्द्रियनाशनेषु कुष्ठेषु।
तेषु निपात्यः क्षारो रक्तं दोषं च विस्राव्य॥

**अचि21.77**
लेपोऽतिकठिनपरुषे सुप्ते कुष्ठे स्थिरे पुराणे च।
पीतागदस्य कार्यो विषैः समन्त्रागदैश्चानु॥

**अचि21.78**
स्तब्धानि सुप्तसुप्तान्यस्वेदनकण्डुलानि कुष्ठानि।
कूर्चैर्दन्तीत्रिवृताकरवीरकरञ्जकुटजानाम्॥

**अचि21.79**
जात्यर्कनिम्बजैर्वा पत्रैः शस्त्रैः समुद्रफेनेन।
घृष्टानि गोमयैर्वा ततः प्रदेहैः प्रदेह्यानि॥

**अचि21.80**
आरग्वधः सैडगजः करञ्जो वासा गुडूची मदनं हरिद्रे।
श्र्याह्वः सुराह्वः खदिरो धवश्च निम्बो विडङ्गः करवीरकश्च॥

**अचि21.81**
ग्रन्थिश्च भूर्जो लशुनः शिरीषः सलोमशो गुग्गुलुकृष्णगन्धे।
फणिज्जको वत्सकसप्तपर्णपीलूनि कुष्ठं सुमनःप्रवालाः॥

**अचि21.82**
वचाहरेणुस्त्रिवृता निकुम्भो भल्लातकं गैरिकमञ्जनं च।
मनःशिलाले गृहधूम एला कासीसलोध्रार्जुनमुस्तसर्जाः॥

**अचि21.83**
इत्यर्धरूपैर्विहिताः षडेते गोपित्तपीताः पुनरेव पिष्टाः।
सिद्धाः परं सर्षपतैलयुक्ताश्चूर्णाः प्रदेहा बहुशाः प्रयोज्याः॥

**अचि21.84**
कुष्ठानि कृच्छ्राणि नवं किलासं सुरेन्द्रलुप्तं किटिभं सदद्रुम्।
भगन्दरार्शास्यपचीं सपामां हन्युः प्रयुक्तानचिरान्नराणाम्॥

**अचि21.85**
निम्बं हरिद्रे सुरसं पटोलं कुष्ठाश्वगन्धे सुरदारुशिग्रू।
ससर्षपं तुम्बुरुधान्यवन्यं चण्डां च चूर्णानि समानि कुर्यात्॥

**अचि21.86**
तैस्तक्रपिष्टैः प्रथमं शरीरं तैलाक्तमुद्वर्तयितुं यतेत।
तथास्य कण्डूःपिटकाः सकोठाः कुष्ठानि शोफाश्च शमं व्रजन्ति॥

**अचि21.87**
मुस्तामृतासङ्गकटङ्कटेरीकासीसकम्पिल्लककुष्ठलोध्राः।
गन्धोपलः सर्जरसं विडङ्गं मनःशिलाले करवीरकत्वक्॥

**अचि21.88**
तैलक्तगात्रस्य कृतानि चूर्णान्येतानि दद्यादवचूर्णनार्थम्।
दद्रुःसकण्डूः किटिभानि पामा विचर्चिका चेति तथा न सन्ति॥

**अचि21.89**
काण्डे महावृक्षभवे निलीनः स्विन्नः कुकूले पुटपाकयुक्त्या।
विचर्चिकां सर्षपकल्कपिण्डो निहन्ति लज्जामिव रागवेगः॥

**अचि21.90**
मनःशिलाले मरिचानि तैलमार्कं पयः कुष्ठहरः प्रदेहः।
तथा करञ्जप्रपुनाटबीजं कुष्ठान्वितं गोसलिलेन पिष्टम्॥

अचि21.91
गुग्गुलुमरिचविडङ्गैः सर्षपकासीससर्जरसमुस्तैः।
श्रीवेष्टकालगन्धैर्मनःशिलाकुष्ठकम्पिल्लैः॥

अचि21.92
उभयहरिद्रासहितैश्चात्रिकतैलेन मिश्रितैरेभिः।
दिनकरकराभितप्तैः कुष्ठं घृष्टं च नष्टं च॥

अचि21.93
मरिचं तमालपत्रं कुष्ठं समनःशिलं सकासीसम्।
तैलेन युक्तमुषितं सप्ताहं भाजने ताम्रे॥

अचि21.94
तेनालिप्तं सिध्म सप्ताहात् घर्मसेविनोऽपैति।
मासान्नवं किलासं स्नानेन विना विशुद्धस्य॥

अचि21.95
मयूरकं जर्जरितं समूलं दग्ध्वा परिस्राव्य च सप्तकृत्वः।
तेनाम्भसा कङ्गुणिकोत्थतैलं सिद्धं परं सिध्मनिबर्हणाय॥

अचि21.96
जीवन्ती मञ्जिष्ठा दार्वी काम्पिल्लकं पयस्तुत्थम्।
एष घृततैलपाकः सिद्धः सिद्धे च सर्जरसः॥

अचि21.97
देयः समधूच्छिष्टो विपादिका तेन नश्यति ह्यक्ता।
चर्मैकुष्ठकिटिभं कुष्ठं शाम्यत्यलसकं च॥

अचि21.98
सप्तपर्णकरञ्जार्कमालतीकरवीरजम्।
मूलं स्नुहीशिरीषाभ्यां चित्रकास्फोतयोरपि॥

अचि21.99
करञ्जबीजद्विनिशाव्योषैडगजसर्षपाः।
वरा वेल्लं च तैस्तैलं सगोमूत्रैर्विपाचितम्॥

अचि21.100
कुष्ठदुष्टव्रणग्रन्थिगण्डमालाभगन्दरान्।
विशेषाद्वातकफजान् हन्त्यभ्यङ्गेन वज्रकम्॥

अचि21.101
एरण्डताक्ष्यर्घननीपकदम्बभार्ङ्गीकम्पिल्लवेल्लफलिनीसुरवारुणीभिः।
निर्गुण्ड्यरुष्करसुराह्वसुवर्णदुग्धाश्रीवेष्टगुग्गुलुशिलाहरितालविश्वैः॥

अचि21.102
तुल्यस्नुगर्कदुग्धं सिद्धं तैलं स्मृतं महावज्रम्।
अतिशयितवज्रकगुणं श्वित्रार्शोग्रन्थिमालाघ्नम्॥

अचि21.103
कनकक्षीरी शैला भार्ङ्गी दन्त्याः फलानि मूलं च।
जातीप्रवालसर्षपलशुनविडङ्गं करञ्जत्वक्॥

अचि21.104
सप्तच्छदार्कपल्लवमूलत्वङ्निम्बचित्रकास्फोतम्।
गुञ्जैरण्डकबृहतीमूलत्वक्सुरसार्जकफलानि॥

अचि21.105
कुष्ठं पाठा मुस्ता षड्ग्रन्थातुम्बुरुत्वचो मूर्वा।
एडगजकुटजशिग्रुत्र्यूषणभल्लातकक्षवकाः॥

अचि21.106
हरितालमवाक्पुष्पी तुत्थं कम्पिल्लकोऽमृतासङ्गः।
सौराष्ट्री कासीसं दार्वीत्वक् स्वर्जिकालवणम्॥

अचि21.107
एतैस्तैलं तैलं कटुतैलं वा चतुर्गुणे मूत्रे।
करवीरमूलपल्लवतोये च विपाचितं जयति॥

अचि21.108
कटुकालाबुन्यस्तं जित्याभ्यङ्गेन वातकफकुष्ठम्।
मण्डलदद्रूकोष्ठकृमिपामाविचर्चिकाः सुतराम्॥

अचि21.109
सिक्थकतुत्थकगुग्गुलुसिन्दूररसाञ्जनैः कटुकतैलम्।
पामाकिटिभविचर्चिषु साधितमभ्यञ्जने श्रेष्ठम्॥

अचि21.110
शैलेयकम्पिल्लकपट्टिकाह्वसुराष्ट्रजासर्जरसोपलानि।
शिला च चूर्णो नवनीतयुक्तं कुष्ठे स्रवत्यभ्यधिकं प्रशस्तः॥

**अचि21.111**
एडगजकुष्ठसैन्धवसिद्धार्थविडङ्गकाञ्जिकैर्लिप्तम्।
कृमिपामासिध्मदद्रूमण्डलकुष्ठं शमं याति॥

**अचि21.112**
लाक्षाव्योषं प्रापुनाटं च बीजं सश्रीवेष्टाः कुष्ठसिद्धार्थकाश्च।
तक्रोन्मिश्रः स्याद्धरिद्रा च लेपो दद्रूघ्नो मूलकोत्थं च बीजम्॥

**अचि21.113**
दूर्वाभयासैन्धवचक्रमर्द कुष्ठेरकाः काञ्जिकतक्रपिष्टाः।
त्रिभिः प्रलेपैरपि बद्धमूलां दद्रूं च कण्डूं च विनाशयन्ति॥

**अचि21.114**
मनःशिलात्वक्कुटजं सकुष्ठं सलोमशः सैडगजः करञ्जः।
ग्रन्थिश्च भौर्जः करवीरमूलं चूर्णानि साध्यानि तुषोदकेन॥

**अचि21.115**
पलाशनिर्दाहरसेन वापि कर्षोन्मितान्याढक सम्मितेन।
दर्वीप्रलेपं प्रवदन्ति लेपमेतत् परं कुष्ठनिषूदनाय॥

**अचि21.116**
एलाचित्रकनिम्बवृषकं कुरुविन्दनागरार्क च।
चूर्णीकृतमष्टाहं भावयितव्यं पलाशस्य॥

**अचि21.117**
क्षारेण गवां मूत्रस्रुतेन तेनास्य मण्डलान्याशु।
भिद्यन्ते दीर्यन्ति च लिप्तान्यर्काभितप्तानि॥

**अचि21.118**
मांसी मरिचं लवणं रजनी तगरं सुधा गृहाद्धूमः।
मूत्रं पित्तं क्षारः पालाशः कुष्ठनुल्लेपः॥

**अचि21.119**
मुस्तं त्रिफला मदनं करञ्ज आरग्वधः कलिङ्गयवाः।
ससप्ताह्वकुष्ठफलिनीदार्व्यःसिद्धार्थकं स्नानम्॥

**अचि21.120**
एष कषायो वमनं विरेचनं वर्णदस्तथोद्धर्षः।
त्वग्दोषकुष्ठशोफप्रबाधनः पाण्डुरोगघ्नः॥

**अचि21.121**
करवीरनिम्बकुटजाच्छम्याकाच्चित्रकाच्च मूलानाम्।
मूत्रे दर्वीलेपः क्वाथो लेपेन कुष्ठघ्नः॥

**अचि21.122**
श्वेतकरवीरमूलं कुटजकरञ्जात् फलं त्वचो दार्व्याः।
सुमनःप्रवालयुक्तो लेपः कुष्ठापहः सिद्धः॥

**अचि21.123**
शैरीषी त्वक् पुष्पं कार्पास्या राजवृक्षपत्राणि।
पिष्टा च काकमाची चतुर्विधः कुष्ठहा लेपः॥

**अचि21.124**
दार्वीरसाञ्जनस्य च निम्बपटोलस्य खदिरसारस्य।
आरग्वधवृक्षकयोस्त्रिफलायाः सप्तपर्णस्य॥

**अचि21.125**
इति षट् कषाययोगाः कुष्ठघ्नाः सप्तमश्च तिनिशस्य।
स्नाने पाने च हितास्तथाष्टमश्चाश्वमारस्य॥

**अचि21.126**
आलेपनं प्रघर्षणमवचूर्णनमेत एव च कषायाः।
तैलघृतपाकयोगैश्चेष्यन्ते कुष्ठशान्त्यर्थम्॥

**अचि21.127**
सर्षपकरञ्जकोशातकानि तैलान्यथेङ्गुदीनां च।
कुष्ठेषु हितान्याहुस्तैलं श्रेष्ठं च खदिरसारस्य॥

**अचि21.128**
शीताः प्रदेहसेकास्तिक्तं सर्पिः सिराविरेकश्च।
विशरणदाहक्लेदे विस्फोटे चर्मदलने च॥

**अचि21.129**
शीर्णनखरोममांसः कृमिमानन्नाम्भसी त्यजेत् कुष्ठी।
सद्योदुग्धं दुग्धं षण्मासान् कारभं भजेत्समधु॥

**अचि21.130**
एडगजः सविडङ्गो मूलान्यारग्वधस्य कुष्ठानाम्।
उद्दालनं च दन्ता गोश्वखराहोष्ट्रदन्ताश्च॥

**अचि21.131**
रजनीद्वयं कृमिघ्नं प्रपुनाटं राजवृक्षमूलं च।
कुष्ठोत्पाटनमग्र्यं सपिप्पलीपाकलं योज्यम्॥

**अचि21.132**
श्वित्राणां सविशेषं योक्तव्यं सर्वतो विशुद्धानाम्।
उत्सन्नेषु च लेपाः सवर्णकरणास्तथाभ्यङ्गाः॥

**अचि21.133**
पक्षात् पक्षात् छर्दनान्यभ्युपेयान्मासान्मासाच्छोधनं चाप्यधस्तात्।
शुद्धिर्मूर्ध्नःस्यात्त्रिरात्रात्त्रिरात्रात् षष्ठे षष्ठे मास्यसृङ्मोक्षणं च॥

**अचि21.134**
यो दुर्वान्तो दुर्विरिक्तोऽथवा स्यात् कुष्ठी दोषैरुद्धतैर्व्याप्यतेऽसौ।
निस्सन्देहं यात्यसाध्यत्वमेवं तस्मात् कृत्स्नान्निर्हरेदस्य दोषान्॥

**अचि21.135**
व्रतदमयमसेवात्यागशीलाभियोगो द्विजगुरुसुरपूजा सर्वसत्त्वेषु मैत्री।
जिनजिनसुतताराभास्कराराधनानि प्रकटितमलपापं कुष्ठमुन्मूलयन्ति॥
॥इति एकविंशोऽध्यायः॥

अथ द्वाविंशोऽध्यायः।

**अचि22.1**
अथातः श्वित्रकृमिचिकित्सितं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अचि22.2**
कुष्ठादपि बीभत्सं यच्छीघ्रतरं च यात्यसाध्यत्वम्।
श्वित्रमतस्तच्छान्त्यै यतेत दीप्ते यथा भवने॥

**अचि22.3**
मदयन्त्याः सवायस्याः सुरभ्यारग्वधस्य च।
शतं पलानां प्रत्येकं वरायास्त्वाढकत्रयम्॥

**अचि22.4**
व्याघ्रीवह्निकपोतावत्सकखदिरार्कमूलदन्त्यैन्द्र्यः।
सनिशाद्वया दशपला क्वाथेऽमीषां क्षिपेत् पिष्ट्वा॥

**अचि22.5**
बीजं करञ्जेङ्गुदशिग्रुनिम्बान्नीलीं सनीलोत्पलचन्द्रलेखाम्।
श्यामां किरातं कटुकत्रयं च पञ्चाढकं तत्र च पञ्चगव्यात्॥

**अचि22.6**
शमयत्यचिरेण घृतं मृदुहुतवहसाधितं महानीलम्।
न किलासमेव केवलमपचीकृमिकासकुष्ठमभ्यस्तम्॥

**अचि22.7**
उन्मादापस्मारावर्शोविद्रधिशिरोरोगान्।
गलगण्डगुल्मगण्डानर्बुदशोफप्रमेहगलरोगान्॥

**अचि22.8**
सविसर्पशोषपवनव्याधीन्विषमज्वरान् हन्यात्॥

**अचि22.9**
संशोधनं विशेषात् पीतस्नेहस्य योजयेदनु च।
श्वित्रे स्रंसनमग्र्यं मलयूरस इष्यते सगुडः॥

**अचि22.10**
तं पीत्वाभ्यक्ततनुर्यथाबलं सूर्यपादसन्तापम्।
सेवेत विरिक्तश्च त्र्यहं पिपासुः पिबेत् पेयाम्॥

**अचि22.11**
श्वित्रेऽङ्गे ये स्फोटा जायन्ते कण्टकेन तान् भिन्द्यात्।
स्फोटेषु निस्सृतेषु प्रातः प्रातः पिबेत् पक्षम्॥

**अचि22.12**
मलयूमसनं प्रियङ्गुं शतपुष्पां चाम्भसा समुत्क्वाथ्य।
पालाशं वा क्षारं यथाबलं फाणितोपेतम्॥

**अचि22.13**
वितुषावल्गुजबजाच्चूर्णं गोवारिभाविताद्बहुशः।
मूलक्वाहेन पिबेत् कलितरुकृतमालमदनफल्गूनाम्॥

**अचि22.14**
पीते किलासी तिलतैलदिग्धो दिने दिने स्याद्रविपादसेवी।
जीर्णे च तक्राप्लुतकोद्रवाशी स्फोटोद्भवायैष विधिस्त्रिरात्रम्॥

**अचि22.15**
विध्वान्येयुः स्फोटकान् कण्टकैस्तान् बस्ताम्भोभिर्घृष्टया शुक्तवर्त्या।
लिम्पेत् कामं लेपनाद्वेदनायां लेपो योज्यः शङ्खनाभिर्जलेन॥

**अचि22.16**
व्योषसर्षपनिशागृहधूमैर्यावशूकपटुचित्रकयुक्तैः।
कोलतुल्यगुटिकार्धविषांशा श्वित्रकुष्ठशमनो वरलेपः॥

**अचि22.17**
गव्यं मूत्रं चित्रकव्योषयुक्तं सर्पिःकुम्भे संस्थितं क्षौद्रमिश्रम्।
पक्षादूर्ध्वं श्वित्रणा पेयमेतत् कार्यं चास्मै कुष्ठदृष्टं विधानम्॥

**अचि22.18**
मार्कवमथवा खादेद् भृष्टं तैलेन लोहपात्रस्थम्।
बीजकशृतं च दुग्धं तदनुपिबेच्छ्वित्रनाशाय॥

**अचि22.19**
पूतीकार्कव्याधिघातस्नुहीना मूत्रैः पिष्टाः पल्लवा जातिजाश्च।
घ्नन्त्यालेपाच्छ्वित्रदुर्नामदद्रून् पामाकोठान् दुष्टनाडीव्रणांश्च॥

**अचि22.20**
द्वैप्यं दग्धं चर्म मातङ्गजं वा श्वित्रे लेपस्तैलयुक्तो वरिष्ठः।
पूतीकीटो राजवृक्षोद्भवेन क्षारेणाक्तः श्वित्रमेकोऽपि हन्ति॥

**अचि22.21**
रात्रौ गोमूत्रे वासितान् जर्जराङ्गानह्निच्छायायां शोषयेत् स्फोटहेतून्।
एवं वारांस्त्रीन् भावयेच्छ्लक्ष्णपिष्टैः स्नुह्याः क्षीरेण श्वित्रनाशाय लेपः॥

**अचि22.22**
अक्षतैलद्रुतालेपः कृष्णसर्पोद्भवामषी।
शिखिपित्तं तथा दग्धं ह्रीबेरं वा तदाप्लुतम्॥

**अचि22.23**
उपोषितायान्नकालांस्त्रीन् श्वेतकृकवाकवे।
यष्ट्याह्वकुष्ठैडगजबीजचूर्णं घृतान्वितम्॥

**अचि22.24**
दद्यातस्य पुरीषेण श्वित्रमुद्वाल्य लेपयेत्।
मासं हन्त्याशु तच्छ्वित्रं विशेषाद्ब्रह्मसंश्रयम्॥

**अचि22.25**
लेपः पटुवेल्लशिला कासीसं रोचना कनकपुष्पी।
गोपित्तयुक्तमथवा चपलाञ्जनयुग्मलोहरजः॥

**अचि22.26**
काकोदुम्बरिका वा सावल्गुजचित्रका सगोमूत्रा।
कदलीक्षारयुतं वा खरास्थि दग्धं सगोरुधिरम्॥

**अचि22.27**
नीलोत्पलं सकुष्ठं ससैन्धवं हस्तिमूत्रपिष्टं वा।
हस्तिमदाध्युषितो वा मालत्याः क्षारकक्षारः॥

**अचि22.28**
सिद्धार्थकाबृहत्यौ करञ्जकोशातकीफलं गुञ्जा।
शुकनासा सगवाक्षी स्वर्णक्षीरीनिकुम्भश्च॥

**अचि22.29**
लाङ्गलिकी हयमारस्तिल्वकभल्लातकाश्वमूत्री च।
मुस्ता स्नुही सहिंस्रा सुवर्णशकला फलोपेता॥

**अचि22.30**
मूलकबीजं व्योषं पीलुविडङ्गानि कर्णिकारश्च।
पिचुमन्दजातीकिसलयबाकुचिकातुत्थकुष्ठानि॥

**अचि22.31**
कटुरोहिणीमनोह्वात्रिफला च सुकल्किता गवां मृत्रे।
गजहयखरमूत्राणां पात्रत्रितयं स्नुगर्कदुग्धाभ्याम्॥

**अचि22.32**
द्वौ कुडवाविह दद्यात् सर्षपतैलाच्च चातुर्थीम्।
दर्वीलेपं सिद्धा रसक्रिया मूत्रिका नाम॥

**अचि22.33**
श्वित्रं घृष्टं लिप्तं त्रीनालेपांस्तया न लङ्घयति।
मशतिलकचर्मकीलग्रन्थ्यर्बुदसर्वकुष्ठघ्नी॥

**अचि22.34**
कुडवोऽवल्गुजबीजाद्धरितालचतुर्थभागसम्मिश्रः।
मूत्रेण गवां पिष्टः सवर्णकरणः परं श्वित्रे॥

**अचि22.35**
क्षारे सुदग्धे गजलिण्डजे वा गजस्य मूत्रेण परिस्रुते च।
द्रोणप्रमाणे दशभागयुक्तं दत्वा पचेद्बीजमवल्गुजानाम्॥

**अचि22.36**
श्वित्रं जयेच्चिक्कणतां गतेन तेन प्रलिप्तं बहुशः प्रघृष्टम्।
कुष्ठं मशं वा तिलकालकं वा यद्वा व्रणे स्यादधिमांसजातम्॥

**अचि22.37**
भल्लातकद्वीपिसुधार्कमूलगुञ्जाफलत्र्यूषणशङ्खचूर्णम्।
तुत्थं सकुष्ठं लवणानि पञ्च क्षारद्वयं लाङ्गलिकां च पक्त्वा॥

**अचि22.38**
स्नुगर्कदुग्धे तद्विदधीत लेपम्।
कुष्ठे किलासे तिलकालकेषु मशेषु दुर्नामसु चर्मकीले॥

**अचि22.39**
शुध्या शोणितमोक्षैर्विरूक्षणैर्भक्षणैश्च सक्तूनाम्।
श्वित्रं कस्यचिदेव प्रशाम्यति क्षीणपापस्य॥

**अचि22.40**
कृमिचिकित्सितम्।
स्निग्धस्विन्ने गुडक्षीरमत्स्याद्यैः कृमिणोदरे।
उत्क्लेशितक्रिमिकफे शर्बरीं तां सुखोषिते॥

**अचि22.41**
सुरसादिगणं मूत्रे क्वाथयित्वार्धवारिणि।
तं कषायं कणागालाकृमिजित्कल्कयोजितम्।
सतैलस्वर्जिकाक्षारं युञ्ज्याद्वस्तिं ततोऽहनि॥

**अचि22.42**
तस्मिन्नेव निरूढं तं पाययेत विरेचनम्।
त्रिवृत्कल्कं फलकणाकषायालोडितं ततः।
ऊर्ध्वाधःशोधिते कुर्यात् पञ्चकोलयुतं क्रमम्॥

**अचि22.43**
कटुतिक्तकषायाणां कषायैः परिषेचनम्।
काले विडङ्गतैलेन ततस्तमनुवासयेत्॥

**अचि22.44**
शिरोरोगनिषेधोक्तमाचरेन्मूर्धगेष्वनु।
उद्रिक्ततिक्तकटुकमल्पस्नेहं च भोजनम्॥

**अचि22.45**
विडङ्गकृष्णामरिचपिप्पलीमूलशिग्रुभिः।
पिबेत् सस्वर्जिकाक्षारैर्यवागूं तक्रसाधिताम्॥

**अचि22.46**
रसं शिरीषकिणिहीपारिभद्रककेम्बुकात्।
पलाशबीजपत्तूरपूतीकाद्वा पृथक् पिबेत्।
सक्षौद्रं सुरसादीन् वा लिह्यात् क्षौद्रयुतान् पृथक्॥

**अचि22.47**
शतकृत्वोऽश्वविट्चूर्णं विडङ्गक्वाथभावितम्।
कृमिमान्मधुना लिह्यात् भावितं वा वरारसैः।
शिरोगतेषु क्रिमिषु चूर्णं प्रधमनं च तत्॥

**अचि22.48**
आखुकर्णीकिसलयैः सुपिष्टैः पिष्टमिश्रितैः।
पक्त्वा पूपलिकां खादेत् धान्याम्लं च पिबेदनु॥

**अचि22.49**
सपञ्चकोललवणमसान्द्रं तक्रमेव वा।
नीपमार्कवनिर्गुण्डीपल्लवेष्वप्ययं विधिः॥

**अचि22.50**
विडङ्गचूर्णमिश्रैर्वा पिष्टैर्भक्ष्यान् प्रकल्पयेत्।
विडङ्गतण्डुलैर्युक्तमर्धांशैरातपे स्थितम्॥

**अचि22.51**
दिनमारुष्करं तैलं पाने बस्तौ च योजयेत्।
सुराह्वसरलस्नेहं पृथगेवं च कल्पयेत्॥

**अचि22.52**
तिल्वकोद्दालकपले त्रिवृच्छ्यामे तदर्धतः।
दन्तीद्रवन्त्यावर्धेन तदर्धे चव्यचित्रकौ॥

**अचि22.53**
पिष्ट्वा विडङ्गयूषेण तेन भावितपीडितात्।
तैलप्रस्थं तिलात्साध्यं क्रिमिघ्नद्विगुणे रसे।
तच्छोधनं पिबेत् काले विदध्याच्चानुवासनम्॥

**अचि22.54**
कोशातकीकरञ्जोमासर्षपस्नेहकल्पनम्।
कृत्वा तेनैव विधिना पाययेदुदरक्रिमिम्॥

**अचि22.55**
पुरीषजेषु सुतरां दद्याद्वस्तिविरेचने।
शिरोविरेकं वमनं शमनं कफजन्मसु॥

**अचि22.56**
रक्तजानां प्रतीकारं कुर्यात् कुष्ठचिकित्सितम्।
इन्द्रलुप्तविधिश्चात्र विधेयो रोमभोजिषु॥

**अचि22.57**
क्षीराणि मांसानि घृतं गुडं च दधीनि शाकानि च पर्णवन्ति।
समासतोऽम्लान्मधुरान्नसांश्च क्रिमीन् जिघांसुः परिवर्जयेच्च॥
॥इति द्वाविंशोऽध्यायः॥

अथ त्रयोविंशोऽध्यायः।

**अचि23.1**
अथातो वातव्याधिचिकित्सितं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अचि23.2**
सर्वेषु केवलानिलविकारेष्वन्तर्बहिः स्नेहस्वेदौ साल्वलेनोपनाहो निवातं स्थानं प्रावरणानि दशमूलक्वाथसिद्धा महास्नेहप्रगाढाः स्निग्धा दध्यम्ला नागरपिप्पलीतीक्ष्णा ग्राम्यानूपौदकशिरःपिशितरसाः पयांसि यूषाः प्रीणनानि चान्नानि।
तैरेव च मांसैर्महास्नेहसंसृष्टैस्तदक्तानामभीक्ष्णं पिण्डादिस्वेदाः॥

**अचि23.3**
अपि च।
कोलकुलत्थामरतरुयवमिसिमाषातसीवचाकुष्ठम्।
रास्नातैलफलानि च वातजिदुत्कारिकाम्लोष्णा॥

**अचि23.4**
बिडालनकुलोष्ट्रसृगालादिचर्मभिर्बन्धः।
स्निग्धा बस्तयो नावनानि च प्रयोज्यानि।
दोषोपक्रमणीयं चेक्षेत॥

**अचि23.5**
स्निग्धस्विन्नस्य हि तोदभेदायामशूलादयो वातविकाराः शीघ्रमुपशाम्यन्ति।
स्नेहश्च धातून् पुष्णाति बलं च देहे जनयति।
तस्मात् पुनः पुनः स्नेहस्वेदौ शीलयेत्।
तन्मृदूकृते च कोष्ठे नावतिष्ठन्त्यनिलामयाः॥

**अचि23.6**
यदि तु सदोषत्वान्न निवर्तन्ते ततः सर्वशरीरगेऽपि वायौ विशेषतः पक्वाशयाश्रिते मृदुस्नेहविरेचनं तिल्वकसर्पिः सातलाघृतमैरण्डतैलं वा क्षीरेण दद्यात्।
एवं हि विशुद्धस्रोतसोऽनावृतः पवनो विचरन्नाशु शान्तिमेति॥

**अचि23.7**
अपि च।
स्निग्धाम्ललवणोष्णाद्यैराहारैर्हि मलश्चितः।
स्रोतो बध्वानिलं रुन्ध्यात्तस्मात्तमनुलोमयेत्॥

**अचि23.8**
अथ दुर्बले विरेच्ये निरूहं पाचनीयदीपनीयद्रव्ययुक्तमेवंविधं च भोज्यम्।
भोज्ययुक्तं वा स्रंसनमवचारयेत्।
विशुद्धस्य च समिद्धेऽग्नावसकृत् स्नेहस्वेदौ स्वाद्वम्ललवणं चान्नपानम्।
एवमप्यनिवृतावपीडकस्नेहान् बस्तिकर्म च प्रयोजयेत्॥

**अचि23.9**
आमाशयगते कृतवमनस्य षड्धरणं चूर्णं परतश्च यथार्हं स्नेहादीन्।
नाभिदेशमाश्रिते बिल्वशलाटुभिः सिद्धान् मत्स्यान्।
अशेषकोष्ठाश्रिते पुनरर्शोग्रहणीविहितमाममलपाचनं क्षारोपयोगानन्तर्गुल्मोपक्रमं च प्रयुञ्जीत।
हृदयस्थे अंशुमत्या शृतं पयः॥

**अचि23.10**
श्रोत्रादिगते शिरोगते च विशेषेण स्नैहिकं नस्यं धूमं शिरोबस्तिमर्दनालेपनान्यथास्वं च स्रोतसां प्रीणनम्॥

**अचि23.11**
त्वचि स्थितेऽभ्यङ्गस्वेदनिवातानि।
रक्ते शीतप्रदेहविरेकरक्तमोक्षाः।
मांसमेदसोर्विरेकास्थापनशमनानि।
अस्थिमज्ज्ञोरन्तर्बहिःस्नेहाः।
शुक्रप्राप्ते हर्षः शुक्रलं चान्नपानम्।
विबद्धे तु शुक्रे विरेचनम्।
ततोऽनुबन्धेऽनन्तरोक्तां क्रियां कुर्यात् पुत्रकामीयं चेक्षेत॥

**अचि23.12**
शुष्यति तु गर्भे बालेषु च यष्टीमधुककाश्मर्यफलसारिवाशर्कराशृतं पयो दद्यात्।
मांसादमांसरसांश्च बृंहणीयस्नेहयुक्तान्॥

**अचि23.13**
सिरास्नावसन्धिप्राप्तेऽभ्यङ्गमर्दनस्वेदोपनाहबन्धाग्निकर्माणि।
सङ्कोचे माषसैन्धवसाधितं तैलमभ्यङ्गः।

स्वापे बहुशो रक्तावसेचनम्।
न त्वङ्गम्लानौ शोषभयात्।
सुतरक्तस्य तैललवणागारधूमैः प्रदेहः॥

**अचि23.14**
अथापतानकिनमस्रस्ताक्षमस्तब्धलाङ्गुलमवेदनमस्वेदनमप्रलापिनमखट्वाघातिनमबहिरायामिनं चोपक्रमेत॥

**अचि23.15**
तत्र प्रागेव स्निग्धस्विन्नाङ्गं व्योषविडङ्गश्वेतमरिचैरन्यैश्च तीक्ष्णैः शिरोविरेचनैः स्रोतोविशुद्धये कृतनस्यमनन्तरं चैनं विदार्यादिक्वाथमांसरसक्षीरदधिविपक्वं सर्पिरच्छं पाययेत्।
तथा नातिमात्रमनिलः प्रसरति॥

**अचि23.16**
ततो भद्रदार्वादिवर्गं वातघ्नमाहृत्य सयवकोलकुलत्थं सानूपमांसं च निष्क्वाथ्य तत्कषायेणाम्लक्षीरवता मधुरवर्गप्रतीवापं महास्नेहं विपचेत्।
तमपतानकिनमभ्यङ्गपरिषेकावगाहपानभोजनानुवासननावनेषु विदध्यात्॥

**अचि23.17**
बलीयसि च वाते सुखोष्णकरीषपूर्णे कूपे निखन्यादामुखम्।
तप्तायां वा रथकारचुल्यां शिलायां वा सुरापरिषिक्तायां शाययेत् पलालावच्छन्नम्।
स्वेदयेद्वा पिण्डेन।
मूलकोरुबूकस्फूर्जातकार्कसप्तलाशङ्खिनीस्वरससिद्धं वा तलमभ्यङ्गादिषु योज्यम् अभुक्तवता चैतत् पीतमम्लदधिमरिचवचायुक्तमाक्षेपकमपहन्ति॥

**अचि23.18**
तिलपीडनोपकरणद्रव्याण्यल्पकालतैलपरिपीतान्यवक्षुद्य महति कटाहे पानीयेनाप्लाव्य क्वाथयेदास्नेहोपगमात्।
ततस्तत् स्नेहमम्भस उपरिष्टात् पाणिशरावयोरन्यतरेणादाय वातघ्नौषधदत्तप्रतीवापं स्नेहपाककल्पेन पचेत्।
एतदणुतैलं सर्ववातविकारहरम्।
अणुतैलद्रव्येभ्यो निषपद्यत इत्यणुतैलम्॥

**अचि23.19**
वेगान्तरेषु च तीक्ष्णान्यवपीडानि प्रधमनानि वासकृद्दद्यात्।
तथास्य श्लेष्मापगमनेन श्वसनविमोक्षात् संज्ञा पुनः पुनर्नोपरुध्यते।
कुक्कुटकुलीरशिंशुमारवराहवसाः पाययेत्।
यवकोलकुलत्थमूलकदधिघृततैलसिद्धां च यवागूम् सर्वाकारं च गतवेगः स्नेहविरेचनास्थापनानुवासनानि सेवेत॥

**अचि23.20**
त्रिवृद्दन्तीसुवर्णक्षीरीशङ्खिनीविडङ्गत्रिफलानामक्षसमाः कल्काः बिल्वमात्रकं तिल्वकमूलानां त्रिफलारसदधिपात्रे द्वे घृतपात्रमकं सर्वमैकध्यं प्रतिसंसृज्य विपचेदेतत्तिल्वकसर्पिः स्नेहविरेचनमनिलरोगेषु।
तिल्वकविधिरेव चाशोकरम्यकयोर्द्रष्टव्यः।
शुद्धवातपतानकविधानमेतत्।
संसृष्टे यथासंसर्गम्॥

**अचि23.21**
सकफे तु वाते तुल्बुरुफलाभयाहिङ्गुपुष्करमूललवणत्रयचूर्णं यवक्वाथेन कृत्पार्श्वार्तिहरं पिबेत्।
हिङ्गुनागरदाडिमाम्लवेतससौवर्चलचूर्णं वा।
मुस्तपिप्पलीनागरातिविषाबिभीतकभार्ङ्गीचूर्णं वा मद्येनोष्णाम्बुना वापतन्त्रककासहृद्रोगहरम्।
सौवर्चलाभयाव्योषसिद्धं सर्पिः।
रास्नाम्लवेतससैन्धववचाहरातकाकल्कश्च घृतभृष्टो भक्षितः॥

**अचि23.22**
शुण्ठीचित्रकभार्ङ्गीशुकनासानिचुलमहावल्लीबृहतीद्वयकाकमाचीपुनर्नवैरक्षमात्रैर्घृतप्रस्थं साधयेत्।
तत् पीतं परमपतन्त्रकश्वासहिध्माहृद्रोगघ्नम्।
पथ्याशतार्धकल्केन वा सौवर्चलपलद्वययुक्तं चतुर्गुणक्षीरं घृतप्रस्थं विपाचयेत् तदपतन्त्रकघ्नम्।
न चास्य शोधनार्थं बस्तयस्तीक्ष्णाः प्रयोक्तव्याः।
हृद्रोगचिकित्सितं चेक्षते॥

**अचि23.23**
अन्तर्बहिरायामावेकायामवत् साधयेत्।
तैलद्रोण्यां चात्र शयनम्।
अन्तरायामश्चैतयोर्घोरतरः अपि च॥

**अचि23.24**
विवर्णदन्तवदनः स्रस्ताङ्गो नष्टचेतनः।
प्रस्विद्यंश्च धनुष्कम्पी दशरात्रं न जीवति॥

**अचि23.25**
वेगेष्वतोऽन्यथा जीवेन्मन्देषु विनतो जडः।
खञ्जः कुणिः पक्षहतः पङ्गुलो विकलोथवा॥

**अचि23.26**
हनुस्तम्भमप्यर्दितवच्चिकित्सेत्।
स्वेदयित्वा च हनू स्तब्धौ स्रस्तौ स्वस्थानमानीय पाणिभ्यां पीडयेत्।
विवृतास्ये चिबुकं चोन्नामयेत्।
संवृतास्ये च नामयेत्॥

**अचि23.27**
जिह्वास्तम्भे सामान्योक्तो विधिरेकायामे च।
तथा महातृणपञ्चमूलविदार्यादिजीवनीयानि मेद्यमांसान्यौदककन्दांश्च द्विगुणोदके क्षीरशेषं निष्क्वाथ्य परिस्राव्य तैलप्रस्थेनोन्मिश्रं पुनरधिश्रयेत्।
क्षीरानुगमे चावतार्य शीतं मन्थयेत्।
ततः स्नेहमादाय पूर्ववद्विपचेत्।
एतत् क्षीरतैलं पानाभ्यङ्गादिषु विधेयम्।
तैलविहीनमिदमेव क्षीरघृतमक्षितर्पणम्॥

**अचि23.28**
तिल्वकफलसिद्धक्षीरदध्ना च सह मांसरसान् कल्पयेत्।
यथोक्ताश्च यवागूः स्निग्धाश्च नस्यधूमकवलग्रहाः प्रयोज्याः।
कृष्णभूमिकेदारं रोहिणीकाष्ठैर्नातिशुष्कैर्दाहयेत्।
उपलिप्य च गोमयेन पुनः खदिरकाष्ठैर्दग्ध्वा तद्भस्मापनीय तत्र शीतीभूते तैलं निषेचयेत्।
उषितं च निशां खानयेत्।
तामनुगततैलां मृत्तिकामादाय पञ्चमूलेन सह क्वाथयेत्।
तमपि क्वाथं परिस्रुतमष्टगुणेन पयसा तैलावशेषं पाचयेत्।
एतदप्यणुतैलं नावनात् सर्ववातव्याधिहरम्॥

**अचि23.29**
तद्वच्च पञ्चमूलकाष्ठैर्दग्ध्वा भस्मापनीय विदार्यादिसिद्धेन तैलेन शतशो निषिच्य पूर्ववन्मृदमादायोष्णोदकवति कटाहेऽभ्यासिच्य तैलं पाणिना पिचुना वा गृहीत्वा वातहरौषधक्वाथमांसरसक्षीराम्लभागसहस्रेण सहस्रपाकं साधयेद्यावता कालेन शक्नुयात् पक्तुं प्रतिवापश्चात्र हैमवता दक्षिणापथगा चाश्वगन्धा वातघ्नानि च द्रव्याणि।
सिध्यति चास्मिन् शङ्खमाध्मापयेत्।
दुन्दुभीन् वादयेत्।
ब्राह्मणानध्यापयेत् भोजयेच्च।
छत्रं धारयेत्।
बालव्यजनैश्च वीजयेत्।
तत्सिद्धं नस्यपानाभ्यङ्गबस्तिषु प्रयुञ्जीत।
एतत्सहस्रपाकमनिवार्यवीर्यं तैलमेवं भागशतपक्वं शतपाकम्।
अभीक्ष्णं च स्वेदयेत्।
ततः स्निग्धस्विन्नस्य श्लक्ष्णस्य मृदुनश्चर्मणो वाससो वा चतुरङ्गुलविस्तृताभिः पट्टिकाभिर्वक्रीभूतप्रदेशानवगूहन् सर्वतो वेष्टयेत् बध्नीयात्।
निशि बध्वा दिवा मुञ्चेद्दिवा वा जिशि।
मोक्षान्ते चोत्कारिकाभिः सुस्निग्धाभिर्वातघ्नप्रक्लृप्ताभिः स्वेदयेत्।
अव्यथं च प्रतिलोमं प्रमार्जयन्नृजु कुर्वंश्च पुनर्बध्नीयात्।
एवं सप्तरात्रम्।
सशोफे तु वमनमाचरेत्।
सदाहरागे बलवतः सिराव्यधम्।
घृतक्षीरबस्तिसेकान् वातपित्तघ्नक्रियां च॥

**अचि23.30**
एकाङ्गरोगिणमम्लानगात्रं स्नेहस्वेदोपपन्नं मृदुना संशोधनेन संशोध्यानुवास्यास्थाप्य चाक्षेपकविधानेनोपचरेत्।
विशेषतो बलातैलमनुवासनार्थे।
दोषसंसर्गे यथासंसर्गम्।
कुक्कुटीं वा रसायनविधानेनोपयुञ्जीत।
अपबाहुके नाचनमूर्ध्वभक्तं च निरामे स्नेहपानम्।
विश्वभीप्रभृतिषु पाददाहान्तेषु यथोक्तां सिरां विध्वा वातव्याधिवदुपाचरेत्॥

**अचि23.31**
ऊरुस्तम्भे तु स्नेहासृक्स्राववमनाविरेचनबस्तिकर्माणि परिहरेत्।
आमश्लेष्मभ्यां सह तेषां विरोधात्।
ऊरुलीनानां वायुना स्तब्धानां च वमनादिभिरूर्ध्वं नेतुमम्भसामिव निम्नात् स्थलमशक्यत्वात्।
ततस्तत्र तु बहुशः शमनशोषणानि युक्त्यावेक्ष्य युञ्जीत।
रूक्षोपचारान् यवश्यामाककोद्रवोद्दालकमलवणमल्पतैलसिद्धं शाकं क्षारारिष्टमधूदकानि च शीलयेत्॥

**अचि23.32**
स सैन्धवं वचादिं हरिद्रादिं वत्सकादिं वा।
षड्धरणं वा हरीतकीः पिप्पलीर्वा।
शार्ङ्गेष्टामदनदन्तीवत्सकं वा।
स्वादुकण्टकारग्वधदार्वीमरुबकपाठाकरञ्जकूलकचूर्णं वा सक्षौद्रं मस्तुना पिबेत्।
चित्रकदेवदारुकुष्ठपाठातिक्तकरोहिणीर्वा मधुना लिह्यात्।
त्रिफलापिप्पलीमुस्तचविकाकटुरोहिणीर्वा।
स्वेदांश्च रूक्षान् कुर्यात्॥

**अचि23.33**
अत्यपतृप्तं तु रूक्षं क्षाममनिद्रं जाङ्गलरसैः शालिभिश्च तर्पयेत्।
सर्षपतैलं वा सरलकुष्ठश्रीवेष्टकसुरदारुनागकेसराजगन्धासिद्धं सक्षौद्रं पिबेत्।
ससैन्धवपलं शुण्ठीचित्रकपिप्पलीमूलानां पृथक् द्विपलं दश भल्लातकास्थीनि कल्कीकृत्यैकध्यमारनालाढकेन सह तैलप्रस्थं पचेत्।
तत्सर्ववातविकारेषु पथ्यं विशेषादूरुस्तम्भार्शोगृध्रसीघ्नमपत्यदं च।
बहिरपि श्लेष्मक्षपणाय क्षौद्रसर्षपकरञ्जफलवल्मीकमृद्गोमूत्रैरुष्णैर्लेपयेत्।
सौभाञ्जनतर्कारीद्वयसरलार्जुनकरञ्जाढकीगोक्षुरकैर्लेपोन्मर्दनसेकान् कुर्यात्।
व्यायामैश्च विविधैर्मेदः क्षपयेत्।
स्थलान्युल्लङ्घयेत्।
प्रतिस्रोतः सरितमव्यालां तरेत्।
एवमूरुस्तम्भो हि शुष्के श्लेष्मणि प्रशाम्यतीति॥

**अचि23.34**
भवति चात्र।
सहचरं सुरदारु सनागरं क्वथितमम्भसि तैलविमिश्रितम्।
पवनपीडितदेहगतिः पिबन् द्रुतविलम्बितगो भवतीच्छया॥

**अचि23.35**
रास्नामहौषधद्वीप्पिप्पलीशठिपौष्करम्।
पिष्ट्वा विपाचयेत्सर्पिर्वातरोगहरं परम्॥

**अचि23.36**
निम्बामृतावृषपटोलनिदिग्धिकानां भागान् पृथग्दशपलान् विपचेद्घटेऽपाम्।
अष्टांशशेषितरसेन पुनश्च तेन प्रस्थं घृतस्य विपचेत् पिचुभागकल्कैः॥

**अचि23.37**
पाठाविडङ्गसुरदारुगजोपकुल्याद्विक्षारनागरनिशामिसिचव्यकुष्ठैः।
तेजोवतीमरिचवत्सकदीप्यकाग्निरोहिण्यरुष्करवचाकणमूलयुक्तैः॥

**अचि23.38**
मञ्जिष्ठयातिविषया विषया यवान्या संशुद्धगुग्गुलुपलैरपि पञ्चसङ्ख्यैः।
तत् सेवितं विधमति प्रबलं समीरं सन्ध्यस्थिमज्जगतमप्यथ कुष्ठमीदृक्॥

**अचि23.39**
नाडीव्रणार्बुदभगन्दरगण्डमाला जत्रूर्ध्वसर्वगदगुल्मगुदोत्थमेहान्।
यक्ष्मारुचिश्वसनपीनसकासशोषहृत्पाण्डुरोगमदविद्रधिवातरक्तम्॥

**अचि23.40**
द्रोणेऽम्भसः पचेद्भागान् दशमूलाच्चतुष्पलान्।
यवकोलकुलत्थानां भागैः प्रस्थोन्मितैः सह॥

**अचि23.41**
पादशेषे रसे पिष्टैर्जीवनीयैः सशर्करैः।
तद्वत्खर्जूरकाश्मर्यद्राक्षाबदरफल्गुभिः॥

**अचि23.42**
सक्षीरैः सर्पिषः प्रस्थः सिद्धः केवलवातनुत्।
योज्यो निरत्ययः पाननस्याभ्यञ्जनबस्तिषु॥

**अचि23.43**
बलाबिल्वशृते क्षीरे घृतमण्डं विपाचयेत्।
तस्य शुक्तिः प्रकुञ्चो वा नस्यं वाते शिरोगते॥

**अचि23.44**
तद्वत्सिद्धा वसा नक्रमत्स्यकूर्मबुलूकजा।
प्रत्यग्रा विधिनानेन नस्यपानेषु योजयेत्॥

**अचि23.45**
जीर्णं पिण्याकं पञ्चमूलं पृथक् च क्वाथं क्वाथाभ्यामेकतस्तैलमाभ्याम् क्षीरादष्टांशं पाचयेत्तेन पानाद्वाता नश्येयुः श्लेष्मयुक्ता विशेषात्॥

**अचि23.46**
समूलशाखस्य सहाचरस्य तुलां समेतां दशमूलतश्च।
अभीरुमूलाच्च तुलार्धमेतदष्टांशशेषं विपचेद्वहेऽपाम्॥

**अचि23.47**
तत्र सेव्यनखकुष्ठहिमैलास्पृक्प्रियङ्गुनलिकाम्बुशिलाजैः।
लोहितानलदलोहसुराह्वैः कोपनामिशितुरुष्कनतैश्च॥

**अचि23.48**
तुल्यक्षीरं पालिकैस्तैलपात्रं सिद्धं कृच्छ्रान् शीलितं हन्ति वातान्।
कम्पाक्षेपस्तम्भशोषादियुक्तान् गुल्मोन्मादौ पीनसान्योनिरोगान्॥

**अचि23.49**
केतकिमूलबलातिबलानां यद्वहलेन रसेन विपक्वम्।
तैलमनल्पतुषोदकयुक्तं मारुतमस्थिगतं तदपोहेत्॥

**अचि23.50**
तुलां लशुनकन्दस्य तुलार्धं जाङ्गलात् पलात्।
दशमूलाच्च विपचेद्भागान् पञ्चपलान् पृथक्॥

**अचि23.51**
तोयार्मणेण पादस्थे समं तैलं पयो दधि।
तत्र दद्यात् पलांशांश्च रास्नामधुकजीवकान्॥

**अचि23.52**
मिशिस्थिरामहामेदाचपलातिविषाबलाः।
काकोली पौष्करं मूलमश्वगन्धां च साधितम्॥

**अचि23.53**
तत्परं वातरोगघ्नं गुल्मानाहार्तिशूलनुत्।
भग्नजर्जरिताङ्गानां पथ्यमग्नेश्च दीपनम्॥

**अचि23.54**
समूलजालां विपचेत् प्रसारिणीं तुलोन्मितां पादधृते घटेऽम्भसः।
पृथक् सतैलं दधि तत्समं क्षिपेत् समं च ताभ्यां विजयां ततः पचेत्॥

**अचि23.55**
प्रसारिणीजीवकसिन्धुजन्मयष्ट्याह्वरास्नाग्निकयावशूकैः।
सग्रन्थिकाख्यैर्द्विपलैः सुपिष्टैः भल्लातकानां दशकैस्त्रिभीश्च॥

**अचि23.56**
शुण्ठीपलत्रययुतैर्विनिहन्ति पाननस्यादिभिस्तदखिलान् मरुतो विकारान् कुष्ठप्रमेहहतनाममनोविकारश्वासास्थिभङ्गजठरक्रिमिबीजदोषान्॥

**अचि23.57**
पचेत् सहाचरतुलां जलद्रोणचतुष्टये।
द्रोणशेषे समक्षीरे तत्र तैलाढकं पचेत्॥

**अचि23.58**
सहाचरस्य मूलानां कल्कितैर्दशाभिः पलैः।
अथवा नतषड्ग्रन्थास्थिराकुष्ठसुराह्वयात्॥

**अचि23.59**
सैलानलदशैलेयशताह्वारक्तचन्दनात्।
सिद्धेऽस्मिन् शर्कराचूर्णादष्टादशपलं क्षिपेत्॥

**अचि23.60**
भेडस्य संमतं तैलं तत् कृच्छ्रानिलामयान्।
वातकुण्डलिकोन्मादभूतापस्मारवर्ध्म च।
गुल्महृद्रोगदुर्नामयोनिरोगांश्च नाशयेत्॥

**अचि23.61**
श्वदंष्ट्रककषायस्य प्रस्थौ द्वौ पयसा समौ।
षट्पलं शृङ्गवेरस्य गुडस्य च पलाष्टकम्।
तैलप्रस्थं विपक्वं तद्दद्यात् सर्वानिलार्तिषु॥

**अचि23.62**
बलाशतं छिन्नरुहापादं रास्नाष्टभागिकम्।
जलाढकशते पक्त्वा शतभागाथिते रसे॥

**अचि23.63**
दधिमस्त्विक्षुनिर्यासशुक्तैस्तैलाढकं समैः।
पचेत्साजपयोर्धांशं कल्कैरेभिः पलोन्मितैः॥

**अचि23.64**
शठीसरलदार्वेलामञ्जिष्ठागरुचन्दनैः।
पद्मकातिबलामुस्तासूप्यपर्णीहरेणुभिः॥

**अचि23.65**
यष्ट्याह्वसुरसव्याघ्रनखर्षभकजीवकैः।
पलाशरसकस्तूरीनलिकाजातिकोशकैः॥

**अचि23.66**
स्पृक्काकुङ्कुमशैलेयजातीकटुफलाम्बुभिः।
त्वक्कुन्दुरुककर्पूरतुरुष्कश्रीनिवासकैः॥

**अचि23.67**
लवङ्गनखकंकोलकुष्ठमांसीप्रियङ्गुभिः।
स्थौणेयतगरध्यामवचामदनकप्लवैः॥

**अचि23.68**
सनागकेसरैः सिद्धे दद्याच्चात्रावतारिते।
पत्रकल्कं ततः पूतं विधिना तत् प्रयोजितम्॥

**अचि23.69**
श्वासं कासं ज्वरं मूर्छां छर्दिं तृष्णां क्षतं क्षयम्।
प्लीहशोषावपस्मारमलक्ष्मीं च प्रणाशयेत्।
बलातैलमिदं श्रेष्ठं वातव्याधिविनाशनम्॥

**अचि23.70**
अमृतायास्तुलाः पञ्च पचेतोयवहद्वये।
पादशेषे समक्षीरं तैलस्य द्व्याढकं पचेत्॥

**अचि23.71**
एलामांसीनतोशीरसारिवाकुष्ठचन्दनैः।
शतपुष्पाबलामेदामहामेदर्धिजीवकैः॥

**अचि23.72**
काकोलीक्षीरकाकोलीश्रावण्यतिबलानखैः।
महाश्रावणिजीवन्तीविदारीकपिकच्छुभिः॥

**अचि23.73**
शतावरीतामलकीकर्कटाह्वाहरेणुभिः।
वचागोक्षुरकैरण्डारास्नाकालासहाचरैः॥

**अचि23.74**
वीरामहैलर्षभकत्रिदशाह्वैश्च कार्षिकैः।
मञ्जिष्ठायास्त्रिकर्षेण मधुकाष्टपलेन च॥

**अचि23.75**
कल्कैस्तत्क्षीणवीर्याग्निबलसम्मूढचेतसः।
उन्मादारत्यपस्मारैरार्तांश्च प्रकृतिं नयेत्॥

**अचि23.76**
वातव्याधिहरं श्रेष्ठं तैलाग्र्यममृताह्वयम्।
रास्नासहस्रनिर्यूहे तैलद्रोणं विपाचयेत्।
गन्धैर्हैमवतैः पिष्टैरेलाद्यैश्चानिलार्तिनुत्।
एष कल्पोऽश्वगन्धाया बलातिबलयोरपि॥

**अचि23.77**
क्वाथकल्कपयोभिर्वा बलादीनां पृथक् पचेत्।
यवकोलकुलत्थानां मत्स्यानां शिग्रुबिल्वयोः॥

**अचि23.78**
रसेन मूलकानां च तैलं दधिपयोन्वितम्।
साधयेत्तत् परं सर्वपवनव्याधिभेषजम्॥

**अचि23.79**
यच्च शीतज्वरे तैलमगर्वायमुदाहृतम्।
सहस्रशतशः पक्त्वा सिद्धं वातामयापहम्॥

**अचि23.80**
फलत्रिकस्य प्रस्थं स्यात् कुलत्थं कुडवद्वयम्।
कृष्णगन्धात्वगाढक्योः पृथक् पञ्चपलानि तु॥

**अचि23.81**
रास्नाचित्रकयोर्द्वे द्वे दशमूलात् पलं पलम्।
जलद्रोणे पचेत् पादशेषे प्रस्थोन्मितं पृथक्॥

**अचि23.82**
सुरारनालदध्यम्लसौवीरकतुषोदकम्।
कोलदाडिमवृक्षाम्लरसं क्षीरं वसां नवाम्॥

**अचि23.83**
मज्जानं तैलमाज्यं च जीवनीयपलानि षट्।
कल्कमेकत्र तत् सिद्धं सिद्धं शुद्धानिलामये॥

**अचि23.84**
सिरापर्वास्थिगे वाते सर्वाङ्गैकाङ्गरोगिषु।
वेपनाक्षेपशूलेषु तमभ्यङ्गं प्रयोजयेत्॥

**अचि23.85**
आनूपजाङ्गलोत्थानामस्थीनि विपचेज्जले।
तत्स्नेहं दशमूलस्य कषायेण पुनः पचेत्॥

**अचि23.86**
जीवकर्षभकास्फोतविदारीकपिकच्छुभिः।
वातघ्नैर्दीपनीयैश्च कल्कैर्द्विक्षीरभागिकैः॥

**अचि23.87**
सिरापर्वास्थिकोष्ठस्थं पानाद्यैर्हन्ति तच्चलम्।
क्षीणौजोमज्जशुक्राणामेतत् स्यादमृतोपमम्॥

**अचि23.88**
पाने नस्येऽन्वासनेऽभ्यञ्जने च स्नेहाः काले सम्यगेते प्रयुक्ताः।
दुष्टान् वातानाशु शान्तिं नयेयुर्वन्ध्या नरीः पुत्रभाजश्च कुर्युः॥

**अचि23.89**
स्नेहस्वेदैर्द्रुतः श्लेष्मा यदा पक्वाशये स्थितः।
पित्तं वा दर्शयेद्रूपं बस्तिभिस्तं विनिर्जयेत्॥
॥इति त्रयोविंशोऽध्यायः॥

अतह् चतुर्विंशोऽध्यायः।

**अचि24.1**
अथातो वातशोणितचिकित्सितं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अचि24.2**
वातशोणितिनः स्निग्धस्य दाहरागरुक्तोदेषु जलौकोभिः कण्डूपतापस्वापचिमिचिमायनेषु शृङ्गतुम्बैर्दशाद्देशान्तरं सञ्चरत् सिरया प्रच्छानेन वा दुष्टमसृगसकृदल्पमवसेचयेत्॥

**अचि24.3**
असृक्क्षये हि गम्भीरशोफस्तम्भकम्पग्लानि सङ्गोचादयः स्युः।
सिराव्यधोक्ताश्च मूर्छादयः।
नैव च स्रावयेदङ्गग्लानौ रूक्षे वातोत्तरं च रक्तम्।
ततश्च पुनः स्नेहयुक्तानि रूक्षाणि वा विरेचनानि बस्तिकर्म चासकृत् प्रयोजयेत्॥

**अचि24.4**
अथ वातप्रबले पुराणघृतं पिबेच्छतावरीघृतं वा॥

**अचि24.5**
दशमूलपुनर्नवद्वयैरण्डमुद्गपर्णीमाषपर्णीमहामेदाशतावरीरास्नावाक्पुष्पीशङ्खपुष्पीबलातिबला द्विपलांशाः पृथक् जलद्रोणे विपाचयेत्।
पादशेषे च तत्तुल्यानि पृथक् छागमांसामलकेक्षुरसघृतक्षीराणि संयोज्य कल्कं च पिप्पलीमरिचकाश्मर्यफलोत्पलद्विमेदाद्विश्रावणीवीरापुनर्नवनागरसमङ्गातुगाक्षीरीक्षीरकाकोलीद्राक्षाक्षोडपद्मबीजशृङ्गाटकनिकोचकभव्योरुमाणखर्जूरवाताममुञ्जाताभिषुकाणां पुनः पचेत्।

एतज्जीवनीयाख्यं सर्पिर्वातविकारान् विशेषतश्च पाण्डुरोगज्वरापस्मारभगन्दरश्वासकासहिध्मास्वरभेदपार्श्वशूलयकृत्प्लीहमूत्रसङ्गाश्मरीवातशोणितसर्वाङ्गैकाङ्गरोगानपहरति।
बल्यं वर्ण्यं वृष्यं चक्षुष्यं पुत्रदं च।
तैलसात्म्यो वा क्षीरसितोपेतं तैलं पिबेत्॥

**अचि24.6**
अथवा शतावरीमयूरकक्षीरविदारीबलाद्वयतृणपञ्चमूलक्वाथे पद्मकादिगर्भं साधितम्।
बलातैलं वा वातव्याध्युक्तम्।
शतपाकं वा।
वातहरसिद्धेन पयसाम्लैर्वा स्पर्शसुखं परिषेकं कुर्वीत॥

**अचि24.7**
प्रत्येकशो यवगोधूमतिलमुद्गमाषेषु काकोलीजीवकर्षभकबलातिबलातिबलाशृगालविन्नामेषशृङ्गीप्रियालसितोपलासुरभिवचाकशेरुकल्कमिश्रेषूपनाहार्थं सर्पिस्तैलवसामज्जदुग्धसिद्धान् पञ्च पायसानुपकल्पयेत्।
स्नैहिकफलमज्जोत्कारिकां वा। बिल्वपेशिकातगरदेवदारुसरलरास्नाहरेणुकुष्ठशतपुष्पाभिर्वा दधिमस्तुयुक्ताभिरुपनाहः॥

**अचि24.8**
यवमधुकैरण्डबीजपुनर्नवैर्धान्याम्बुपिष्टैः प्रलेपः।
मातुलुङ्गाम्लवेतससैन्धवघृतमिश्रं वा शिग्रुमूलम्।
सहचरजीवन्तीमूलं वा।
रास्नामधुकगुडूचीबलाद्वयजीवकर्षभकल्कक्षीरसिद्धं ससिक्थकं सर्पिरभ्यङ्गः॥

**अचि24.9**
पित्तप्रबले द्राक्षारेवतफलपयस्यामधुकचन्दनकाश्मर्यकषायं शर्करामधुमधुरं पाययेत्।
शतावरीपटोलत्रिफलागुडूचीकटुकाकषायं वा।
स्वादुतिक्तवर्गसिद्धं च सर्पिः क्षीरं च।
रास्नाभीरुदशमूलबलासिद्धं वा।
धारोष्णं वा।
विरेकार्थे त्रिवृच्चूर्णयुक्तं वा।
क्षीराहारो वा क्षीरेणैरण्डतैलं बहुशः पिबेत्।
अमृतारग्वधाटरूषककषायेण वा।
क्षीरबस्तीन् वा सघृतान् दद्यात्॥

**अचि24.10**
शीतैश्च चन्दनपद्मकबिसमृणालादिभिः शृतेन क्षीरेण परिषेकः।
क्षीरेक्षुरसमधुशर्करातण्डुलोदकेन वा।
द्राक्षामधुककाश्मर्ययुतेन वा।
धान्याम्लेन वा जीवनीयसिद्धेन वा सर्पिषा शतधौतेन वा॥

**अचि24.11**
मसूरोशीरप्रपौण्डरीकदार्वीमधुकमञ्जिष्ठाचन्दनोत्पलपद्मकैरकासक्तुभिः सघृतक्षीरशर्करैः प्रदेहे दाहरागरुग्विसर्पशोफहरः।
गोधूमचूर्णो वा छागक्षीरसंयुक्तो लेपः।
तिलाश्च पयसा पिष्टाः भृष्टाः कपाले पुनः पयसि प्रक्षिप्य निर्वापिताः॥

**अचि24.12**
रक्तप्रबलेऽप्येवं बहुशश्च शोणितमवसेचयेत्॥

**अचि24.13**
श्लेष्मप्रबले धात्रीनिशामुस्ताकषायं मधुमधुरपिबेत्।
त्रिफलाकषायं वा।
मधुकशृङ्गिवेराभयाकटुरोहिणीनिर्यूहं वा।
यथार्हस्नेहपीतं च मृदु वामयेद्विरूक्षयेच्च।
न चातिसेकलेपान् दद्यात्॥

**अचि24.14**
निम्बसर्षपाश्वगन्धाक्षारतिलैः कोष्णैर्लेपः।
वचागारधूमद्विनिशाकुष्ठशतपुष्पाभिर्वा।
पुनर्नवेन वा सघृतेन।
तिलसर्षपातसीयवचूर्णो वा।
श्लेष्मातककपित्थमधुशिग्रुमिश्रः क्षारमूत्रपिष्टः कटुकस्कन्धसिद्धैः क्षारोदकतैलमूत्रैः सेकः॥

**अचि24.15**
संसर्गे मिश्रं यथोद्रेकं वा प्रतिकुर्यात्।
सर्वेषु च यथायथं गुडूचीं गुडहरीतकीं पिप्पलीवर्धमानं वा शीलयेद्बस्तिकर्म चाभीक्ष्णमिति।
भवति चात्र॥

**अचि24.16**
बाह्यमालेपनाभ्यङ्गपरिषेकावगाहनैः।
विरेकास्थापनस्नेहपानैरान्तरमाचरेत्॥

**अचि24.17**
सर्पिस्तैलवसामज्जपानाभ्यञ्जनबस्तिभिः।
लेपोपनाहसेकैश्च कोष्णैर्वातोत्तरं जयेत्॥

**अचि24.18**
विरेचनैर्घृतक्षीरपानसेचनबस्तिभिः।
पित्तरक्तोत्तरं वातरक्तं लेपैश्च शीतलैः॥

**अचि24.19**
वमनं मृदु नात्यर्थं स्नेहसेकादिलङ्घनम्।
कोष्णा लेपाश्च शस्यन्ते वातरक्ते कफोत्तरे॥

**अचि24.20**
वातश्लेष्मोत्तरे शीतैः प्रलिप्ते वातशोणिते।
विदाहशोफरुक्कण्डूविवृद्धिः स्तम्भनाद्भवेत्॥

**अचि24.21**
पित्तरक्तोत्तरे वातरक्ते लेपादयो हिमाः।
उष्णैः प्लोषोषरुग्रागस्वेदावदरणोद्भवः॥

**अचि24.22**
मधुयष्ट्याः पलशतात् कषाये पादशेषिते।
तैलाढकं समक्षीरं पचेत् कल्कैः पलोन्मितैः॥

**अचि24.23**
शतपुष्पावरीमूर्वापयस्याभीरुचन्दनैः।
स्थिराहंसपदीमांसीद्विमेदामधुपर्णिभिः॥

**अचि24.24**
काकोलीक्षीरकाकोलीतामलक्यर्धिपद्मकैः।
जीवन्तीजीवकर्षभत्वक्पत्रनखवालकैः॥

**अचि24.25**
प्रपौण्डरीकमञ्जिष्ठासारिवैन्द्रीवितुन्नकैः।
चतुष्प्रयोगं वातासृक्पित्तदाहज्वरार्तिनुत्॥

**अचि24.26**
मधुयष्ट्याः पलं दत्वा तैलप्रस्थं चतुर्गुणे।
क्षीरे पचेच्छतं वारांस्तदेवं मधुकाच्छते॥

**अचि24.27**
सिद्धं योज्यं तृड्डुन्मादश्वासकासविसर्पिषु।
हृत्पाण्डुरोगवातासृक्पित्तादिषु च पूर्ववत्॥

**अचि24.28**
कुपिते मार्गसंरोधान्मेदसो वा कफस्य वा।
अतिवृद्ध्यानिले शस्तं नादौ स्नेहनबृंहणम्॥

**अचि24.29**
कृत्वा तत्राढ्यवातोक्तं वातशोणितिकं ततः।
भेषजं स्नेहनं कुर्याद्यच्च रक्तप्रसादनम्॥

**अचि24.30**
गम्भीरे रक्तमाक्रान्तं स्याच्चेद्वातेन वर्जयेत्।
रक्तपित्तातिवृध्या तु पाकमाशु निगच्छति॥

**अचि24.31**
भिन्नं स्रवति तद्रक्तं विदग्धं पूयमेव वा।
तयोश्चिकित्सां व्रणवत् भेदशोधनरोपणीम्॥

**अचि24.32**
कुर्यादुपद्रवाणां च तस्मात्तस्माच्चिकित्सितात्।
प्राणादिकोपे युगपद्यथोद्दिष्टं यथामयम्।
यथासन्नं च भैषज्यं विकल्प्यं स्याद्यथाबलम्॥

**अचि24.33**
नीते निरामतां सामे स्वेदलङ्घनपाचनैः।
रूक्षैश्चालेपसेकाद्यैः कुर्यात् केवलवातनुत्॥

**अचि24.34**
वायौ पित्तावृते शीतामुष्णां च बहुशः क्रियाम्।
व्यत्यासाद्योजयेत्सर्पिर्जीवनीयं च पाययेत्॥

**अचि24.35**
धन्वमांसं यवः शालिर्विरेकः क्षीरवान्मृदुः।
सक्षीरा बस्तयः क्षीरं पञ्चमूलबलाशृतम्॥

**अचि24.36**
कालेऽनुवासनं तैलैर्मधुरौषधसाधितैः।
यष्टीमधुबलातैलघृतक्षीरैश्च सेचनम्।
पञ्चमूलकषायेण वारिणा शीतलेन वा॥

**अचि24.37**
कफावृते यवान्नानि जाङ्गला मृगपक्षिणः।
स्वेदास्तीक्ष्णा निरूहाश्च वमनं सविरेचनम्॥

**अचि24.38**
पुराणसर्पिस्तैलं च तिलसर्षपजं हितम्।
संसृष्टे कफपित्ताभ्यां पित्तमादौ विनिर्जयेत्॥

**अचि24.39**
कारयेद्रक्तसंसृष्टे वातशोणितिकीं क्रियाम्।
स्वेदाभ्यङ्गरसाः क्षीरं स्नेहो मांसावृते हितम्॥

**अचि24.40**
प्रमेहमेदोवातघ्नमाढ्यवाते भिषग्जितम्।
महास्नेहोऽस्थिमज्जस्थे पूर्वोक्तं रेतसावृते॥

**अचि24.41**
अन्नावृते पाचनीयं वमनं दीपनं लघु।
मूत्रावृते मूत्रलानि स्वेदाश्चोत्तरबस्तयः।
एरण्डतैलं वर्चस्थे बस्तिस्नेहाश्च भेदिनः॥

**अचि24.42**
कफपित्ताविरुद्धं यद्यच्च वातानुलोमनम्।
सर्वस्थानावृतेप्याशु तत्कार्यं मातरिश्वनि॥

**अचि24.43**
अनभिष्यन्दि च स्निग्धं स्रोतसां शुद्धिकारणम्।
यापना बस्तयः प्रायो मधुराः सानुवासनाः॥

**अचि24.44**
प्रसमीक्ष्य बलाधिक्यं मृदु कार्यं विरेचनम्।
रसायनानां सर्वेषामुपयोगः प्रशस्यते॥

**अचि24.45**
शिलाह्वस्य विशेषेण पयसा शुद्धगुग्गुलोः।
लेहो वा भार्गवस्तद्वदेकादशसिताशतः॥

**अचि24.46**
अपाने त्वावृते सर्वं दीपनं ग्राहि भेषजम्।
वातानुलोमनं कार्यं मूत्राशयविशोधनम्॥

**अचि24.47**
इति सङ्क्षेपतः प्रोक्तमावृतानां चिकित्सितम्।
प्राणाद्यानां भिषक् कुर्याद्वितर्क्य स्वयमेव तत्॥

**अचि24.48**
उदानं योजयेदूर्ध्वमपानं चानुलोमयेत्।
समानं शमयोद्विद्वांस्त्रिधा व्यानं च योजयेत्॥

**अचि24.49**
प्राणो रक्ष्यश्चतुर्भ्योऽपि तत्स्थितौ देहसंस्थितिः।
स्वं स्वं स्थानं नयेदेवं वृतान् वातान् विमार्गगान्॥

**अचि24.50**
सर्वं चावरणं पित्तरक्तसंसर्गवर्जितम्।
रसायनविधानेन लघुनो हन्ति शीलितः॥

**अचि24.51**
पित्तावृते पित्तहरं मरुतश्चानुलोमनम्।
रक्तावृतेऽपि तद्वच्च खुडोक्तं यच्च भेषजम्।
पित्तरक्तानिलहितं विविधं च रसायनम्॥

**अचि24.52**
यथानिदानं निर्दिष्टमिति सम्यक्चिकित्सितम्।
आयुर्वेदफलं स्थानमेतत्सद्योऽर्तिनाशनात्॥

**अचि24.53**
चिकित्सितं हितं पथ्यं प्रायश्चित्तं भिषग्जितम्।
भेषजं शमनं शस्तं पर्यायैः स्मृतमौषधम्॥

**॥इति चतुर्विंशोऽध्यायः॥**

**टीका**

*अचि23.60: भेडस्य संमत*

# अष्टाङ्गसंग्रहः कल्पस्थानम् अध्याय १-४

https://sa.wikisource.org/s/9zr

**अष्टाङ्गसंग्रहः**

अष्टाङ्गसङ्ग्रहः

कल्पस्थानम्

अथ प्रथमोऽध्यायः।

**अक1.1**
अथातो वमनकल्पं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अक1.2**
वमनद्रव्याणां मदनजीमूतकेक्ष्वाकुद्विकोशातकीकुटजफलानि श्रेष्ठानि तेष्वपि मदनफलम्॥

**अक1.3**
दोषदूष्यादिवशाच्चैषामेतत्कल्पनानां च प्राधान्यम्॥

**अक1.4**
दोषादीनामेव चातिबह्वस्थाभेदाद्वमनादिषु कल्पनानां व्यापदां साधनानां च यदसङ्ख्येयत्वमतो बुद्धिमतां विकल्पमार्गप्रदर्शनार्थमुदाहरणमात्रं कल्पसिद्धिस्थानमुपदेक्ष्यते॥

**अक1.5**
अथ वसन्तग्रीष्मयोरन्तरे प्रशस्तेऽहनि मुहूर्ते च नातिहरितपाण्डूनि मदनफलान्यादाय तानि प्रमृज्य कुशमूटके बध्वा गोमयेनालिप्य यवबुसमाषशालिव्रीहिकुलत्थमुद्गान्यतमराशावष्टरात्रमुषितान्युद्धृत्यातपे शोषयेत्।
सुशुष्काणां पिप्पलीरुद् वृत्य दधिघृतमधुपललमृदिताः पुनः शोषयित्वा नवं कलशमरजस्कमाकण्ठं पूरयित्वा सुगुप्तं निधापयेत्॥

**अक1.6**
ततः प्रयोगकाले तासां फलपिप्पलीनामन्तर्नखमुष्टिं यावद्वा साधु मन्येत तावज्जर्जरीकृत्य यष्टीमधुककषाये कोविदारकच्छुदारनीपविदुलबिम्बीशणपुष्पीसदापुष्पीप्रत्यक्पुष्प्यन्यतमकषाये वा रात्रिमुषितं विमृदितं पूतं सूत्रोक्तविधिना पाययेत्।
श्लेष्मज्वरगुल्मप्रतिश्यायान्तर्विद्रधिषु विशेषेण पुनः पुनरापित्तागमनात्।
तेन साधु वमति॥

**अक1.7**
फलपिप्पलीनां चूर्णं वा स्वक्वाथभावितं त्रिभागत्रिफलाचूर्णं कोविदारादिनिर्यूहेण बलवत्कफप्रसेकापच्यर्बुदग्रन्थिज्वरोदरारोचकेषु पिबेत्॥

**अक1.8**
फलमज्जचूर्णं वा जीमूतादिनिर्यूहेण पित्ते कफस्थानगते॥

**अक1.9**
फलमज्जसिद्धं वा पयस्तस्मिन्नेव वा यवागूमधोभागे रक्तपित्ते हृद्दाहे च॥

**अक1.10**
तस्य वा पयसः शीतस्य सन्तानिकाञ्जलिं पित्ते प्रकुपिते उरसि कण्ठे हृदये च तनुकफोपदिग्धे॥

**अक1.11**
तज्जं वा दधि दध्युत्तरं वा कफच्छर्दिप्रसेकतमकेषु।
तस्माद्वा पयसो नवनीतमुत्पन्नं फलादिषट्कक्वाथसिद्धं कफाभिभूतेऽग्नौ शुष्यच्छरीरे च॥

**अक1.12**
फलमज्जचूर्णमिश्रेण वारग्वधादि द्रव्याणां घोण्टनिम्बबाणवर्जानां ससोमवल्कपञ्चकोलकानामन्यतमस्य निर्यूहेण साधितं लेहमुपयुञ्जीत॥

**अक1.13**
फलमज्जचूर्णमिश्रेण वा रेणुकैलाशताह्वाकुस्तुम्बुरुतगरकृष्ठत्वक्चोरकमरुबकागरुगुग्गुलुवालकश्रीवेष्टकपरिपेलवमांसीशैलेयस्थौणेयकसुरसारेवतपूत्यशोकरोहिणीनां द्वाविंशतेरन्यतमस्य कषायेण साधितामुत्कारिकां मोदकं वा भक्षयेत्॥

**अक1.14**
फलपिप्पलीस्वरसकषायपरिपीतैर्वा तिलशालितण्डुलपिष्टैस्तत्कषायोपसृष्टैः सुरसादिद्रव्यान्यतमनिर्यूहोपसृष्टैर्वा शष्कुलीरपूपानन्यान् वा भक्ष्यान् साधयित्वा भक्षयेत्॥

**अक1.15**
फलपिप्पलीनां वा भल्लातकविधिस्रुतं स्वरसमादर्वीप्रलेपात् पक्त्वा लेहयेत्।
अन्नपानेषु वा तं लेहमवचारयेत्।
तत्कषायैरेव चान्नपानानि कल्पयेत्॥

**अक1.16**
फलमज्जक्वाथं वा वत्सकादिप्रतिवापं निम्बरूपिकान्यतरकषायोपसर्जनं सन्तर्पणोत्थसर्वश्लेष्मव्याधिहरम्॥

**अक1.17**
फलपिप्पलीनां वा फलादिनिर्यूहेणैकविंशतिकृत्वः सुभावितानां कुसुमरजःसदृशेन चूर्णेनावचूर्णयेत् सरसि सरोरुहं बृहत्सायाह्ने तद्रात्रिमुषितं प्रभाते पुनरवचूर्णितमुद् वृत्य हरिद्राकृसराक्षरियवागूनामन्य तमं सैन्धवगुडफाणितोपेतमाकण्ठं पीतवानुपजिघ्रेत्।
सुकुमारः समुचितसुरभिर्गन्धसम्पदुत्क्लिष्टकफपित्तो भेषजद्वेषी च तथा हि सुखेन छर्दयति॥

**अक1.18**
एतेन सर्वमाल्यगन्धप्रावरणपटा व्याख्याताः।
एवमेव च फलाभावे मदनपुष्पाणि शलटूनि च कल्पयेत्।
इति फलविधानमुक्तम्॥

**अक1.19**
एवं च जीमूतादीनपि कल्पयेत्।
विशेषतस्तु ज्वरश्वासहिध्मादिषु जीमूतकम्॥

**अक1.20**
तत्र पुष्पेषु क्षीरम्।
फलेषु क्षीरपेयाम्।
लोमशेषु सन्तानिकाम्।
निर्लोमकेषु दधि दध्युत्तरं वा।
हरितपाण्डुषु क्षीरं दध्यम्लं वा।
तत्कषायसंसृष्टां पर्यागतानां जीर्णानां जीमूतकफलानां शुष्काणां चूर्णं पयसा वातपित्ते पिबेत्॥

**अक1.21**
द्वित्राणि वापोथ्यारग्वधादीनां नवानामन्यतमस्य पटोल्या वा निर्यूहेणासुतानि मथित्वा पित्तश्लेष्मजे ज्वरे।
जीमूतचूर्णं कल्कं वा शीताम्बुना पित्तजे।
तदेवोष्णेन वातकफजे कफजे वा॥

**अक1.22**
जीवकर्षभकेक्षुशतावरीणामन्यतमस्य स्वरसेन वातपित्तजे।
अथवा पूर्ववत् सिद्धं घृतम्॥

**अक1.23**
इक्ष्वाकुस्तु विशेषेण कासश्वासज्वरच्छर्दिविषश्लेष्मरोगेषूपयोज्यः।
तस्यापुष्पफलस्य प्रवालैः शृतं क्षीरमुद्रिक्तपित्ते कफज्वरे॥

**अक1.24**
पुष्पादिषु च सुतरां जीमूतवत् प्रयोगाः।
इक्ष्वाकुफलस्वरसं वा त्रिगुणक्षीरसाधितमुरस्थिते कफे पीनसे स्वरसादे वा वमनार्थी पिबेत्।
जीर्णे वा समुद्धृतबीजे क्षीरं प्रक्षिपेत्।
तत्र जातं दधि श्लेष्मकासश्वासच्छर्दिषु॥

**अक1.25**
इक्ष्वाकुबीजानि वा छागक्षीरभावितानि विषगुल्मोदरगरगण्डग्रन्थ्यर्बुदश्लीपदेषु इक्ष्वाकुफलमध्यं वा मस्तुना कुष्ठविषपाण्ड्वामयेषु।
तद्विपक्वं वा तक्रं समधुसैन्धवम्।
तदेव वा मध्यं सगुडपललं भक्षयेत्॥

**अक1.26**
इक्ष्वाकुफलतैलं वा पिबेत्।
तत्फलस्वरसभावितैर्वा सक्तुभिर्मन्थं श्लेष्मज्वरकासकण्ठरोगारोचकेषु।
इक्ष्वाकुकल्कं वा मांसरसेन वातकफगुल्मप्रसक्तज्वरेषु॥

**अक1.27**
बिल्वमूलद्विप्रस्थक्वाथेन वा तुम्बीबीजानि क्वाथयेत् ततस्तस्मिन् त्रिभागेन घृतम्।
घृतसमानि च पिष्ट्वा तुम्बीबीजानि।
तदर्धांशानि च प्रत्येकं जीमूतमहाजालिनीवत्सककृतवेधनानि।
क्वाथतुल्यमावपेत् त्रिकटुकम्।
पुनरधिश्रित्य लेहं साधयेत्तमवलिह्य प्रमथ्यामनुपिबेत्॥

**अक1.28**
अयमेव च कल्पः काश्मर्यादिषु चतुर्षु महापञ्चमूलाङ्गेषु पृथक् पृथगुक्तो वेदितव्यः॥

**अक1.29**
धामार्गवो विशेषेण गरगुल्मोदरकासकफसञ्चयोत्थरोगेषु स्थिरेषु गुरुषु च श्लेष्माशयस्थे वातश्लेष्मणि च कण्ठाश्रये प्रकल्प्यः।
जीवनीयान्यतमचूर्णसंयुक्तान् समधुशर्करांस्तत्कषायैर्लेहान् पित्तोपसर्जने श्लेष्मणि विदध्यात्॥

**अक1.30**
सुमनःसौमनस्यायनीहरिद्राचोरकहैमवतीमहासहाक्षुद्रसहावृश्चीवबिम्बीपुनर्नवकासमर्दान्यतमकषायेण वा धामार्गवफलमेकं द्वे वा मनोविकारेषु॥

**अक1.31**
कृतवेधनमत्यर्थकटुतीक्ष्णोष्णं सुतरां गरोदरगुल्मप्लीहपाण्डुरोगश्वयथुषु कल्पयेत्॥

**अक1.32**
कुटजफलं पुनः सुकुमारेषूल्बणास्रपित्तकफेषु वातशोणितविसर्पज्वरकुष्ठादिषु च योजयेत्।
कुटजफलचूर्णान्यर्कक्षीरेण सप्ताहं भावयित्वा जीवककषायेण पिबेत्।
फलजीमूतकेक्ष्वाकुजीवन्तीमूलान्यतमकषायेण वा सर्षपमधूकलवणान्यतमाम्भसा वा कुटजफलचूर्णं कृसरया वा वमनाय कल्पयेदिति।
भवति चात्र॥

**अक1.33**
वमनानां दिगित्येषा सुतरामुपयोगिनाम्।
बीजेनानेन मतिमानन्यानपि च कल्पयेदिति॥
॥इति प्रथमोऽध्यायः॥

अथ द्वितीयोऽध्यायः।

**अक2.1**
अथातो विरेचनकल्पं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अक2.2**
विरेचनद्रव्याणां मूलेषु त्रिवृत्।
त्वक्षु तिल्वकः।
क्षीरेषु स्नुही।
फलेषु हरीतकी प्रधानानि।
त्रिवृतायाः खलु द्विविधं मूलमरुणं श्यावं च।
तत्रारुणं कषायमधुरं विपाके कटुकं रूक्षं श्लेष्मपित्तहरं कल्पनांविशेषात् पुनः सर्वव्याधिप्रशमनम्।
सुखविरेचनत्वात् शिशुस्थविरसुकुमारमृदुकोष्ठेषु प्रशस्तं त्रिवृच्छब्दवाच्यं च॥

**अक2.3**
इतरदपि तस्मात् गुणैः किञ्चिदूनं तीक्ष्णं कण्ठहृदयकर्षणं मूर्छासम्मोहकृदाशु दोषहरत्वात् बहुदोषक्लेशक्षमक्रूरकोष्ठेषु प्रशस्तं श्यामाशब्दवाच्यं च॥

**अक2.4**
अथ तयोर्मूलमतिर्यग्विसृतं गम्भीरानुगतं श्लक्ष्णमाहरेत्।
ततस्त्वचं शोषयित्वा सम्यक् सुगुप्तं स्थापयेत्॥

**अक2.5**
तच्चूर्णं शुण्ठीसैन्धवयुक्तमम्लैर्मांसरसेन वा पिबेद्वातामयेषु।
क्षीरक्षौद्रद्राक्षेक्षुकाश्मर्यस्वरससर्पिःस्वादुद्रव्यक्वाथैः सशर्करं पित्तोत्थेषु।
मूत्रक्सौद्रद्राक्षारिष्टपीलुरसत्रिफलापञ्चकोलक्वाथैर्व्योषचूर्णानुविद्धं कफजेषु॥

**अक2.6**
एभिरेव च द्रव्यैर्यथास्वं घृतशर्कराद्राक्षेक्षुरसतुगाक्षीरीमधुराणि मातुलुङ्गदाडिमामलककोलकरमर्दकपित्थरसतक्राम्लानि सैन्धवलवणानि व्योषतीक्ष्णानि विविधवेशवारपरिपूरितानि सहकाररसत्रिजातनागकेसरकर्पूरसुरभीणि लेहगुटिकामोदकभक्ष्यभोज्यान्युपकल्पयेदिति।
भवति चात्र॥

**अक2.7**
त्रिवृत्कल्ककषायेण साधितः ससितो हिमः।
मधुत्रिजातसंयुक्तो लेहो हृद्यं विरेचनम्॥

**अक2.8**
अजगन्धा तुगाक्सीरी विदारी शर्करा त्रिवृत्।
चूर्णितं मधुसर्पिर्भ्यां लीढ्वा साधु विरिच्यते।
सन्निपातज्वरस्तम्भपिपासादाहपीडितः॥

**अक2.9**
लिम्पेदन्तस्त्रिवृतया द्विधाकृत्वेक्षुगण्डिकाम्।
एकीकृत्य च तत्स्विन्नं पुटपाकेन भक्षयेत्॥

**अक2.10**
त्वगेलाभ्यां समा नीली तैस्त्रिवृतश्च शर्करा।
चूर्णं फलरसक्षौद्रसक्तुभिस्तर्पणं पिबेत्॥

**अक2.11**
वातपित्तकफोत्थेषु रोगेष्वल्पानलेषु च।
नरेषु सुकुमारेषु निरपायं विरेचनम्॥

**अक2.12**
विडङ्गतण्डुलवरायावशूककणास्त्रिवृत्।
सर्वतोऽर्धेन तल्लीढं मध्वाज्येन गुडेन वा॥

**अक2.13**
गुल्मं प्लीहोदरं कासं हलीमकमरोचकम्।
कफवातकृतांश्चान्यान् परिमार्ष्टिगदान् बहून्॥

**अक2.14**
विडङ्गपिप्पलीमूलत्रिफलाधान्यचित्रकान्।
मरिचेन्द्रयवाजाजीपिप्पलीहस्तिपिप्पलीः॥

**अक2.15**
दीप्यकं पञ्चलवणं चूर्णितं कार्षिकं पृथक्।
तिलतैलत्रिवृच्चूर्णभागौ चाष्टपलोन्मितौ॥

**अक2.16**
धात्रीफलरसप्रस्थांस्त्रीन् गुडार्धतुलान्वितान्।
पक्त्वा मृद्वग्निना खादेत्ततो मात्रामयन्त्रणः॥

**अक2.17**
कुष्ठार्शःकामलागुल्ममेहोदरभगन्दरान्।
ग्रहणीपाण्डुरोगांश्च हन्ति पुंसवनश्च सः॥

**अक2.18**
गुडः कल्याणको नाम सर्वर्तुषु च यौगिकः।
व्योषत्रिजातकाम्भोदकृमिघ्नामलकैस्त्रिवृत्॥

**अक2.19**
सर्वैः समा समसिता क्षौद्रेण गुटिकाः कृताः।
मूत्रकृच्छ्रज्वरच्छर्दिकासशोषभ्रमक्षये।
तापे पाण्ड्वामयेऽल्पेग्नौ शस्ताः सर्वविषेषु च॥

**अक2.20**
त्रिवृता कौटजं बीजं पिप्पली विश्वभेषजम्।
क्षौद्रद्राक्षारसोपेतं वर्षाकाले विरेचनम्॥

**अक2.21**
त्रिवृद्दुरालभामुस्ताशर्करोदीच्यचन्दनम्।
द्राक्षाम्बुना सयष्ट्याह्वसातलं जलदात्यये॥

**अक2.22**
त्रिवृतां चित्रकं पाठामजाजीं सरलं वचाम्।
स्वर्णक्षीरीं च हेमन्ते चूर्णमुष्णाम्बुना पिबेत्॥

**अक2.23**
त्रिवृता शर्करातुल्या ग्रीष्मकाले विरेचनम्॥

**अक2.24**
त्रिवृत्त्रायन्तिहपुषासातलाकटुरोहिणीः।
स्वर्णक्षीरीं च संचूर्ण्य गोमूत्रे भावयेत्त्र्यहम्।
एष सर्वर्तुको योगः स्निग्धानां मलदोषहृत्॥

**अक2.25**
श्यामात्रिवृद्दुरालम्भाहास्तिपिप्पलिवत्सकम्।
नीलिनीकटुकामुस्ताश्रेष्ठायुक्तं सुचूर्णितम्।
रसाज्योष्णाम्बुभिः शस्तं रूक्षाणामपि सर्वदा॥

**अक2.26**
त्र्यूषणं त्रिफला हिङ्गु कार्षिकं त्रिवृतापलम्।
सौवर्चलार्धकर्षं च पलार्धं चाम्लवेतसात्॥

**अक2.27**
तच्चूर्णं शर्करातुल्यं मण्डेनाम्लेन वा पिबेत्।
गुल्मपार्श्वार्तिनुत् सिद्धं जीर्णे चास्मिन्नसौदनम्॥

**अक2.28**
त्रिवृतात्रिफलादन्तीसातलाव्योषसैन्धवैः।
प्रकल्प्य चूर्णं सप्ताहं भाव्यमामलकाद्रसे।
तद्योज्यं तर्पणे यूषे पिशिते रागयुक्तिषु॥

**अक2.29**
तुल्याम्लं त्रिवृताकल्कसिद्धं गुल्महरं घृतम्।
श्यामात्रिवृत्कषायेण सिद्धं सर्पिः पयोऽपि वा॥

**अक2.30**
त्रिवृन्मुष्टींस्तु सनखानष्टौ द्रोणेऽम्भसः पचेत्।
पादशेषं कषायं तं पूतं गुडतुलायुतम्॥

**अक2.31**
स्निग्धे स्थाप्यं घटे क्षौद्रपिप्पलीफलचित्रकैः।
लिप्ते मासे गते पीतं पाण्डुश्वयथुगुल्मजित्॥

**अक2.32**
सुरा वा त्रिवृतापादाकण्वा तत्क्वाथसंयुता।
यवैः श्यामात्रिवृत्क्वाथस्विन्नैः कुल्माषमम्भसा।
आसुतं षडहं पल्ले जातं सौवीरकं पिबेत्॥

**अक2.33**
भृष्टान्वा सतुषान्शुष्कान्यवांस्तच्चूर्णसंयुतान्।
आसुतानम्भसा तद्वत् पिबेज्जातं तुषोदकम्॥

**अक2.34**
ज्वरहृद्रोगवातासृगुदावर्तादिरोगिषु।
राजवृक्षोऽधिकं पथ्यो मृदुर्मधुरशीतलः॥

**अक2.35**
बाले वृद्धे क्षते क्षीणे सुकुमारे च मानवे।
योज्यो मृद्वनपायित्वाद्विशेषाच्चतुरङ्गुलः॥

**अक2.36**
फलकाले परिणतं फलं तस्य समाहरेत्।
तेषां गुणवतां भारं सिकतासु विनिक्षिपेत्॥

**अक2.37**
सप्तरात्रात्समुद्धृत्य शोषयेदातपे ततः।
ततोमज्जानमुद्धृत्य शुचौ पात्रे निधापयेत्॥

**अक2.38**
द्राक्षारसेन तं दद्याद्दाहोदावर्तपीडिते।
चतुर्वर्षे सुखं बाले यावद्द्वादशवार्षिके॥

**अक2.39**
चतुरङ्गुलमज्ज्ञो वा कषायं पाययेद्धिमम्।
दधिमण्डसुरामण्डधात्रीफलरसैः पृथक्।
सौवीरकेण वा युक्तं कल्केन त्रैवृतेन वा॥

**अक2.40**
चतुरङ्गुलसिद्धाद्वा क्षीराद्यदुदियात् घृतम्।
मज्जकल्केन धात्रीणां रसे तत्साधितं पिबेत्॥

**अक2.41**
तदेव दशमूलस्य कुलत्थानां यवस्य च।
कषाये साधितं सापःकल्कैःश्यामादिभिः पिबेत्॥

**अक2.42**
दन्तीकषाये तन्मज्ज्ञो गुडं जीर्णं च निक्षिपेत्।
तमरिष्टं स्थितं मासं पाययेत् पक्षमेव वा॥

**अक2.43**
त्वचं तिल्वकमूलस्य त्यक्ताभ्यन्तरवल्कलम्।
विशोष्य चूर्णयित्वा च द्वौ भागौ गालयेत्ततः॥

**अक2.44**
लोध्रस्यैव कषायेण तृतीयं तेन भावयेत्।
कषाये दशमूलस्य तं भागं भावितं पुनः॥

**अक2.45**
शुष्कचूर्णं पुनः कृत्वा ततः पाणितलं पिबेत्।
मस्तुमूत्रसुरामण्डकोलधात्रीफलाम्बुभिः॥

**अक2.46**
मेषशृङ्ग्यभयाकृष्णाचित्रकैः क्वथिते जले।
मरुजाः सुनुयात्तच्चजातं सौवीरकं यदा।
भवेदञ्जलिनातस्य लोध्रकल्कं पिबेत्तदा॥

**अक2.47**
सुरां लोध्रकषायेण जातां पक्षस्थितां पिबेत्।
तिल्वकस्य कषायेण कल्केन च सशर्करः।
सघृतः साधितो लेहः स च श्रेष्ठं विरेचनम्॥

**अक2.48**
सुधा भिनत्ति दोषाणां महान्तमपि सञ्चयम्।
आश्वेव कष्टविभ्रंशा नैव तां कल्पयेदतः॥

**अक2.49**
मृदुकोष्ठेऽबले बाले स्थविरे दीर्घरोगिणि।
कल्प्या गुल्मोदरगरत्वग्रोगमधुमेहिषु।
पाण्डौ दूषीविषे शोफे दोषविभ्रान्तचेतसि॥

**अक2.50**
सा श्रेष्ठा कण्टकैस्तीक्ष्णैर्बहुभिश्च समाचिता।
द्विवर्षां वा त्रिवर्षां वा शिशिरान्ते विशेषतः॥

**अक2.51**
तां पाटयित्वा शस्त्रेण क्षीरमुद्धारयेत्ततः।
बिल्वादीनां बृहत्योर्वा क्वाथेन सममेकशः॥

**अक2.52**
मिश्रयित्वा सुधाक्षीरं ततोऽङ्गारेषु शोषयेत्।
पिबेत् कृत्वा तु गुटिकां मस्तुमूत्रसुरादिभिः॥

**अक2.53**
त्रिवृतादीन्नव वरां स्वर्णक्षीरीं ससातलाम्।
सप्ताहं स्नुक्पयःपीतान्रसेनाज्येन वा पिबेत्।
तद्वद्व्योषोत्तमाकुम्भनिकुम्भाग्नीन् गुडाम्बुना॥

**अक2.54**
अद्यात्च्छ्यामात्रिवृत्क्वाथं स्नुक्क्षीरघृतफाणितैः।
कासारिरसयूषाद्यैर्युक्तं वा स्नुक्पयः पिबेत्॥

**अक2.55**
निकुम्भकुम्भशम्याकशङ्खिनीसप्तलारजः।
रात्रौ मूत्रे दिवा घर्मे सप्ताहं स्थापयेदिति॥

**अक2.56**
स्नुक्क्षीरेऽपि ततस्तेन माल्यं वासोऽवचूर्णितम्।
आजिघ्नन् प्रावृणानश्च मृदुकोष्ठो विरिच्यते॥

**अक2.57**
नातिशुष्कं फलं ग्राह्यं शङ्खिन्या निस्तुषीकृतम्।
सप्तलायास्तथा मूलं ते तु तीक्ष्णविकाषिणी।
श्लेष्मामयोदरगरश्वयथ्वादिषु कल्पयेत्॥

**अक2.58**
अक्षमात्रं तयोः पिण्डं मदिरालवणान्वितम्।
हृद्रोगे वातकफजे तद्वद्गुल्मेऽपि योजयेत्॥

**अक2.59**
शङ्खिनीचूर्णभागौ द्वौ तिलकल्कस्य चापरः।
हरीतकीकषायेण तत्तैलं पीडितं पिबेत्।
अतसीसर्षपैरण्डकरञ्जेष्वप्ययं विधिः॥

**अक2.60**
दन्तिदन्तस्थिरस्थूलं मूलं दन्तीद्रवन्तिजम्।
आताम्रश्यावतीक्ष्णोष्णमाशुकारि विकाषि च॥

**अक2.61**
गुरुप्रकोपिवातस्य पीतश्लेष्मविलायनम्।
तत्क्षौद्रपिप्पलीलिप्तं स्वेदयेन्मृत्कुशान्तरे।
शोषयेच्चातपेऽग्न्यर्कौ हतो ह्यस्य विकाषिताम्॥

**अक2.62**
तत् पिबेन्मस्तुमदिरातक्रपीलुरसासवैः।
अभिष्यण्णतनुर्गुल्मी प्रमेही जठरी गरी।
गोमृगाजरसैः पाण्डुः कृमिकोष्ठी भगन्दरी॥

**अक2.63**
सिद्धं तत् क्वाथकल्काभ्यां दशमूलरसेन च।
विसर्पाविद्रध्यलजीकक्ष्यादाहान् जयेत् घृतम्॥

**अक2.64**
तैलं तु गुल्ममेहार्शोविबन्धकफमारुतान्।
महास्नेहः शकृच्छुक्रवातसङ्गानिलव्यथाः॥

**अक2.65**
दन्त्या रसेऽजशृङ्ग्याश्च गुडक्षौद्रघृतान्वितः।
लेहः सिद्धो विरेकार्थे दाहसन्तापमेहनुत्।
वाततर्षे ज्वरे पैत्ते स्यात्स एवाजगन्धया॥

**अक2.66**
दन्तीद्रवन्त्योर्मूलानि पचेद्धात्रीरसे ततः।
त्रीनंशान् फाणितात् द्वौ च भृष्टस्तैले घृतेऽथवा॥

**अक2.67**
श्यामादिकल्कयुक्तोऽयं लेहः सिद्धं विरेचनम्।
पथ्याक्षदशमूलानां तद्वल्लेहाः पृथग्रसैः॥

**अक2.68**
तयोर्बिडसमं चूर्णं तद्रसेनैव भावितम्।
विबद्धविशि वातोत्थे गुल्मे चाम्लयुतं हितम्।
मुद्गादिसिद्धैस्तन्मूलैर्यूषादींश्च प्रकल्पयेत्॥

**अक2.69**
दन्तीद्रवन्तीमरिचस्वर्णक्षीरीयवासकम्।
सशुण्ठ्यग्निकपृथ्वीकं चूर्णितं सप्त वासरान्॥

**अक2.70**
मूत्रभावितमाज्येन विबेज्जीर्णे च तर्पणम्।
सर्वदा सर्वरोगेषु बाले वृद्धे च तद्धितम्॥

**अक2.71**
दुर्भुक्ताजीर्णपांश्वार्तिगुल्मप्लीहोदरेषु च।
गण्डमालासु वाते च पाण्डुरोगे च शस्यते॥

**अक2.72**
गुडस्याष्टपले पथ्या विंशतिः स्यात् पलं पलम्।
दन्तीचित्रकयोः कर्षौ पिप्पलीत्रिवृतोर्दश॥

**अक2.73**
प्रकल्प्य मोदकानेकं दशमे दशमेऽहनि।
उष्णाम्भोऽनुपिबन् खादेत्तान् सर्वान् विधिनामुना॥

**अक2.74**
एते निष्परिहाराः स्युः सर्वव्याधिनिबर्हणाः।
विशेषाद्ग्रहणीपाण्डुकण्डूकोठार्शसां हिताः।

विरेचने मुख्यतमा नवैते त्रिवृतादयः॥

**अक2.75**
हरीतकीमपि त्रिवृद्विधानेनोपकल्पयेत्।
विशेषात् ग्रहणीशोफपाण्डुमेहोदरापहाम्॥

**अक2.76**
पिबेत् पथ्यां ससिन्धूत्थविडङ्गोषणनागराम्।
मूत्रेण वत्सकादेर्वा निर्यूहेण हरीतकीम्॥

**अक2.77**
पथ्यानागरचूर्णं वा संयुतं नीलिनीफलैः।
गुडेन भक्षयेत्तोयं कवोष्णं च पिबेदनु॥

**अक2.78**
पथ्यात्रिवृद्भ्यां गुटिकाः कार्या द्राक्षारसाप्लुताः।
माषप्रमाणास्ताः शुष्का लिह्याद्यक्ष्मी घृतद्रुताः।
पथ्यात्रिवृत्पटूष्णाम्बु सर्वत्रेष्टं विरेचनम्॥

**अक2.79**
स्नुक्क्षीरभाविते पथ्याचूर्णे कुर्वीत मोदकान्।
कोलास्थिमात्रान् शुष्कांश्च नवनीतेन लेहयेत्।
गुल्मोदरयकृत्प्लीहशूलानाहविबन्धिनः॥

**अक2.80**
लिह्यादेरण्डतैलेन कुष्ठं त्रिकटुकान्वितम्।
सुखोदकं चानुपिबेत्सुखमेतद्विरेचनम्॥

**अक2.81**
अल्पस्यापि महार्थत्वं प्रभूतस्याल्पकर्मताम्।
कुर्यात् संश्लेषविश्लेषकालसंस्कारयुक्तिभिः॥

**अक2.82**
त्वक्केसराम्रातकदाडिमैलासितोपलामाक्षिकमातुगुङ्गैः।
मद्येन तस्तैश्च मनोऽनुकूलैर्युक्तानि देयानि विरेचनानि॥
॥इति द्वितीयोऽध्यायः॥

अथ तृतीयोऽध्यायः।

**अक3.1**
अथातो वमनविरेचनव्यापत्सिद्धिं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अक3.2**
अतिक्षुधितेनातिमृदुकोष्ठेनाल्पश्लेष्मणा दुर्वमेन हीनमात्रमतिमात्रं तीक्ष्णमतिशीतमजीर्णे वा पीतं वमनमधो गच्छति।
तत्रेप्सितानवाप्तिर्दोषोत्क्लेशश्च।
तं पुनराशु स्नेहयित्वा यौगिकैर्मात्राकालाद्यपेक्षं वामयेत्।
व्यापत्कराणि च पूर्वोक्तमतिक्रमं स्मरन् परिहरेत्॥

**अक3.3**
अजीर्णिनः श्लेष्मवतोऽत्युष्णतीक्ष्णलवणमतिमात्रमहृद्यं वा विरेचनमन्यद्वा भेषजमूर्ध्वं प्रवर्तते।
तत्र पूर्वोक्ता व्यापत्साधनं च।
तत ऊर्ध्वमप्युत्तिष्ठति हृद्यलेहवटकवर्ज्यमौषधं न तृतीयमवचारयेत्॥

**अक3.4**
क्रूरकोष्ठस्यातितीक्ष्णाग्रेरल्पमल्पवीर्यं वा भेषजमूर्ध्वभागिकमधोभागिकं वा भक्तवदुपैति पाकम्।
तत्र समुदीर्णा दोषा यथाकालमनिर्ह्रियमाणा विभ्रमं कुर्वन्ति।
तं स्निग्धकोष्ठमनल्पममन्दं चौषधं पाययेत्॥

**अक3.5**
कषायमल्पमप्रत्यग्रं रूक्षं वा भेषजमस्निग्धस्विन्नेन वा पीतं शीतोपचारेण वा स्तब्धं दोषविग्रथितमयोगी भवति।
तत्र वमने भूयो वामयेत्।
विरेचने स्निग्धस्विन्नं पुनर्विरेचयेत्।
उत्क्लिष्टभूरिदोषं वा तृतीयेऽहनि।
उभयोश्च संशोधनयोर्लवणतैलाभ्यक्तं पिण्डप्रस्तराभ्यां स्वेदयेत्॥

**अक3.6**
स्निग्धस्विन्नस्य च वमनमकृत्वा विरेचनं पीतवतः सामस्य वा मृदु वा विरिक्तस्याधोभागेत्यर्थगुरुस्तब्धोदरता शूलो वातमूत्रपुरीषसङ्गश्च भवति।
तमप्ययोगिनं समूत्रैस्तीक्ष्णैरास्थाप्य जाङ्गलरसैश्च भोजयित्वा फलदारुपिप्पलीसिद्धेन तैलेनानुवास्य वातहरैश्च स्नेहैरुपस्नेह्य पुनस्तीक्ष्णैर्विरेचयेत्॥

**अक3.7**
कफोल्बणस्यातिस्निग्धस्य गुरुकोष्ठस्य मन्दाग्नेर्वा मृदुप्रणीतमौषधं भृशमुत्क्लेश्य दोषान् जाड्यतन्द्रादौर्बल्याङ्गसादान् जनयति।
तच्छीघ्रमुल्लिखेत्।
लङ्घनेन च सन्धुक्षिताग्निं पुनःस्निग्धं तीक्ष्णोष्णैर्विशोधयेत्॥

**अक3.8**
सशेषान्नाय वातश्लेष्मवते रूक्षाय सोदावर्ताय मन्दाग्नये वा शीतं रूक्षं वा दत्तमौषधं भृशमाध्मानं करोति।
तत्र मलसङ्गात् समुन्नह्यत्युदरमन्तःशूलं दृतिवत् पार्श्वयोरापूर्णता शिरःपृष्ठरुजा श्वासकासौ पायुबस्तिनिस्तोदश्च भवति।
तमुदावर्तानाहहराभ्यङ्गस्वेदवर्तिदीपनचूर्णबस्तिक्रियाभिरुपचरेत्॥

**अक3.9**
क्षामेणाल्पबलेन मृदुकोष्ठाग्निना रूक्षेणास्निग्धेन वा स्विन्नेन सामेन वा बलवदौषधमुपयुक्तं सपित्तमनिलं प्रदूष्य परिकर्तिकामापादयति।
तत्र नाभिबस्तिगुदमेढ्रे सदाहपरिकर्तनमनिलसङ्गो विष्टम्भश्च॥

**अक3.10**
तं कृष्णतिलमधुकमधुयुक्तैः पिच्छाबस्तिभिरास्थापयेत्।
क्षीरिवृक्षशृतक्षीरेण वा।
शीताम्बुपरिषिक्तं चैनं पयसा भुक्तवन्तं घृतमण्डेन यष्टीमधुकतैलेन वानुवासयेत्।
क्षामस्य च मधुरो बृंहणश्च सर्वो विधिरिष्टः॥

**अक3.11**
सामे लङ्घनदीपनं च लघुरूक्षोष्णं चान्नपानम्।
निरामीभूतेऽनुबन्धे लघु क्षारम्लम्।
सवाते दधिसाराम्लं दाडिमत्वचा युक्तं भोजने पाने च प्रयुञ्जीत सदाडिमरसं च सर्पिः पिबेदुष्णाम्बुना वा तिलदेवदारुकल्कम्॥

**अक3.12**
क्रूरकोष्ठस्य बहुदोषस्याल्पमल्पगुणं मृदुस्निग्धं वा शोधनमवचारितमुत्क्लेश्य दोषान् न निर्हरति।
अल्पाल्पं च पित्तकफसंसृष्टं परिस्रवति।
विष्टम्भगौरवशोफकण्डूपाण्डुताङ्गसादगुल्मशूलानि चापादयति॥

**अक3.13**
तं तिनिशधवाश्वकर्णपलाशबलानिर्यूहैर्मधुयुक्तैरास्थापयेत्।
उपशान्तपरिस्रवं च पुनरुपस्निग्धं तीक्ष्णैः शोधयेत्।
शुद्धे च दीपनांश्चूर्णासवारिष्टादीन् योजयेत्॥

**अक3.14**
पीतौषधो यदा वेगमुदीरयति निगृह्णाति वा।
तदा प्रवाहिकास्य जायते।
तस्यां सदाहशूलं सपिच्छं श्वेतं कृष्णं रक्तं वा भृशं प्रवाहमाणः कफमुपविशति।
तं परिस्रवविधिनोपचरेत्॥

**अक3.15**
पीतौषधस्य भेषजोद्गारच्छर्द्यादीनां निग्रहाद्वातादयः कुपिता हृदयमुपसृत्य हृद्ग्रहं घोरमावहन्ति।
ततः प्रधानमर्मोपतापाद्वेदनाभिरत्यर्थमातुरः पीड्यते।
मोहहिध्माकासलालापार्श्वशूलयुतो वेपथुमान् नष्टसंज्ञो दन्तान् कटकटापयत्युद्वृत्ताक्षो जिह्वां खादति।
तं हृदयोपसरणमाहुः॥

**अक3.16**
तस्मै भिषक् शीघ्रममुह्यन्नभ्यङ्गपूर्वं धान्यस्वेदेन परिस्वेद्य तीक्ष्णमवपीडं दद्यात्।
यष्टीमधुकमिश्रेण तण्डुलाम्बुना वमनम्।
कटुभिर्वा कफोत्तराय।
ततो दोषशेषं पाचनीयैः पाचयेद्यथादोषोच्छ्रयं च बस्तीन् वितरेत्॥

**अक3.17**
अस्निग्धस्विन्नेनाब्रह्मचरिणा वेगधारिणा मृदुकोष्ठेन सुकुमारेण वा रूक्षमौषधमतिमात्रं प्रयुक्तमतिविरेकाद्वायुं कोपयति।
तेन सर्वाङ्गप्रग्रहो भवति।
तस्य विशेषात् पार्श्वपृष्ठश्रोणिमन्याममसु शूलमूर्च्छाभ्रमकल्पस्तम्भो निस्तोदो भेद उद्वेष्टनं संज्ञानाशश्च स्यात्।
तमभ्यज्य धान्यैः स्वेदयित्वा यष्टीमधुकविपक्वेन तैलेनानुवासयेत्।
वातहरं चान्नपानम्॥

**अक3.18**
स्निग्धस्विन्नस्यातिमृदुकोष्ठस्य क्षुधितस्य वा तीक्ष्णमतिभूरि वा प्रयुक्तमौषधं सर्वशो निर्हृत्य मलान् धातूनपि द्रवीकृत्य विस्रावयेदतियोगेन।
तं शतधौतघृतेनाभ्यज्य कषायस्वादुशीतैः प्रदेहपरिषेकावगाहान्नपानैः शर्करामधुमद्भिश्च लहः स्तम्भयेत्॥

**अक3.19**
चन्दनाञ्जनोशीरच्छागासृक्शीतोदकैर्लाजसक्तून् पाययेत्।
पिच्छाबस्तींश्चस्मै दद्यान्मधुरवर्गसिद्धं च क्षीरसर्पिः सर्पिर्मण्डोऽनुवासनम्।
रक्तपित्तविधानं च कुर्यात्॥

**अक3.20**
विशेषेण वमनातियोगे सघृततसिताक्षौद्रं फलरसैर्मन्थं पिबेत्।
क्षीरिवृक्षशुङ्गसिद्धां वा समाक्षिकां पेयां क्षीरं वा संग्राहिद्रव्यसिद्धं च क्षीरं भोजनेऽवचारयेत्॥

**अक3.21**
सोद्गारायां च छर्द्यां धनिकामधूकमधुरसामुस्ताञ्जनानि मधुना लिह्यात्।
वाक्सङ्गे हनुसङ्गेऽनिलार्तौ च घृतमांसरससिद्धामल्पतण्डुलां पेयां पिबेत्।
स्नेहस्वेदौ चावचारयेत्॥

**अक3.22**
जिह्वाप्रवेशे स्निग्धाम्ललवणान् कवलगण्डूषान् हृद्यांश्चाजमांसरसान्।
पुरतश्चास्य फलान्यम्लानि खादयेत्॥

**अक3.23**
निर्गतां तु जिह्वां तिलद्राक्षाकल्कलिप्तां व्योषलवणचूर्णप्रघृष्टां वा प्रवेशयेत्।
अक्षिणी व्यावृत्ते घृताभ्यक्ते पीडयेद्विसंज्ञं सामवेणुगीतशब्दान् श्रावयेत्॥

**अक3.24**
विरेचनातियोगे तण्डुलाम्भसा मधुमिश्रेण वमेत् प्रियङ्वादिं च तण्डुलोदकेन पिबेद्रोध्ररसाञ्जनदाडिमत्वचो वा।
सोमवल्कलकट्फलोत्पलसमङ्गापद्मकेसराणि वा।
क्षौद्रशर्करामधुकौडुम्बरत्वचो वा।
रक्तातिसारक्रियां च कुर्वीत॥

**अक3.25**
गुदं निःसृतमभ्यज्य स्वेदयित्वा कषायैश्चस्तम्भयित्वा प्रवेशयेत्।
पूर्ववच्च वाक्सङ्गादीन् साधयेत्॥

**अक3.26**
उभयत्र च जीवरक्तपित्तयोर्ज्ञानार्थं रक्ते शुक्लं पिचु प्लोतं वा क्षिपेत्।
तस्मिन्नावाने कोष्णाम्बुक्षालितशुद्धे जीवरक्तम्।
विवर्णे तु रक्तपित्तं विद्यात्।
अन्नं वा तद्विमिश्रं शुने काकाय वा दद्यात्।
तस्मिन् भुक्ते जीवं वदेदभुक्ते पित्तम्॥

**अक3.27**
आमरणाच्च तस्य तृण्मूर्छामदार्तस्य क्रियां पित्तघ्नीमतियोगोक्तां च कुर्यात्।
एणादिरुधिरं वातिस्रुतरक्तोक्तविधिना सक्षौद्रं शीघ्रमुपयुञ्जीत।
तद्धि सद्यो जीवमभिसन्दधाति।
श्यामाकाश्मर्यमधुकदूर्वोशीरैर्वा शृतं पयो घृतमण्डाञ्जनयुक्तं शीतं बस्तौ निषेचयेत्॥

**अक3.28**
शेषेष्वपि चासम्यक्प्रयुक्तवमनविरेचनोपद्रवेषु यथामयं दोषादीनपेक्ष्य प्रतिकुर्याद्बस्तिव्यापत्सिद्धिं चेक्षेत॥

**अक3.29**
एवमुभयतोभागेऽपि शोधने यथावस्थमुत्तिष्ठेत।
या तु विरेचने परिकर्तिका तद्वमने कण्ठक्षणनम्।
यदधःपरिस्रवः स कफप्रसेको यदधःप्रवाहणं स शुष्कोद्गार इति।
भवति चात्र॥

**अक3.30**
अतिमात्रमकालेऽल्पं तुल्यवीयरभावितम्।
असम्यक्संस्कृतं जीर्णं व्यापद्येतौषधं ध्रुवम्॥

**अक3.31**
छर्दनं न तु दुश्छद दुर्विरेच्यं न रेचनम्।
पाययेदौषधं भूयस्तन्निहन्ति तथा हि तौ॥

**अक3.32**
यस्योर्ध्वं कफसंसृष्टं पीतं यात्यानुलोमिकम्।
वमितं कवलैः शुद्धं लङ्घितं पाययेत्तु तम्॥

**अक3.33**
विबद्धेऽल्पे चिराद्दोषे स्रवत्युष्णं पिबेज्जलम्।
तेनाध्मानं वमिस्तृष्णा विबन्धश्चाशु शाम्यति॥

**अक3.34**
भेषजं दोषरुद्धं चेन्नोध्व नाधः प्रवर्तते।
सोद्गारं साङ्गशूलं वा स्वेदं तत्रावचारयेत्॥

**अक3.35**
सम्पग्विरिक्तस्योद्गारे भेषजं क्षिप्रमुल्लिखेत्।
अजीर्णमप्रवृत्तौ तु सुशीतैः स्तम्भयेद्भिषक्॥

**अक3.36**
कदाचिच्छलेष्मणा रुद्धं तिष्ठत्युरसि भेषजम्।
क्षीणे श्लेष्मणि सायाह्ने रात्रौ वा तत् प्रवर्तते॥

**अक3.37**
रुक्षानाहारयोर्जीर्णे तिष्ठत्यूर्ध्वं गतेऽपि वा।
वायुना भेषजे त्वन्यत् सस्नेहलवणं पिबेत्॥

**अक3.38**
तृण्मोहभ्रममूर्छाद्याः स्युर्जीर्यति च भेषजे।
पित्तघ्नं स्वादु शीतं च भेषजं तत्र शस्यते॥

**अक3.39**
लालाहृल्लासविष्टम्भरोमहर्षाः कफावृते।
भेषजं तत्र तीक्ष्णोष्णं कट्वादि कफनुद्धितम्॥

**अक3.40**
प्रतिकूला गतिः पाको ग्रथितत्वं सगौरवम्।
दोषोत्क्लेशो भृशाध्मानं परिकर्तः परिस्रवः॥

**अक3.41**
प्रवाहिका हृद्ग्रहणं सर्वगात्रपरिग्रहः।
सह धातुस्रवेणैता द्वादशोक्ताः ससाधनाः।
व्यापदो विधिविभ्रंशात् द्विविधेऽपि विरेचने॥

**अक3.42**
उत्पद्यमानासु च तासु तासु व्यापत्सु संशोधनविभ्रमेण।
दिशानयैवाशु यतेत सिद्ध्यै ज्योतिर्हि शास्त्रं नयदुर्नयानाम्॥
॥इति तृतीयोऽध्यायः॥

अथ चतुर्थोऽध्यायः।

**अक4.1**
अथातो बस्तिकल्पं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अक4.2**
बलां गुडूचीं त्रिफलां सरास्नां द्विपञ्चमूलं च पलोन्मितानि।
अष्टौ फलान्यर्धतुलां च मांसात् छागात् पचेदप्सु चतुर्थशेषम्॥

**अक4.3**
पूतो यवानीफलबिल्वकुष्ठवचाशताह्वाघनपिप्पलीनाम्।
कल्कैर्गुडक्षौद्रघृतः सतैलैर्युक्तः सुखोष्णो लवणान्वितश्च॥

**अक4.4**
बस्तिः परं सर्वगदप्रमाथीस्वस्थे हितो जीवनबृंहणश्च।
बस्तौ च यस्मिन् पठितो न कल्कः सर्वत्र दद्यादमुमेव तत्र॥

**अक4.5**
द्विपञ्चमूलस्य रसोऽम्लयुक्तः सच्छागमांसस्य सपूर्वपेष्यः।
त्रिस्नेहयुक्तः प्रवरो निरूहः सर्वानिलव्याधिहरः प्रदिष्टः॥

**अक4.6**
बलापटोलीलघुपञ्चमूलत्रायान्तकैरण्डयवात् सुसिद्धात्।
प्रस्थो रसाच्छागरसार्धयुक्तः साध्यः पुनः प्रस्थसमः स यावत्॥

**अक4.7**
प्रियङ्गुकृष्णाघनकल्कयुक्तः सतैलसर्पिर्मधुसैन्धवश्च।
स्याद्दीपनो मांसबलप्रदश्च चक्षुर्बलं चोपदधाति सद्यः॥

**अक4.8**
एरण्डमूलात्त्रिपलं पलाशत्तथा पलांशं लघुपञ्चमूलम्।
रास्नाबलाछिन्नरुहाश्वगन्धापुनर्नवारग्वधदेवदारु॥

**अक4.9**
फलानि चाष्टौ सलिलाढकाभ्यां विपाचयेदष्टमशेषितेऽस्मिन्।
वचाशताह्वाहपुषाप्रियङ्गुयष्टीकणावत्सकबीजमुस्तम्॥

**अक4.10**
दद्यात् सुपिष्टं सहताक्ष्यर्शैलमक्षप्रमाणं लवणांशयुक्तम्।
समाक्षिकस्तैलयुतः समूत्रो बस्तिर्जयेल्लेखनदीपनोऽसौ॥

**अक4.11**
जङ्घोरुपादत्रिकपृष्ठकोष्ठहृद्गुह्यशूलं गुरुतां विबन्धम्।
गुल्माश्मवर्ध्मग्रहणीगुदोत्थांस्तांस्तांश्च रोगान् कफवातजातान्॥

**अक4.12**
चतुष्पले तैलघृतस्य भृष्टः छागाच्छतार्धो दधिदाडिमाम्लः।
रसः सपेष्यो बलवणमांसरेतोग्नितैमिर्यशिरोरुजीष्टः॥

**अक4.13**
यष्ट्याह्वयस्याष्टपलेन सिद्धं पयः शताह्वाफलपिप्पलीभिः।
युक्तं ससर्पिर्मधुवातरक्तविसर्पवैस्वर्यहितो निरूहः॥

**अक4.14**
यष्ट्याह्वलोध्राभयचन्दनैश्च शृतं पयोऽग्र्यं कमलोत्पलैश्च।
सशर्कराक्षौद्रघृतं सुशीतं पित्तामयान् हन्ति सजीवनीयम्॥

**अक4.15**
गोपाङ्गनाचन्दनशीतपाकीद्राक्षर्धिकाश्मर्यमधूकसेव्यैः।
पयः शृतं श्रावणिमुद्गपर्णीबलास्वगुप्तामधुयष्टिकल्कैः॥

**अक4.16**
गोधूमचूर्णैश्च पिचुप्रमाणैरिक्षोविदार्याश्च रसेन युक्तम्।
तैलेन यष्टीमधुसाधितेन सितोपलाक्षौद्रघृतैश्च शीतः॥

**अक4.17**
बस्तिः प्रशस्तः ससमस्तदेहदाहे सशूलेऽवयवाश्रिते वा।
गुल्मातिसारभ्रममूत्रकृच्छ्रक्षीणे क्षतौजोबलसङ्क्षये च॥

**अक4.18**
कोशातकारग्वधदेवदारुमूर्वाश्वदंष्ट्राकुटजार्कपाठाः।
पक्त्वा कुलत्थान् बृहतीं च तोये रसस्य तस्य प्रसृता दश स्युः॥

**अक4.19**
तान् सर्षपैलामदनैः सकुष्ठैरक्षप्रमाणैः प्रसृतैश्च युक्तान्।
क्षौद्रस्य तैलस्य फलाह्वयस्य क्षारस्य तैलस्य च सार्षपस्य॥

**अक4.20**
दद्यान्निरूहं कफरोगिताय मन्दाग्नये चाशनविद्विषे च॥

**अक4.21**
पुनर्नवैरण्डवृषाश्मभेदवृश्चीवभूतीकबलापलाशान्।
द्विपञ्चमूलं च पलांशकानि क्षुण्णानि धौतानि फलानि चाष्टौ॥

**अक4.22**
बिल्वं यवाङ्कोलकुलत्थधान्यफानि च स्युः प्रसृतोन्मितानि।
पयो जलद्व्याढकसाधितं तत् क्षीरावशिष्टं शुचिवस्त्रपूतम्॥

**अक4.23**
वचाशताह्वामरदारुकुष्ठयष्ट्याह्वसिद्धार्थकपिप्पलीनाम्।
कल्कैर्यवान्या मदनैश्च युक्तं नात्युष्णशीतं गुडसैन्धवाक्तम्॥

**अक4.24**
क्षौद्रस्य तैलस्य च सर्पिषश्च नवस्य युक्तं प्रसृतित्रयेण।
दद्यान्निरूहं विधिना विधिज्ञः ससर्वसंसर्गकृतामयघ्नः॥

**अक4.25**
अर्धार्धविहितान् बस्तीनतश्चित्रान् प्रवक्ष्यते।
कोशातकीद्वयेक्ष्वाकुफलजीमूतवत्सकाः॥

**अक4.26**
श्यामात्रिवृतयोर्मूलं तथा दन्तीद्रवन्तिजम्।
प्रकीर्या चोदकीर्या च क्षीरिणी नीलिनीफलम्॥

**अक4.27**
सप्तपाशङ्खिनीलोध्रं फलं कम्पिल्लकस्य च।
स्वकल्कसैन्धवयुताः पक्वाशयविशोधनाः॥

**अक4.28**
घातकीपुष्पतर्कारीजीवन्तीमूलवत्सकाः।
प्रग्रहः खदिरः कुष्ठं शमी पिण्डीतको यवाः॥

**अक4.29**
प्रियङ्गुरर्कमूली च तरुणीजातियूथिकाः।
वटाद्याः किंशुकं लोध्रमिति सङ्ग्राहिका मताः॥

**अक4.30**
ग्राही प्रियङ्ग्वम्बष्ठादिक्वाथकल्कैः क्रमेण च।
ऊषकादिप्रतीवापो लेखनस्त्रिफलारसः।
मधुरक्वाथकल्केन सरसाज्येन बृंहणः॥

**अक4.31**
बदर्यैरावणीशेलुशाल्मलीधन्वनाङ्कुराः।
समाक्षिकाः क्षीरयुताः सासृजः पिच्छिलाः स्मृताः॥

**अक4.32**
कोलङ्कतककाण्डेक्षुदर्भपोटेक्षुपालिभिः।
दाहघ्नः सघृतक्षीरो द्वितीयश्चन्दनादिभिः॥

**अक4.33**
मुष्टिः शाल्मलिवृन्तानां क्षीरसिद्धो घृतान्वितः।
हितः प्रवाहणे तद्वद्वृन्तैः शाल्मलकस्य च॥

**अक4.34**
कर्बुदाराढकीनीपविदुलैः क्षीरसाधितैः।
परिकर्ते तथा वृन्तैः श्रीपर्णीकोविदारजैः॥

**अक4.35**
परिस्रवे पयः सिद्धं सवृश्चीवपुनर्नवम्।
आखुकर्णिकया तद्वत्तण्डुलीयकयुक्तया॥

**अक4.36**
अश्वावरोहकः काकनासाराजकशेरुकाः।
सिद्धाः क्षीरेऽतियोगे स्युः क्षौद्राञ्जनघृतैर्युताः।
न्यग्रोधाद्यैश्चतुर्भिश्च विधिनापरः॥

**अक4.37**
बृहती क्षीरकाकोली पृश्निपर्णी शतावरी।
काश्मर्यबदरीमूर्वास्तथोशीरप्रियङ्गवः॥

**अक4.38**
जीवादाने शृतौ क्षीरे द्वौ घृताञ्जनसंयुतौ।
बस्ती प्रदेयौ भिषजा शीतौ समधुशर्करौ।
गोव्यजामहिषीक्षीरैर्जीवनीययुतैरपि॥

**अक4.39**
शशैणदक्षमार्जारमहिषाव्यजशोणितैः।
सद्यस्कैर्मृदितैर्बस्तिर्जीवादाने प्रशस्यते॥

**अक4.40**
अथेमान् सुकुमाराणां निरूहान् स्नेहनान् मृदून्।
कर्मणा विप्लुतानां च वक्ष्यामि प्रसृतैः पृथक्॥

**अक4.41**
क्षीरात् द्वौ प्रसृतौ कार्यौ मधुतैलघृतात्त्रयः।
खजेन मथितो बस्तिर्वातघ्नो बलवर्णकृत्॥

**अक4.42**
एकैकः प्रसृतस्तैलप्रसन्नाक्षौद्रसर्पिषाम्।
बिल्वादिमूलक्वाथात् द्वौ कौलत्थाद्द्वौ स वातजित्॥

**अक4.43**
पटोलनिम्बपूतीकरास्नासप्तच्छदाम्भसः।
प्रसृतः पृथगाज्याच्च बस्तिः सर्षपकल्कवान्।
सपञ्चतिक्तोऽभिष्यन्दकृमिकुष्ठप्रमेहहा॥

**अक4.44**
विडङ्गत्रिफलाशिग्रुफलमुस्ताखुकर्णिजात्।
कषायात् प्रसृताः पञ्च तैलादेको विमथ्य तान्।
निरूहः कृमिहा वेल्लपिप्पलीकल्कयोजीतः॥

**अक4.45**
पयस्येक्षुस्थिरारास्नाविदारीक्षौद्रसर्पिषाम्।
एकैकः प्रसृतो बस्तिः कृष्णाकल्को वृषत्वकृत्॥

**अक4.46**
चत्वारस्तैलगोमूत्रदधिमण्डाम्लकाञ्जिकात्।
प्रसृताः सर्षपैः पिष्टैर्विट्सङ्गानाहभेदनः॥

**अक4.47**
श्वदंष्ट्राश्मभिदेरण्डक्वाथतैलसुरासवात्।
प्रसृताः पञ्च चपलाकौन्तीयष्ट्याह्वकल्कवान्।
बस्तिः कवोष्णः साहाने मूत्रकृच्छ्रे वरो मतः॥

**अक4.48**
मृदुबस्तिजडीभूते तीक्ष्णोऽन्यो बस्तिरिष्यते।
तीक्ष्णैर्विकर्षिते स्निग्धो मधुरः शिशिरो मृदुः॥

**अक4.49**
तीक्ष्णत्वं मूत्रबिल्वाग्निलवणक्षारसर्षपैः।
प्राप्तकालं विधातव्यं क्षीराज्याद्यैस्तु मार्दवम्॥

**अक4.50**
बलकालदोषरोगप्रकृतीः प्रविभज्य योजितो बस्तिः।
स्वः स्वैरौषधवर्गैः स्वान् स्वान् रोगान् निवतयति॥

**अक4.51**
उष्णार्तानां शीतान् शीतार्ताना तथा सुखोष्णांश्च।
तद्योग्यौषधयुक्तान् बस्तीन् सन्तर्क्य युञ्जीत॥

**अक4.52**
बस्तीन्न बृंहणीयान् दद्याद्व्याधिषु विशोधनीयेषु।
मेदस्विनो विशोध्या ये च नराः कुष्ठमेहार्ताः॥

**अक4.53**
न क्षीणक्षतदुर्बलमूर्छितकृशशुष्कशुद्धदेहानाम्।
दद्याद्विशोधनीयान् दोषनिबद्धायुषो य च॥

**॥इति चतुर्थोऽध्यायः॥**

# अष्टाङ्गसंग्रहः कल्पस्थानम् अध्याय ५-८

https://sa.wikisource.org/s/9zs

**अष्टाङ्गसंग्रहः**

अथ पञ्चमोऽध्यायः।

**अक5.1**
अथातः सिद्धबस्तिकल्पं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः।
सिद्धबस्तीन् प्रयुञ्जीत सर्वदा सर्वदेहिनाम्।
निर्व्यापदो बहुफलान् बलपुष्टिकरान् सुखान्॥

**अक5.2**
मधुतैले समे कर्षः सन्धवात् द्विपचुर्मिसिः।
एरण्डमूलक्वाथेन निरूहो माधुतैलिकः।
रसायनं प्रमेहार्शः कृमिगुल्मान्त्रवृद्धिनुत्॥

**अक5.3**
सयष्टिमधुकश्चैष चक्षुष्यो रक्तपित्तजित्।
यापनो घनकल्केन मधुतैलरसाज्यवान्॥

**अक5.4**
पायुजानूरुवृषणबस्तिमेहनशूलजित्।
प्रसृतांशैर्घृतक्षौद्रवसातैलैः प्रकल्पयेत्।
यापनं सैन्धवार्धाक्षहपुषार्धपलान्वितम्॥

**अक5.5**
एरण्डमूलनिष्क्वाथो मधुतैलं ससैधवम्।
एष युक्तरथो बस्तिः सवचापिप्पलीफलः॥

**अक5.6**
सक्वाथो मधुषड्ग्रन्थाशताह्वाहिङ्गुसैन्धवः।
सुरदारु च रास्ना च बस्तिर्दोषहरः शिवः॥

**अक5.7**
पञ्चमूलस्य निष्क्वाथस्तैलं मागधिका मधु।
ससैन्धवः समधुकः सिद्धबस्तिरिति स्मृतः॥

**अक5.8**
द्विपञ्चमूलत्रिफलाफलबिल्वानि पाचयेत्।
गोमूत्रे तेन पिष्टैश्च पाठातोयदवत्सकैः॥

**अक5.9**
सफलैः क्षौद्रतैलाभ्यां क्षारेण लवणेन च।
युक्तो बस्तिः कफव्याधिपाण्डुरोगविषूचिषु।
शुक्रानिलविबन्धेषु बस्त्याटोपे च पूजितः॥

**अक5.10**
मुस्तापाठामृतैरण्डबलारास्नापुनर्नवम्।
मञ्जिष्ठारग्वधोशीरत्रायमाणाक्षरोहिणीः॥

**अक5.11**
कनीयः पञ्चमूलं च पालिकं मदनाष्टकम्।
जलाढके पचेत्तच्च पादशेषं परिस्रुतम्॥

**अक5.12**
क्षीरद्विप्रस्थसंयुक्तं क्षीरशेषं पुनः पचेत्।
सपादजाङ्गलरसः ससर्पिर्मधुसैन्धवः॥

**अक5.13**
पिष्टैर्यष्टीमिसिश्यामाकलिङ्गकरसाञ्जनैः।
बस्तिः सुखोष्णो मांसाग्निबलशुक्रविवर्धनः॥

**अक5.14**
वातासृङ्मोहमेहार्शोगुल्मविण्मूत्रसङ्ग्रहम्।
विषमज्वरवीसर्पवर्ध्माध्मानप्रवाहिकाः॥

**अक5.15**
वङ्क्षणोरुकटीकुक्षिमन्याश्रोत्रशिरोरुजः।
हन्यादसृग्दरोन्मादशोफकासाश्मकुण्डलान्।
चक्षुष्यः पुत्रदो राजा यापनानां रसायनम्॥

**अक5.16**
पृथक् पलांशं विपचेत् पञ्चमूलमगोक्षुरम्।
क्षीराढके चतुर्थस्थं पिष्टैर्यष्ट्यादिभिर्युतम्॥

**अक5.17**
क्षौद्रतैलाज्यसिन्धूत्थयुक्तं बस्तिः सुपूजितः।
विशेषाद्बालवृद्धस्त्रीसुकुमारसुखात्मनाम्॥

**अक5.18**
तद्वत् सहाचरबलासारिवादर्भसाधितम्।
क्षीरं बस्तिस्तथाभीरुगुडूचीबृहतीद्वयैः।
सिद्धं पयो मागधिकायष्टीमधुककल्कवत्॥

**अक5.19**
पञ्चमूलं बृहत्यादि प्रतिद्रव्यं पलोन्मितम्।
द्विपलं शालिगोधूमयवमाषं सयष्टिकम्॥

**अक5.20**
तैः सिद्धं छागलं क्षीरं कुक्कुटाण्डरसः सिता।
साज्यक्षौद्रद्विलवणस्तैर्बस्तिः शुक्रकृत्परम्।
कल्पोऽयं शिखिगोनर्दमत्स्याद्यण्डरसेष्वपि॥

**अक5.21**
रसः कुलीरमांसस्य चटकाण्डरसान्वितः।
सशर्कराघृतमधुर्बस्तिर्वृष्यतमो मतः॥

**अक5.22**
बस्तसूकरजैर्मुष्कैः कुलीरचटकामिषैः।
सिद्धं पयो बस्तशुक्रमुच्चटेक्षुरकं मधु॥

**अक5.23**
तैर्घृताढ्योऽल्पलवणो बस्तिर्वृष्यतमः परम्।
सिद्धेन पयसा भोज्यमात्मगुप्तोच्चटेक्षुरैः॥

**अक5.24**
अतो दशदशाहेन यस्तु बस्तीन् निषेवते।
वाजीव पुष्टः सवृषो गच्छति प्रमदाशतम्।
एते माक्षिकसंयुक्ताः कुर्वन्त्यतिवृषं नरम्॥

**अक5.25**
नातियोगं न चायोगं स्ताम्भिनस्ते च कुर्वते॥

**अक5.26**
निरूहा लेखनाः प्रायो बृंहणाः स्नेहबस्तयः।
यापनेषूभयं तस्मान्नेष्टं तेष्वनुवासनम्॥

**अक5.27**
मृदुत्वान्न निवर्तन्ते यस्य त्वेते प्रयोजिताः।
समूत्रैर्बस्तिभिस्तीक्ष्णैरास्थाप्यः क्षिप्रमेव सः॥

**अक5.28**
शोफाग्निनाशपाण्डुत्वशूलार्शःपरिकर्तिकाः।
स्युर्ज्वराश्चातिसाराश्च यापनात्यर्थसेवनात्॥

**अक5.29**
अरिष्टक्षारशीध्वाद्यैस्तत्रेष्टा दीपनी क्रिया।
युक्त्या तस्मान्निषेवेत यापनान् न प्रसङ्गतः॥

**अक5.30**
मृद्वल्पौषधसंयोगात् पादहीनप्रमाणतः।
अल्पकालोपयोगाच्च तेषु निष्परिहारता॥

**अक5.31**
द्रव्येषु यापनीयेषु सिद्धान् स्नेहान् पृथक् पृथक्।
बस्तीन् सर्वेषु वा युञ्ज्यात् परिहारविवर्जितान्॥

**अक5.32**
सहाचराभीरुबलारास्नागोक्षुरकात् पृथक्।
तुलां जलद्रोणशते पचेत् द्रोणावशेषिते॥

**अक5.33**
पूतशीते बिसद्राक्षातवक्षीरीनिदिग्धिकाः।
महासहाक्षुद्रसहायष्टीमधुमधूलिकाः॥

**अक5.34**
जीवकर्षभकोदीच्यमृणालोत्पलचन्दनम्।
खर्जूरतालमज्जात्मगुप्तामलकीकणाः॥

**अक5.35**
पटोलमेदात्वक्पत्रशीतपाक्योदनाह्वयाः।
कल्कीकृत्य क्षिपेत्तस्मिन् पृथक् च प्रस्थसम्मितम्॥

**अक5.36**
रसं वराहमहिषबस्तमुष्कोद्भवं तथा।
शिखिकुक्कुटहंसाण्डसम्भवं तैलसर्पिषी॥

**अक5.37**
धात्रीविदारीस्वरसं गव्यक्षीराढकद्वयम्।
ब्रह्मभेरीमृदङ्गादिनिनादैः साधितं च तत्॥

**अक5.38**
सितच्छत्त्रकृतच्छायं सितवस्त्रावगुण्ठितम्।
आरोपितं गजस्कन्धे पूजयित्वा वृषध्वजम्॥

**अक5.39**
कृत्वा स्वस्त्ययनं दद्यात् स्नेहबस्तिमयन्त्रणम्।
प्रासस्तेनातिवृषतां श्रमयेद्वनिताशतम्॥

**अक5.40**
निर्वलीपलितः कान्तश्चिरजीवी भवेत् स च।
नष्टशुक्रक्षतक्षीणविषमज्वरिणां हितः।
व्यापन्नार्तवशुक्राणां पुत्रदाता रसायनम्॥

**अक5.41**
एवं च बस्तयोऽन्येऽपि कल्प्याः पाक्याश्च नैकशः।
शतं वारान् सहस्रं वा पाचयेत् सम्भवे सति॥

**अक5.42**
दोषघ्नाः सपरीहारा वक्ष्यन्ते स्नेहबस्तयः॥

**अक5.43**
दशमूलं बलां रास्नामश्वगन्धां पुनर्नवाम्।
गुडूच्यैरण्डपूतीकभार्ङ्गीवृषकरोहिषम्॥

**अक5.44**
शतावरीं सहचरं काकनासां पलांशकम्।
यवमाषातसीकोलकुलत्थान् प्रसृतोन्मितान्॥

**अक5.45**
वहे विपाच्य तोयस्य द्रोणशेषेण तेन च।
पचेत्तैलाढकं पेष्यैर्जीवनीयैः पलोन्मितैः॥

**अक5.46**
अनुवासनमित्येतत् सर्ववातविकारनुत्।
अनूपानां वसा तद्वज्जीवनीयोपसाधिता॥

**अक5.47**
शताह्वायवबिल्वाम्लैस्तैलं सिद्धं समीरणे।
सैन्धवेनाग्निवर्णेन तप्तं चानिलजिद्धृतम्॥

**अक5.48**
जीवन्तीं मदनं मेदां श्रावणीं मधुकं बलाम्।
शताह्वर्षभकौ कृष्णां काकनासां शतावरीम्॥

**अक5.49**
स्वगुप्तां क्षीरकाकोलीं कर्कटाख्यां शठीं वचाम्।
पिष्ट्वा तैलं घृतं क्षीरे साधयेत चतुर्गुणे॥

**अक5.50**
बृंहणं वातपित्तघ्नं बलशुक्राग्निवर्धनम्।
रजःशुक्रामयहरं पुत्रीयं चानुव सनम्॥

**अक5.51**
शिशिरस्पर्शवीर्यैश्च पिष्टैः क्षीरे चतुर्गुणे।
तैलपादं घृतं सिद्धं पित्तघ्नमनुवासनम्॥

**अक5.52**
सैन्धवं मदनं कुष्ठं शताह्वा निचुलो वचा।
ह्रीबेरं मधुकं भार्ङ्गी देवदारुसकट्फलम्॥

**अक5.53**
नागरं पुष्करं मेदा चविका चित्रकः शठी।
विडङ्गातिविषे श्यामा हरेणुर्नीलिनी स्थिरा॥

**अक5.54**
बिल्वाजमोदचपला दन्ती रास्ना च तैः स्मैः।
साध्यमेरण्डतैलं वा तैलं वा कफरोगनुत्॥

**अक5.55**
वर्ध्मोदावर्तगुल्मार्शःप्लीहमेहाढ्यमारुतान्।
आनाहमश्मरीं चाशु हन्यात्तदनुवासनम्॥

**अक5.56**
साधितं पञ्चमूलेन तैलं बिल्वादिनाथवा।
अन्वासनं श्लेष्महरं द्रव्यैर्वा कफघातिभिः।
फलैरष्टगुणे चाम्ले सिद्धमन्वासनं कफे॥

**अक5.57**
शूलानाहे तु तद्युक्तो निरूहः पटुमूत्रवान्।
पृच्छति स्म मुनिमित्यथ धीमानग्निवेश इह किन्तु फलानाम्।
बस्तिकर्मणि हितं सततं स्यात् तं पुनर्वसुरिति प्रशशास॥

**अक5.58**
इह कुष्ठहिता गरागरी हितमिक्ष्वाकुफलं प्रमेहिणाम्।
कुटजस्य फलं हृदामये प्रवरं कोशफलं तु पाण्डुषु॥

**अक5.59**
उदरे कृतवेधनं हितं मदनं सर्वगदाविरोधि च।
मधुरं सकषायतिक्तकं तदरूक्षं सकटूष्णपिच्छिलम्॥

**अक5.60**
कफपित्तहृदाशुकारि यन्निरपायं पवनानुलोमि च।
प्रवरं तदतः फलादिषु स्मृतमास्थापनयोजनास्विति॥

**अक5.61**
अथ मुनिवृषभे निगद्य वाक्यं स्थितवति विज्ञपयाम्बभूव भूयः।
इदमतिगहनं सहान्यशिष्यैरवनिगतोऽञ्जलिमग्रतो निधाय॥

**अक5.62**
चित्रकर्मगुणकृद्गुरुणोक्तो बस्तिरूर्ध्वमथ चैति न नाभेः।
शीघ्नमापतति चानु स देहात् सर्वतः कथमपोहति दोषान्॥

**अक5.63**
ऊचे गुरुस्तिमितमारुतवश्यमेतत् देहस्य यद्बहिरुपाश्रितमन्तरे वा।
दुष्टस्य तस्य जनयन्ननुलोमतां तु बस्तिर्हिनस्ति विषमानपि रोगपूगान्॥

**अक5.64**
शाखागताः कोष्ठगताश्च रोगा मर्मोर्ध्वसर्वावयवाङ्गजाश्च।
ये सन्ति तेषां न तु कश्चिदन्यो वायोः परं जन्मनि हेतुरस्ति॥

**अक5.65**
विट्श्लेष्मपित्तादिमलाचयानां विक्षेपसंहारकरो हि वायुः।
तस्यातिवृद्धस्य शमाय नान्यद्बस्तेः समं भेषजमस्ति यस्मात्॥

**अक5.66**
शाम्यन्ति यत्नेन जितेऽनिले च तदीरिताः पित्तकफादयोऽपि।
तस्माच्चिकित्सार्धमिति ब्रुवन्ति सर्वां चिकित्सामपि बस्तिमेके॥

**अक5.67**
यच्च पक्वाशस्थोऽपि दोषानापादमस्तकम्।
वीर्येण बस्तिरादत्ते खस्थोऽर्को भूरसानिव॥

**अक5.68**
यत्तत्रौषधवीर्यं हि तदपानेन वायुना।
पर्याप्तमचिरादेव समानः प्रतिपद्यते॥

**अक5.69**
समानाद्युत्तरंचैवं व्यानाद्याः पवनाः क्रमात्।
ते तृप्ताः प्रकृतिं याताः शरीरानुग्रहे स्थिताः॥

**अक5.70**
प्रसह्य पित्तश्लेष्माणौ यथास्थानं निवेश्य च।
सन्तर्पयन्ति परितः स्वान् स्वान् भूतगुणांस्तनौ॥

**अक5.71**
व्यानस्तिर्यगपानोऽधः प्राणश्चोर्ध्वं प्रकर्षति।
यथास्वमेव नाडीभिर्हारिणीभिरिवोदकम्॥

**अक5.72**
एवं वातैः सिराभिश्च वपुर्बस्तिः सुयोजितः।
व्याप्नुवत् प्रसभं हन्ति सकृच्छ्रानपि यक्ष्मणः॥

**अक5.73**
बस्तिस्तस्मात् सर्वकर्मप्रधानं सर्वातङ्कान् हन्ति निःशेषतश्च।
स्रोतांस्यन्तः शोधयित्वा च कुर्यादोजस्तेजः शुक्रमेधाग्निकीर्तिम्॥
॥इति पञ्चमोऽध्यायः॥

अथ षष्ठोऽध्यायः।

**अक6.1**
अथातो बस्तिव्यापत्सिद्धिं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अक6.2**
विबन्धगौरवाध्मानशिरोरुग्वाहनोर्ध्वगाः।
कुक्षिशूलाङ्गरुग्घिध्माहृत्पीडाकर्तनस्रवाः।

अयोगादतियोगाच्च बस्तेः स्युः षट्षडापदः॥

**अक6.3**
अस्निग्धस्विन्नदेहस्य गुरुकोष्ठस्य योजितः।
शीतोऽल्पस्नेहलवणद्रव्यमात्रो घनोऽपि वा॥

**अक6.4**
बस्तिः सङ्क्षोभ्य तं दोषं दुर्बलत्वादनिर्हरन्।
करोति वातविण्मूत्रविबन्धमतिदारुणम्॥

**अक6.5**
नाभिबस्तिरुनां दाहं हृल्लेपं श्वयथुं गुदे।
कण्डूं गण्डानि वैवर्ण्यमरतिं वह्निमार्दवम्॥

**अक6.6**
क्वाथद्वयं प्राग्विहितं मध्येदोषेऽतिसारिणि।
उष्णस्य तस्मादेकस्य तत्र पानं प्रशस्यते।
फलवर्त्यस्तथा स्वेदाः कालं ज्ञात्वा विरेचनम्॥

**अक6.7**
बिल्वमूलत्रिवृद्दारुयवकोलकुलत्थवान्।
सुराविण्मूत्रवान् बस्तिः सप्राक्पेष्यस्तमानयेत्॥

**अक6.8**
सशेषामे निरूहेण मृदुना दोष ईरितः।
मूर्छयत्यनिलं मार्गं रुणद्ध्यग्निं हिनस्ति च॥

**अक6.9**
गौरवक्लमहृच्छूलदाहसम्मोहवेष्टनम्।
ततः कुर्यादुपचरेत्तं रूक्षस्वेदपाचनैः॥

**अक6.10**
पिप्पलीकतृणोशीरदारुमूर्वाशृतं जलम्।
पिबेत् सौवर्चलोन्मिश्रं दीपनं हृद्विशोधनम्॥

**अक6.11**
वचानागरशठ्यो वा दधिमण्डेन मूर्छिताः।
पेयाः प्रसन्नया वा स्युररिष्टेनासवेन वा॥

**अक6.12**
दारुत्रिकटुकं पथ्यां पलाशं चित्रकं शठीम्।
पिष्ट्वा कुष्ठं च मूत्रेण पिबेत् क्षारांश्च दीपनान्।
बस्तिमस्य विदद्ध्याच्च समूत्रं दाशमूलिकम्॥

**अक6.13**
युक्तोऽल्पवीर्यो दोषाढ्ये रूक्षे क्रूराशयेऽथवा।
बस्तिर्दोषावृतो रूद्धमार्गो रुन्ध्यात् समीरणम्॥

**अक6.14**
सविमार्गोऽनिलः कुर्यादाध्मानं मर्मपीडनम्।
विदाहं गुदकोष्ठस्य मुष्कवङ्क्षणवेदनाम्।
रूणद्धि हृदयं शूलैरितश्चेतश्च धावति॥

**अक6.15**
स्वभ्यक्तस्विन्नगात्रस्य तत्र वर्तिं प्रयोजयेत्।
बिल्वादिश्च निरूहः स्यात् पीलुसर्षपमूत्रवान्।
सरलामरदारुभ्यां साधितं चानुवासनम्॥

**अक6.16**
बहुदोषेऽबले क्रूरकोष्ठे बस्तिस्तनुर्मृदुः।
शीतोऽल्पश्चावृतो दोषैः प्रतिहन्ति समीरणम्॥

**अक6.17**
ऊर्ध्वं सोऽनुसरन् देहं कुर्याद्वायुः शिरोरुजम्।
ग्रीवास्तम्भं प्रतिश्यायं बाधिर्यं दृष्टिविभ्रमम्॥

**अक6.18**
तमुष्णतैललवणप्रदिग्धं स्विन्नमर्दितम्।
तीक्ष्णैर्धूमैः प्रधमनैर्नस्यैरास्यविरेचनैः।
विरेकैर्बस्तिभिश्चाशु योज्येदानुलोमिकैः॥

**अक6.19**
स्निग्धस्विन्ने महादोषे बस्तिर्मृद्वल्पभेषजः।
उत्क्लेश्याल्पं हरेद्दोषं जनयेच्च प्रवाहिकाम्॥

**अक6.20**
शोफं बस्तावपाने च सदनं चोरुजङ्क्षयोः।
विबद्धमारुतो जन्तुरभीक्ष्णं स प्रवाहते॥

**अक6.21**
स्वेदाभ्यङ्गनिरूहांश्च शोधनीयानुलोमिकान्।
विदध्याल्लङ्क्षयित्वा च वृत्तिं तस्य विरिक्तवत्॥

**अक6.22**
कुर्वतो वेगसंरोधं पीडितो वातिमात्रया।
अस्निग्धलवणोष्णो वा बस्तिरल्पोऽल्पभेषजः॥

**अक6.23**
मृदुर्वा मारुतेनोर्ध्वं विक्षिप्तो मुखनासिकात्।
निरेति मूर्छाहृल्लासतृड्दाहादीन् प्रवर्तयन्॥

**अक6.24**
मूर्छाविकारं दृष्ट्वास्य सिञ्चेच्छीताम्बुना मुखम्।
वीजेदाक्लमनाशाच्च प्राणायामं च कारयेत्॥

**अक6.25**
पृष्ठपार्श्वोदरं मृद्यात् करैरुष्णैरधोमुखम्।
केशेषूत्क्षिप्य धुन्वीत भाययेद्व्यालदंष्ट्रिभिः।
शस्त्रोल्कारजपुरुषैर्बस्तिरेति तथा ह्यधः॥

**अक6.26**
पाणिवस्त्रैर्गलापीडं कुर्यान्न म्रियते यथा।
प्राणोदाननिरोधाद्धि सुप्रसिद्धतरायनः।
अपानः पवनो बस्तिं तमाश्वेवापकर्षति॥

**अक6.27**
कुष्ठक्रमुककल्कं च पाययेदम्लसंयुतम्।
औष्ण्यात्तैक्ष्ण्यात् सरत्वाच्च बस्तिंतसोस्यानुलोमयेत्।
गोमूत्रेण त्रिवृत्पथ्याकल्कं वाधोनुलोमनम्॥

**अक6.28**
पक्वाशयस्थिते स्विन्ने निरूहो दाशमूलिकः।
यवकोलकुलत्थैश्च विधेयो मूत्रसाधितैः॥

**अक6.29**
बस्तिर्गोमूत्रसिद्धैर्वा सामृतावंशपल्लवैः।
पूतीकरञ्जत्वक्पत्रशठीदेवाह्वरोहिषैः।
सतैलगुडसिन्धूत्थो विरेकौषधकल्कवान्॥

**अक6.30**
बिल्वादिपञ्चमूलेन सिद्धो बस्तिरुरःस्थिते।
शिरस्थे नावनं धूमः प्रच्छायं सर्षपैः शिरः॥

**अक6.31**
बस्तिरत्युष्णतीक्ष्णाम्लघनोऽति स्वेदितस्य वा।
अल्पदोषे मृदौ कोष्ठे प्रयुक्तो वा पुनः पुनः॥

**अक6.32**
अतियोगत्वमापन्नः कुक्षिशूलकरो भवेत्।
विरेचनातियोगेन स तुल्याकृतिसाधनः॥

**अक6.33**
पृश्निपर्णीं स्थिरां पद्मं काश्मर्यं मधुकोत्पले।
पिष्ट्वा द्राक्षां मधूकं च क्षीरे तण्डुलधावने॥

**अक6.34**
द्राक्षायाः पक्कलोष्टस्य प्रसादे मधुकस्य वा।
विनीय सघृतं बस्तिं युञ्ज्याद्दाहेऽतियोगजे॥

**अक6.35**
स्नेहस्वेदैरसम्पाद्य गुरुतीक्ष्णोऽतिमात्रकः।
दुःस्थिताय प्रणिहितो बस्तिर्दुःशोधिताय वा॥

**अक6.36**
अतिप्रवृत्तो मरुतं कोपयेत् स विमार्गगः।
करोत्यङ्गरुजां जृम्भां स्तम्भं भेदं च पर्वणाम्॥

**अक6.37**
तं तैललवणाभ्यक्तं स्वेदितं प्रस्तरादिभिः।
बिल्वकोलयवैरण्डवषार्भूबृहतीद्वयःइ॥

**अक6.38**
आस्थापयेत् ससिन्धूत्थैर्जाङ्गलैराशितं रसैः।
तैलेनानिलजिद्द्रव्यविपक्वेनानुवासयेत्॥

**अक6.39**
मृदुकोष्ठेऽबले बस्तिरतितीक्ष्णोऽतिनिर्हरन्।
कुर्याद्धिध्मां हितं तत्र हिध्माघ्नं बृंहणं च यत्॥

**अक6.40**
बलाबृहत्यादिवराकाश्मर्यफलसैन्धवैः।
सप्रसन्नारनालाम्लैस्तैलं पक्त्वानुवासयेत्॥

**अक6.41**
उष्णाम्बुनाक्षं पिप्पल्या दद्याल्लवणसंयुतम्।
धूमलेहरसक्षीरस्वेदांश्चान्नं च वातजित्॥

**अक6.42**
अतितीक्ष्णः सवातो वा न वा सम्यक्प्रपीडितः।
घट्टयेद्धृदयं बस्तिस्तत्र काशकुशोत्कटैः॥

**अक6.43**
स्यात् साम्ललवणस्कन्धकरीरबदरीनलैः।
शृतैर्बस्तिर्हितः सिद्धो वातघ्नैश्चानुवासनम्॥

**अक6.44**
मृदुकोष्ठाल्पदोषस्य रूक्षतीक्ष्णातिमात्रकः।
हृत्वा बस्तिर्मलाञ्छीघ्रं वातपित्ते प्रकोपयेत्॥

**अक6.45**
नाभिबस्तिगुदांस्ते हि कृन्ततोऽस्य मुहुर्मुहुः।
विवर्णाल्पाल्पमुत्थानं बस्तिनिर्लेखनाद्भवेत्॥

**अक6.46**
स्वादुशीतौषधैस्तत्र पयस्येक्ष्वादिभिः शृतः।
यष्ट्याह्वतिलकल्केन बस्तिःस्यात् क्षीरभोजिनः॥

**अक6.47**
ससर्जरसयष्ट्याह्वं जिङ्गणीकर्दमाञ्जनम्।
विनीय दुग्धे बस्तिः स्याद्व्यक्ताम्लरसभोजिनः।
पिच्छिलश्च हितो बस्तिः स्नेहश्च मधुरैः शृतः॥

**अक6.48**
बस्तिःक्षाराम्लतीक्ष्णोष्णलवणः पैत्तिकस्य वा।
गुदं लिखन् दहन् क्षिण्वन् करोत्यस्रपरिस्रवम्॥

**अक6.49**
स विदग्धं स्रवत्यस्रं वर्णैः पित्तं च भूरिभिः।
बहुशश्चातियोगेन मोहं गच्छति चासकृत्॥

**अक6.50**
तत्रार्द्रैः शाल्मलीपत्रैः क्षुण्णैराजं पयः शृतम्।
पूतं घृतान्वितं बस्तिं दद्यादन्यांश्च पिच्छिलान्॥

**अक6.51**
वटादिपल्लवेष्वेवं कल्पो यवतिलेषु च।
सुवर्चलोपोदकयोः कच्छुदारे च शस्यते॥

**अक6.52**
गुदे च शीतमधुरान् कुर्यात् सेकप्रलेपनान्।
रक्तपित्तातिसारघ्नी क्रिया चात्र प्रशस्यते॥

**अक6.53**
दाहादिषु त्रिवृत्कल्कं मृद्वीकावारिणा पिबेत्।
तद्धि पित्तशकृद्वातान् हत्वा दाहादिकान् जयेत्॥

**अक6.54**
विशुद्धश्च पिबेच्छीतां यवागूं शर्करायुताम्।
युञ्ज्याद्वातिविरिक्तस्य क्षीणविट्कस्य भोजनम्।
माषयूषेण कुल्माषान् पानं दध्यथवा सुराम्॥

**अक6.55**
आमं यः कुणपं रुग्वानुपवेश्येत सारुचिः।
स घनातिविषाकुष्ठनतदारुवचाः पिबेत्॥

**अक6.56**
शकृद्वातमसृक् पित्तं कफं वा योऽतिसार्यते।
पक्वं तत्र स्ववर्गीयो बस्तिः शेषं भिषग्जितम्॥

**अक6.57**
षण्णामेषां द्विसंसर्गात्त्रिंशद्भेदा भवन्ति तु।
केवलैः सहषट्त्रिंशद्विद्यात् सोपद्रवांश्च तान्॥

**अक6.58**
शूलप्रवाहिकाध्मानपरिकर्तारुचिज्वरान्।
तृण्मोहदाहमूर्छादींश्चैषां विद्यादुपद्रवान्॥

**अक6.59**
तत्रामेऽन्तरपानं तु कट्वम्ललवणैर्युतम्।
पाचनं शस्यते बस्तिरामे हि प्रतिषिध्यते॥

**अक6.60**
वातघ्नग्राहिवर्गीयो बस्तिः शकृति शस्यते।
स्वाद्वम्लो व्यक्तलवणः स्नेहबस्तिः समीरणे॥

**अक6.61**
रक्ते रक्तेन पित्ते तु कषायस्वादुतिक्तकः।
सार्यमाणे कफे बस्तिः कषायकटुतिक्तकः॥

**अक6.62**
शकृता वायुना वामे तेन वर्चसि वानिले।
संसृष्टेऽन्तरपानं स्यात् कट्वम्ललवणैर्युतम्॥

**अक6.63**
पित्तेनामेऽसृजा तद्वत् तयोरामेन वा पुनः।
संसृष्टयोर्भवेत् पानं सकटुस्वादुतिक्तकम्॥

**अक6.64**
तथामे कफसंसृष्टे कषायकटुतिक्तकम्।
आमेन तु कफे युक्ते कषायलवणोषणम्॥

**अक6.65**
वातेन विशि पित्ते वा विट्पित्तास्रैस्तथानिले।
स्यात् कषायाम्लमधुरः संसृष्टे बस्तिरुत्तमः।
बस्तिर्वातेन रक्ते तु कार्यः स्वाद्वम्लतिक्तकः॥

**अक6.66**
शकृच्छोणितयोः पित्तशकृतोरस्रपित्तयोः।
बस्तिरन्योन्यसंसर्गे कसायस्वादुतिक्तकः॥

**अक6.67**
कफेन विशि पित्ते वा कफे विट्पित्तयोः।
कटुतिक्तकषायः स्यात् संसृष्टे बस्तिरुत्तमः॥

**अक6.68**
मधुरोषणतिक्तस्तु रक्ते कफविमूर्छिते।
मारुते कफसंसृष्टे कट्वम्ललवणो भवेत्।
स्याद्बस्तिः कटुतिक्ताम्लः संसृष्टे वायुना कफे॥

**अक6.69**
त्रिचतुःपञ्चषड्योगानेवमेव विकल्पयेत्।
युक्तिश्चैषातिसारोक्ता सर्वरोगेष्वपि स्मृता॥

**अक6.70**
युगपत् षड्रसं षण्णां संसर्गे पाचनं भवेत्।
निरामाणां तु पञ्चानां बस्तिः षड्सिको हितः॥

**अक6.71**
उदुम्बरशलाटूनि जम्ब्वाम्रोदुम्बरत्वचः।
शङ्खं सर्जरसं लाक्षां कत्तृणं च पलांशिकम्॥

**अक6.72**
पिष्ट्वा तैः सर्पिषः प्रस्थं क्षीरद्विगुणितं पचेत्।
अतीसारेषु सर्वेषु पेयमेतद्यथाबलम्॥

**अक6.73**
कच्छुराधातकीबिल्वसमङ्गारक्तमूलिभिः।
मसूराश्वत्थशुङ्गैश्च यवागूः स्याज्जले शृतैः॥

**अक6.74**
बालोदुम्बरकट्वङ्गसमग्गाप्लक्षपल्लवैः।
मसूरधातकीपुष्पबलाभिश्च तथा भवेत्॥

**अक6.75**
नानाप्रकारा जायन्ते व्यापदो बस्तिविभ्रमात्।
यथायथं यथावस्थं तासां कुर्वीत साधनम्॥
॥इति षष्ठोऽध्यायः॥

अथ सप्तमोऽध्यायः।

**अक7.1**
अथातः स्नेहादिव्यापत्सिद्धिं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अक7.2**
स्नेहबस्तौ मरुत्पित्तकफात्याशाविडावृते।
अभुक्ते शूनपाय्वामदत्तेऽष्टौ व्यापदः स्मृताः॥

**अक7.3**
शीतोऽल्पो वाधिके वाते पित्तेत्युष्णः कफे मृदुः।
अतिभुक्ते गुरुर्वर्चःसञ्चयेऽल्पबलस्तथा।
दत्तस्तैरावृतः स्नेहो नायात्यभिभवादपि॥

**अक7.4**
स्तम्भोरुसदनाध्मानज्वरशूलाङ्गमर्दनैः।
पार्श्वरुग्वेष्टनैर्विद्याद्वायुना स्नेहमावृतम्॥

**अक7.5**
स्निग्धाम्ललवणोष्णैस्तं रास्नापीतद्रुतैलिकैः।
सौवीरकसुराकोलकुलत्थयवसाधितैः॥

**अक7.6**
निरूहैर्निर्हरेत् सम्यक् समूत्रैः पाञ्चमूलिकैः।
ताभ्यामेव च तैलाभ्यां सायं भुक्तेऽनुवासयेत्॥

**अक7.7**
तृड्दाहरागसम्मोहवैवर्ण्यतमकज्वरैः।
विद्यात् पित्तावृतं स्वादुतिक्तैस्तं बस्तिभिर्हरेत्॥

**अक7.8**
तन्द्राशीतज्वरालस्यप्रसेकारुचिगौरवैः।
समूर्छाग्लानिभिर्विद्याच्छलेष्मणा स्नेहमावृतम्॥

**अक7.9**
कषायतिक्तकटुकैः सुरामूत्रोपसाधितैः।
फलतैलयुतैः साम्लैर्बस्तिभिस्तं विनिर्हरेत्॥

**अक7.10**
छर्दिमूर्छारुचिग्लानिशूलनिद्राङ्गमर्दनैः।
आमलिङ्गैः सदाहैस्तं विद्यादत्यशनावृतम्॥

**अक7.11**
कटूनां लवणानां च क्वाथैश्चूर्णैश्च पाचनम्।
मृदुर्विरेकः सर्वं च तत्रामविहितं हितम्॥

**अक7.12**
विण्मूत्रानिलसङ्गार्तिगुरुत्वाध्मानहृद्ग्रहैः।
स्नेहं विडावृतं ज्ञात्वा स्नेहस्वेदैः सबस्तिभिः॥

**अक7.13**
श्यामाबिल्वादिसिद्धैश्च निरूहैः सानुवासनैः।
निर्हरेद्विधिना सम्यगुदावर्तहरेण च॥

**अक7.14**
अभुक्ते शूनपायोर्वा पेयामात्राशितस्य वा।
गुदे प्रणिहितः स्नेहो वेगाद्धावत्यनावृतः।
ऊर्ध्वकायं ततः कण्ठादूर्ध्वेभ्यः खेभ्य एत्यपि॥

**अक7.15**
मूत्रश्यामात्रिवृत्सिद्धो यवकोलकुलत्थवान्।
तत्सिद्धतैलो देयः स्यान्निरूहः सानुवासनः॥

**अक7.16**
कण्ठादागच्छतः स्तम्भकण्ठग्रहविरेचनैः।
छर्दिघ्नीभिः क्रियाभिश्च तस्य कुर्यान्निवर्तनम्॥

**अक7.17**
नापक्वं प्रणयेत् स्नेहं गुदं स ह्युपलिम्पति।
ततः कुर्यात् सरुङ्मोहकण्डूशोफान् क्रियात्र च।
तीक्ष्णो बस्तिस्तथा तैलमर्कपत्ररसे शृतम्॥

**अक7.18**
ह्रस्वं दीर्घं तनु स्थूलं जीर्णं शिथिलबन्धनम्।
पार्श्वच्छिद्रं तथा वक्रमष्टौ नेत्राणि वर्जयेत्॥

**अक7.19**
अप्राप्त्यतिगतिक्षोभकर्षणनस्रवाः।
गुडपीडा गतिर्जिह्मा तेषां दोषा यथाक्रमम्॥

**अक7.20**
मांसलस्निग्धविषमजालवत्स्थूलवातलः।
छिन्नः क्लिन्नश्च तानष्टौ बस्तीन् कर्मसु वर्जयेत्॥

**अक7.21**
गतिवैषम्यदौर्गन्ध्यजिह्मत्वस्रुतिदुर्ग्रहाः।
फेनिलच्युत्यधार्यत्वं बस्तेः स्युर्बस्तिदोषतः॥

**अक7.22**
उच्चकैरत्यवाक्शीर्षं न्युब्जं सङ्कुचितं स्थितम्।
उत्तानं दक्षिणं पार्श्वं सप्त शय्याः परित्यजेत्॥

**अक7.23**
मूत्राघातोऽतिसम्प्राप्तिरप्राप्तिः साधुनागतिः।
आश्वागतिर्मरुत्कोपस्तृप्तिः पक्वाशयस्य च।
तद्दोषाः स्युर्विधातव्यं यथौपयिकमत्र च॥

**अक7.24**
सवातातिद्रुतोत्क्षिप्ततिर्यगुल्लुप्तकम्पिताः।
अतिमन्दकबाह्यातिवेगदोषाः प्रणेतृतः॥

**अक7.25**
अनुच्छ्रवास्य तु बद्धे वा दत्ते निःशेष एव वा।
प्रविश्य क्षुभितो वायुः शूलतोदकरो भवेत्।
तत्राभ्यङ्गो गुदे स्वेदो वातघ्नान्यशनानि च॥

**अक7.26**
द्रुतं प्रणीते निष्कृष्टे सहसोत्क्षिप्त एव वा।
स्यात् कटीगुदजङ्क्षोरुबस्तिस्तम्भार्तिभेदनम्॥
भोजनं तत्र वातघ्नं स्वेदाभ्यङ्गाः सबस्तयः॥

**अक7.27**
तिर्यग्वल्यावृते द्वारे बद्धे वापि न गच्छति।
नेत्रे तदृजु निष्कृष्य संशोध्य च पुनर्नयेत्॥

**अक7.28**
पीड्यमानेऽन्तरामुक्ते गुदे प्रतिहतोऽनिलः।
उरः शिरोरुजं सादमूर्वोश्च जनयेद्बली।
बस्तिःस्यात्तत्रबिल्वादिः फलश्यामादिमूत्रवान्॥

**अक7.29**
स्याद्दाहो दवथुः शोफः कम्पेनाभिहते गुदे।
कषायमधुराः शीताः सेकास्तत्र सबस्तयः॥

**अक7.30**
अतिमात्रप्रणीतेन नेत्रेण क्षणनाद्वलेः।
स्यात् सार्तिदाहनिस्तोदगुरुवर्चःप्रवर्तनम्।
तत्र सर्पिः पिचुः क्षीरं पिच्छाबस्तिश्च शस्यते॥

**अक7.31**
न भावयति मन्दस्तु बाह्यश्चाशु निवर्तते।
स्नेहस्तत्र पुनः सम्यक् प्रणेयः सिद्धिमिच्छता॥

**अक7.32**
अतिप्रपीडितः कोष्ठे तिष्ठत्यायाति वा गलम्।
तत्र बस्तिर्विरेकश्च गलपीडादि कर्म च॥

**अक7.33**
वमनाद्यैर्विशुद्धं च क्षामदेहबलानलम्।
यथाण्डं तरुणं पूर्णं तैलपात्रं यथा तथा।
भिषक् प्रयत्नतो रक्षेत् सर्वस्मादपचारतः॥

**अक7.34**
दद्यान्मधुरहृद्यानि ततोऽम्ललवणौ रसौ।
स्वादुतिक्तौ ततो भूयः कषायकटुकौ ततः॥

**अक7.35**
अन्योन्यप्रत्यनीकानां रसानां स्निग्धरूक्षयोः।
व्यत्यासादुपयोगेन क्रमात्तं प्रकृतिं नयेत्।
सर्वंसहः स्थिरबलो विज्ञेयः प्रकृतिं गतः॥

**अक7.36**
अत्रान्तरे त्यजेदष्टौ भाष्यादीनि विशेषतः।
उच्चैर्भाष्याच्छिरोरोगतिमिरोरःस्वरव्यथाः॥

**अक7.37**
रक्तनिष्ठीवतमकज्वराद्यास्तत्र साधनम्।
अभ्यङ्गस्वेदनस्याधोभक्तस्नेहोपसेवनम्।
मौनं विधिर्वातहरो यथास्वं च विकारजित्॥

**अक7.38**
अत्यास्यायानयानाभ्यां सन्धिमूर्धत्रिकादिरुक्।
अतिचङ्क्रमणात् पादजङ्घोरुसदनादयः॥

**अक7.39**
तेषां वातहरं सर्वं स्नेहस्वेदादि शस्यते।
अजीर्णभोजनादामविषच्छर्दिज्वरादयः॥

**अक7.40**
तत्र मात्राशितीयोक्तो विधेयो विधिरामहा।
अहितान्नाद्यथादोषं रोगाः स्युर्भेषजानि च॥

**अक7.41**
हलीमकादयः प्रोक्ता दिवास्वप्नात् पुरा गदाः।
विदध्यात् कफजित्तेषु धूमरूक्षान्नलङ्घनम्॥

**अक7.42**
व्यवायाज्जीवितभ्रंशस्तैस्तैरस्यानिलामयैः।
गुदोऽवलुप्यत इव भ्रमतीव च चेतना॥

**अक7.43**
मेढ्रं धूमायति मनस्तमसीव प्रवेश्यते।
जीवनीयशृतक्षीरसर्पिषोरुपसेवनम्।
आहारो बृंहणस्तत्र वृष्यास्ते ते च बस्तयः॥

**अक7.44**
वेगरोधोर्ध्ववातत्वात् प्रागुक्ता ये सदातुराः।
तेषां विबद्धे पवने सर्वदेहोपतापिनि।
फलवर्तिं पुरा दद्यादथ बस्तिं चलापहम्॥

**अक7.45**
निकुम्भकुम्भाग्न्युरुबूकधावनीपुनर्नवं दारु महच्च पञ्चकम्।
फलं च मूत्रे क्वथितं समस्तु तत् घृतं सतैलं लवणानि पञ्च च॥

**अक7.46**
निरूहितं धन्वरसेन भोजयेन्निकुम्भतैलेन ततोऽनुवासयेत्।
बलां सरास्नां फलबिल्वचित्रकान् द्विपञ्चमूलं कृतमालकात् फलम्॥

**अक7.47**
यवान् कुलत्थांश्च पचेज्जले रसः समुस्तपाठेन्द्रयवैश्च कल्कवान्।
सतैलसर्पिर्गुडसैन्धवो हितः सदातुराणां बलपुष्टिवर्णदः॥

**अक7.48**
तथानुवास्यं मधुकेन साधितं फलेन बिल्वेन शताह्वयाथवा।
सजीवनीयस्तु रसोऽनुवासने निरूहणे चालवणः शिशोर्हितः॥

**अक7.49**
निरूहबस्तेर्नैवान्यत् पथ्यं स्थविरबालयोः।
बलाङ्गवर्धनं शीघ्रमादृतो योजयेदतः॥
॥इति सप्तमोऽध्यायः॥

अथ अष्टमोऽध्यायः।

**अक8.1**
अथातो भेषजकल्पं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अक8.2**
जाङ्गले साधारणे वा देशे यथाकालं शिशिरातपपवनसलिलसेविते समे शुचौ प्रदक्षिणोदके श्मशानचैत्यदेवयजनागारसभाश्वभ्रारामवल्मीकोषरविरहिते कुशरोहिषास्तीर्णे स्निग्धकृष्णसुवर्णमधुरसुरभिमृत्तिके मृदावफालकृष्टेनुपहतेन्यैर्बल्वत्तरैर्द्रुमैर्भेषजानि प्रशस्यन्त इति सामान्यतो भूमिपरीक्षा॥

**अक8.3**
विशेषतस्त्वश्मवती स्थिरा गुर्वी श्यामा कृष्णा स्थूलतृणवृक्षसस्यप्राया स्वगुणभूयिष्ठा।
स्निग्धा शीतलासन्नोदका स्निग्धतृणसस्यकोमलवृक्षप्राया शुक्लाचाम्बुगुणभूयिष्ठा।
नानावर्णलघ्वल्पपुष्पवती प्रविरलपाण्डुवृक्षप्ररोहाग्निगुणभूयिष्ठा।
रूक्षा रासभभस्मवर्णा रूक्षतनुकोटरवृक्षप्रायाल्परसप्ररोहानिलगुणभूयिष्ठा।
मृद्वी समा श्वभ्रवत्यव्यक्तरसजला महापर्वतवृक्षा श्यामा चाकाशगुणभूयिष्ठा।
तत्राम्बुपृथिवीगुणभूयिष्ठासु भूमिषु जातानि विरेचनानि बृंहणानि च शस्यन्ते।
अनलानिलाकाशगुणभूयिष्ठासु वमनानि।
सर्वगुणयुक्तासूभयतोभागानि।
आकाशगुणभूयिष्ठासु शमनानि।
एवं बलवत्तमानि भवन्ति॥

**अक8.4**
तत्र यानि कालजान्युपगतसम्पूर्णप्रमाणरसवीर्यगन्धानि कालातपाग्निसलिलपवनशस्त्रजन्तुभिरनुपहतगन्धवर्णरसस्पर्शप्रभावान्यवगाढमूलान्युदीच्यां दिशि स्थितानि।
तेषां शाखापलाशमचिरप्ररूढं वर्षावसन्तयोर्ग्राह्यम्।
ग्रीष्मे मूलानि शिशिरे वा शीर्णप्ररूढपर्णानाम्।
शरदि त्वक्कन्दक्षीराणि।
हेमन्ते साराणि।
यथर्तु पुष्पफलम्॥

**अक8.5**
अन्ये पुनराहुः सौम्यान्यौषधानि सौम्येष्वृतुष्वाग्नेयान्याग्नेयेषु।
एवमव्यापन्नान्यापूर्णतररसवीर्याणि च भवन्ति॥

**अक8.6**
अथ मङ्गलाचारः कल्याणवृत्तः शुचिः शुक्लवासाः सम्पूज्य च देवतामश्विनौ गोब्राह्मणांश्च कृतोपवासः प्राङ्मुख उदङ्मुखो वा गृह्णीयात्।
गृहीत्वा चानुरूपगुणवद्भाजनसंस्थान्यगारेषु पूर्वोत्तरद्वारेषु निवातप्रवातैकदेशेषु नित्यपुष्पोपहारबलिकर्मवत्स्वग्निसलिलोपस्वेदधूमरजोमूषिकचतुष्पदामनभिगमनीयानि स्ववच्छन्नानि शिक्येष्वासज्य स्थापयेत्॥

**अक8.7**
तानि सक्षीराण्युपकल्पयेत्।
तदसम्पत्तावनतिक्रान्तवत्सराणि।
पुराणानि तु पिप्पलीविडङ्गगुडमधुघृतानि॥

**अक8.8**
अपि च।
क्षीरं बाष्कयणं ग्राह्यं विण्मूत्रं तच्च नीरुजाम्।
वयोबलवतां धातुपिच्छशृङ्गखुरादिकम्॥

**अक8.9**
पञ्चविधस्तु भेषजानां कषायकल्पः।
निर्यासः कल्को निर्यूहः शीतः फाण्टश्च।
ते यथापूर्वं बलिनः॥

**अक8.10**
तत्र सद्यःसमुद्धृतप्रक्षालितक्षुण्णस्य तान्तवनिष्पीडितस्य स्वरसो निर्यासः।
उपलदशनादिपिष्टस्तु कल्कः।
शुष्कपिष्टः सूक्ष्मतान्तवपटच्युतश्चूर्णः।
तस्य समस्तद्रव्यापरित्यागादाप्लुतोपयोगाच्च कल्कादभेदः।
क्वाथो निर्यूहः॥

**अक8.11**
तत्र भेद्यान्यौषधान्यणुशो भेदयित्वा छेदयित्वा छेदयानि प्रक्षाल्योदकेन शुचौरूक्षायामधःप्रलिप्तायां ताम्रायोमृन्मयान्यतमायां स्थाल्यां समावाप्य बह्वल्पपानीयग्राहितामौषधानामाकलय्य यावता मुक्तरसता स्यात् तावदुदकमासेचयेच्छोषयेच्च।
अथाग्नावधिश्रित्य महत्यासने सुखोपविष्टः सर्वतः सततमवलोकयन् दर्व्यावघट्टयन् मृदुना परितः समुपगच्छतानलेन साधयेत्।
अवतार्य च परिस्रुतं यथार्हस्पर्शं प्रयुञ्जीत॥

**अक8.12**
क्षीरादिसहितं च द्रव्यं न सम्यङ्मुक्तरसं भवतीति वारिक्वाथपूर्वकं क्षीराद्यैस्तदुपदेशे अनुपदग्धं क्वाथयेत्॥

**अक8.13**
शीतसलिलाप्लुतस्तु निशापर्युषितपूतः शीतः।
उष्णाम्भसि क्षुण्णाभिषुतपूतः फाण्टः॥

**अक8.14**
तत्र सम्यग्रसवीर्यादीन्यौषधस्य समीक्ष्य व्याध्यातुरादिबलतश्च निर्यासादीनां कल्पनां मात्रां च संश्रयेत्॥

**अक8.15**
तथा च केचिदाहुः।
मात्राया न व्यवस्थास्ति व्याधिं कोष्ठं बलं वयः।
आलोच्य देशकालौ च योज्या तद्वच्च कल्पना॥

**अक8.16**
इत्यलमेतदुपदिष्टं बुद्धिमतां ज्ञानप्रबोधाय।
यथा तु सर्वभिषजो विज्ञास्यन्ति तथोपदेक्ष्यते।
निर्यासस्य मध्यमा मात्रा चतुष्पलम्।
कल्कचूर्णयोः कर्षः पलत्रयं तदालोडने॥

**अक8.17**
निर्यूहे भेषजपलमुदकार्धप्रस्थेऽधिश्रित्य पादशेषितमवतारयेत्॥

**अक8.18**
शीतफाण्टयोरौषधपलं षट्चतुर्भिरम्बुपलैरासुतमिति॥

**अक8.19**
स्नेहपाके त्वनिर्दिष्टप्रमाणे समुदितस्य द्रवस्य पादेन स्नेहो योज्यस्तत्पादेन कल्कः॥

**अक8.20**
अन्ये पुनः पठन्ति।
स्नेहपाके त्वमानोक्तौ चतुर्गुणविवर्धितम्।
कल्कस्नेहद्रवं योज्यमधीते शौनकः पुनः॥

**अक8.21**
स्नेहे सिध्यति शुद्धाम्बुनिष्क्वाथस्वरसैः क्रमात्।
कल्कस्य योजयेदंशं चतुर्थं षष्ठमष्टमम्॥

**अक8.22**
पञ्चप्रभृति तु द्रवं पृथक् स्नेहसममेवावपेत्।
अनिरूपितकल्पनं च भैषज्यं कल्कीकुर्यात्।
अथैकध्यं प्रतिसंसृज्याधिश्रित्य च निर्यूहवत्साधयेत्॥

**अक8.23**
तत्र यदा विरमति शब्दः प्रसादमापद्यते स्नेहो यथास्वं वर्णगन्धरसोत्पत्तिर्भैषज्यमङ्गुलीभ्यां मृद्यमानमनतिमृद्वनतिदारुणमनङ्गुलिग्राहि च स्यात्।
स कालस्तस्यावतरणाय॥

**अक8.24**
अपि च।
घृतस्य फेनोपशमस्तैलस्य तु तदुद्भवः।
लेहस्य तन्तुमत्ताप्सु मज्जनं सरणं न च॥

**अक8.25**
अथावतार्य शीतीभूतमहतेन वाससा परिपूय शुचौ दृढे कलशे समासिच्यापिधानेन पिधाय शुक्लेन वस्त्रपट्टेनावच्छाद्य सूत्रेण सुबद्धं स्वनुगुप्तं शुचौ देशे सुस्थितं स्थापयेत्॥

**अक8.26**
परिमाणं पुनः षड्वंश्यो मरीचिः।
ताः षट्सर्षपः।
तेऽष्टौ तण्डुलः।
तौ धान्यमाषः।
तौ यवः।
अतः परं चतुर्गुणवृध्याण्डिकामाषकशाणकर्षपलकुडवप्रस्थाढकद्रोणवहाः कल्प्यन्ते।
धरणं तु पलस्य दशमो भागः।
माषकस्य पर्यायो हेमो धानकश्च।
शाणद्वयस्य पर्यायो द्रङ्क्षणः कोलो वटकश्च।
कर्षस्य सुवर्णमक्षं पिचुर्बिडालपदकं पाणितलं तिन्दुकं कवलग्रहः षोडशिका च।
कर्षद्वयस्य शुक्तिरष्टमिका च।
पलस्य मुष्टिः प्रकुञ्चश्चतुर्थिका बिल्वमाम्रं च।
पलद्वयस्य प्रसृतोऽष्टमानं च।
कुडवस्याञ्जलिः।
कुडवद्वयस्य मानिका।
आढकस्य पात्रं कंसश्च।
द्रोणस्य नल्वणार्मणोन्मानघटकुम्भकलशाः।
द्रोणद्वयस्य शूर्पः।
तुला पुनः पलशतं तानि विंशतिर्भार इति।
भवति चात्र॥

**अक8.27**
शुष्कमेयेष्विदं मानं द्विगुणं तु द्रवार्द्रयोः॥

**अक8.28**
पेषणालोडने वारि स्नेहपाके च निर्द्रवे॥

**अक8.29**
कल्पयेत्सदृशान् भागान् प्रमाणं यत्र नोदितम्॥

**अक8.30**
अनिर्दिष्टाप्रसिद्धेषु मूलं ग्राह्यं त्वगादिषु॥

**अक8.31**
स्नेहपाकस्त्रिधा मन्दश्चिक्कणः खरचिक्कणः।
मन्दः कल्कसमे किट्टे चिक्कणो मदनोपमे॥

**अक8.32**
किञ्चित् सीदति कृष्णे च वर्त्यमाने तु पश्चिमः।
दग्धोऽतौर्ध्वं निष्कार्यः स्यादामस्त्वग्निसादकृत्।
मृदुर्नस्ये खरोऽभ्यङ्गे पाने बस्तौ च चिक्कणः॥

**अक8.33**
हिमवद्विन्ध्यशैलाभ्यां प्रायो व्याप्ता वसुन्धरा।
सौम्यं पथ्यं च तत्राद्यमाग्नेयं वैन्ध्यमौषधम्॥

**समाप्तमिदं कल्पस्थानम्।**

# अष्टाङ्गसंग्रहः कल्पस्थानम् परिभाषा

https://sa.wikisource.org/s/9zt

**अष्टाङ्गसंग्रहः**

**परिभाषा**

**अकप.1**
परिभाषाः प्रवक्ष्यन्ते चिकित्सायां सुसंश्रिताः।
द्रव्याणि षोडशगुणे सलिले क्वाथयेत् भिषक्॥

**अकप.2**
चतुर्थशेषः पूतस्तु कषायो ग्राह्य इष्यते।
अथ क्वाथ्येषु तेषूक्तं तोयादन्यत् द्रव भवेत्॥

**अकप.3**
तच्चाम्बुवत् प्रयोक्तव्यं तत् षोडशगुणं ततः।
द्रवं यत्तत्र पठितं क्षीरं वा दधिमस्तु वा॥

**अकप.4**
मूत्रं तक्रं सुरामण्डं यदि वाप्यम्लकाञ्जिकम्।
जलवत् षोडशगुणं तत् स्यात् पादावशेषितम्॥

**अकप.5**
अनिर्दिष्टे प्रमाणे तु क्वाथ्यानां च द्रवस्य च।
कषायपाककल्पोऽयं कृष्णात्रेयेण वर्णितः॥

**अकप.6**
कर्तव्यं सति निर्देशे यथानिर्दिष्टमेव हि।
अस्यास्तु परिभाषायाः षडङ्गादावसम्भवात्॥

**अकप.7**
तत्र प्रसिद्धिमाश्रित्य भेषजेषु जलेषु च।
तथा विधेया भागाः स्युर्व्याध्यादिसदृशा यथा॥

**अकप.8**
तस्मादर्धपलं वापि कर्षन्नयमथापि वा।
द्रव्याणां स्यात् पलं वापि द्विप्रस्थमुदकस्य तु॥

**अकप.9**
ततोधिकं वा कर्तव्यमूहापोहविशारदैः।
हीनं वापि ततः कार्यमेवं यूषे च पानके॥

**अकप.10**
मांसौदनासवारिष्टपेयासु च वितर्कयेत्।
स्नेहादिसाधनायोक्तो निर्यूहो यत्र तत्र हि॥

**अकप.11**
तत्रापि षोडशगुणः पक्षोयं परिगृह्यते।
द्रव्यं स्नेहसमं क्वाथ्यमत्र पक्षे प्रयुज्यते॥

**अकप.12**
कषाय एव चेत्तत्र द्रवार्थं केवलो भवेत्।
तथान्यदपि तत्रोक्तं द्रवं क्षीरादिकं भवेत्॥

**अकप.13**
ततोनुरूपं सङ्ख्याय द्रव्यं तोयेन साधयेत्।
द्रव्यं स्नेहसमं क्वाथ्यमन्यत्रापि द्रवे सति॥

**अकप.14**
न तत्र युज्यते तस्मादनुरूपेण कल्पयेत्।
अन्येतु भिषजःप्राहुः क्वाथ्यान्यष्टगुणेऽम्भसि॥

**अकप.15**
क्वाथ्यं तु भवति स्नेहादत्र द्विगुणमौषधम्।
कषायेणैव चेत् साध्यः सत्यन्यस्मिन् द्रवे तथा॥

**अकप.16**
साधयेदनुरूपेण केचिदेवं प्रचक्षते।
चतुर्गुणेन तोयेन क्वाथयेदौषधानि तु॥

**अकप.17**
ऋषीणां सुश्रुतादीनां सर्वेषां मतमीदृशम्।
एतावांस्तु विशेषोऽत्र शेषमात्रापि पूर्ववत्॥

**अकप.18**
क्वाथ्यं तु भेषजं स्नेहादत्र पक्षे चतुर्गुणम्।
पलव्यपेक्षया द्रव्यादथ तोयं चतुर्गुणम्॥

**अकप.19**
प्रस्थव्यपेक्षया द्रव्याद्यदा तोयं चतुर्गुणम्।
क्रियते द्विगुणं क्वाथ्यं ततः स्नेहात् प्रयुज्यते॥

**अकप.20**
द्रवाणां द्विगुणं प्रस्थं शुष्कात् प्रस्थाद्यतो मतः।
प्रसिद्धिस्तु चिकित्सायां द्विधा हि भिषजामिह॥

**अकप.21**
पलव्यपेक्सयाप्यस्ति तथा प्रस्थव्यपेक्षया।
सुश्रुतस्य तु यः पूर्वमुपन्यस्तश्चिरन्तनः।
पाठः पलव्यपेक्षायां ज्ञापकं तदुदाहृतम्॥

**अकप.22**
इत्येवं त्रिविधः प्रोक्तः कषायग्रहणं प्रति।
एवमन्यत्र सर्वेषां कल्कात् स्नेहश्चतुर्गुणः॥

**अकप.23**
चतुर्गुणं द्रवं स्नेहाद्यत्र यत् पठ्यते द्रवम्।
अनुक्ते तु द्रवे देयं जलमेव चतुर्गुणम्॥

**अकप.24**
कल्ककल्पस्तु चरके कषायाणां न कीर्तितः॥

**अकप.25**
स्नेहपाकविधिस्तूक्त एवं दृढबलेन तु।
चरकोऽर्धकृते शास्त्रे ब्रह्मभूयं गतो यतः॥

**अकप.26**
कषायस्य तु पेयस्य यदि वा कल्कचूर्णयोः।
मात्रा दृढबलेनापि तत्रेति परिभाषिता॥

**अकप.27**
चरकोक्तैर्मया वाक्यैरनुमानात् प्रसाधिता।
अनुक्तापि यथा मात्रा पञ्चाद्वक्ष्याम्यहं तथा॥

**अकप.28**
एषां कषायकल्पानां प्रविभागो विधीयते।
कषायकल्पे त्रिविधे यश्चतुर्गुणितोदकः॥

**अकप.29**
कषायकल्पः स्नेहेषु साध्येष्वेव समाश्रितः।
वैद्यैः प्रायेण न तथा यः षोडशगुणोदकः॥

**अकप.30**
चतुर्गुणोदके पक्षे स्नेहाद्द्रव्यं चतुर्गुणम्।
अष्टाविंशं पलशतं क्वाथ्यद्रव्यस्य जायते॥

**अकप.31**
स्नेहप्रस्थे विपक्तव्ये शुष्कं तच्च भवेद्यदि।
आर्द्रं चेदुद्धृतं सद्यस्ततः पलशतद्वयम्॥

**अकप.32**
स्नेहप्रस्थे भवेत्साध्ये षट्पञ्चाशत् पलाधिकम्।
एवं बहुत्वात् द्रव्यस्य यश्चतुर्गुणितोदकः॥

**अकप.33**
सकल्पोऽभिमतस्तत्र स्नेहः स्याद्वीर्यवत्तरः।
सहस्रपाकाः स्नेहास्तु शतपाकाश्च कीर्तिताः॥

**अकप.34**
सुभावितं स्वल्पमपि द्रव्यं तद्बहुकर्मकृत्।
तस्माद्बहुतरं द्रव्यं यत्र पक्षे प्रयुज्यते॥

**अकप.35**
स्नेहपाकेषु सः श्रेयानित्येष तु मयाश्रितः।
स्नेहपाकविधावेव प्रयोगस्तस्य युज्यते॥

**अकप.36**
पाचनाः शमनीयाश्च ये कषाया ज्वरादिषु।
उदीरिताः पुनस्तेषु कषायेषूपकल्प्यते॥

**अकप.37**
चतुर्गुणादक पेयं कषायस्य पलं भवेत्।
तस्माद्द्रव्यपलं वैद्याः पाचनेषु प्रयुञ्जते॥

**अकप.38**
मात्रां तु वैद्याः क्वाथस्य पाययन्ति चतुष्पलाम्।
क्रियमाणः प्रसिद्धोऽयं पारम्पर्यागतो विधिः॥

**अकप.39**
वाधितुं शक्यते नैव ज्ञापकं चात्र विद्यते।
पलं वत्सकबीजस्य श्रपयित्वा रसं पिबेत्॥

**अकप.40**
आचार्यचरकेणैवमतिसारे तु भाषितम्।
पटोलाद्ये कषाये च क्वाथ्यद्रव्यपलं कृतम्॥

**अकप.41**
चतुर्गुणेन तोयेन पचेद्द्रव्यपले सति।
चतुर्भागावशेषं तु पेयं क्वाथपलं भवेत्॥

**अकप.42**
शास्त्रे कुष्ठे च मात्रा सा महती सम्प्रकाशिता।
चतुष्पला कषायस्य मात्रा या भिषजां मता॥

**अकप.43**
पले चतुर्गुणजले सा मात्रा न प्रसिध्यति।
एवं सति च साध्यं स्याद्भेषजानां चतुष्पलम्॥

**अकप.44**
चतुष्पलस्य द्रव्यस्य क्वथितस्य चतुर्गुणे।
तोये चतुर्थशेषस्य पेयः क्वाथश्चतुष्पलः॥

**अकप.45**
भट्टारहरिचन्द्रेण खरणादे प्रकीर्तिता।
पातव्या षट्पला मात्रा तस्य द्रव्यपलानि षट्॥

**अकप.46**
क्वाथानि संप्रयुज्यन्ते जलं द्रव्याच्चतुर्गुणम्।
पटोलाद्ये च तेनापि क्वाथ्यद्रव्यपलं कृतम्॥

**अकप.47**
खरणादकृता मात्रा पेया तेनैव षट्पला।
परस्परविरुद्धं तत्तस्याप्येतत् प्रयुज्यते॥

**अकप.48**
अप्रसिद्धो विधिश्चायं कषायस्य ज्वरादिषु।
न षट्पलानि क्वाथ्यन्ते न च तोयं चतुर्गुणम्॥

**अकप.49**
चतुर्गुणोदका तस्मात् परिभाषा न युज्यते।
ज्वरादीनां कषायेषु स्नेहेष्वेव हि सा मता॥

**अकप.50**
कृष्णात्रेयमुनिप्रोक्ता या षोडशगुणोदका।
ज्वरादिषु कषायाणां ग्रहणं क्रियते तया॥

**अकप.51**
चतुर्गुणोदका यापि परिभाषोपदिश्यते।
तत्रापि हि विशेषोऽयमन्यः कैश्चिदुपाश्रितः॥

**अकप.52**
स्नेहेषु पलनिर्देशो येषु न विद्यते।
प्रस्थव्यपेक्षया चात्र सङ्ख्येयमुदकौषधम्॥

**अकप.53**
पलव्यपेक्षया चापि समाचारो द्विधा अपि।
पूर्वं प्रस्थव्यपेक्षा या प्रोक्ता विज्ञापके सति॥

**अकप.54**
द्रव्याणां पलनिर्देशो यत्रोक्तो मिश्रके तथा।
पलव्यपेक्षयैवात्र तोयमेवं चतुर्गुणम्॥

**अकप.55**
प्रदेशान्तरनिर्देशाच्चरकेऽप्यनुमीयते।
कषायमात्रा पातव्या यद्यप्यपरिभाषिता॥

**अकप.56**
स्वर्णक्षीर्यादिके योगे पाण्डुरोगचिकित्सिते।
पातव्या कथिता मात्रा गोमूत्रेण चतुष्पला॥

**अकप.57**
रोहिणीकटुकादीनां पित्तगुल्मचिकित्सिते।
घृतं मुक्त्वा कषायस्य प्रोक्ता मात्रा चतुष्पला॥

**अकप.58**
अतोऽनुमानाच्चरके सिद्धा मात्रा चतुष्पला।
द्रव्याणां च पलं क्वाथ्यं पटोलाद्ये प्रकीर्तितम्॥

**अकप.59**
पलं वत्सकबीजस्य निर्दिष्टं चातिसारिके।
तत् षोडशगुणे तोये यदि न क्वाथ्यते ततः॥

**अकप.60**
चतुर्गुणोदके तोये पेयं क्वाथपलं भवेत्।
इत्येतत् षोडशगुणं तोयं यत्र प्रयुज्यते॥

**अकप.61**
एषैव चरकस्यापि परिभाषानुमीयते।
पातव्येषु कषायेषु मुस्तपर्पटकादिषु॥

**अकप.62**
विशेषः कथ्यतेऽन्योऽपि माने शुष्कद्रवाश्रये।
शुष्कद्रव्याश्रयं मानं निर्दिश्य यदुदाहृतम्॥

**अकप.63**
द्रवेषु द्विगुणं मानं सद्यश्चैवोद्धृतेषु च।
द्विगुणं मानमित्येतदारभ्य कुडवादिति॥

**अकप.64**
शुष्काणां च द्रवाणां च समं तु कुडवादधः।
तुलायामपि नैवेष्टा द्विगुणा मानकल्पना॥

**अकप.65**
तुलापलशतं चैव तच्छुष्कद्रवयोर्मतम्।
पलं चतुर्गुणं चेष्टं प्रसिद्ध ज्ञापकादिकम्॥

**अकप.66**
सहाचरतुलायास्तु रसे तैलाढकं पचेत्।
यदुक्तं शतमेवात्र पलानां परिगृह्यते॥

**अकप.67**
चतुःसुवर्णमेतच्च पलं नाष्टसुवर्णकम्।
द्रव्यस्य द्विगुणत्वे स्यात् पलमष्टसुवर्णकम्॥

**अकप.68**
नैवाञ्जलौ न प्रसृते न पले न पलादधः।
द्रवाणामौषधानां हि द्विगुणं मानमिष्यते॥

**अकप.69**
द्विगुणत्वे द्रवेषु स्यात् पलमष्टसुवणकम्।
तेनैषां द्विगुणत्वेन क्रियामार्गो विरुध्यते॥

**अकप.70**
कुडवाद्यासु संज्ञासु द्रवाणां द्विगुणो विधिः।
विद्यते ज्ञापकं चात्र चरकाचार्यदर्शितम्॥

**अकप.71**
स्पष्टार्थमेव पठितमिदं कुष्ठचिकित्सिते।
सलिलाढकेऽष्टभागे शेषे पूतो रसो ग्राह्यः॥

**अकप.72**
ते च कषायाष्टपले चतुष्पलं सर्पिषश्च पक्तव्यम्।
यावत्स्यादष्टपलं शेषं पेयं ततः कोष्णमिति॥

**अकप.73**
अष्टभागावशेषे तु पलानामष्टकद्वयम्।
पलस्य द्विगुणे माने क्रियमाणे न युज्यते॥

**अकप.74**
द्विगुणे हि पले तत् स्यादेकमेव पलाष्टकम्।
चतुष्पलं च दातव्यं यत् प्रोक्तं सह सर्पिसा॥

**अकप.75**
पलस्य द्विगुणे माने तदप्यष्टपलं भवेत्।
चतुःसुवर्णं हि पलं शुष्काणामिष्यते यतः॥

**अकप.76**
द्विगुणत्वात् द्रवाणां हि तत् स्यादष्टसुवर्णकम्।
निरूहमात्रानिर्देश एवं सति च बाध्यते॥

**अकप.77**
प्रसृतार्धं समारभ्य द्वादश प्रसृताः परम्।
एषा मात्रा द्विगुणिता द्विगुणे प्रसृते भवेत्॥

**अकप.78**
निरूहमात्रा शास्त्रोक्ता द्वादशप्रसृतास्तथा।
चत्वारिंशत् पलानि स्युरष्टाभिरधिकानि च॥

**अकप.79**
व्याध्यादिषु तु मध्येषु क्वाथस्याञ्जलिरिष्यते।
अत्र सुश्रुतनिदशे क्वाथोऽयं द्विगुणो भवेत्॥

**अकप.80**
स्वरसात् क्वथिताच्छीतात् कषायात् षट्पलं पिबेत्।
यदुक्तं खरणादेन तद्द्वादशपलं भवेत्॥

**अकप.81**
पैत्तिके पठ्यते गुल्मे सर्पिषश्च चतुष्पलम्।
पिबेत् संमूर्छितं तेन गुल्मः शाम्यति पैत्तिकः॥

**अकप.82**
चतुष्पलं घृतस्येदं मात्राप्यष्टपलं भवेत्।
स्वर्णक्षीर्यादिके योगे गोमूत्राञ्जलिरिष्यते॥

**अकप.83**
अञ्जलेर्द्विगुणत्वाद्धि मात्रा साष्टपला भवेत्।
गौल्मिके त्रायमाणाद्ये घृते च परिपठ्यते॥

**अकप.84**
रसस्यामलकेक्षूणां क्षीरस्य च घृतस्य च।
पलानि पृथगष्टाष्टौ कृत्वा सम्यग्विपाचयेत्॥

**अकप.85**
अष्टौ प्रत्येकमेतानि स्युः षोडश पलानि तु।
तस्मादेवंप्रकारेषु निर्देशेषु विरुध्यते॥

**अकप.86**
द्रवाणां द्विगुणं मानं तत्कार्यं कुडवादिषु।
आर्द्रेष्वपि न सर्वेषु सद्यस्तेषूद्धृतेषु च॥

**अकप.87**
द्विगुणं मानमिच्छन्ति विशेषोऽत्र च कल्प्यते।
शुष्काणि विनियुज्यन्ते दशमूलादिकानि हि॥

**अकप.88**
तेष्वेव द्विगुणं मानं न सर्वेषूद्धृतेषु हि।
आर्द्राणामेव येषां तु प्रसिद्धिमुपकल्पयेत्॥

**अकप.89**
वासाघृते वृषघृते तैले साहचरे तथा।
आर्द्राणां द्विगुणं मानमेवमादिषु नेष्यते॥

**अकप.90**
आर्द्राणामेव तेषां हि प्रयोगः शस्यते यतः।
शतावरीमूलतुलाश्चतस्रो याः प्रकीर्तिताः॥

**अकप.91**
नै तत्र द्विगुणं मानं भिषग्भिः कैश्चिदाश्रितम्।
वद्यबुद्धिविकासार्थमिदमन्यत् प्रकाश्यते॥

**अकप.92**
क्वाथ्यानामौषधानां हि प्रमाणं यत्र नोदितम्।
चतुर्गुणं च निर्दिष्टमन्यत् क्षीरादिकं द्रवम्॥

**अकप.93**
कषायोऽप्यौषधानां हि तत्र कार्यश्चतुर्गुणः।
उदाहरणमत्रेष्टं महाकल्याणकं घृतम्॥

**अकप.94**
एवमेवौषधानां हि प्रमाणं यत्र नोदितम्।
द्विगुणं चापि निर्दिष्टमन्यत् क्षीरादिकं द्रवम्॥

**अकप.95**
कषायोऽप्यौषधानां हि द्विगुणस्तत्र युज्यते।
वासादिकं ज्वरे प्रोक्तमत्रोदाहरणं स्मृतम्॥

**अकप.96**
निर्दिष्टं क्षीरमन्यद्वा द्रवं यत्र चतुर्गुणम्।
क्वाथौषधानां मानं च प्रोक्तं नोक्तं जलस्य तु॥

**अकप.97**
तत्रोषधिवशादेव सङ्ख्या क्वाथस्य गम्यते।
चतुर्गुणोदका तत्र परिभाषा यदीष्यते॥

**अकप.98**
ततो द्रव्यसमस्तत्र कषायः परिकल्प्यते।
यदा तु परिभाषेष्टा या षोडशगुणोदका॥

**अकप.99**
चतुर्थशेषः क्वाथः स्याततो द्रव्याच्चतुर्गुणः।
अत्र साहचरं तैलमुदाहरणामिष्यते॥

**अकप.100**
यत्रौषधं कषायोऽपि द्रवं क्षीरादिकं त्रयम्।
प्रमाणं तु तथा नोक्तं स्नेहस्योक्तं न वा भवेत्॥

**अकप.101**
तुल्यं क्वाथेन दातव्यं तत्र क्षीरादिकं द्रवम्।
कर्तव्यं च तथा तत् स्याद्यथा स्नेहाच्चतुर्गुणम्॥

**अकप.102**
गौल्मिको मिश्रकस्नेह उदाहरणमत्र हि।
एवं वै द्विगुणे स्नेहात् त्रिगुणे च प्रकीर्तिते॥

**अकप.103**
क्षीरादिके द्रवे कार्यं कषायग्रहणं तथा।
यथा कषायसहितं द्रवं स्यात्तच्चतुर्गुणम्॥

**अकप.104**
अत्रोदाहरणं तत् स्याद्यथास्नेहाच्चतुर्गुणः।
कषायः पठ्यते यत्र प्रमाणं चास्य नोदितम्॥

**अकप.105**
चतुर्गुणं वाप्यधिकं प्रोक्तं क्षीरादिकं द्रवम्।
तत्रापि च प्रयोक्तव्यं स्नेहात् क्वाथं चतुर्गुणम्॥

**अकप.106**
पञ्चमूलकषायेण पिण्याकं बहुवार्षिकम्।
पठ्यते वातरोगे तदुदाहरणमत्र हि॥

**अकप.107**
बहूनि यत्र पठ्यन्ते क्वचित् स्नेहे द्रवाणि हि।
बहूनामपि तेषां च परिमाणं न पठ्यते॥

**अकप.108**
सर्वेषां समुदायः स्यात्तत्र स्नेहाच्चतुर्गुणः।
स्नेहपाकविधिं केचिदेवं समनुचक्षते॥

**अकप.109**
बहुष्वेकैकमिच्छन्ति केचित्तत्र समं द्रवम्।
इत्येवं मतभेदात्तु यथा क्वाथविधौ तथा॥

**अकप.110**
चतुर्गुणोदकः पक्षो यदा तत्र समाश्रितः।
बहुद्रव्यं किल स्नेहो वीर्यवाञ्छतपाकवत्॥

**अकप.111**
अनयैवोपपत्या तु समुदायं चतुर्गुणम्।
नेच्छन्ति केचित् प्रत्येकमाहुः स्नेहसमं द्रवम्॥

**अकप.112**
ग्रहणीरौगिके स्नेहे पञ्चमूलाभयादिके।
शुक्तेन मातुलुङ्गस्य स्वरसेनैवमादितः॥

**अकप.113**
उदाहरणमत्रास्ति यो वाप्यन्यो बहुद्रवः।
श्लोकैरेषोणुतैलस्य कथ्यते पाकसंविधिः॥

**अकप.114**
यस्य साधयितुं तैलं यावन्मात्रमभीप्सितम्।
तत्रौषधानि तावन्ति दत्वा तोयं चतुर्गुणम्॥

**अकप.115**
कषायार्थं विपच्यन्ते यः कषायश्चतुर्गुणः।
यावन्मात्रस्य तैलस्य दद्यात् पादावशेषितम्॥

**अकप.116**
यावन्मात्रमसौ तैलात् कषायो नावतार्यते।
चतुर्गुणोऽत्र किं तर्हि पाक्याद्दशगुणः कृतः॥

**अकप.117**
चतुर्गुणेन तोयेन प्राप्तानि परिभाषया।
क्वाथ्यानि यानि तान्यत्र पाक्याः शतगुणे जले॥

**अकप.118**
क्वाथ्यन्ते परिभाषा तु शास्त्रवाक्येन बाधिता।
इत्येवमणुतैलस्य कर्तव्यं सम्प्रसाधनम्॥

**अकप.119**
गद्योक्तो यः पुनः श्लोकैरर्थः समनुगीयते।
तद्व्यक्तिव्यवसायार्थं द्विरुक्तिः सा न गर्ह्यते।

[प्रागुक्तोऽपि मयार्थो यः श्लोकैस्तस्मात् प्रकाशितः॥]

**॥इति अष्टमोऽध्यायः॥**

# अष्टाङ्गसंग्रहः उत्तरस्थानम् अध्याय १-५

https://sa.wikisource.org/s/9zu

**अष्टाङ्गसंग्रहः**

अष्टाङ्गसङ्ग्रहः

उत्तरस्थानम्

अथ प्रथमोऽध्यायः।

**अउ1.1**
अथातो बालोपचरणीयं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ1.2**
अथ खलु जातमात्रमेव बालमुल्बात् सैन्धवसर्पिषा मार्जयेत्॥

**अउ1.3**
ततोऽस्यातिप्रबलमोहज्वरपरीतसर्वगात्रस्य क्रोशितुमपि रुजानुरूपमसमर्थस्यानवस्थिताशेषदेहधातोरसम्भाव्ययौवनाद्यवस्थस्य क्रकचस्पर्शमिव करवसनशयनसंसर्गं मन्यमानस्याविकल्पितमङ्गानि विक्षिपतः पुनरिव मरणमनुभवतो लीयमानसंज्ञस्यातिसम्बाधयोनिपुटावपीडितप्राणप्रत्यानयनाय बलातैलेन परिषेकं कुर्यात्।
कर्णमूले चाश्मनोः सङ्घट्टनम्॥

**अउ1.4**
यदि वाचेष्ट एव स्यात्ततः कृष्णकपालिकया शूर्पेण चैनमभिनिष्पुनीयात्।
दक्षिणकर्णमूले च मन्त्रस्योच्चारयेत्॥

**अउ1.5**
अङ्गादङ्गात् सम्भवसि हृदयादभिजायसे।
आत्मा वै पुत्रनामासि स जीव शरदां शतम्॥

**अउ1.6**
शतायुः शतवर्षोऽसि दीर्घमायुरवाप्नुहि।
नक्षत्राणि दिशो रात्रिरहश्च त्वाभिरक्षतु॥

**अउ1.7**
प्रत्यागतप्राणस्य च प्रकृतिभूतस्य नाभिनालं नालाभिबन्धनाच्चतुरङ्गुलस्योर्ध्वं क्षौमसूत्रेण बध्वा तीक्ष्णेन शस्त्रेण वर्धयेत्।
ग्रीवायां चैनमासज्जेत्।
नाभिं च कुष्ठतैलेन सेचयेत्॥

**अउ1.8**
ततः क्षीरवृक्षकषायेण सर्वगन्धोदकेन वा तप्ततपनीयरजतनिर्वापणकवोष्णेन कपित्थपत्रकषायेण वा तद्विधेन स्नापयेत्॥

**अउ1.9**
ततोऽस्य सुपरिलिखितनखया सुप्रक्षालितोपवानया कार्पासपिच्चवगुण्ठितया दक्षिणप्रदेशिन्या जिह्वौष्ठकण्ठमनुसुखं प्रमृज्यात्।
तालु चोन्नाम्य स्नेहपिचुनोपरिष्टादवगुण्ठयेत्॥

**अउ1.10**
ततश्चैन्द्रीब्राह्मीशङ्खपुष्पीवचाकल्कं मधुघृतोपेतं हरेणुमात्रं कुशाग्राभिमन्त्रितं सौवर्णेनाश्वत्थपत्रेण मेधायुर्बलजननं प्राशयेत्।
तद्वत् ब्राह्मीबलानन्ताशतावर्यन्यतमचूर्णं वा॥

**अउ1.11**
ततः सैन्धवोपहितेन सर्पिषा गर्भोदकानि वामयेत्।
तथास्योरःकण्ठविशुध्या लाघवमभिलाषश्च जायते॥

**अउ1.12**
अथास्य जातकर्म प्राजापत्येन विधिना कुर्यात्।

अपि च॥

**अउ1.13**
सिराणां हृदयस्थानां विवृतत्वात् प्रसूतितः।
तृतीयेऽह्नि चतुर्थे वा स्त्रीणां स्तन्यं प्रवर्तते॥

**अउ1.14**
तस्मात् प्रथमेऽहन्यनन्तामिश्रिते मधुसर्पिषी मन्त्रपूते त्रिकालं प्राशयेत्।
द्वितीये लक्ष्मणासिद्धं सर्पिस्तृतीये च॥

**अउ1.15**
ततः प्राङ्निवारितस्तन्यस्य स्वपाणितलसम्मितं सर्पिर्द्विकालं दापयेदनन्तरं च स्तन्यमिष्टतः॥

**अउ1.16**
अहरहश्चास्य श्रोत्रशृङ्गाटकं स्नेहाप्लुतेन प्लोतेन प्रच्छादयेत्॥

**अउ1.17**
प्राक्शिरसं चैनं क्षौमनिचये संवेशयेदुच्छीर्षके चास्याभिमन्त्रितमुदकुम्भं स्थापयेत् द्वारपक्षयोश्च॥

**अउ1.18**
आदारीविदारीबदरीखदिरनिम्बपीलुपरूषकशाखाभिरेनं वीजयेत्।
ताभिश्च समन्ततः सूतिकागारं परिवारयेत्।
सर्षपातसीकणकणिकाश्चान्तर्बहिः प्रकिरेत्।
सायं प्रातश्च बलिम्॥

**अउ1.19**
व्रणोक्तैश्च गुग्गुल्वादिभिर्धूपं कुर्वीत।
तथा ब्राह्मणोथर्ववेदविद्दशाहं शान्तिकर्म कुर्यात्।
मायूरीं महामायूरीमार्यारत्नकेतुधारिणीं चोभयकालं वाचयेत्॥

**अउ1.20**
हिङ्गुवचातुरुष्करक्षोघ्नैः पोटलिकामुत्तरदेहल्यामासज्जेत्।
कुमारस्य च सह मात्रा कण्ठे उच्छीर्षके च।
तद्वदार्यापर्णशबरीमार्यापराजितां च गोरोचनाभिलिखिताम्॥

**अउ1.21**
द्वारे च देहलीमनुतिर्यङ्मुसलं निधापयेत्।
कणकण्डकतिन्दुकेन्धनाग्निं नक्तं दिवं च जागृयात्।
तथानुरक्ताः स्त्रियः सुहृदश्च।
प्रहृष्टजनसम्पूर्णं च तद्वेश्म कार्यम्॥

**अउ1.22**
अथास्य समानवर्णा मध्यमवयाः शुचिरलोलुपा निभृतानातुरा जीवद्वत्सा वत्सला दक्षिणा ब्रह्मचारिण्यव्यङ्गा बहुक्षीरा शुक्लाम्बराचरा दीर्घह्रस्वादिदेहदोषाष्टकरहिता अलम्बोर्ध्वचुचूकातिपीनहनिस्तनदोषमुक्ता युक्तचूचुका धात्री स्यात्तस्या एव स्तन्यं पिबेत्॥

**अउ1.23**
तच्चोदकपात्रे दुह्यमानमेकतां यदुदकेन सह गच्छति वक्ष्यमाणदोषरहितं च तच्छुद्धमारोग्यबलजननम्॥

**अउ1.24**
अथ धात्री स्नातानुलिप्ता नित्यमहतवासाः सुमनाः प्रजास्थापनौषधीः शिरसा बिभ्राणा प्राङ्मुखी स्तनं प्राग्दक्षिणं धौतमीषत्परिस्रुतं पाययेत्॥

**अउ1.25**
नानास्तन्यस्य ह्यसात्म्यत्वान्नानाविधा व्यापदो भवन्ति।
अपरिस्रुते चातिस्तन्यपूर्णस्तनपानेनोत्स्नेहनात् कासश्वासज्वरच्छर्दिषां सम्भवः॥

**अउ1.26**
रुक्षान्नपानकर्शनक्रोधशोककामादिभिः स्तन्यनाशः।
स्तन्यजननानि तु मद्यानि शीधुवर्ज्यान्यानूपमांसानि द्रवाः स्वाद्वम्ललवणप्रायाश्चाहाराः क्षीरिण्यश्चौषधयः क्षीरपानमनायासः सौमनस्यं च॥

**अउ1.27**
न तु क्षुधितशोकार्तश्रान्तक्रुद्धप्रदुष्टधातुंगर्भिणीविरुद्धाहारभुक्तानां स्तन्यं पाययेन्नाजीर्णौषधं च बालमिति।
भवति चात्र॥

**अउ1.28**
षष्ठीं निशां विशेषेण कृतरक्षाबलिक्रियाः।
जागृयुर्बान्धवास्तस्य दधतः परमां मुदम्॥

**अउ1.29**
दशमे द्वादशे वाह्नि गोत्राचारैः शुभैः शुभे।
सूता स्नानोत्सवं कुर्यात् पितापत्यस्य नाम च॥

**अउ1.30**
दिने शततमे वाख्यां पूर्णे संवत्सरेऽथवा।
बिभ्रतोऽङ्गैर्मनोह्वालरोचनागरुचन्दनम्॥

**अउ1.31**
पूज्यं त्रिपुरुषानूकमादौ घोषवदक्षरम्।
अवृद्धं कृतमूष्मान्तमनरातिप्रतिष्ठितम्॥

**अउ1.32**
नक्षत्रदेवतायुक्तं तदेव तु न केवलम्।
मङ्गल्यमन्तरन्तस्थं न दुष्टं न च तद्धितम्॥

**अउ1.33**
पुंसो विसर्जनीयान्तं समवर्णं स्त्रियाः पुनः।
विषमाक्षरमक्रूरं विस्पष्टार्थं मनोरमम्।
सुखोद्यं दीर्घवर्णान्तमाशीर्वादाभिधानवत्॥

**अउ1.34**
ततः प्रकृतिभेदोक्तरूपैरायुःपरीक्षणम्।
प्रागुदक्शिरसःकुर्यात् बालस्यज्ञानवान्भिषक्॥

**अउ1.35**
प्रशस्तवास्तुशरणं सज्जोपकरणं शुचि।
निर्वातं च प्रवातं च वृद्धस्त्रीवैद्यसेवितम्॥

**अउ1.36**
निर्मत्कुणाखुमशकमतमस्कं च शस्यते।
शुचिधौतोपवानानि निर्वलीनि मृदूनि च॥

**अउ1.37**
शय्यास्तरणवासांसि रक्षोघ्नैर्धूपितानि च।
काकोऽविशस्तः शस्तश्च धूपने त्रिवृतान्वितः।
वचाज्यकुष्ठश्रीवेष्टसर्षपैर्धूपयेत् सदा॥

**अउ1.38**
बोधयेत् सहसा सुप्तं नो न चैनं समुत्क्षिपेत्।
तथाह्यस्य समुत्रासो वेगरोधश्च जायते॥

**अउ1.39**
माक्षिकामलकव्योषबृहतीमूलसैन्धवैः।
लालापनोदरुच्यर्थं मुखमन्तः परामृशेत्॥

**अउ1.40**
जीवत्खड्गादिशृङ्गेषु समासक्तान्छुभान् मणीन्।
धारयेद्दश चैन्द्र्यादीन्जीवकर्षभकावपि॥

**अउ1.41**
हस्ताभ्यां ग्रीवया मूर्ध्ना विशेषात् सततं वचाम्।
आयुर्मेधास्मृतिस्वास्थ्यकरीं रक्षोभिरक्षणीम्॥

**अउ1.42**
स्तन्यदोषात् गदास्तस्य यथोक्तं तत् पिबेद्यतः।
पीनोऽतिकन्धरास्तम्भं कुर्यादूर्ध्वाक्षमूर्ध्वगः॥

**अउ1.43**
उच्छ्वासरोधात् लंबोऽतिस्तनो जीवितसंशयम्।
न गर्भिण्याः पिबेत् स्तन्यं पारिगर्भिककृद्धि तत्॥

**अउ1.44**
स्तन्याभावे पयश्छागं गव्यं वा तद्गुणं पिबेत्।
मूलैःसिद्धं बृहत्याद्यैः स्थिराभ्यां वा सितायुतम्॥

**अउ1.45**
चतुर्थे सूतिकागारादग्निस्कन्दपुरोगमान्।
मासे निष्क्रामयेद्देवान् नमस्कर्तुं स्वलङ्कृतम्॥

**अउ1.46**
पञ्चमे मासि पुण्येऽह्नि धरण्यामुपवेशयेत्।
द्विकिष्कुमात्रं लिप्तायां बलिं दत्वा चतुर्दिशम्॥

**अउ1.47**
धरण्यशेषभूतानां माता त्वमसि कामधुक्।
अजरा चाप्रमेया च सर्वभूतनमस्कृता॥

**अउ1.48**
चराचराणां लोकानां प्रतिष्ठास्यव्ययासि च।
कुमारं पाहि मातेव ब्रह्मा तदनुमन्यताम्॥

**अउ1.49**
स्वाहेति मन्त्रेणानेन प्रत्यहं च ततः परम्।
साश्रयं सावलम्बं च कट्यादीन् मर्दयेदनु॥

**अउ1.50**
षष्ठेऽन्नप्राशनं मासि क्रमात्तच्च प्रयोजयेत्।
चिरान्निषेवमाणोऽन्नं बालो नातुर्यमश्नुते॥

**अउ1.51**
भजेद्यथा यथाचान्नं स्तन्यं त्याज्यं तथा तथा।
षट्सप्ताष्टममासेषु नीरुजस्य शुभेऽहनि।
कर्णौ हिमागमे विध्येद्धात्र्यङ्कस्थस्य सान्त्वयन्॥

**अउ1.52**
प्राग्दक्षिणं कुमारस्य भिषग्वामं तु योषितः।
दक्षिणेन दधत् सूचीं पालीमन्येन पाणिना॥

**अउ1.53**
मध्यतः कर्णपीठस्य किञ्चित् गण्डाशयं प्रति।
जरायुमात्रप्रच्छन्ने रविरश्म्यवभासिते॥

**अउ1.54**
धृतस्य निश्चलं सम्यगलक्तकरसाङ्किते।
विध्येद्दैवकृते छिद्रे सकृदेवर्जु लाघवात्॥

**अउ1.55**
नोर्ध्वं न पार्श्वतो नाधः सिरास्तत्र हि संश्रिताः॥

**अउ1.56**
कालिकामर्मरीरक्तास्तद्व्यधाद्रागरुग्ज्वराः।
सशोफदाहसंरम्भमन्यास्तम्भापतानकाः।
तेषां यथामयं कुर्याद्विभज्याशु चिकित्सितम्॥

**अउ1.57**
स्थानव्यधान्न रुधिरं न रुग्रागादिसम्भवः।
स्नेहाक्तं सूच्यनुस्यूतं सूत्र चानु निधापयेत्।
आमतैलेन सिञ्चेच्च बहलां तद्वदारया॥

**अउ1.58**
विध्येत् पालीं हितभुजः सञ्चार्याथ स्थवीयसी।
वर्ति त्र्यहात्ततो रूढं वर्धयेत शनैः शनैः।
स्वेदितोद्वर्तितं कर्णमभ्यक्तं बृंहणैः पुनः॥

**अउ1.59**
नाजीर्ण न मलोद्रेके न चात्युष्णेऽपि वर्धयेत्।
सदा च युञ्ज्यादभ्यङ्गान्कर्णपालीगदोदितान्॥

**अउ1.60**
पुष्टिनीरुक्त्वजननानिति संवर्धिते दृढे।
कलधौतावबद्धानि कर्णे रत्नानि निक्षिपेत्॥

**अउ1.61**
भिन्द्यादवृद्धौ स्त्रीणान्तु पालीमन्तरपाङ्गतः।
नैव चापाङ्गयोर्बाह्यां व्यापदः स्युस्ततो ध्रुवाः॥

**अउ1.62**
जिह्मसूचीव्यधाद्वर्तिगाढत्वादथवा मलैः।
जाते महति संरम्भे वर्तिमाश्वपनीय तत्॥

**अउ1.63**
यवैरण्डजटायष्टीमञ्जिष्ठज्यैः प्रलेपयेत्।
सुरूढं च पुनर्विध्यत् त्वरया तु विवर्धनात्॥

**अउ1.64**
छिद्येत पाली शुद्धस्य शुद्धास्रां सन्दधीत ताम्।
कर्णामयनिषेधोक्तसन्धानविधिना भिषक्॥

**अउ1.65**
वर्षं स्ववसतेर्बाह्यं कुमारस्य न दर्शयेत्।
दीपमातपमग्निं च रूपमन्यच्च भासुरम्॥

**अउ1.66**
अथैनं जातदशनं क्रमशोऽपनयेत् स्तनात्।
पूर्वोक्तं योजयेत् क्षीरमन्नं च लघु बृंहणम्॥

**अउ1.67**
कुर्यादपस्तनं स्नेहसङ्क्रान्त्या स्तनलेपनैः।
बीभत्सैर्यावकासेककृत्रिमक्षतदर्शनैः॥

**अउ1.68**
प्रियालमज्जमधुकमधुलाजसितोपलैः।
अपस्तन्यस्य संयोज्यः प्रीणनो मोदकः शिशोः॥

**अउ1.69**
दीपनो बालबिल्वैलाशर्करालाजसक्तुभिः।
सङ्ग्राही धातकीपुष्पशर्करालाजतर्पणैः॥

**अउ1.70**
बुभुक्षा चेत् प्रबलतामपस्तन्यस्य गच्छति।
अत्यग्निजिद्धितं तस्य विधानं पारिगर्भिकम्॥

**अउ1.71**
अभियुक्तः सदाचारो नातिस्थूलो न लोलुपः।
कुमारधारः कतव्यस्तत्राद्यो बालचित्तवित्॥

**अउ1.72**
अधार्मिकं दुराचारः स्थूलो विकटगामिनम्।
करोति लोलुपो बालं घस्मरत्वेन रोगिणम्॥

**अउ1.73**
रोगांश्चास्य जयेत् सौम्यैर्भेषजैरविषादकैः।
अन्यत्रात्ययिकाद्व्याधेर्विरेकं सुतरां त्यजेत्॥

**अउ1.74**
त्रासयेन्नाविधेयं च त्रस्तं गृह्णन्ति हि ग्रहाः।
वस्त्रपातात् परस्पर्शात् पालयेल्लङ्घनाच्च तम्॥

**अउ1.75**
क्रीडाभूमिः समा कार्या निश्शस्त्रोपलशर्करा।
वेल्लोषणकणाम्भोभिः सिक्ता निम्बोदकेन वा॥

**अउ1.76**
जातुषं घोषवच्चित्रमत्रासं रमणं बृहत्।
अतीक्ष्णाग्रं गवाश्वादिमङ्गल्यमथ वा फलम्॥

**अउ1.77**
शक्तिमन्तं यथावर्णं विद्यामध्यापयेत्ततः।
अनुशिष्यात् सदा चैनं धर्माय विनयाय च॥

**अउ1.78**
यथा नेन्द्रियदुष्टाश्वैर्ह्रियते यौवनागमे।
अभ्यङ्गोद्वर्तनं स्नानं प्रत्यहं च समाचरेत्।
सहदेवास्थिराकौन्तीकुमुदोत्पलचन्दनैः॥

**अउ1.79**
बृहतीफलतर्कारीसर्षपाकुष्ठसैन्धवैः।
अश्वगन्धाबलैरण्डतिलापामार्गतण्डुलैः॥

**अउ1.80**
सात्मगुप्ताफलैस्तैलं साजक्षीरं विपाचितम्।
रक्षोघ्नः पुष्टिदोऽभ्यङ्गस्तद्वदुद्वर्तनं च तैः॥

**अउ1.81**
दधिमाक्षिकसंयुक्तैस्त्रिगुणीकृतचिक्कसैः।
मूर्वामूलद्विरजनीयवैश्चोद्वर्तनं हितम्॥

**अउ1.82**
कुलत्थचूर्णमेकं वा वाजिगन्धारजोऽपि वा।
स्नाने सर्वौषधीकल्को जीवनीयाम्बु चेष्यते॥

**अउ1.83**
आरग्वधादिनिर्यूहे शृतं शीतवसन्तयोः।
वत्सकादिप्रतीवापं कुमारं प्राशयेत् घृतम्॥

**अउ1.84**
ग्रीष्मे वातातपस्वेदैर्बालः क्लाम्यत्यतो हिमम्।
प्रातरेव पिबेदुग्धं जीवनीयगणैः शृतम्॥

**अउ1.85**
सिताघृताढ्यान् सक्तूंश्च लिह्यान्नत्वेव पीतकम्।
नात्यम्बुपायी लिह्याद्वा घृतसात्म्यो घृतं शृतम्॥

**अउ1.86**
काकोलीशर्करामेदातुगायष्ट्याह्वजीवकैः।
कटुन्नटेन मूर्धानं लिम्पेदन्यैश्च शीतलैः॥

**अउ1.87**
रास्नासरलवर्षाभूहिङ्गुसैन्धवदारुभिः।
सर्पिर्विदार्यादिजले साधितं लेहयेच्छिशुम्॥

**अउ1.88**
प्रपौण्डरीकं मधुकं सूप्यपर्ण्यौ दुरालभा।
प्रियालमज्जाकाकोलीविदारीकट्फलामृताः॥

**अउ1.89**
द्राक्षाजशृङ्गी दुग्धीका क्षीरशुक्ला हयाह्वया।
शृङ्गीमधूककुसुममेदर्षभकजीवकम्॥

**अउ1.90**
एभिः क्षीरघृतं सिद्धं लिह्यात् बालो घनात्यये। ब्राह्मीसिद्धार्थकवचासारिवाकुष्ठसैन्धवैः॥

**अउ1.91**
सकणैः साधितं पीतं वाङ्मेधास्मृतिकृत् घृतम्।
आयुष्यं पाप्मरक्षोघ्नं भूतोन्मादनिबर्हणम्॥

**अउ1.92**
त्रिफला लक्ष्मणानन्ता समङ्गा सारिवा वचा।
ब्राह्मी पाठा द्विबृहती द्विस्थिरा द्विपुनर्नवम्॥

**अउ1.93**
सहदेवा रवेर्वल्ली पयस्या गिरिकर्णिका।
तोयकुम्भे पचेदेतत् पलांशं पादशेषितम्॥

**अउ1.94**
तेन कौन्तीवचाकुष्ठकृष्णासर्षपसैन्धवैः।
नीरुक्सरूपवत्सायाः संयुक्तं पयसा च गोः॥

**अउ1.95**
पुष्ययोगे घृतप्रस्थं सहेमशकलं शृतम्।
पानाभ्यञ्जनतो मेधास्मृत्यायुःपुष्टिबुद्धिदम्॥

**अउ1.96**
रक्षोघ्नं च विषघ्नं च सारस्वतमिदं घृतम्।
लीढं वा सघृतक्षौद्रं वचाहेमरजोऽल्पशः।
संवत्सरं परं मेध्यं रक्षोघ्नं वाग्विवर्धनम्॥

**अउ1.97**
वयस्था पिप्पली कुष्ठं हरिद्रा सारिवा वचा।
मांसी कैडर्यमित्येतच्चूर्णं ब्राह्मीरजःसमम्॥

**अउ1.98**
लीढ्वाज्येन शिशुर्वर्षं भवत्यपलितोऽव्यथः।
बलवान् श्रुतसम्पन्नः शतायुः स्थिरयौवनः।
प्रातः प्रातरिमं लेहं धात्रीं चास्यावलेहयेत्॥

**अउ1.99**
ब्राह्मीवद्योजयेद्दूर्वां मूर्वां ब्रह्मसुवर्चलाम्।
लक्ष्मणां श्वेततर्कारीमव्यण्डां गौरसर्षपाम्॥

**अउ1.100**
सहस्रवीर्यां फलिनीं पक्वं च बृंहतीफलम्।
रोहिषं चेत्यमीप्राशाः पृथग्द्वादश कीर्तिताः॥

**अउ1.101**
महताप्युपयोक्तव्या नरेण नियतात्मना।
नित्यं मृद्भक्षणाद्रक्षेत्तया स्युर्नियतं गदाः॥

**अउ1.102**
पाण्डुत्वश्वयथुश्वासकासातीसारजन्तवः।
छर्दिमूर्छाग्निसदनस्तन्यद्वेषाङ्गरुग्भ्रमाः॥

**अउ1.103**
भक्षयेद्दन्तपवनं नास्थिरद्विजबन्धनः।
तस्य तत्घट्टनात् क्रुद्धः कुर्याद्दन्तामयान्मरुत्॥

**अउ1.104**
शूरैरायुधिभिर्गुप्तमधृष्यं नगरं परैः।
यथा शिशोर्वपुस्तद्वद्यथोक्तैर्विधिभिर्ग्रहैः॥
॥इति प्रथमोऽध्यायः॥

अथ द्वितीयोऽध्यायः।

**अउ2.1**
अथातो बालामयप्रतिषेधं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ2.2**
त्रिविधो हि बालः प्रागुक्तस्तत्र क्षीरपस्य क्षीरमदुष्टं प्रयुञ्जीत।
अन्नादस्य हितमन्नम्।
उभयवृत्तेरुभयम्॥

**अउ2.3**
क्षीरं हि यथोक्तैर्दोषकोपनैराहारविहारैर्धात्र्या व्यापन्नं विविधामयोदयाय बालस्य प्रकल्पते॥

**अउ2.4**
तत्र श्यावारुणवर्णं तिक्तकषायानुरसं विशदं रूक्षमलक्ष्यगन्धं फेनिलमतृप्तिकरमाध्मानमूत्रवर्चोविबन्धकृत् कर्शनमप्सु विसर्पति विच्छिन्नं च प्लवते वातदुष्टम्॥

**अउ2.5**
कृष्णनीलताम्रावभासं तिक्ताम्लकटुकानुरसं कुणपरुधिरगन्धि भृशोष्णमप्सु पीतराजिमद्विदाहकरं च पित्तदुष्टम्॥

**अउ2.6**
अत्यर्थशुक्लमधुरं लवणानुरसं घृततैलवसामज्जगन्धि पिच्छिलं बहलं तन्तुमत् गुरु सलिलेऽवसीदति निद्राबहुलं च श्लेष्मदुष्टम्॥

**अउ2.7**
तदुपयुज्यमानं यथास्वलिङ्गान् व्याधीनभिनिर्वर्तयति॥

**अउ2.8**
स यं प्रदेशमभीक्ष्णं स्पृशति स्पर्शं च न क्षमते तत्र रुजमुपलक्षयेत्॥

**अउ2.9**
निमीलिताक्षतया मूर्ध्नि रुजम्।
जिह्वौष्ठदंशश्वासमुष्टिवन्धोर्ध्वेक्षणैर्हृदये।
विण्मूत्रच्छर्द्याध्मानान्त्रकूजनस्तनदंशवेष्टनपृष्ठविनमनजठरोन्नमनैर्जठरे।
मूत्रसङ्गतृण्मूर्च्छोत्रासदिग्वीक्षणखल्लीहस्तपादस्तम्भकुब्जीभवनकेशलुञ्चनैर्बस्तौ गुह्ये च सर्वत्र च स्वभा वातिरिक्तरोदनेन मुखविकूणनेन च॥

**अउ2.10**
अथ यथामयं यथादोषं च धात्र्याः शमनशोधनानि प्रयुञ्जीत॥

**अउ2.11**
तत्र वातदूषिते स्तन्ये देवदारुसरलकटुरोहिणीवचाकुष्ठपाठाभार्ङ्गीमागधिकावृश्चिकालीचित्रकाजमोदशुण्ठीमरीचानां क्वाथं दशमूलक्वाथं वा त्रिरात्रं पाययित्वा वातव्याधिविहितानां सर्पिषामन्यतमं निगदमदिरानुपानं दद्याद्वातहरद्रव्यसिद्धं वा।
ततः स्निग्धां मृदु विरेच्य बस्तिकर्मणोपचरेत्।
वातघ्नैश्चाभ्यङ्गस्वेदोपदेहोन्मर्दनैः।
सरलरास्नाजमोदादेवदारुचूर्णं सर्पिषा बालमवलेहयेत्।
एवंविधैरेव च विपक्वं सशर्करं सर्पिः॥

**अउ2.12**
अपि च।
तिक्तानुरसं स्तन्यं मुद्गमाषपलाशाभ्यां काकोलीयुगलेन च शोधयेत्।
प्रियङ्गुधातकीपुष्पपद्मकदेवदारुक्षौद्रैर्वा।
कषायानुरसं हिङ्गुसैन्धववता घृतेन।
फेनिलं विच्छिन्नं प्लवमानं च बिल्वाग्निमन्थशृतेन पयसा हविषा च।
सूप्यपर्णी काकोलीबृहत्यवल्गुजफलैर्वा॥

**अउ2.13**
पित्तेऽमृतापटोलपत्रसारिवाशतावरीनिम्बचन्दनक्वाथं धात्री बालश्च पिबेत्।
त्रिफलाभूनिम्बकटुकामुस्तक्वाथं वा।
जीवकर्षभकद्विकाकोलीमधुककट्फलकर्कटशृङ्गीक्वाथं वा।
सक्षौद्रं पटोलादिं पद्मकादिं वा।
सारिवादिं न्यग्रोधादिं वा।
एभिरेव च द्रव्यैः सर्पींषि पित्तघ्नानि च विरेचनानि शीतांश्चाभ्यङ्गप्रदेहसेकान् कुर्यात्॥

**अउ2.14**
अपि च।
ताम्रावभासं पयो हृदयमुद्वेष्टयति।
तत्प्रियङ्गुमुस्ताशाबरलोद्ध्रैः शोधयेत्।
अम्लानुरसमम्लपित्तकरम्।
तत् द्राक्षामधुकपयस्याश्रीपर्णीभिः।
कटुकानुरसं छर्दतीसारकासश्वासकरम्।
तत् काकोलीविदारीभ्यां मधुपर्ण्या च।
भृशोष्णमनामदाहज्वरकरं विरेचनं च तच्चन्दनोत्पलकमलैः॥

**अउ2.15**
कफे तु सैन्धवपिप्पलीयुक्तं सर्पिर्बालं पाययेत्।
सैन्धवमधुकसंसृष्टं वा मदनपुष्पकल्केन च सक्षौद्रेण स्तनं बालस्य चोष्ठमालिम्पेत्।
तेन सुखं वमति।
धात्रीं तु तीक्ष्णैर्वामयेत्।
ततः कृतसंसर्जनां पञ्चमूलघनवचातिविषाक्वाथं पाययेत्।
तगरसुरदारुसुरेन्द्रयवपृथ्वीकावृश्चिकालीक्वाथं वा।
आरग्वधादिं मुस्तादिं वा।
रूक्षोष्णांश्च नस्यधूमगण्डूषप्रदेहपरिषेकान् शीलयेत्।
अविरुद्धं चान्नपानं योजयेत्॥

**अउ2.16**
अपि च।
लवणानुरसं विसर्पकोठकण्डूकरम्।
तत् पिचुमन्दपटोलीक्षीरीवृक्षैः शोधयेत्।
तन्तुमद्दौर्बल्यश्वासकासकरम्।
तत् पिप्पलीनागरचूर्णेन समधुघृतेन।

गुरु सदनात्मकं प्रतिश्यायसिङ्घाणकक्षीरालसककरम्।
तत् पाठाव्योषकल्केन पञ्चकोलचूर्णेन वा क्षौद्रघृताप्लुतेन।
दोषोपक्रमणीयं चेक्षेत॥

**अउ2.17**
यदा पुनर्धात्री सन्निपातप्रकोपनान्यासेवेत तदस्यास्त्रयो मला युगपद्वक्षोऽभिप्रपन्नाः क्षीरवहा रसायनीः समनुसृत्य सङ्गीर्णलिङ्गं स्तन्यमावहन्ति।
तच्चेदविज्ञानात् सततमप्रत्यवेक्षणात् प्रमादाद्वा मातुः कुमारः पिबति ततः स तेन सलिलोपममच्छं विच्छिन्नमामं दुर्गन्धि नानावर्णवेदनं फेनिलमतिसार्यते।
पीतश्वेतमूत्रताविष्टम्भतृष्णाज्वरच्छर्दिविजृम्भिकाशुष्कोद्गारारुचिभ्रमाङ्गभङ्गविक्षेपकूजनघ्राणाक्षिमुखपाकदृष्ट्युपप्लवस्वरसादादयश्चास्य प्रादुर्भवन्ति।
तं क्षीरालसकमत्ययं चाचक्षते॥

**अउ2.18**
तत्र धात्रीं बालं च पूर्वमेवाशु वामयेत्।
विहितसंसर्गयोश्च मुस्तापाठातिविषाकुष्ठकटुकानां क्वाथं पानाय दद्यात्।
रास्नाजमोदाप्रियङ्गुभद्रदारूणां वा।
पाठातेजोवतीपुनर्नववृश्चिकालीनां वा।
भूनिम्बामृताकुटजफलसारिवाणां वा।
वचाहरिद्रादिगणयोर्वा।
पाठादिमहाकषायस्य वा।
जम्ब्वाम्रतिन्दुककपित्थपत्राणां वा।
बिल्वभङ्गस्य वा।
अनुबन्धे च यथाव्याधि प्रतिकुर्वीत॥

**अउ2.19**
दन्तोद्भेदश्च सर्वरोगायतनम्।
विशेषेण तु तन्मूला ज्वरशिरोभितापतृष्णाभ्रमाभिष्यन्दकुकूणकपोथकीवमथुकासश्वासातीसारविसर्पाः॥

**अउ2.20**
स दीर्घायुषोऽष्टमान्मासात् परतो वा प्रवर्तते।
इतरेषां तु चतुर्थात्।
तेह्यतिबाल्ये दन्तोत्पादवेदनयातिपीडिता न सम्यक् सम्पूर्णधातुबला भवन्ति॥

**अउ2.21**
तत्रास्थिमज्जानौ दन्तोत्पत्तिहेतू।
तदा च तयोरसम्पूर्णवीर्यत्वात् पुनः कालान्तरेण दन्तानां पतनमापूर्यमाणधातुत्वाच्च पुनरुत्थानमत एव च वृद्धानां न पुनर्दन्तोत्पत्तिः॥

**अउ2.22**
बलान्निपतितानां तु सहसा तदधिष्ठानगतधातुबीजभ्रंशात् सन्ततिव्युच्छेदाच्छोणितातिप्रवृत्याभिघाताच्च निस्सारितत्वात्।
सिराणां पुनरनुत्पादः एतेन रोगच्युता अपि प्रायशो व्याख्याताः॥

**अउ2.23**
तौ तु धातू कालक्रमेण पच्यमानौ यदा दन्ताशयमनुप्रपद्येते तदास्य किञ्चिदुत्सेधेनोर्ध्वाधोदन्तमांससङ्घट्टनादङ्गहर्षो जायते।
तद्गतेन च श्लेष्मणा कण्डूस्तया चूचुकं दश्यते।
यद्यदालभते तत्तदास्यमानयति।
मारुतश्चास्य दन्तमूलेषु मूर्छति।
ततः स कफानुविद्धोऽस्थिमज्जस्थितः सर्वतो विसरन् सह पित्तेन धातून् मलांश्च दूषयन् विविधान्यथोदितानुपद्रवानभिनिर्वर्तयति॥

**अउ2.24**
यदा पुनर्दन्तमांसाश्रयी केवलो विकृतः प्रबलोऽनिलः सपित्तो वास्थिमज्जानौ शोषयति तदा द्विजानामसम्भव एवेति।
भवन्ति चात्र॥

**अउ2.25**
पृष्ठभङ्गे बिडालानां बर्हिणां च शिखोद्गमे।
दन्तोद्भेदे च बालानां न हि किञ्चिन्न दूयते॥

**अउ2.26**
यथादोषं यथारोगं यथोद्रेकं यथाबलम्।
विभज्य देशकालादींस्तत्र योज्यं भिषग्जितम्॥

**अउ2.27**
त एव दोषा दूष्याश्च ज्वराद्या व्याधयश्च यत्।
अतस्तदेव भैषज्यं मात्रा त्वस्य कनीयसी।
सौकुमार्याल्पकायत्वात् सर्वान्नानुपसेवनात्॥

**अउ2.28**
स्निग्धा एव सदा बाला घृतक्षीरनिषेवणात्।
सद्यस्तान् वमनं तस्मात् पाययेन्मतिमान्मृदु॥

**अउ2.29**
बस्तिं साध्ये विरेकेण मर्शेन प्रतिमर्शनम्।
युञ्ज्याद्विरेचनादींस्तु धात्र्या एव यथोचितान्॥

**अउ2.30**
मूर्वाव्योषवराकोलजम्बूत्वग्दारुसर्षपाः।
सपाठा मधुना लीढाः स्तन्यदोषहराः परम्॥

**अउ2.31**
इक्षुमूलकशेर्वाख्ययष्ट्याह्वैस्तनु शुध्यति।
सान्द्रं तु क्षौद्रकाश्मर्यगुडूचीतण्डुलाम्बुभिः॥

**अउ2.32**
शृतैर्वा सुरसश्वेतसर्षपाबृहतीद्वयैः।
ग्रथितं पद्मकोशीरफलिनीश्वेतचन्दनैः॥

**अउ2.33**
दन्तपालीं समधुना चूर्णेन प्रतिसारयेत्।
पिप्पल्या धातकीपुष्पधात्रीफलकृतेन वा॥

**अउ2.34**
वाध्रीणसकपोतोत्थरजस्तद्वच्च योजितम्।
लावतित्तिरिवल्लूररजः पुष्परसद्रुतम्॥

**अउ2.35**
द्रुतं करोति बालानां दन्तकेसरवन्मुखम्।
वचाद्विबृहतीपाठाकटुकातिविषाघनैः।
मधुरैश्च घृतं सिद्धं सिद्धं दशनजन्मनि॥

**अउ2.36**
भद्रदारु घनं यष्टी समङ्गा ससितोपला।
वातज्वरपरीताङ्गः पिबेदन्तरपानकम्॥

**अउ2.37**
सुराह्वघनयष्ट्याह्वपयस्यांशुमतीद्वयम्।
नागरं मरिचं भार्ङ्गी वृश्चिकाली शतावरी॥

**अउ2.38**
घृतं तत्क्वाथदुग्धाभ्यां सिद्धं हन्त्यनिलज्वरम्।
बालस्य पानाभ्यङ्गाभ्यामेभिश्चोन्मर्दनं हितम्॥

**अउ2.39**
हरिद्राकुष्ठषड्ग्रन्थाशतपुष्पाहरेणुभिः।
भार्ङ्ग्येलासुषवीरास्नावर्षाभूनतसर्षपैः॥

**अउ2.40**
अक्षांशैः साम्बुसौवीरैर्मस्तुपिष्टैर्मरुज्ज्वरे।
तैलप्रस्थं सुरामण्डतुल्यमभ्यञ्जनं पचेत्॥

**अउ2.41**
लाजनीलोत्पलकणामधुकाञ्जनशर्करम्।
पित्तज्वरमतीसारं मधुलीढं निवर्तयेत्॥

**अउ2.42**
लाजद्विपिप्पलीक्वाथः शर्करामधुसंयुतः।
पीतो ज्वरमतीसारं तृष्णां छर्दिं च नाशयेत्॥

**अउ2.43**
आमातिसारे रक्ते च कल्कितां गजपिप्पलीम्।
पाययेच्छर्करोपेतां चूर्णं वा देवदारुजम्॥

**अउ2.44**
शिरोभितापे सघृतैः शिरः शीतैः प्रलेपयेत्।
पत्रैः कपित्थचाङ्गेरीबदरीकाकमाचिजैः॥

**अउ2.45**
शिरोरुक्च्छर्द्यतीसारनाशनं मूर्धलेपनम्।
गवादनीं दाडिमं च तृड्वान् कोष्णाम्भसा पिबेत्॥

**अउ2.46**
कुर्यात् कुकूणपोथक्योर्यथोक्तं स्वं स्वमौषधम्।
मनश्शिलाशङ्खनाभिः पिप्पल्यो मधुयष्टिका॥

**अउ2.47**
क्षौद्रेण घृष्टा गुलिका शिशोः सर्वाक्षिरोगजित्।
पिप्पलीतण्डुलैर्मुद्गैः सुमनःकोरकैर्यवैः।
नीलोत्पलस्य पत्रैश्च श्रेष्ठा वर्तिः शतोन्मितैः॥

**अउ2.48**
प्रियङ्ग्वञ्जनमुस्तानां चूर्णस्तण्डुलवारिणा।
तृष्णातीसारवमथून् हन्ति पीतः समाक्षिकः॥

**अउ2.49**
पटोलनिम्बकुटजसप्तपर्णं सदीप्यकम्।
देवदारुविडङ्गानि सरलो माक्षिकं घृतम्॥

**अउ2.50**
लीढं ज्वरमतीसारं कासं पाण्ड्वामयं वमिम्।
हन्याच्च मातृकादोषान् रोगानन्यांश्च तद्विधान्॥

**अउ2.51**
मधुकव्योषषड्ग्रन्थाग्रन्थिकास्पृष्टरोदिकाः।
क्षीरिणां च प्रवालानि पाठा च विपचेत् घृतम्।
तत् पीतं समधु श्लेष्मज्वरघ्नं दीपनं परम्॥

**अउ2.52**
रास्नैलानततर्कारीमधुशिग्रुसुराह्वयैः।
सबिल्वकुष्ठवरणरेणुकामिसिभिः कृतः॥

**अउ2.53**
श्लेष्मज्वरहरो लेपस्तैलमभ्यञ्जनं च तैः।
मण्डलानि तु साज्येन गजमूत्रेण लेपयेत्॥

**अउ2.54**
रजनी दारु सरलश्रेयसी बृहतीद्वयम्।
पृश्निपर्णी शताह्वा च लीढं माक्षिकसर्पिषा।
ग्रहणीदीपनं श्रेष्ठं मारुतस्यानुलोमनम्॥

**अउ2.55**
अतीसारज्वरश्वासकामलापाण्डुकासजित्।
बालस्य सर्वरोगेषु पूजितं बलवर्णदम्॥

**अउ2.56**
बिल्वपेशीगजकणाधातकीलोध्रवालकम्।
हन्ति लीढमतीसारं शिशोः क्षौद्रद्रुतं द्रुतम्॥

**अउ2.57**
त्रिफलाधातकीपुष्पपद्मबिल्वशलाटुभिः।
सक्ट्वङ्गैर्घृतं सिद्धमुदरामयनाशनम्॥

अस2.58। पथ्यासौवर्चलक्षारवेल्लव्योषाग्निहिङ्गुभिः।
तिक्तया च घृतं सिद्धं समक्षीरं व्यपोहति।
शूलानाहगुदभ्रंशश्वासकासविलम्बिकाः॥

**अउ2.59**
समङ्गाधातकीलोध्रकुटन्नटबलाद्वयैः।
महासहाक्षुद्रसहामुद्गबिल्वशलाटुभिः॥

**अउ2.60**
सकार्पासीफलैस्तोये साधितैः साधितं घृतम्।
क्षारमस्तुयुतं हन्ति शीघ्रं दन्तोद्भवोद्भवान्।
विविधानामयानेतद्वृद्धकाश्यपनिर्मितम्॥

**अउ2.61**
दन्तोद्भेदोत्थरोगेषु न बालमतियन्त्रयेत्।
स्वयमाप्युपशाम्यन्ति जातदन्तस्य यत् गदाः॥

**अउ2.62**
यावन्मासस्य यो जातस्तावद्वर्षस्य स द्विजः।
पतति प्रायशोऽष्टानां तेषां पूर्वेषु सम्भवः॥

**अउ2.63**
अत्यहःस्वप्नशीताम्बुश्लैष्मिकस्तन्यसेविनः।
शिशोः कफेन रुद्धेषु स्रोतस्सु रसवाहिषु॥

**अउ2.64**
अरोचकः प्रतिश्यायो ज्वरः कासश्च जायते।
कुमारः शुष्यति ततः स्निग्धशुक्लमुखेक्षणः॥

**अउ2.65**
सैन्धवव्योषशाअर्ङ्गेष्टAअपाठागिरिकदम्बकान्।
शुष्यतो मधुसर्पिर्भ्यामरुच्यादिषु योजयेत्॥

**अउ2.66**
अशोकरोहिणीयुक्तं पञ्चकोलं च चूर्णितम्।
बदरीधातकीधात्रीचूर्णं वा सर्पिषा द्रुतम्॥

**अउ2.67**
अश्वलिण्डरसक्षौद्रयुक्तां वा मधुयष्टिकाम्।
द्विवार्ताकीफलरसं केवलं वाश्वविड्रसम्॥

**अउ2.68**
मधुना वा घनव्योषपाठा मूर्वा शतावरी।
सपयस्या पृथक्पर्णी घृतं वा माक्षिकान्वितम्।
स्थिरामरतरुव्योषद्विपुनर्नवसाधितम्॥

**अउ2.69**
स्थिरावचाद्विबृहतीकाकोलीपिप्पलीनतैः।
निचुलोत्पलवर्षाभूभार्ङ्गीमुस्तैश्च कार्षिकैः॥

**अउ2.70**
सिद्धं प्रस्थार्धमाज्यस्य स्रोतसां शोधनं परम्।
सिंह्यश्वगन्धासुरसकणागर्भं च तद्गुणम्॥

**अउ2.71**
यष्ट्याह्वपिप्पलीलोध्रपद्मकोत्पलचन्दनैः।
तालीससारिवाभ्यां च साधितं शोषजित् घृतम्॥

**अउ2.72**
रास्नामधूलिकाभार्ङ्गीपिप्पलीदेवदारुभिः।
अश्वगन्धाद्विकाकोली शृङ्ग्यर्षभकजीवैकः॥

**अउ2.73**
सूप्यपर्णीविडङ्गैश्च कल्कितैः साधितं घृतम्।
शशोतमाङ्गनिर्यूहे शुष्यतः पुष्टिकृत् परम्॥

**अउ2.74**
वचावयस्थातगरकायस्थाचोरकैः शृतम्।
बस्तमूत्रसुराभ्यां च तैलमभ्यञ्जने हितम्॥

**अउ2.75**
द्वे बले तुम्बुरुच्छल्ली वचा गिरिकदम्बकः।
सुरापिष्टः प्रदेहः स्यादधःकाये विशुष्यताम्॥

**अउ2.76**
सिंहस्कन्दीसिंहवल्लीकरमर्दीत्रिकण्टकैः।
भङ्गैः क्वाथः कुमाराणां शुष्यतां परिषेचनम्॥

**अउ2.77**
साशोकरोहिणीं कृष्णां मध्वाज्येन लिहन्जयेत्।
शिशुः शोषं शरीरस्य ससितच्छागदुग्धभुक्॥

**अउ2.78**
शुष्ककासे कुमारस्य धात्र्याः स्तन्यविशोधनः।
माषयूषः प्रयोक्तव्यः सकृष्णो घृतभर्जितः॥

**अउ2.79**
मधुनातिविषाशृङ्गीपिप्पलीर्लेहयेच्छिशुम्।
एकांवातिविषां कासज्वरच्छर्दिरुपद्रुतम्॥

**अउ2.80**
कासतृट्च्छर्द्यतीसारैरर्दितं लाजतर्पणम्।
लाजतालीसपत्रं वा बीजानि कमलस्य वा॥

**अउ2.81**
लोध्रप्रियङ्गुकल्कं वा पाययेत्तण्डुलाम्भसा।
शर्करामधुसंयुक्तं लाजकुस्तुम्बरीरजः॥

**अउ2.82**
बृहतीफलमूलत्वक्पिप्पलीग्रन्थिकैः कृतः।
तवक्षीरीयुतैः क्वाथो मधुना हन्ति शीलितः॥

**अउ2.83**
छर्दिमूर्छाज्वरश्वासकासातीसारपीनसान्।
पञ्चकोलद्विवार्ताकीमूलभार्ङ्गीतुगाह्वयाः॥

**अउ2.84**
क्षौद्राज्यलीढाः श्वसनकासपीनसरुक्च्छिदः।
श्यामातिमुक्तातर्कारीकुसुमक्वाथसाधितम्।
यष्टीगर्भं घृतं तृष्णाहिध्माश्वासास्रपित्तनुत्॥

**अउ2.85**
पीतं पीतं वमति यः स्तन्यं तं मधुसर्पिषा।
द्विवार्ताकीफलरसं पञ्चकोलं च लेहयेत्॥

**अउ2.86**
पिप्पलीपञ्चलवणं कृमिजित् पारिभद्रकम्।
तद्वल्लिह्यात्तथा व्योषं मषीं वा रोमचर्मणाम्।
लाभतःशल्यकश्वाविड्गोधर्ष्यशिखिजन्मनाम्॥

**अउ2.87**
खदिरार्जुनतालीसकुष्ठचन्दनजे रसे।
सक्षीरं साधितं सर्पिर्वमथुं विनियच्छति॥

**अउ2.88**
क्षीरीप्रवालमधुकदर्भमूलबिसोत्पलैः।
तृष्णादाहज्वरहरः कषायः ससितामधुः॥

**अउ2.89**
शर्करादाडिमकणानागकेसरजीवकम्।
लिहन् कुमारः क्षौद्रेण तृट्च्छर्दिभ्यां विमुच्याते॥

**अउ2.90**
लाजैः सचन्दनोशीरयष्टीमधुकपद्मकैः।
लिप्तो धौतः स्तनः पीतो भ्रमतृड्दाहमोहहा॥

**अउ2.91**
अस्नेहलवणं पीत्वा संस्कृतं लावजं रसम्।
सशर्करं विजयते बालो लङ्घनजान् गदान्॥

**अउ2.92**
विसर्पस्तु शिशोः प्राणनाशनो बस्तिशीर्षजः।
पद्मवर्णो महापद्मनामा दोषत्रयोद्भवः॥

**अउ2.93**
शाखाभ्यां हृदयं याति हृदयाद्वा गुदं व्रजेत्।
सदन्तो जायते यस्तु दन्ताः प्राग्यस्य चोत्तराः॥

**अउ2.94**
कुर्वीत तस्मिन्नुत्पाते शान्तिं तं च द्विजतये।
दद्यात् सदक्षिणं बालं नैगमेषं च पूजयेत्॥

**अउ2.95**
वत्सस्य मधुलाजानामापूर्यप्राङ्मुखो मुखम्।
चुम्बेत्कुमारस्त्रीन् वारान् प्रायश्चित्तमिदं परम्॥

**अउ2.96**
नावमारोहयेत् बालं स्नातं स्कन्धं गजस्य वा।
भोजयेत् ब्राह्मणांश्चात्र पायसं मधुसर्पिषा॥

**अउ2.97**
मातुः कुमारो गर्भिण्याः स्तन्यं प्रायोऽपिबन्नपि।
कासाग्निसादवमथुतन्द्राकार्श्यारुचिभ्रमैः॥

**अउ2.98**
युज्यते कोष्ठवृध्या च तमाहुः पारिगर्भिकम्।
रोगं परिभवाख्यं च युञ्ज्यात्तत्राग्निदीपनम्॥

**अउ2.99**
पिप्पलीपिप्पलीमूलकटुकादेवदारुभिः।
क्षारद्वयबिडाजाजीबिल्वमध्याग्निदीप्यकैः॥

**अउ2.100**
दधिसौवीरकसुरामण्डैश्च विपचेत् घृतम्।
हन्ति प्रयुक्तं तत् काले रोगान् पारिभवाश्रयान्॥

**अउ2.101**
अन्नेनोपहितं स्तन्यं पिबतो विहितात् परम्।
इमानेव गदान् कुर्यात् कुर्यात्तेष्वेतदेव च॥

**अउ2.102**
पीतं पीतं च यः स्तन्यं सवातमतिसर्यते।
तस्याप्येतत् परं पथ्यं दीपनं बलवर्णकृत्॥

**अउ2.103**
अत्युद्रिक्तक्षुधं बालं परिभूतं तु लेहयेत्।
विदारीयवगोधूमकणाचूर्णं घृताप्लुतम्॥

**अउ2.104**
पाययेदनु च क्षीरं शृतं समधुशर्करम्।
अक्षमज्जाद्विकाकोलीयष्टीमधुकमोरटैः॥

**अउ2.105**
श्रपयेत् क्षीरमाज्यं वा बीजैरिक्षुरकस्य च।
तत् प्रयोज्यं गुरु स्निग्धं यच्चात्यग्नौ पुरेरितम्॥

**अउ2.106**
श्ववायसबिडालानामुच्छिष्टेन जलेन च।
स्नापयेत्तं नचेदेवं क्षुत्तस्य प्रशमं वरजेत्॥

**अउ2.107**
क्षीरिपादपमूलस्थं विधिना स्नापितं ततः।
वस्त्ररत्नाद्यलङ्कारैः कुमारं भूषयेत् सितैः॥

**अउ2.108**
वृक्षं चानु ततः कुर्यात् भूषणव्यत्ययं तयोः।
एतदायुःप्रदं धन्यं स्नपनं सर्वरोगजित्॥

**अउ2.109**
जटीभूतकचाक्ष्यादिपक्ष्माणमतिलोलुपम्। गोमूत्रगन्धिं स्नपयेतीर्थे गव्यशकृद्रसैः॥

**अउ2.110**
वचापुष्पशिलाकुष्ठवयस्थाहिङ्गुकट्फलैः।
सबस्तमूत्रमदिरैस्तैलमभ्यञ्जनं पचेत्॥

**अउ2.111**
बलाविदारीत्रिकटुककुष्ठोशीरकुचन्दनैः।
सिद्धं पीतं हविर्हन्ति तं विकारमशेषतः॥

**अउ2.112**
शिरः पृष्ठं ततो मुष्कौ ततः पादौ च यो रुजेत्।
हस्ताभ्यामुत्थितो वायुः सपर्वानुप्लवः स्मृतः॥

**अउ2.113**
गौरीवचासदापुष्पीहयगन्धाकटुत्रयैः।
सकट्फलद्विवार्ताकीवयस्थाहिङ्गुरोहिषैः॥

**अउ2.114**
बस्तमूत्रसुरायुक्तैः साधितं तस्य योजयेत्।
तैलमभ्यञ्जने शेषं वातव्याधिवदाचरेत्॥

**अउ2.115**
तालुमांसे कफः क्रुद्धः कुरुते तालुकण्टकम्।
तेन तालुप्रदेशस्य निम्नता मूर्ध्नि जायते॥

**अउ2.116**
ताल्पातः स्तनद्वेषः कृच्छ्रात् पानं शकृदद्रवम्।
तृडास्यकण्ड्वक्षिरुजा ग्रीवादुर्धरता वमिः॥

**अउ2.117**
तत्रोत्क्षिप्य यवक्षारक्षौद्राभ्यां प्रतिसारयेत्।
तालु तद्वत् कृअणाशुण्ठीगोशकृद्रससैन्धवैः॥

**अउ2.118**
शृङ्गिवेरनिशाकुष्ठं कल्कितं वटपल्लवैः।
बध्वा गोशकृता लिप्तं कुकूले स्वेदयेत्ततः॥

**अउ2.119**
रसेन लिम्पेत्ताल्वास्यं नेत्रे च परिषेचयेत्।
हरीतकीवचाकुष्ठकल्कं माक्षिकसंयुतम्।
पीत्वा कुमारः स्तन्येन मुच्यते तालुकण्टकात्॥

**अउ2.120**
मस्तुलुङ्गक्षयाद्यस्य वायुस्ताल्वस्थि नामयेत्।
तस्य तृड्दैन्ययुक्तस्य सर्पिर्मधुरकैः शृतम्।
पानाभ्यञ्जनयोर्योज्यमुद्वेगश्चहिमाम्बुना॥

**अउ2.121**
मलोपलेपात् स्वेदाद्वा गुदे रक्तकफोद्भवः।
ताम्रो व्रणोऽन्तः कण्डूमान् जायते भूर्युपद्रवः॥

**अउ2.122**
केचित्तं मातृकादोषं वदन्त्यन्ये तु पौतनम्।
पृष्ठारुर्गुदकुट्टं च केचिच्च तमनामकम्॥

**अउ2.123**
तत्र धात्र्याः पयः शोध्यं पित्तश्लेष्महरौषधैः।
सितशीतं च शीताम्बुयुक्तमन्तरपानकम्॥

**अउ2.124**
सक्षौद्रतार्क्ष्यशैलेन व्रणं तेन च लेपयेत्।
त्रिफलाबदरीप्लक्षत्वक्क्वाथपरिषेचितम्॥

**अउ2.125**
कासीसरोचनातुत्थमनोह्वालरसाञ्जनैः।
लेपयेदम्लपिष्टैर्वा चूर्णितैर्वावचूर्णयेत्॥

**अउ2.126**
सुश्लक्ष्णैरस्थवा यष्टीशङ्खसौवीरकाञ्जनैः।
सारिवाशङ्खनाभिभ्यामसनस्य त्वचाथ वा॥

**अउ2.127**
रागकण्डूत्कटे कुर्याद्रक्तस्रावं जलौकसा।
सर्वं च पित्तव्रणजिच्छस्यते गुदकुट्टके॥

**अउ2.128**
अनामस्थौल्यपित्तास्रकण्डूगण्डगलामये।
उदरात्युन्नतौ चेष्टं तार्क्ष्यमन्तरपानकम्॥

**अउ2.129**
गृह्णाति सूतिकागारे न स्तनं चेत् स्पृशेत्ततः।
पथ्याधात्रीफलकणैर्जिह्वां सघृतमाक्षिकैः॥

**अउ2.130**
पिप्पलीत्रिफलाचूर्णं घृतक्षौद्रपरिप्लुतम्।
रुदते त्रस्यते वापि लेहं दद्यात् सुखावहम्॥

**अउ2.131**
प्रदीप्ताङ्गाररजसा प्रशान्तेनावचूर्णयेत्।
पञ्चमेऽहन्यपातन्नालं लेपयेद्वा गुडाम्भसा॥

**अउ2.132**
सान्द्रेण भूमौ घृष्टेन नालपातेऽपि चोन्नताम्।
नाभिं छागेन शकृता दग्धेनान्तर्विचूर्णयेत्॥

**अउ2.133**
अश्वगन्धाञ्जनाजाविविड्यष्टीमधुकादिभिः।
रोपयेच्चूर्णितैर्नाभिं स्नेहयुक्तैरनुन्नताम्॥

**अउ2.134**
यष्टीलोध्रनिशाश्यामाकल्कपक्वेन सेचयेत्।
नाभिं पाके तु तैलेन तच्चूर्णैश्चावचूर्णयेत्॥

**अउ2.135**
वातेनाध्मापितां नाभिं सरुजां तुण्डिसंज्ञिताम्।
मारुतघ्नैः प्रशम्येत् स्नेहस्वेदोपनाहनैः॥

**अउ2.136**
असम्यक्कल्पनान्नाभेः स्याद्विनामो विजृम्भिका।
वातपित्तहरं कर्म तत्रान्तर्बहिराचरेत्॥

**अउ2.137**
गर्भाम्भसामवमनाच्छ्लेष्मणः कण्ठगस्य वा।
सम्पर्काद्धृदये दुष्टो मार्गानावृणुते रसः॥

**अउ2.138**
बद्धमुष्टिस्ततो मुह्यन्रोगैर्बालोऽभिभूयते।
हृद्रोगाक्षेपकश्वासकासच्छर्दिज्वरादिभिः।
उल्बकं सहजं व्याधिमम्बुपूर्णं च तं वदेत्॥

**अउ2.139**
स्रोतोविशोधनं प्रातस्तस्मिन्नन्तरपानकम्।
विदध्याच्छागलं मूत्रं स्नानाभ्यङ्गौ च वर्जयेत्॥

**अउ2.140**
बिल्वादिमूलबृहतीपञ्चकोलं पलांशकम्।
धन्वमांसपलान्यष्टौ शशमूर्ध्नः पलाष्टकम्॥

**अउ2.141**
साधयेत् षोडशगुणे सलिलेऽष्टांशशेषितम्।
तेन क्वाथेन कर्षांशैर्घृतप्रस्थं विपाचयेत्॥

**अउ2.142**
छगलीमूत्रमदिरादधिक्षीरसमांशकम्।
विडङ्गसैन्धवाजाजीचविकादेवदारुभिः॥

**अउ2.143**
सहिंस्राहिङ्गुलशुनैः सव्योषैः श्लक्ष्णकल्कितैः।
तत् पानाद्धन्ति सहजगुल्महिध्मानिलामयान्।
पाण्डुरोगं च वातोत्थं स्वस्थवृत्ते च पुष्टिदम्॥

**अउ2.144**
परिदग्धच्छविं बालं दिह्याद्दूर्वातिलोत्पलैः।
शमीपत्रशिरीषत्वक्सारिवामधुकाभयैः॥

**अउ2.145**
मूर्वाधात्रीनिशाचूर्णं मूत्रेण मधुमत् पिबेत्।
पाण्डुरोगी शृतं सर्पिर्वराभृङ्गरसेन वा॥

**अउ2.146**
पाठावेल्लद्विरजनीमुस्ताभार्ङ्गीपुनर्नवैः।
सबिल्वत्र्यूषणैः सर्पिर्वृश्चिकालीयुतैः शृतम्।
लिहानो मात्रया रोगैर्मुच्यते मृत्तिकोद्भवैः॥

**अउ2.147**
व्याधेर्यद्यस्य भैषज्यं स्तस्तेन प्रलेपितः।
स्थितो मुहूर्तं धौतोऽनु पीतस्तं तं जयेत् गदम्॥

**अउ2.148**
ग्रहैरपि हि जायन्ते प्रच्छन्नैर्व्याधयः शिशोः।
कर्म शस्तमतस्तेषु दैवयुक्त्याश्रयं सदा॥
॥इति द्वितीयोऽध्यायः॥

अथ तृतीयोऽध्यायः।

**अउ3.1**
अथातो बालग्रहविज्ञानीयं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ3.2**
पुरा गुहस्य रक्षार्थं निर्मिताः शूलपाणिना।
मनुष्यविग्रहाः पञ्च सप्त स्त्रीविग्रहा ग्रहाः॥

**अउ3.3**
स्कन्दो विशाखो मेषास्यः श्वग्रहः पितृसंज्ञितः।
शकुनिः पूतना शीतपूतनादृष्टिपूतना।
मुखमण्डितिका तद्वद्रेवती शुष्करेवती॥

**अउ3.4**
ते कामरूपिणः स्कन्दमुपचेरुः समाहिताः।
स्कन्दस्य बालधारत्वात्तेषां स्कन्दोऽग्रणीरभूत्॥

**अउ3.5**
स्कन्देऽथ यौवनं प्राप्ते सेनापत्यं च तान् ग्रहान्।
रौद्रान् रुद्रोऽनुजग्राह प्रह्वान् वृत्त्यभिलाषिणः॥

**अउ3.6**
न तिथिष्वप्यतिथयो देवताः पितरोऽपि वा।
येषु वेश्मसु पूज्यन्ते निवृत्ताचारवर्त्मसु॥

**अउ3.7**
उत्सन्नबलिहोमेषु भिन्नकांस्योपभोजिषु।
हरध्वं तेषु बालानामारोग्यं धारि शर्म च॥

**अउ3.8**
शूलिनेति नियुक्तास्ते बलिपूजाभिकाङ्क्षिणः।
क्रुद्धान् भीतान् विमनसः शून्यस्थानैकचारिणः॥

**अउ3.9**
परोपभुक्तकुसुमवस्त्राभरणधारिणः।
बालान्कश्मलधात्रीकान्सन्ध्यासु रुदतोऽशुचीन्॥

**अउ3.10**
ऋक्षोलूकबिडालादिरूपैरन्यैस्तथाद्भुतैः।
सन्त्रासयन्तःशयितान्कदाचिज्जाग्रतोऽपि वा।
प्रायः पर्वसु गृह्णन्ति ग्रहाश्छिद्रप्रहारिणः॥

असउ3.11। आविशन्तश्च लक्ष्यन्ते केवलं शास्त्रचक्षुषा।
शुद्धेन देहं बालानां गन्धर्वा इव योषिताम्॥

**अउ3.12**
तेषां ग्रहिष्यतां रूपं प्रततं रोदनं ज्वरः॥

**अउ3.13**
सामान्यं रूपमुत्रासजृम्भाभ्रूक्षेपदीनताः।
फेनस्रावोर्ध्वदृष्ट्योष्ठदन्तदंशप्रजागराः॥

**अउ3.14**
रोदनं कूजनं स्तन्यविद्वेषः स्वरवैकृतम्।
नखैरकस्मात् परितः स्वधात्र्यङ्गविलेखनम्॥

**अउ3.15**
तत्रैकनयनस्रावी शिरो विक्षिपते मुहुः।
हतैकपक्षः स्तब्धाङ्गः सस्वेदो नतकन्धरः॥

**अउ3.16**
दन्तखादी स्तनद्वेषी त्रस्यन्रोदिति विस्वरम्।
वक्रवक्त्रो वमन्लालां भृशमूर्ध्वं निरीक्षते॥

**अउ3.17**
वसास्रगन्धिरुद्विग्नो बद्धमुष्टिशकृच्छिशुः।
चलितैकाक्षिगण्डभ्रूः संरक्तोभयलोचनः।
स्कन्दार्तस्तेन वैकल्यं मरणं वा भवेद्ध्रुवम्॥

**अउ3.18**
संज्ञानाशो मुहुः केशलुञ्चनं कन्धराननतिः।
विनम्य जृम्भमाणस्य शकृन्मूत्रप्रवर्तनम्॥

**अउ3.19**
फेनोद्वमनमूर्ध्वेक्षा हस्तभ्रूपादनर्तनम्।
स्तनस्वजिह्वासन्दंशसंरम्भज्वरजागराः।
पूयशोणितगन्धश्च स्कन्दापस्मारलक्षणम्॥

**अउ3.20**
आध्मानं पाणिपादस्य स्पन्दन फेननिर्वमिः।
तृण्मुष्टिबन्धातीसारस्वरदैन्यविवर्णताः॥

**अउ3.21**
कूजनं स्तननं छर्दिः कासहिध्माप्रजागराः।
औष्ठदंशांससङ्कोचस्तम्भबस्ताभगन्धताः॥

**अउ3.22**
ऊर्ध्वं निरीक्ष्य हसनं मध्ये विनमनं ज्वरः।
मूर्छैकनेत्रशोफश्च नैगमेषग्रहाकृतिः॥

**अउ3.23**
कम्पो हृषितरोमत्वं स्वेदश्चक्षुर्निमीलनम्।
बहिरायामनं जिह्वादंशोऽन्तःकण्ठकूजनम्।
धावनं विट्सगन्धत्वं क्रोशनं च श्ववच्छुनि॥

**अउ3.24**
रोमहर्षो मुहुस्त्रासः सहसा रोदनं ज्वरः।
कासातिसारवमथुजृम्भातृट्च्छवगन्धिताः॥

**अउ3.25**
अङ्गेष्वाक्षेपविक्षेपशोषस्तम्भविवर्णताः।
मुष्टिबन्धः स्रुतिश्चाक्ष्णोर्बालस्य स्युः पितृग्रहे॥

**अउ3.26**
स्रस्ताग्गत्वमतीसारो जिह्वातालुगले व्रणाः।
स्फोटाःसदाहरुक्पाकाःसन्धिषु स्युः पुनःपुनः॥

**अउ3.27**
निश्यह्नि प्रविलीयन्ते पाको वक्त्रे गुदेऽपिवा।
भयं शकुनिगन्धत्वं ज्वरश्च शकुनिग्रहे॥

**अउ3.28**
पूतनायां वमिः कम्पस्तन्द्रा रात्रौ प्रजागरः।
हिध्माध्मानं शकृद्भेदः पिपासा मूत्रनिग्रहः।
स्रस्तहृष्टाङ्गरोमत्वं काकवत् पूतिगन्धिता॥

**अउ3.29**
शीतपूतनया कम्पो रोदनं तिर्यगीक्षणम्।
तृष्णान्त्रकूजोऽतीसारो वसावद्विस्रगन्धिता।
पार्श्वस्यैकस्य शीतत्वमुष्णत्वमपरस्य च॥

**अउ3.30**
अन्धपूतनया च्छर्दिर्ज्वरः कासोऽल्पनिद्रता।
वर्चसो भेदवैवर्ण्यदौर्गन्ध्यान्यङ्गशोषणम्॥

**अउ3.31**
दृष्टिसादोऽक्षिरुक्कण्डूः पोथकीजन्म शूनता।
हिध्मोद्वेगः स्तनद्वेषवैवर्ण्यस्वरतीक्ष्णताः।
वेपथुर्मत्स्यगन्धित्वमथवा साम्लगन्धिता॥

**अउ3.32**
मुखमण्डितया पाणिपादास्यरमणीयता।
सिराभिरसिताभाभिराचितोदरता ज्वरः।
अरोचकोऽङ्गग्लपनं गोमूत्रसमगन्धिता॥

**अउ3.33**
रेवत्यां श्यावनीलत्वं कर्णनासाक्षिमर्दनम्।
कासहिध्माक्षिविक्षेपवक्त्रवक्रत्वरक्तताः॥

**अउ3.34**
बस्तगन्धो ज्वरः शोषः पुरीषं हरितं द्रवम्।
जायते शुष्करेवत्यां क्रमात् सर्वाङ्गसङ्क्षयः॥

**अउ3.35**
केशशातोऽन्नविद्वेषः स्वरदैन्यं विवर्णता।
नानावर्णपुरीषत्वमुदरे ग्रन्थयः सिराः।
रोदनं गृद्ध्रगन्धित्वं दीर्घकालानुवर्तनम्॥

**अउ3.36**
उदरे ग्रन्थयो वृत्ता यस्य नानाविधं शकृत्।
जिह्वाया निम्नतामध्ये श्यावं तालु च तं त्यजेत्॥

**अउ3.37**
भुञ्जानोऽन्नं बहुविधं यो बालः परिहीयते।
तृष्णागृहीतः क्षामाक्षो हन्ति तं शुष्करेवती॥

**अउ3.38**
हिंसारत्यर्चनाकाङ्क्षा ग्रहग्रहणकारणम्॥

**अउ3.39**
तत्र हिंसात्मके बालो महान् वा स्रुतनासिकः।
क्षतजिह्वः क्वणन् बाढमसुखी सास्रलोचनः॥

**अउ3.40**
दुर्वर्णो हीनवचनः पूतिगन्धिश्च जायते।
क्षामो मूत्रपुरीषं स्वं मृद्नाति न जुगुप्सते॥

**अउ3.41**
हस्तौ चोद्यम्य संरब्धो हन्त्यात्मानं तथापरम्।
तद्वच्च शस्त्रकाष्ठाद्यैरग्निं वा दीप्तमाविशेत्॥

**अउ3.42**
अप्सु मज्जेत् पतेत् कूपे कुर्यादन्यच्च तद्विधम्।
तृट्दाहमोहान् पूयस्य छर्दनं च प्रवर्तयेत्।
रक्तं च सर्वमार्गेभ्योऽरिष्टोत्पत्तिं च तं त्यजेत्॥

**अउ3.43**
रहःस्त्रीरतिसंल्लापगन्धस्रग्भूषणप्रियः।
हृष्टः शान्तश्च दुःसाधो रतिकामेन पीडितः॥

**अउ3.44**
दीनः परिमृशन् वक्त्रं शुष्कौष्ठगलतालुकः।
शङ्कितं वीक्षते रौति ध्यायत्यायाति भीतताम्॥

**अउ3.45**
अन्नमन्नाभिलाषेऽपि दत्तं नाति बुभुक्षते।
गृहीतं बलिकामेन तं विद्यात् सुखसाधनम्॥

**अउ3.46**
हन्तुकामं जयेद्धोमैः सिद्धमन्त्रप्रवर्तितैः।
इतरौ तु यथाकामं रतिबल्यादिदानतः॥
॥इति तृतीयोऽध्यायः॥

अथ चतुर्थोऽध्यायः।

**अउ4.1**
अथातो बालग्रहप्रतिषेधं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ4.2**
ग्रहेषु साध्येषु शिशुं विविक्ते शरणे स्थितम्।
त्रिरह्वा मृष्टसंसिक्ते सदा सन्निहितानले॥

**अउ4.3**
विकीर्णभूतिकुसुमबीजपत्रान्नसर्षपे।
रक्षोघ्नतैलज्वलितप्रदीपहतपाप्मनि॥

**अउ4.4**
व्यवायमद्यपिशितनिवृत्तपरिचारके।
पुराणसर्पिषाभ्यक्तं परिषिक्तं सुखाम्बुना॥

**अउ4.5**
साधितेन बलानिम्बवैजयन्तीनृपद्रुमैः।
पारिभद्रककट्वङ्गजम्बूवरणकत्तृणैः॥

**अउ4.6**
कपोतवङ्कापामार्गपाटलीमधुशिग्रुभिः।
काकजङ्घामहाश्वेताकपित्थक्षीरिपादपैः॥

**अउ4.7**
सकदम्बकरञ्जैश्च धूपं स्नातस्य चाचरेत्।
द्वीपिव्याघ्राहिसिंहर्क्षचर्मभिर्घृतमिश्रितैः॥

**अउ4.8**
पूतीदशाङ्गसिद्धार्थवचाभल्लातदीप्यकैः।
सकुष्ठैः सघृतैर्धूपः सर्वग्रहविमोक्षणः॥

**अउ4.9**
सर्षपा निम्बपत्राणि मूलमश्वखुराद्वचा।
भूर्जपत्रं घृतं धूपः सर्वग्रहनिबर्हणः॥

**अउ4.10**
अनन्तान्नास्थितगरं मरिचं मधुरो गणः।
शृगालविन्ना मुस्ता च कल्कितैस्तैर्घृतं पचेत्।
दशमूलरसक्षीरयुक्तं तद् ग्रहजित् परम्॥

**अउ4.11**
रास्नाद्व्यंशुमतीवद्धपञ्चमूलबलाघनात्।
क्वाथे सर्पिः पचेत् पिष्टैः सारिवाव्योषचित्रकैः॥

**अउ4.12**
पाठाविडङ्गमधुकपयस्याहिङ्गुदारुभिः।
सग्रन्थिकैः सेन्द्रयवैः शिशोस्तत् सततं हितम्।
सर्वरोगग्रहहरं दीपनं बलवर्णदम्॥

**अउ4.13**
सारिवासुरभिब्राह्मिशिङ्खिनीकुष्ठसर्षपैः।
वचाश्वगन्धासुरसायुक्तैः सर्पिर्विपाचयेत्॥

**अउ4.14**
तन्नाशयेद् ग्रहान् सर्वान् पानेनाभ्यञ्जनेन च। योजयेद् भूतविद्यायां यान्युक्तानि घृतानि च॥

**अउ4.15**
हस्तमात्रं शुचौ देशे गोमयेनोपलेपयेत्।
तत्राक्षतानां चोक्षाणां स्थाप्यं पात्रं सदक्षिणम्॥

**अउ4.16**
निर्धूमश्चानलस्तोयं गुग्गुलुः सर्पिराहुतिः।
शुक्लं पुष्पं बलिर्धूपो दूर्वा श्वेताश्च सर्षपाः॥

**अउ4.17**
प्राङ्मुखोऽथ शुचिर्वैद्यस्त्रिवर्णामथवा सिताम्।
उपविष्टः प्रतिसरां गृहीत्वा वेष्टयेत्तया॥

**अउ4.18**
भूर्जे रोचनया विद्यां लिखितामपराजिताम्।
विधिना साधितां भूतैः सर्वैरप्यपराजिताम्॥

**अउ4.19**
लक्ष्मणादिपरीवारां नित्यानुस्मृतिसेविताम्।
लक्ष्मणा सहदेवाख्या नागदन्ती कटम्भरा॥

**अउ4.20**
मर्कटी कर्कटी लम्बा बृहती कण्टकारिका।
खरनासा मृगोर्वारुर्महाश्वेता शतावरी॥

**अउ4.21**
उदङ्मुखस्य बालस्य बध्नीयातां ततो गले।
तदभावे दृढं क्षौमसूत्रं मन्त्रमिदं जपन्॥

**अउ4.22**
बध्नाम्यहं प्रतिसरां नमस्कृत्वा स्वयम्भुवे।
बालानां रक्षणार्थाय शिवां पूर्वर्षिनिर्मिताम्॥

**अउ4.23**
इन्द्रोऽनुमन्यतां तुभ्यं ये च तस्यानुचारिणः।
वज्राशनिधरा भूता मेघवृन्दानुसारिणः॥

**अउ4.24**
ऐरावतस्कन्धगतं येऽनुयान्ति पुरन्दरम्।
यमो वैवस्वतो राजा ये च तस्यानुचारिणः॥

**अउ4.25**
मेषसूकरसिंहोष्ट्रखरवाजिसमाननाः।
काला कालायसैःपाशैःस्तब्धाक्षा भ्रुकुटीमुखाः॥

**अउ4.26**
शक्तिमुद्गरहस्ताश्च खड्गपाशधराश्च ये।
पाशभृद्वरुणो राजा तोयभूः सागरालयः॥

**अउ4.27**
शारदाभ्रघनाकारा ये च तस्यानुचारिणः।
महोर्मिमन्तं वेगेन क्षोभयन्ति सरित्पतिम्॥

**अउ4.28**
धनाधिपो वैश्रवणः सर्वयक्षाधिपो विभुः।
नानाकाराश्च ये भूतास्तस्यैवानुचराः सदा॥

**अउ4.29**
आदित्या वसवो रुद्रा मरुतश्चाश्विनावपि।
एते सर्वेऽनुमन्यन्तामिमां प्रतिसरक्रियाम्॥

**अउ4.30**
दीर्घमायुररोगं च तव दास्यन्ति स्वस्ति ते।
स्वस्ति ते भगवान् ब्राह्मा स्वस्ति नारदपर्वतौ॥

**अउ4.31**
स्वस्ति वेदाश्च यज्ञाश्च अग्नीषोमौ च स्वस्ति ते।
स्वस्ति ते श्रीर्धृतिःकीर्तिर्लक्ष्मीर्मेधा क्षमा द्युतिः॥

**अउ4.32**
स्वस्ति तुष्टिश्च पुष्टिश्च वपुर्ह्रीर्बुद्धिरेव च।
स्वस्ति रुद्रो विशाखश्च स्कन्दः शक्तिधरश्च ते॥

**अउ4.33**
स्वस्ति धाता विधाता च सुपर्णश्च महाबलः।
स्वस्ति देवाश्च यक्षाश्च मा च ते पापमागमत्॥

**अउ4.34**
दुर्व्याहृतानि दुस्वप्नं मनसा चिन्तितानि च।
दुष्टादीनां भयकृतो वाचः प्रतिहता मया॥

**अउ4.35**
रक्षा प्रतिसरा तुभ्यं बद्धेयं पापघातिनी।
निर्वृतस्त्वं निरुद्वेगो जीव वर्षशतं सुखी॥

**अउ4.36**
अपूपपूपसंयावस्वस्तिकालोपिकादयः।
पायसो मिश्रकः सिद्धो गुडपूरो हरिद्रकः॥

**अउ4.37**
कृसरो यावकः क्षौद्रं पललं लवणं हविः।
दधिकुल्माषनिष्पावो रक्तो भूतौदनः पयः॥

**अउ4.38**
पक्वाममांसरुधिरमत्स्यसक्तु सुरासवाः।
गन्धं माल्यं फलं हेम धूपः सपुरकुन्दुरुः॥

**अउ4.39**
सुरसार्जकनिर्गुण्डीकुसुमं च सपल्लवम्।
बलिः सुशस्तैर्देयः स्याद् भवनस्य चतुर्दिशम्॥

**अउ4.40**
चतुष्कचैत्यत्रिपथदेवायतनगोपुरे।
रेखावृक्षोदपाने च सन्ध्ययोर्दीपवान् निशि॥

**अउ4.41**
अथापतितगोवर्चः प्रलिप्ते दर्भसंस्तृते।
वृत्ते वा चतुरस्रे वा मण्डले कुसुमोज्वले॥

**अउ4.42**
नानाग्रहपरीवारं भिषग्भूतपतिं लिखेत्।
तं प्रति प्राङ्मुखो विद्यां पठन्नुपहरेत् बलिम्॥

**अउ4.43**
नमोविमारकस्य।
नमः कुमारङ्गाय।
नमः सप्तानां मातृणाम्।
नमः स्कन्दाय।
एष परिग्रहमन्त्रः।
मातृणामावाहनं च।
हिलिहिलिनिमापटलिनि स्वाहा।
अनेन सप्तकृत्वः परिजपितेन पानीयचलुकेनात्माभ्युक्षयितव्यः।
एवमात्मरक्षा कृता भवति॥

**अउ4.44**
ग्रहाणां सन्निधानाय बलेश्च प्रतिपत्तये।
सत्यसाधनसंयुक्तमिमं मन्त्रं पठेदनु॥

**अउ4.45**
प्रजापतौ च यत् सत्यं यत् सत्यममरेश्वरे।
धर्मराजे च यत् सत्यं यच्च सत्यं तपस्विषु॥

**अउ4.46**
धनाधिते च यत् सत्यं यच्च सत्यं जलाधिते।
यत् सत्यमग्निहोत्रेषु सत्यं यच्छ्रोत्रियेषु च॥

**अउ4.47**
पतिव्रतासु यत्सत्यमीश्वरे च महात्मनि।
एतैस्तु सत्यसमयैर्गुह्यकाः सत्यवादिनः॥

**अउ4.48**
दर्शयध्वं स्वरूपाणि सत्यं रक्षत सर्वतः।
आमन्त्रिता मया सौम्याः सौम्यरूपाः प्रतीच्छता॥

**अउ4.49**
बलिं चोपहृतं सर्वं सर्वे कौमारका ग्रहाः।
दर्शयध्वं स्वरूपाणि बलिश्च प्रतिगृह्यताम्॥

**अउ4.50**
ततश्चानु पठेदेनां कुलविद्यां समाहितः।
औला नीला खला काला नकुला ग्रहकारिका॥

**अउ4.51**
सेना सुसेना माता च महासेना यशस्विनी।
कृतमालाक्षतशिरा एतास्तु ग्रहमातरः॥

**अउ4.52**
कुमारवचनाच्छीघ्रं प्रमुञ्चन्तु शिशुन्त्विमम्।
कालकल्पा ज्वलच्छक्तिः किङ्किणीजालभूषिता॥

**अउ4.53**
कुमारवचनाद्दूती सम्प्राप्ता मुच्यतां शिशुः।
पताका कुक्कुटः छत्रं घण्टाबर्हधरः शिखी॥

**अउ4.54**
शरस्तम्भश्च ते मुद्रा मुच्यतां मातरः शिशुः।
गन्धं धूपं च माल्यं च कुमारस्ते प्रयच्छति॥

**अउ4.55**
न स्थातव्यं तदाघ्राय स्वां गतिं गच्छ मा चिरम्।
धात्र्यः सर्वाः कुमारस्य सङ्गता गन्धमादने॥

**अउ4.56**
रक्तध्वजपताकस्य रक्तांशुकनिवासिनः।
कुमारस्यालयं तत्र यात बालं विमुञ्चत॥

**अउ4.57**
षम्मुखो द्वादशाक्षो वै तस्मिन् काले वृतो वरम्।
वीरः कुमाराधिपतिस्तव पुत्रोऽभिषिच्यताम्॥

**अउ4.58**
ब्राह्मणो ब्राह्मणानान्तु सर्ववेदविदां वरः।
यक्षराक्षसनागानां गन्धर्वासुरयोरपि॥

**अउ4.59**
पिशाचभूतसङ्घानां व्याधीनां च स ईश्वरः।
आज्ञापयति वः स्कन्दो गम्यतां गन्धमादनम्॥

**अउ4.60**
ग्रहो यः कोपयेदाज्ञां कुमारस्य यशस्विनः।
स्थानात् च्युतः स वै क्षिप्रं बाह्यः परिषदो भवेत्॥

**अउ4.61**
बलेरनन्तरं कुर्याद्धोममभ्यर्च्य पावकम्।
पुष्पैर्भक्ष्यैश्च विविधैश्चरुणा लोहितैस्तथा॥

**अउ4.62**
गन्धैर्गुग्गुलुधूपैश्च समिधः खदिरादथ।
शतमष्टोत्तरं हव्यमथवा चन्दनद्रुमात्॥

**अउ4.63**
अग्निदण्डं प्रवक्ष्यामि सर्वग्रहविमोक्षणम्।
ब्रह्मण्यन्त्वनलं देवं हव्यकव्यप्रतीच्छकम्॥

**अउ4.64**
देवानां प्राङ्मुखं स्वस्तिस्वाहापहरतिद्रुतम्।
सहस्रविद्यो दहनः पावकः सर्वभक्षणः॥

**अउ4.65**
त्वं हि यज्ञश्च यूपश्च त्वं हि धर्मवतां गतिः।
हिरण्यरेता देवस्त्वं त्वं हि वेदविदां गतिः॥

**अउ4.66**
दुर्वृत्तानां विनाशाय त्वं समुत्पादितः सुरैः।
दहसङ्ग्रहदेवत्वमिदं दुष्टस्य निग्रहम्॥

**अउ4.67**
अग्नये स्वाहा।
महाग्नये स्वाहा।
त्वं हि शान्तिकरो वह्निस्त्वं मारुतहरोदनः।
हरिप्रधानगतिरासीदिमं निगृह्य गुह्यकमुत्सादय तेजसा त्वं मम वश्यं च तं कुरु दुष्टग्रहनिवारणं सर्वोपद्रवेषु च॥

**अउ4.68**
त्वया कृतेन होमेन शीघ्रं शान्तिः प्रजायते।
आयाहि वह्ने देवानां त्वं हि वक्त्रं पुरातनम्।
तेन सत्येन देवेश इमं साधय मे ग्रहम्॥

**अउ4.69**
नमोऽस्तुते हव्यवाहन दण्डं प्रदर्शय दह दह दर्श दर्श तेज तेज मोटय मोटय अपस्मारमुद्धाटय कुमार पिशाचरेवतीरोदनत्रासन वित्रासन कम्पन उत्कम्पन विजृम्भण देवयक्षगन्धर्वभूतनागराक्षससन्तजन दण्डनाविधूसारयभगवन्नग्निदण्ड अग्निवीर्य नमस्तेजसास्वेनत्यक्तमुत्सादय स्वाहा।
भूर्भुवस्स्वः स्वाहा।
दीप्ततेजसे स्वाहा।
हव्यवाहनाय स्वाहा।
यमाय स्वाहा।
नश्यन्त्यनेन होमेन समस्ता बालकग्रहाः॥

**अउ4.70**
तत्राग्नावरुणे ताम्रे तप्तहेमसमार्चिषि।
तारावैदूर्यसदृशे शशिविद्युत्समप्रभे॥

**अउ4.71**
घृतमण्डाभवर्णे वा गन्धेन च घृतोपमे।
केतकोत्पलदध्याभे द्रुवमारोग्यमादिशेत्।
अनारोग्यं तु नीलेऽग्नौ कपिले भस्मनिष्प्रभे॥

**अउ4.72**
कृष्णे कपोते दुर्गन्धे मत्स्यपूयास्रगन्धिके।
वचालशुनगन्धाभे विस्रे कर्दमगन्धिके॥
॥इति चतुर्थोऽध्यायः॥

अथ पञ्चमोऽध्यायः।

**अउ5.1**
अथातः स्नपनाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ5.2**
सरित्सङ्गमगोतीर्थगजेन्द्रस्कन्धगोकुले।
चतुष्पथे च स्नपयेद् बालं सस्तन्यमातरम्।
श्मशाने दीर्घरोगार्तं मृतापत्यां च योषितम्॥

**अउ5.3**
दूर्वाक्षीरिद्रुमवती प्रागुदक्प्रवणा मही।
स्निग्धनीरुजपुष्पाढ्यपादपा स्नपने शुभा॥

**अउ5.4**
रेवतीश्रवणस्वातीप्राजापत्योत्तरैन्दवे।
पुष्ये मूले च बालस्य स्नानं पर्वदिनेषु च॥

**अउ5.5**
चतुर्हस्ताष्टहस्तं वा द्वात्रिंशद्धस्तमेव वा।
नल्वमात्रप्रमाणं वा त्रिवर्णं मण्डलं लिखेत्॥

**अउ5.6**
गोचर्मचापेषुमितस्त्रिविधो नल्व उच्यते।
चतुरस्रं चतुर्द्वारं पताकाभिरलङ्कृतम्।
आकीर्णं परितो दूर्वासिद्धार्थकयवाङ्कुरैः॥

**अउ5.7**
क्रमात् प्राच्यादिषु लिखेद् गजारूढं पुरन्दरम्।
धर्मराजं महिषगं चक्राह्वस्थमपां पतिम्॥

**अउ5.8**
धनदं च गदापाणिं यमस्थानमतीत्य च।
मातृस्थानं लिखेत्तस्मिन् सवृषं नन्दिकेश्वरम्।
सवध्वनुचरं चादौ मृन्मयं च विनायकम्॥

**अउ5.9**
अतीत्य वरुणावासं सहस्रारं निवेशयेत्।
विष्णुप्रहरणं चक्रं सर्वविघ्ननिवारणम्॥

**अउ5.10**
सुरयक्षेशयोर्मध्ये पद्महस्तालयां श्रियम्।
नन्द्यावर्ताङ्कुशादर्शमत्स्यस्वस्तिकतोरणम्॥

**अउ5.11**
शङ्खं च दक्षिणावर्तं श्रीवत्सं माल्यदाम च।
इन्द्रादीनां परीवारमैशान्यादि विदिक्षुच॥

**अउ5.12**
लम्बोदरी लम्बभुजा लम्बकर्णी च राक्षसी।
इन्द्रद्वारे निवेश्याः स्युर्यमद्वारे प्रलम्बिनी।
लम्बकेश्यप्पतिद्वारे कौबेरे लम्बनासिका॥

**अउ5.13**
षट्कीलानायसान्कुर्यात्सप्त त्रैलोहिकान् भिषक्।
द्वौ चात्र खादिरौ शङ्कू चन्दनाम्बुसमुक्षितौ॥

**अउ5.14**
अष्टौ घटाः षोडश वा द्वात्रिंशद्विगुणा अपि।
स्वस्तिकाङ्काः प्रवालाभा रङ्गैरश्लेषकैः कृताः॥

**अउ5.15**
यथार्हौषधसंयुक्तशुचितोयप्रपूरिताः।
क्षीरिवृक्षपलाशाब्जगन्धमाल्योपशोभिताः।
मण्डलस्य चतुर्द्वारे कर्तव्याः सुनिवेशिताः॥

**अउ5.16**
पूर्वेषु प्रक्षिपेद्धेम ततश्च मणिमौक्तिकम्।
अपरेष्वौषधीबीजानुदक्ष्वक्षतसर्षपान्॥

**अउ5.17**
मृदः पवित्रा रक्षोघ्नीराहरेत सुरालयात्।
हस्तिशालाश्वशालाभ्यां शृङ्गाटकचतुष्पथात्॥

**अउ5.18**
वल्मीकाग्रान्नदीतीराद्वेश्याकोशनृपालयात्।
गुप्तिद्वारात् समुद्राच्च समिद्धं चाग्निमाहरेत्॥

**अउ5.19**
समिधः क्षीरिवृक्षाणां गन्धमाल्यं घृतं मधु।
अक्षतांस्तण्डुलानलाजान्पञ्चवर्णौदनंतिलान्॥

**अउ5.20**
ततो मध्यस्थिते पद्मे सह धात्र्योपवेशयेत्।
बालमौदुम्बरे पीठे पालाशे वाप्युदङ्मुखम्।
आस्तृते हरितैर्दर्भैर्न तु प्राच्यादिदिङ्मुखम्॥

**अउ5.21**
उदाहरिष्यते मन्त्रो यः स्कन्दबलिकर्मणि।
जुहुयात्तेन तत्राग्निमुदीच्यां स्थापितं दिशि॥

**अउ5.22**
त्रिरात्रोपोषितो वैद्यः शुक्लवासा जितेन्द्रियः।
सर्षपाक्षतयुक्ताभिर्मृद्भिर्गात्राणि मार्जयन्॥

**अउ5.23**
यथोदिताभिःस्नपयेत्घटैःप्राच्यादिदिक्स्थितैः।
क्रमात् प्रदक्षिणोत्क्षिप्तैः तत्र मन्त्रं प्रयोजयेत्॥

**अउ5.24**
अमृतात् पूर्वमुत्पन्नमिमं ते कलशं शुभम्।
ददातु भगवानिन्द्रो विजयं नाम नामतः॥

**अउ5.25**
रक्तपीताम्बरधरैर्भूतैर्बहुभिरन्वितः।
राक्षसोरगगन्धर्वपिशाचैश्चानुसेवितः॥

**अउ5.26**
वज्रघण्टाशनिधरैर्मेघैश्च विविधस्वनैः।
देवसङ्घैः परिवृतो गजेन्द्रस्कन्धसंश्रितः॥

**अउ5.27**
एभिः सार्धं महानिन्द्रः स्नपनं तेनुमन्यताम्।
पूर्वद्वारे स्थितं दिव्यं वज्रमिन्द्राज्ञया शुभम्॥

**अउ5.28**
तव सर्वाणि पापानि निहन्ता चापराजितः।
इन्द्राय नमः स्वाहा।
इन्द्राण्यै नमः स्वाहा।
अपराजिताय स्वाहा।
मेघाधिपतये स्वाहा।
देवाधिपतये स्वाहा।
शतक्रतवे स्वाहा॥

**अउ5.29**
द्वितीयं कलशं पुण्यमादित्यसदृशप्रभम्।
यमो ददातु भगवान् वैजयन्तं तु नामतः॥

**अउ5.30**
कृष्णाञ्जननिभैर्घोरैः कृष्णाम्बरधरैस्तथा।
वृतः करालैर्विकृतै राक्षसैरुग्रविक्रमैः॥

**अउ5.31**
श्मशानारण्यनिलयैर्मृतवस्त्रान्त्रभूषणैः।
त्वगस्थिमज्जमांसादैः प्रेतैर्बहुभिरावृतः॥

**अउ5.32**
धर्मराजो यमः श्रीमान् सत्यसन्धो महातपाः।
दिव्यं महिषमारुह्य स्नपनं तेनुमन्यताम्॥

**अउ5.33**
दक्षिणद्वारसंस्थस्ते यमदण्डः प्रतापवान्।
दुःस्वप्नं दुष्कृतं पापं सर्वमद्य हनिष्यति॥

**अउ5.34**
यमाय नमः स्वाहा।
यमदण्डाय नमः स्वाहा।
महिषवाहनाय स्वाहा।
प्रेताधिपतये स्वाहा।
धर्माधिपतये स्वाहा।
वैजयन्ताय स्वाहा॥

**अउ5.35**
जयन्तं जयवृध्यर्थं तृतीयं कलशं शुभम्।
ददातु मधुराजस्ते भगवान् वरुणः स्वयम्॥

**अउ5.36**
श्वेतमाल्याम्बरधरैः श्वेतगन्धानुलेपनैः।
गन्धर्वैः पन्नगेन्द्रैश्च भगवाननुशोभितः॥

**अउ5.37**
तीर्थकूपनदीवृक्षनिष्कुटोद्यानवासिभिः।
प्रबलैः कापिलैर्मुण्डैर्विकटैर्वामनैस्तथा॥

**अउ5.38**
वृतः परिषदैर्भूतैः पाशमुद्गरपाणिभिः।
एभिः सहाद्य भगवान् वरुणस्त्वाभिषिञ्चतु॥

**अउ5.39**
वरुणस्य महापाशोप्यपरद्वारमाश्रितः।
तव पापं निहन्त्वाशु सर्वविघ्ननिवारणः॥

**अउ5.40**
वरुणाय नमः स्वाहा।
श्वेताम्बरधराय स्वाहा।
मकरवाहनाय स्वाहा।
जयन्ताय स्वाहा॥

**अउ5.41**
चतुर्थं कलशं पुण्यं प्रधानमपराजितम्।
धनेश्वरो महाबाहुः प्रयच्छत्वलकाधिपः॥

**अउ5.42**
चित्रमाल्याम्बरधरौश्चित्रगन्धानुलेपनैः।
चित्रमद्यमदोन्मत्तैर्यक्षैः समुपसेवितः॥

**अउ5.43**
मुदितोद्गीतगन्धर्वैः सेवितश्चाप्सरोगणैः।
स ते वैश्रवणः श्रीमान् स्नपनन्त्वनुमन्यताम्॥

**अउ5.44**
सर्वव्याधिहरा दीप्ता द्वारमुत्तरमाश्रिता।
गदा ते नाशयत्वद्य सर्वपापं दिशो दश॥

**अउ5.45**
धनाधिपतये स्वाहा।
गदापाणये स्वाहा।
अपराजिताय स्वाहा।
चित्राम्बरधराय स्वाहा॥

**अउ5.46**
आपः पवित्रं लोकेस्मिन्नापो वै परमं शुचिः।
आपो वै देवताः सर्वा आपस्त्वामभिषिच्यताम्।
ब्रह्माब्रह्मर्षिभिः सार्धं भगवांस्त्वाभिषिञ्च तु॥

**अउ5.47**
स्वाहा।
साङ्गोपाङ्गास्तथा वेदाः कीर्तिर्लक्ष्मीः सरस्वती।

बाला दाक्षायणी सीता सावित्री सरमा द्युतिः।
आकाशगङ्गा गङ्गाद्या महानद्यो महोदधिः॥

**अउ5.48**
नदीनां सङ्गमास्तीर्था निर्झराः सागरास्तथा।
मेरुर्महेन्द्रो हिमवान् जगच्च स्थावरत्रयम्॥

**अउ5.49**
स्कन्दादयो ग्रहाश्चैव तोषिता बलिकर्मणा।
अद्य त्वामभिषिञ्चन्तु नीरुजो भव दारक॥

**अउ5.50**
नमो भगवते पितामहाय।
ओं मं ओं मं ल्मि ल्मि लिभुक् लिभुक् लिपिभवनेभ्यः स्वाहा॥

**अउ5.51**
नमो भगवते रुद्राय हिलिमिलि, मेल्लि, मेल्लि, वेल्लि वेल्लि, म्मिलिम्मिलि स्वाहा॥

**अउ5.52**
राक्षसाच पलायन्तु भूताश्च त्रस्तमानसाः।
मृताशना महाजिह्वास्तथा विघ्नविनायकाः॥

**अउ5.53**
नमो भगवते कुमाराय पिलि, पिलि, खिल्लि, खिल्लि, खिणि, खिणि, स्वाहा॥

**अउ5.54**
पुष्करं पुष्करारण्यं नैमिषं च तथा गया।
प्रभासं प्रवरं तीर्थं तथा पिण्डारकाह्वयम्।
तीर्थान्येतानि सर्वाणि अभिषिञ्चन्तु स्वस्ति ते॥

**अउ5.55**
नमो भगवतीभ्यो महायोगीश्वरीभ्यो।
निमिनिमि मेनुमेनु तुरुतुरु स्वाहा॥

**अउ5.56**
याश्च जातापहारिण्यो राक्षस्यो विकृताननाः।
अपि ता निहताः सर्वा याश्चान्याः पापचिन्तकाः॥

**अउ5.57**
सतीनां कपिलानां च सिद्धानां चैव तेजसा।
तेजसा चर्षिविप्राणां मयाद्य स्नपितो भवान्॥

**अउ5.58**
प्रभुर्मृत्युरलक्ष्मीश्च कालरात्रिश्च सारथिः।
लम्बा च लोहशङ्कुश्च पूतना कूटपूतना।
अशुभं यच्च ते किञ्चित् सर्वं प्रतिहतं मया॥

**अउ5.59**
आदित्या वसवो रुद्रा अश्विनावौषधीगणाः।
गावोन्तरिक्षं सन्ध्ये च नक्षत्रग्रहवत्सराः॥

**अउ5.60**
विश्वावसुश्च हाहा च नारदस्तुम्बुरुस्तथा।
धन्वन्तरिरगस्त्यश्च सुस्नातं प्रदिशन्तु ते॥

**अउ5.61**
स्नातो द्विजभिषग्भृत्यान्यथाविभवमर्चयेत्।
मांसव्यवायाहःस्वप्नान् पञ्चरात्रं विवर्जयेत्॥

**अउ5.62**
स्नपनं पाप्मजित् पुण्यं नीरुजामपि पुष्टिकृत्।
रोगिणां सर्वरोगघ्नं वन्ध्यानामपि पुत्रदम्॥

**अउ5.63**
विधिना विधिहीनन्तु सवैद्यं हन्ति बालकम्।
नैतदश्रद्दधानाय योज्यं नानुपसीदते॥

**अउ5.64**
पूतीकरञ्जत्वक्पत्रं क्षीरिभ्यो बर्बरादपि।
तुम्बीविशालारलुकशमीबिल्वकपित्थतः॥

**अउ5.65**
स्थाल्यामुत्क्वाथ्य तत्तोयं बालानां स्नपनं शिवम्।
रात्रौ प्रसुप्तलोकायां पुष्टिदं सर्वरोगजित्॥

**॥इति पञ्चमोऽध्यायः॥**

# अष्टाङ्गसंग्रहः उत्तरस्थानम् अध्याय ६-१०

https://sa.wikisource.org/s/9zv

**अष्टाङ्गसंग्रहः**

अथ षष्ठोऽध्यायः।

**अउ6.1**
अथातः प्रत्येकग्रहप्रतिषेधं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ6.2**
स्कन्दग्रहे गुग्गुल्वेलवालुकमनश्शिलाहरितालमञ्जिष्ठोशीररास्नागरुदेवदारुश्रीवेष्टकहरेणूगिरिकदम्बकचन्दनैः श्लक्ष्णपिष्टैः प्रदेहो वातहरवृक्षपत्रक्वाथेन कवोष्णेन परिषेकस्तेषामेव च मूलक्वाथे सर्वगन्धसुरामण्डकैडर्यावापवत्तैलं विपक्वमभ्यङ्गः॥

**अउ6.3**
बृंहतीद्वयद्विपुर्ननवरेणुकोपकुल्यामुस्तखदिरवचाशङ्खनाभिसरलसर्पसुगन्धासुराह्वकल्कविपक्वंवा॥

**अउ6.4**
क्षीरिवृक्षकषायेण क्षीरेण च सिद्धमर्धपलिकैश्च पिष्टैः सारिवाद्विकाकोलीद्विबलांशुमतीद्वयहस्तिकर्णपर्णैर्घृतप्रस्थं पानम्॥

**अउ6.5**
रास्नादेवदार्वन्यतरकल्केन वा सक्षीरं साधितं सर्पिः॥

**अउ6.6**
वचाकाकादनीसर्पकञ्चुकसर्षपैरुष्ट्राजाव्यश्वगोरोमभिश्च सघृतैर्धूपैः।
सिद्धार्थकसर्जरसकुष्ठहिङ्गुगुग्गुलुभिर्वा॥

**अउ6.7**
सोमवल्लीन्द्रवल्लीशमीबिल्ववृन्दाकमृगादिनीमूलानि सूत्रेण ग्रथितानि कण्ठेन शिरसा वा धारयेत्॥

**अउ6.8**
रक्तमाल्यानुलेपनवस्त्रपताकामणिबीजैर्विविधैश्च भक्ष्यैः सदधिघृतमधुलाजकुल्माषमांसमत्स्यसुरासवं समयूरकुक्कुटं सघण्टाकं सशूर्पव्यजनं च कुमारग्रहे रक्तौदनेन बलिमुपोषितो निवेदयेत्॥

**अउ6.9**
तत्र च रात्रावग्निं ज्वालयित्वा मन्त्रमिमं पठन् मधुसर्पिषा जुहुयात्॥

**अउ6.10**
अग्नये कृत्तिकाभ्यश्च स्वाहा स्वाहेति चान्ततः।
नमः स्कन्दाय देवाय ग्रहाधिपतये नमः॥

**अउ6.11**
शिरसा त्वाभिवन्देहं प्रतिगृह्णीष्व मे बलिम्।
नीरुजो निर्विकारश्च शिशुर्भवतु सर्वदा॥

**अउ6.12**
सर्वेष्वेव ग्रहेषु त्रिकालमग्निं पूजयेत्तर्पयेच्च।
विशेषतः स्कन्दग्रहे त्रिरात्रं च रात्रौ रात्रौ गायत्र्यभिमन्त्रितोदकेन चत्वरे धात्रीकुमारयोः स्नपनमाचरेत्॥

**अउ6.13**
त्रिकालं च मन्त्रेणानेन बालमपमार्जयेत् प्रतिसरां च बध्नीयात्॥

**अउ6.14**
तपसां तेजसां चैव यशसां वपुषां तथा।
विधाता योऽव्ययो देवः स ते स्कन्दः प्रसीदतु॥

**अउ6.15**
ग्रहसेनापतिर्देवो देवसेनापतिर्विभुः।
देवसेनारिपुहरः पातु त्वा भगवान् गुहः॥

**अउ6.16**
देवदेवस्य महतः पावकस्य च यः सुतः।
गङ्गोमाकृत्तिकानां च स ते शर्म प्रयच्छतु॥

**अउ6.17**
रक्तमाल्याम्बरः श्रीमान् रक्तचन्दनभूषितः।
रक्तादित्यवपुर्देवः पातु त्वा क्रौञ्चसूदन इति॥

**अउ6.18**
विशाखे स्कन्दग्रहोक्तो वचाकुष्ठान्वितः प्रदेहो गोलोमीबिल्वशिरीषमुस्तसुरसादिक्वाथेन परिषेकः।
सर्पसुगन्धादेवदारुकुष्ठमुस्ताकल्केन सगोमूत्रबस्तमूत्रेण सिद्धं तैलमभ्यङ्गः॥

**अउ6.19**
क्षीरिवृक्षकषायेण जीवनीयगर्भं सपयस्कं सर्पिः सिद्धं पानम्।
जीवकर्षभक्षीरिणीबृहतीहरिद्रांशुमतीद्वयमधुकैर्वा विदारीद्वयतवक्षीरीमृद्वीकामधुकरास्नानीलोत्पलकन्दवचाव्योषैर्वा॥

**अउ6.20**
गृद्ध्रोलूकपुरीषवृषभरोमकेशहस्तिनखैर्घृताक्तैर्धूपः।
अनन्ताकुक्कुटीमर्कटीबिम्बीसमङ्गाश्वेतगिरिकर्णीकाः पूर्वोक्तानि च पूर्ववद्धारयेत्॥

**अउ6.21**
पक्वाममांसरुधिरदधिवारुणीयुक्तो वटवृक्षे बलिश्चतुष्पथे स्नानम्।
मन्त्रश्च॥

**अउ6.22**
स्कन्दापस्मारसंज्ञो यः स्कन्दस्य दयितः सखा।
विशाखसंज्ञः स शिशोः शिवोऽस्तु विकृताननः॥

**अउ6.23**
नैगमेषे विशाखोक्तः प्रदेहोग्निमन्थवरुणनलरोहिषपूतीकपारिभद्रकैः परिषेको धान्याम्लेन सबीजेन गुग्गुल्वश्वगन्धासर्षपोशीरश्वेताकुष्ठशताह्वाविपक्वं तैलमभ्यङ्गः॥

**अउ6.24**
दशमूलक्वाथे मधुरस्कन्धगर्भं सक्षीरं सर्पिः पानम्।
सर्पगन्धाबस्तनखरोमभिर्धूपः।
सर्पगन्धाबस्तगन्धातुम्बीमृगोर्वारुशतावरीसहदेवापुनर्नवबीजानि धारयेत्॥

**अउ6.25**
विचित्रमाल्यफलशुक्लविलेपनौदनदधिघृतगुडक्षीरैर्महापथे क्षीरिद्रुमे वा बलिः।
नदीतीरे स्नानम् मन्त्रश्च॥

**अउ6.26**
अजाननश्चलाक्षिभ्रूः कामरूपी महायशाः।
बालं बालहितो देवो नैगमेषोऽभिरक्षतु॥

**अउ6.27**
स्वाहा।
श्वग्रहे गवाक्षीब्रह्मदत्ताबृहतीद्वयसारिवाद्द्रीवेरकुष्ठभूमिकदम्बसुरसमञ्जरीकरवीरपुष्पैः प्रदेहः।
मयूरो लूकाश्वमहिषीपुरीषरोमभिश्च।
बिल्वैरण्डनक्तमालारलुकपत्रक्वाथः परिषेकः॥

**अउ6.28**
वयस्थाशतावरीसारिवापयस्यैरण्डसहदेवात्रिकटुककल्कक्षीरसिद्धं तैलमभ्यङ्गः।
तथैव च घृतं पानम्।
गोबस्तमूत्रभावितशुष्कमत्स्यचूर्णो निशीथे धूपः॥

**अउ6.29**
वचावयस्थाब्राह्मीजटिलागोलोमीलम्बापूतनाकेशीगिरिकदम्बकेकैषीकासहदेवीर्धारयेत्॥

**अउ6.30**
सघृतसुरामांसदधिरुधिरपललश्चत्वरे बलिः।
सङ्करकूटे स्नानम्।
मन्त्रश्च॥

**अउ6.31**
रक्षार्थं कार्तिकेयस्य कृत्तिकोमाग्निशूलिभिः।
योसौ श्वविग्रहः सृष्टः स देवस्त्वाभिरक्षतु॥

**अउ6.32**
स्वाहा।
पितृग्रहे पूर्वोक्तः प्रदेहो वचावयस्थाजीवन्तीधातकीप्रियङ्गुगुग्गुलुरास्नामनश्शिलालैर्वा।
वचादिभिरेव सिद्धं तैलमभ्यङ्गः॥

**अउ6.33**
बिल्वकपित्थकरञ्जतर्करीसुरसपाटलीवरणपारिभद्रकपारिजातमातुलुङ्गपत्रक्वाथेन रात्रौ परिषेको बिल्वादिभिरेव च तैलं सुराबस्तमूत्रयुक्तं साधितमभ्यङ्गः॥

**अउ6.34**
त्रिफलांशुमतीद्वयपयस्यामधुककल्केन दशमूलनिर्यूहे सक्षीरं सर्पिः पक्वं पानम्।
देवदारुभार्ङ्गीविडङ्ग चन्दनकाकोलीद्वयजीवकर्षभकैर्वा सक्षारैः॥

**अउ6.35**
लक्ष्मीपुरकुष्ठगोलोमीजटिलोग्रगन्धाभिः सिद्धं तैलं नावनम्।
एभिरेव च सुरापिष्टैर्लेपः॥

**अउ6.36**
गृद्ध्रोलूकवानररोमाणि सघृतानि तत्पुरीषं वा सुप्तजने धूपो वचादिभिर्वा प्रदेहोक्तैः पूर्वोक्तो वा।
पूर्वोक्ता एव च धारयेत्॥

**अउ6.37**
सुरासवगुडापूपपिष्टतिलकृतभक्षो वृक्षमूले सवृषभः काञ्चनाक्षियुगयुक्तः स्वयं पित्रा कुमारस्य निर्वापणीयो बलिः।
क्षीरिवृक्षसमीपे स्नानम्।
मन्त्रश्च॥

**अउ6.38**
यः पिता सर्वबालानां ग्रहाणां पूजितो वरः।
वृक्षमूले कृतावासः स त्वां पातु पिता सदा॥
स्वाहा॥

**अउ6.39**
शकुन्यां मधुकद्रीबेरोशीरसारिवापद्मकोत्पलमञ्जिष्ठालोद्ध्रप्रियङ्गुगैरिकैः प्रदेहः।
सुरामूत्रपिष्टैर्वा लोध्रयष्टीमधुकमञ्जिष्ठाहरीतकीदेवदारुभिर्व्रणोक्ताश्च प्रदेहाः।
वेतसाम्लकपित्थैः सपञ्चमूलैर्वा।
शुक्तिशङ्खशम्बूकभस्ममञ्जिष्ठाभयामधुकैस्तैलं पक्वं व्रणरोपणम्॥

**अउ6.40**
क्षीरितरुभिः परिषेको मार्कवमूलकामलकीत्वक्पत्रप्रियङ्गुमनशिशलालैलाद्वययष्टीक्रमुकलोध्रधातकीसारिवाञ्जनोत्पलपतङ्गसमङ्गाद्विहरिद्रामांसीमञ्जिष्ठाचन्दनपद्मकसुवर्णगौरिकैस्तैलं सपयस्कं पक्वमभ्यङ्गो ग्रहहा व्रणरोपणश्च॥

**अउ6.41**
अर्जुनफललोध्रमधुकोदुम्बरवचाचूर्णं क्षौद्रयुक्तो मुखपाके मुखोद्घर्षः।
विशाखोक्तं सापः पानम्।
स्कन्दोक्तो धूपः।
काकपिच्छेन वा गोबालोग्रगन्धारक्षोघ्नघृतमयूरचन्द्रकैर्वा॥

**अउ6.42**
कटम्भराकुक्कुटीमर्कटीलम्बासहदेवीह्रीबेरोशीराणि धारयेत्।
नागदन्ती लक्ष्मणाबृहतीद्वयमृगोर्वारुशतावरीसहदेव्यो वा॥

**अउ6.43**
तिलतण्डुलमत्स्यमनशिशलाहरितालसम्पृक्तस्तिलपिष्टकृतशकुनिकैः करञ्जे बलिर्निष्कुटे स्नानम्।
मन्त्रश्च॥

**अउ6.44**
अन्तरिक्षचरा देवी सर्वालङ्कारभूषिता।
अयोमुखी तीक्ष्णतुण्डा शकुनी ते प्रसीदतु॥

**अउ6.45**
दुर्दर्शना महाकाया पिङ्गाक्षी भैरवस्वरा।
लम्बोदरी शङ्कुकर्णी शकुनी ते प्रसीदतु॥

**अउ6.46**
पूतनायां हिङ्गुवचागिरिकदम्बकुष्ठैलाद्वयसुराह्वैः प्रदेहः।
कपित्थशिरीषन्यग्रोधबिल्वैरण्डबकुलधव वंशाग्निमन्थपत्रक्वाथः सर्वगन्धोदकयुक्तः परिषेको वरणकट्वङ्गास्फोतकपोतवङ्कापारिभद्रदैर्वा॥

**अउ6.47**
कुष्ठसर्जरसवचागोलोमीवयस्थामनश्शिलालैस्तैलं साधितमभ्यङ्गः।
मधुरौषधैः साधितं सर्पिः पानम्।
एलाद्वयकुष्ठवचाहिङ्गुदेवदारुगिरिकदम्बकैर्धूपः।
बिम्बीगुञ्जाकाकादनीनद्रवारुणीचित्रपला धारयेत्॥

**अउ6.48**
विचित्रमाल्यमत्स्योदनकृसरपललवान् बलिः सङ्करकूटे।
तद्वच्छरावसम्पुटस्थः शून्यग्रहे चतुर्दिशं प्रक्षेप्यः।
तत्र चोच्छिष्टेन स्नपनम्।
मन्त्रश्च॥

**अउ6.49**
मलिनाम्बरसंवीता मलिना रूक्षमूर्धजा।
शून्यागाराश्रया देवी दारकं पातु पूतना॥

**अउ6.50**
दुर्दर्शना महाकाया कराला मेघकालिका।
भिन्नागाराश्रया देवी दारकं पातु पूतना॥

**अउ6.51**
शीतपूतनायां पूतनोक्तः प्रदेहो धारणीयानि च।
वरणकपित्थतुलसीपाशिकावंशीबिल्वपाटलीनन्दीभल्लातकपत्रनिर्यूहेण परिषेकः॥

**अउ6.52**
मुस्तामरदारुकुष्ठसर्पगन्धैर्गोबस्तमूत्रयुक्तं तैलं विपक्वमभ्यङ्गः।
काश्मर्यपृश्निपर्णीलोध्रमधुकैर्मधुरवर्गेण च समक्षीरं सर्पिः शृतं प्राश्यमानं शीतपूतनां छर्दिहिध्माकासश्वासांश्च शमयति॥

**अउ6.53**
सातिसारायां तु खदिरपलाशसर्जार्जुनरोहिणीत्वक्क्वाथेन तुल्यपयः सर्पिः।
गृध्रोलूकविड्बस्तगन्धाहिनिर्मोकनिम्बपत्रैर्धूपः।
जीर्णगोचर्मसर्षपभिक्षुसङ्घाटीसर्पकञ्चुकैर्वा॥

**अउ6.54**
मुद्गौदनप्रायो जलाशयसमीपे बलिस्तत्रैव च स्नानम्।
मन्त्रश्च॥

**अउ6.55**
मुद्गौदनाशना देवी सुराशोणितपायिनी।
जलाशयालयरता पातु त्वा शीतपूतना॥

**अउ6.56**
अन्धपूतनायां सर्वगन्धैः सशिरोवक्त्रस्य प्रदेहः।
वरुणास्फोतपारिभद्रकवृक्षादनीनागबलागैरिकशतावरीभिः परिषेकः।

हरितालमनश्शिलाकुष्ठसर्जरससुरासौवीरकसंस्कृतं तैलमभ्यङ्गः॥

**अ36.57**
स्यन्दनस्योनाककाश्मर्यखदिरकुष्ठैर्मधुरवर्गेण च क्षीरिवृक्षकषाये सक्षीरं शृतं घृतं मधुयुक्तं चक्षुःकामोपसृष्टानां प्राशः।
छर्दिकासातीसारवतां तु तदेव पिप्पलीपिप्पलीमूलसालपर्णीबृहतीकल्कोपेतम्॥

**अ36.58**
रक्षोघ्नरुष्करसर्जरसमधुभिर्धूपः।
जीर्णाभिक्षुसङ्घाटीकृकवाकुपुरीषाहित्वक्केशचर्मभिर्वा॥

**अ36.59**
अनन्ता कुक्कुटी मर्कटी बिम्बीर्धारयेत्।
तुम्बी चित्रफलामृगोर्वारुजालिनीकाकादनीर्वा॥

**अ36.60**
पक्वाममांसशोणितैश्चतुष्पथे बलिर्गृहे स्नानम्।
मन्त्रश्च॥

**अ36.61**
कराला पिङ्गला मुण्डा कषायाम्बरवासिनी।
देवी बालमिमं प्रीता पालयत्वन्धपूतना॥

**अ36.62**
मुखमण्डितिकायां वारुण्या श्लक्ष्णपिष्टैः सर्वगन्धैर्लेपः।
बिल्वैरण्डकपित्थाग्निमन्थवंशीकुबेराक्षीपत्रक्वाथेन परिषेकस्तेषामेव च स्वरसेन मधुकवाजिगन्धागर्भमैकध्यं तैलं वसा च पक्वमभ्यङ्गः॥

**अ36.63**
ह्रस्वपञ्चमूलमधुरवर्गसिद्धं घृतं समधुशर्करं प्राशः।
पाठाकेतकसूचीनिम्बफलपिप्पलीविडङ्गहरीतकीभस्मवचाचोरकचूर्णो वा मधुसर्पिर्भ्याम्।
ऋक्षरोममषीपाठामरिचपिप्पलीचूर्णो वा देवदारुभस्मयुक्तो मूर्वाव्योषमुस्तरास्नागिरिकदम्बकाश्वगन्धाचूर्णो वाशोकरोहिणीचूर्णो वा।
एभिरेव च विपक्वमाजं घृतं पयो वा पिबेत्॥

**अ36.64**
एभिरेव च योगैर्धूपोपदेहाभ्यङ्गनस्यतैलाक्षिपूरणपरिषेकान् कुर्यात्।
यवकुष्ठसर्जरसैर्धूपः।
सर्पचाषकीररल्लकजिह्वा धारयेत्।
मातुश्चास्य श्लेष्महरमौषधं पाने स्तनोद्वर्तने च युञ्ज्यात्॥

**अ36.65**
विविधगन्धधूपमाल्याञ्जनपारदमनश्शिलायुक्तो गोष्ठमध्ये बलिर्गवां मध्ये स्नानम्।
मन्त्रश्च॥

**अ36.66**
अलङ्कृता रूपवती सुभगा कामरूपिणी।
गोष्ठमध्यालयरता पातु त्वा मुखमण्डिता॥

**अ36.67**
रेवत्यां सर्वगन्धैः कुलत्थमाषचूर्णेन च प्रदेहः।
अश्वगन्धाजशृङ्गीसारिवाद्विपुनर्नवद्विसहाविदारीभिः परिषेकः॥

**अ36.68**
कुष्ठसर्जरससांधितं तैलमभ्यङ्गः।
धवाश्वकर्णधातकीककुभतिन्दुकैर्जीवनीयैश्च पिष्टैर्घृतं शृतं प्राशः।
यवयवफलोलूकगृध्रशकृद्भिः सघृतैर्धूपः।
वरणारिष्टसिन्दुकान्वितश्चाविकमूत्रेण कण्डको लेपः॥

**अ36.69**
शुक्लमाल्यविलेपनलाजौदनपायसैर्गोतीर्थे बलिः।
नदीसङ्गमे क्षीरिवृक्षसमीपे वा स्नपनम्।
मन्त्रश्च॥

**अउ6.70**
नानावस्त्रधरादेवी चित्रमाल्यानुलेपना।
चलत्कुण्डलिनी श्यामा रेवती ते प्रसीदतु॥

**अउ6.71**
शुष्करेवत्यां धूपवर्ज्यः स्कन्दग्रहोक्तो विधिः।
वचाश्वगन्धाहिङ्गुलाजसिद्धार्थकैरुद्वर्तनम्।
सर्षपतैलं वचासिद्धं नेत्रपूरणम्॥

**अउ6.72**
काकगृध्रगर्दभशकृद्भिर्लेपः।
कुलीरकपालशल्यकशुक्तिमेषशृङ्गहयखरजाहकहस्तिनखनकुलरोमभिर्धूपः सर्वग्रहघ्नः॥

**अउ6.73**
कुल्माषैर्मद्येन शुष्कमांसेन च शुष्कवृक्षे बलिः।
तत्रैव च स्नानम्।
मन्त्रश्च॥

**अउ6.74**
उपासते या सततं देव्यो विविधभूषणाः।
लम्बा कराला विनता तथैव बहुपुत्रिका।
रेवती शुष्कनामा च सा ते देवी प्रसीदतु इति॥

**अउ6.75**
भवति चात्र।
अनुबन्धान्यथाकृच्छ्रं ग्रहापायेप्युपद्रवान्।
बालामयनिषेधोक्तभेषजैः समुपाचरेत्॥
॥इति षष्ठोऽध्यायः॥
द्वितीयं कौमारतन्त्रं सम्पूर्णम्।

अथ सप्तमोऽध्यायः।

**अउ7.1**
अथातो भूतविज्ञानीयं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ7.2**
अष्टादश भूताधिपतयः।
तद्यथा।
सुरासुरगन्धर्वोरगयक्षब्रह्मराक्षसराक्षसपिशाचप्रेतकूष्माण्डकाखोर्दमौकिरणवेतालपितरः ऋषिगुरुवृद्धसिद्धाश्च।
ते पुनः पृथक् कोटिपरिवाराः।
तेषामपि चापरिसङ्ख्येयः परिवार इत्यनन्तो भूतलोकः॥

**अउ7.3**
सर्वोऽपि च प्रायेणाहारकामा निशार्धविचारिणो भयानका मांसासृग्वसाशिनः॥

**अउ7.4**
अपि च।
सुरासुरादिसंवाससंसर्गात्तच्छीलाचारकर्मतया च तत्संज्ञां लभन्ते॥

**अउ7.5**
तेषां पुनरनुप्रवेशे कारणं सद्यः पूर्वकृतो वा विशेषेण प्रज्ञापराधः॥

**अउ7.6**
तेन हि कामक्रोधलोभमोहादिजनितेन प्रलुप्तधमभिन्नव्रताचारशौचो मलीमसः पूज्यानतिक्रामन्नात्मानमुपहन्ति॥

**अउ7.7**
ततस्तमात्महनमवतारगवेषिणो देवादिग्रहा अप्यनुघ्नन्ति।
तद्वदुन्मादापस्मारोपप्लुतचित्तं तथा ज्वराद्यामयोपहतमपि।
विशेषतश्च व्रणिनः पूयासृक्स्नेहगन्धेन॥

**अउ7.8**
एवंविधांस्तु पुरुषानेष्वाघातकालेष्वभिगच्छन्ति॥

**अउ7.9**
तद्यथा।
पापस्य कर्मणः समारम्भे।
पूर्वकृतस्य वा परिणामकाले।
एकस्य वा शून्यगृहनिवासे।
चतुष्पथाधिष्ठाने वा।
सन्ध्यावेलायामप्रयतभावे वा पक्षसन्धिषु वा मिथुनीभावे।
रजस्वलाभिगमने वा।
विगुणे वाध्यापनहोमबलिमङ्गलप्रयोगे।
नियमब्रह्मचर्यव्रतभङ्गे वा।
महाहवे वा।
देशपुरकुलविनाशे वा।
महाग्रहोपगमने वा।
स्त्रिया वा प्रजननकाले।
विविधभूताशुचिसंस्पर्शे वा।
वमनविरेचनरुधिरस्रावे वा।
अशुचेरप्रयतस्य वा चैत्यदेवायतनाभिगमने वा।
मांसमधुगुडतिलमद्योच्छिष्टे वा।
दिग्वाससि वा।
निशि नगरचतुष्पथोपवनश्मशानाभिगमने वा।
द्विजगुरुसुरयतिपूज्यव्यतिक्रमे वा॥

**अउ7.10**
तत्रावलोकयन्तो जनयन्ति मनोविकारं सुरासुरग्रहाः।
स्पृशन्तो गन्धर्वाः।
समाविशन्तो भुजगाः।
यक्षाश्चात्मगन्धमाघ्रापयन्तः।
राक्षसा वाहयन्तोधिरुह्य।
तथैव पिशाचाद्याः।
दर्शयन्तः पितरोभिशपन्त ऋषिगुरुवृद्धसिद्धाः॥

**अउ7.11**
तत्र शीलवन्तं चोक्षाचारं शुक्लाम्बरधरं तपःस्वाध्यायपरं प्रायः शुक्लप्रतिपदित्रयोदश्यां चतुर्दश्यां पौर्णमास्यां वा देवा गृह्णन्ति।
क्रोधनं कदर्यमात्मसम्भाविनं कुलरूपगर्वितं कृष्णद्वादश्यां कृष्णत्रयोदश्यां सन्ध्ययोश्चासुराः।
प्रियनृत्तगीतवादित्रगन्धमाल्याम्बरं परदाररतं चोक्षाचारं प्रायश्चतुर्थ्यामष्टभ्यां द्वादश्यां चतुर्दश्यां च गन्धर्वाः।
स्वप्नशीलं चपलमनिमित्रक्रोधनमर्थसिद्धं ब्राह्मणं प्रायः पञ्चभ्यां सन्ध्ययोर्मध्याह्ने च नागाः।
सत्वबलरूपगन्धर्वधनशौर्ययुक्तं माल्यानुलेपनहास्यप्रियमतिव्याकरणं प्रायः शुक्लसप्तम्यामेकादश्यां च यक्षाः॥

**अउ7.12**
स्वाध्यायतपोव्रतचर्यादेवयतिगुरुपूजारतं भ्रष्टशौचं वा ब्राह्मणमब्राह्मणं वा ब्रह्मवादिनं शूरं मानिनं देवागारसलिलक्रीडनप्रियं च स्खलितब्रह्मचर्यं प्रायः शुक्लपञ्चम्यामष्टम्यां पूर्णचन्द्रदर्शने सन्ध्यासु च।
ब्रह्मराक्षसाः॥

**अउ7.13**
हीनसत्वं पिशुनं स्तेनं लुब्धं शठं प्रायो द्वितीयातृतीयाष्टमीषु राक्षसपिशाचादयः।
कलिपानप्रियमसूयावन्तं परुषभाषिणं बह्वाशिनं च कृष्णनवमीद्वादश्योर्निशि च राक्षसाः॥

**अउ7.14**
आत्मश्लाघिनं कूटसाक्ष्यप्रदं परोपतापिनं च चतुर्दश्यां पिशाचादयः॥

**अउ7.15**
मातापितृगुरुवृद्धसिद्धाचार्योपसेविनं प्रायो दशम्याममावास्यां च पितरः।
तद्विधमेव च प्रायः षष्ठ्यां नवम्यां च गुरुवृद्धसिद्धाः।
तथैव च स्नानशुचिविविक्तसेविनं धर्मशास्त्रश्रुतिकाव्यकुशलमृषयः॥

**अउ7.16**
तेषां तु ग्रहीष्यतां पूर्वरूपाणि भवन्ति।
तद्यथा।
देवगोब्राह्मणतपस्विनां हिंसारुचित्वं नृशसाभिप्रायता कोपनत्वमरतिरोजोवर्णच्छायाबलवपुषां चोपतप्तिः स्वप्ने देवादिभिर्भत्सनं प्रवर्तनं च॥

**अउ7.17**
तत्र सौम्यदृष्टिं गम्भीरमप्रधृष्यमकोपनं शुचिमनिद्रं भोजनानभिलाषिणमल्पस्वेदमूत्रपुरीषवाचं संस्कृतवादिनं देवद्विजगुरुभक्तं शुक्लमाल्याम्बरसरित्पुलिनशैलोच्चभवनदधिक्षीरसुरभिप्रियं चिरादक्षिणी निमीलयन्तं वरप्रदातारं शुभगन्धं वर्चस्विनं फुल्लपद्मोपममुखं देवग्रहेण गृहीतं विद्यात्॥

**अउ7.18**
तत्रापि गोवृषमिव नदन्तं दीप्तमुखनयनमादीप्तेन स्वरेण सर्वमाभाषमाणमीश्वरेण।
मेधस्तनितविद्युद्वृष्टीर्वाचा विसृजन्तमिन्द्रेण।
धनानि वाचा प्रयच्छन्तमाच्छिन्दन्तं च धनदेन।
सुरासवसमगन्धं काष्ठतृणरज्ज्वादि सर्वं पाशमभिमन्यमानं वरुणेन॥

**अउ7.19**
जिह्मदृष्टिं दुष्टात्मानं क्रोधनमतृप्तं सस्वेदगात्रं देवब्राह्मणगुरुद्वेषिणं निर्भयमभिमानिनं शूरं व्यवसायिनं रुद्रोऽहमिन्द्रोहमुपेन्द्रोऽहं स्कन्दोऽहं विशाखोऽहमित्यादि भाषमाणं विकृतवाचमसकृद्धसन्तं सुरामिषरुचिं दन्तैर्नखैश्च परान् हिंसन्तमसुरेण॥

**अउ7.20**
स्वाचारं हृष्टात्मानं शुभगन्धमल्पव्यवहारं नृत्यन्तं गायन्तं मुखवाद्यानि कुर्वन्तं प्रियोद्यानपुलिनरक्तवस्त्रस्नानमाल्यानुलेपनधूपान्नपानहासलीलाशृङ्गारकथागान्धर्वं गन्धर्वेण।
तत्रापि शिरो धुनानं कलहं कुर्वन्तं संरम्भेण जागरूकं पठन्तं हसन्तं हसनेन॥

**अउ7.21**
क्रोधनमनिशं विश्वसन्तं भ्रमन्तमातपत्रात् त्रस्यन्तं रक्ताक्षं स्तब्धदृष्टिं जिह्वां लोलयन्तं सृक्विण्यौ लिहानमधोमुखशायिनं चलं वक्रगामिनं बिलमवलोक्य सर्पवदूर्ध्वं प्रसरन्तं जलौघघनदुन्दुभिस्वनैर्हृष्यन्तं क्षीरघृतगुडमधुस्नानमाल्यप्रियं गात्राणि कम्पयन्तं दन्तैः खादन्तं जलेऽवतीर्णमुत्तरणमनिच्छन्तमुरगेण॥

**अउ7.22**
असकृत् स्वप्नरोदनहासनृत्यगीतपाठकथान्नपानस्नानमाल्यधूपगन्धरक्तवस्त्ररतिं रक्तत्रस्तविप्लुताक्षं द्रुतं सगर्वं मत्तमिव गच्छन्तं वस्त्रान्तमुत्कर्षयन्तं चलिताग्रहस्तं बहुभाषिणं स्त्रीलोलुपं मद्यामिषप्रियं सन्नह्य शस्त्रं मृगयमाणमतिबलमव्यथं हृष्टं तुष्टमल्परोषं किं कस्मै ददामीति वादिनं शुभगन्धं वर्चस्विनं द्विजातिवैद्यपरिभाविनं रहस्यभाषिणं यक्षेण॥

**अउ7.23**
तत्रापि हृषितरोमाणमूर्ध्वेक्षणं प्रहृष्टनयनं चण्डं परुषं महानिनादं मणिवरेण।
रहोहसितनृत्यगीतान्याचरन्तमाकीर्णे मौनमासेवमानं विकटेन॥

**अउ7.24**
हासनृत्तप्रियमाक्रोशिनं प्रधाविनं देवद्विजभिषग्द्वेषिणं मन्त्रवेदशास्त्राभिधायिनं काष्ठशस्त्रादिभिश्चात्मानमाघ्नन्तं छिद्रप्रहारिणं वैद्यरन्ध्रान्वेषिणं भोःशब्दवादिनं परुषं रौद्रचेष्टं शीघ्रगामिनं ब्रह्मराक्षसेन।
तत्रापि विकृतस्वरं भाषयन्तमुत्रासयन्तं ब्रह्मवादिनं संस्कृतभाषिणं बहुशस्तोयं याचन्तं यज्ञसेनेन॥

**अउ7.25**
सक्रोधदृष्टिं भ्रुकुटिमुद्वहन्तं भैरवास्यं त्वरितमभिधावन्तं रुवन्तं ससंभ्रमं प्रहरन्तं नष्टनिद्रं निशाविचारिणमन्नद्वेषिणमनाहारमप्यतिबलिनमन्नकाले हसन्तं निर्लज्जं शूरं रोषणमप्रियवादिनमशुचिं स्रीमद्यमांसरक्तमाल्यप्रियं रक्तमामिषं वा दृष्ट्वोष्ठौ परिलिहन्तं दीनं शङ्कितं धावन्तमकस्माद्रुदन्तं हसन्तं गायन्तं नृत्यन्तं निरर्थकं परिभाषमाणं राक्षसेन।
तत्रापि परुषच्छविं भूमिं ताडयन्तमकस्माद्रुदन्तं विशाखेन।
भिन्नगद्गदकण्ठमङ्गानि भञ्जयन्तं जिह्वां परिलिहानमक्षमालया जपमानं शौचमभीक्ष्णं कुर्वाणं सङ्गमेन।
मेघविद्युदुदयायासते क्रुध्यन्तं जलवृष्टिं समन्तान्मन्यमानं शकटनिष्पीडिनं विद्युन्मालिना।
आममांसपललमूलकापूपपरमान्नयाचिनं रूक्षच्छविं विरूपाक्षेण॥

**अउ7.26**
अस्वस्थचित्तं नैकत्र तिष्ठन्तं परिधाविनं दयितनृत्यगीतहासोच्छिष्टमद्यमांसशून्यनिवासरतिं पुरस्तादभिघ्नन्तं निर्भत्सनाद्दीनशङ्कितवदनं नखैरात्मवपुषि लिखन्तं नष्टस्मृतिं बद्धाबद्धभाषिणमकस्माद्रुदन्तं दुःखान्यावेदयमानमुध्वस्तरूक्षदेहस्वरं दुर्गन्धमशुचिं नग्नं मलिनं रथ्याचैलतृणाभरणं सङ्करकूटकाष्ठाश्वारोहिणं लोलं बह्वाशिनं पिशाचेन।
तत्रापि भोजनं दृष्ट्वा हसन्तं विस्वरं क्रोशन्तं नित्यभीतं कश्मलेन।

सर्वगात्राणि स्पन्दयन्तं मुहुर्मुहुर्धावन्तं भीषयमाणं कुशेन।
वैद्यं दृष्ट्वा कुप्यन्तं भ्रमद्भोजिनं बह्वाशिनं भस्मगुण्ठनशयनं स्त्रियो मार्गे रुन्धानं मूत्रपुरीषविमर्दिनं निस्तेजसा।
प्रेताकृतिचेष्टागन्धं तृणच्छेदिनं भीतमाहारद्वेषिणं प्रेतेन॥

**अउ7.27**
बहुप्रलापमुग्रवाक्यं विलम्बितगतिं कृष्णवदनं शूनप्रलम्बवृषणं कूष्माण्डेन॥

**अउ7.28**
नग्नं धावन्तमकस्मादश्मकाष्ठादि गृहीत्वा भ्रमन्तं तृणचीरमाल्यनिवसनमुत्रस्तदृष्टिं परुषाभिधायिनं श्मशानशून्यैकवृक्षरथ्यानिषेविणं तिलान्नमद्यामिषसक्तदृष्टिं काखोर्देन॥

**अउ7.29**
उग्रवादिनं रक्तत्रस्तनेत्रमन्नाभिलाषिणमुदकं प्रार्थयमानं मौकिरणेन॥

**अउ7.30**
सत्यवादिनं परिवेपिनं धूपगन्धमाल्यरतिमतिनिद्रालुं वेतालेन॥

**अउ7.31**
अप्रसन्नदृष्टिं चलन्नेत्रपक्ष्माणं शङ्कितेक्षणं दीनवदनं संशुष्कतालुं निद्रालुं प्रतिहतवाचमपसव्यवस्त्रमल्पाग्निमरोचकिनं तिलगुडपायसमांसरुचिं च पितृग्रहेण॥

**अउ7.32**
ऋषिगुरुवृद्धसिद्धानामाभिशापानुध्यानानुरूपविहारव्याहाराहारं तद्ग्रहेण गृहीतं विद्यादिति।
भवति चात्र॥

**अउ7.33**
लक्षयेत् ज्ञानविज्ञानवाक्चेष्टाबलपौरुषम्।
पुरुषेऽपौरुषं यत्र तत्र भूतग्रहं वदेत्॥

**अउ7.34**
कुमारवृन्दानुगतं नग्नमुद्धतमूर्धजम्।
अस्वस्थमनसं दैर्घ्यकालिकं सग्रहं त्यजेत्॥
॥इति सप्तमोऽध्यायः॥

अथ अष्टमोऽध्यायः।

**अउ8.1**
अथातो भूतप्रतिषेधं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ8.2**
भूतं जयेदहिंसेच्छुं जपहोमबलिव्रतैः।
तपःशीलसमाधानज्ञानदानदयादिभिः॥

**अउ8.3**
हिङ्गुव्योषालनैपालीलशुनार्कजटाजटाः।
अजलोमीसगोलोमी भूतकेशी वचा लता॥

**अउ8.4**
कुक्कुटीसर्पगन्धाख्यातिलाः काणविकाणिके।
वज्रप्रोक्ता वयस्था च शृङ्गी मोहनवल्यपि॥

**अउ8.5**
स्रोतोजाञ्जनरक्षोघ्नं रक्षोघ्नं चान्यदौषधम्।
खराश्वश्वाविडुष्ट्रर्क्षगोधानकुलशल्यकात्॥

**अउ8.6**
द्वीपिमार्जारगोसिंहव्याघ्रसामुद्रसत्वतः।
चर्मपित्तद्विजनखा वर्गेऽस्मिन् साधयेत् घृतम्॥

**अउ8.7**
पुराणमथवा तैलं नवं तत्पाननस्ययोः।
अभ्यङ्गे च प्रयोक्तव्यमेषां चूर्णं च धूपने॥

**अउ8.8**
एभिश्च गुलिकां युञ्ज्यादञ्जने सावपीडने।
प्रलेपे कल्कमेतेषां क्वाथं च परिषेचने।
प्रयोगोऽयं ग्रहोन्मादान् सापस्मारान् शमं नयेत्॥

**अउ8.9**
गजाह्वापिप्पलीमूलव्योषामलकसर्षपान्।
गोधानकुलमार्जारशशपित्तप्रपेषितान्।
नावनाभ्यङ्गसेकेषु विदधीत ग्रहापहान्॥

**अउ8.10**
अश्वश्वाश्वतरोलूककङ्कगृध्नशृगालजा।
विट्खरोष्ट्रवराहाच्च तया तैलं विपाचितम्।
पिष्टया बस्तमूत्रेण नावनादिषु पूजितम्॥

**अउ8.11**
शिरीषपुष्पं लशुनं शुण्ठीं सिद्धार्थकं वचाम्।
मञ्जिष्ठां द्वे निशे कृष्णां बस्तमूत्रेण पेषयेत्।
छायाशुष्का कृता वर्तिः मत्स्यपित्तद्रुताञ्जनम्॥

**अउ8.12**
नक्तमालफलं व्योषं बिल्वस्योनाकयोर्जटा।
हरिद्रे च कृता वर्तिः पूर्ववन्नयनाञ्जनम्।
वयस्था हिङ्गु कटुका षड्ग्रन्था सैन्धवं तथा॥

**अउ8.13**
सिद्धार्थकवचाहिङ्गुप्रियङ्गुरजनीद्वयम्।
मञ्जिष्ठाश्वेतकटभीवराश्वेताद्रिकर्णिकाः॥

**अउ8.14**
निम्बस्य पत्रं बजिं तु नक्तमालशिरीषयोः।
सुराह्वं त्र्यूषणं सर्पिर्गोमूत्रे तैश्चतुर्गुणे॥

**अउ8.15**
सिद्धं सिद्धार्थकं नाम पाने नस्ये च योजितम्।
ग्रहान् सर्वान् निहन्त्याशु विशेषादासुरान् ग्रहान्॥

**अउ8.16**
कृत्यालक्ष्मीविषोन्मादज्वरापस्मारपाप्मजित्।
एभिरेवौषधैर्बस्तवारिणा कल्पितोऽगदः॥

**अउ8.17**
पाननस्याञ्जनालेपस्नानोद्वर्षणयोजितः।
गुणैः पूर्ववदुद्दिष्टो राजद्वारे च सिद्धिकृत्॥

**अउ8.18**
सिद्धार्थकव्योषवचाश्वगन्धा निशाद्वयं हिङ्गुपलाण्डुकन्दम्।
बीजं करञ्जात् कुसुमं शिरीषात् फलं च वल्कं च कपित्थवृक्षात्॥

**अउ8.19**
समाणिमन्थं सनतं सकुष्ठं स्योनाकमूलं किणिही सिता च।
बस्तस्य मूत्रेण सुभावितं तत् पित्तेन गव्येन गुडान् विदध्यात्॥

**अउ8.20**
दुष्टग्रहोन्मादतमोनिशान्धानुद्वन्धकान् वारिनिमग्रदेहान्।
दिग्धाहतान् दर्पितसर्पदष्टां स्तेसाधयन्त्यञ्जननस्यलेपैः॥

**अउ8.21**
कार्पासास्थिमयूरपत्रबृहतीनिर्माल्यपिण्डीतक।
त्वग्वांशीबृषदंशविट् तुषवचाकेशाहिनिर्मोचनैः।
नागेन्द्रद्विजशृङ्गहिङ्गुमरिचैस्तुल्यैः कृतं धूपनं।
स्कन्दोन्मादपिशाचराक्षससुरावेशग्रहघ्नं परम्॥

**अउ8.22**
त्रिकटुकदलकुंकुमग्रन्थिकक्षारसिंही निशादारुसिद्धार्थयुग्माम्बुशक्राह्वयैः।
सितलशुनफलत्रयोशीरतिक्तावचा तुत्थयष्टीबलालोहितैलाशिलापद्मकैः॥

**अउ8.23**
विषाताक्ष्यशैलैः सचव्यामयैः कल्कितैः।
घृतमनवमशेषमूत्रांशासिद्धं मतं भूतरावाह्वयं पानतस्तद्ग्रहघ्नं परम्॥

**अउ8.24**
नतमधुककरञ्जलाक्षापटोलीसमङ्गावचा।
पाटलीहिंगुसिद्धार्थसिंहीनिशायुग्लतारोहिणैः॥

**अउ8.25**
बदरकटुफलत्रिकाकाण्डदारुक्रिमिघ्नाजगन्धामरा।
ङ्कोलकोशातकीशिग्रुनिम्बाम्बुदेन्द्राह्वयैः॥

**अउ8.26**
गदशुकत्रुपुष्पबीजोग्रयष्ट्यद्रिकर्णीनिकुम्भाग्नि।
बिल्वैःसभैःकल्कितैर्मूत्रवर्गेण सिद्धं घृतम्॥

**अउ8.27**
विधिविनिर्हितमाशु सर्वैःक्रमैर्योजितं हन्तिसर्वग्रहोन्मादकुष्ठज्वरांस्तन्महाभूतरावं स्मृतम्॥

**अउ8.28**
ग्रहा गृह्णन्ति ये येषु तेषां तेषु विशेषतः।
दिनेषु बलिहोमादीन् प्रयुञ्जीत चिकित्सकः॥

**अउ8.29**
स्नानवस्त्रवसामांसमद्यक्षीरगुडादि च।
रोचते यद्यदा येभ्यस्तत्तेषामाहरेत्तदा॥

**अउ8.30**
रत्नानि गन्धमाल्यानि बीजानि मधुसर्पिषी।
भक्ष्याश्च सर्वे सर्वेषां सामान्यो विधिरित्ययम्॥

**अउ8.31**
सुरषिर्गुरुवृद्धेभ्यः सिद्धेभ्यश्च सुरालये।
दिश्युत्तरस्यां तत्रापि देवायोपहरेत् बलिन्॥

**अउ8.32**
पश्चिमायां यथाकालं दैत्यभूताय चत्वरे।
गन्धर्वाय गवां मार्गे सवस्त्राभरणं बलिम्॥

**अउ8.33**
पितृनागग्रहे नद्यां नागेभ्यः पूर्वदक्षिणे।
यक्षाय यक्षायतने सरितोर्वा समागमे॥

**अउ8.34**
चतुष्पथे राक्षसयोर्भीमेषु गहनेषु वा।
रक्षसां दक्षिणस्यां तु पूर्वस्यां ब्रह्मरक्षसाम्॥
शून्यालये पिशाचाय पश्चिमां दिशमास्थिते॥

**अउ8.35**
शुचिशुक्लानि माल्यानि गन्धाः क्षैरेयमोदनम्।
दधिच्छत्रं च धवलं देवानां बलिरिष्यते॥

**अउ8.36**
हिङ्गुसर्षपषड्ग्रन्थाव्योषैरर्धपलोन्मितैः।
चतुर्गुणे गवां मूत्रे घृतप्रस्थं विपाचयेत्।
तत्पाननावनाभ्यङ्गैर्देवग्रहविमोक्षणम्॥

**अउ8.37**
नस्याञ्जनं वचाहिङ्गुलशुनं बस्तवारिणा॥

**अउ8.38**
दैत्ये बलिर्बहुफलः सोशीरकमलोत्पलः॥

**अउ8.39**
नागानांसुमनोलाजगुडापूपगुडौदनैः।
परमान्नमधुक्षीरकृष्णमृन्नागकेसरैः।
वचापद्मपुरोशीररक्तोत्पलदलैर्बलिः॥

**अउ8.40**
श्वेतपत्रं च लोध्रं च तगरं नागसर्षपाः।
शीतेन वारिणा पिष्टं नावनाञ्जनयोर्हितम्॥

**अउ8.41**
यक्षाणां क्षीरदध्याज्यमिश्रकौदनगुग्गुलु।
देवदारूत्पलं पद्ममुशीरं वस्त्रकाञ्चनम्॥

**अउ8.42**
हिरण्यं च बलिर्योज्यो मूत्राज्यक्षीरमेकतः।
सिद्धं समोन्मितं पाननावनाभ्यञ्जने हितम्॥

**अउ8.43**
हरीतकी हरिद्रे द्वे लशुनो मरिचं वचा।
निम्बपत्रं च बस्ताम्बुकल्कितं नावनाञ्जनम्॥

**अउ8.44**
ब्रह्मरक्षोबलिः सिद्धं यवानां पूर्णमाढकम्।
तोयस्य कुम्भः पललं छत्रं वस्त्रं विलेपनम्॥

**अउ8.45**
गायत्रीविंशतिपलक्वाथेऽर्धपलिकैः पचेत्।
त्र्यूषणत्रिफलाहिङ्गुषड्ग्रन्थामिसिसर्षपैः॥

**अउ8.46**
सनिम्बपत्रलशुनैः कुडवान् सप्त सर्पिषः।
गोमूत्रे त्रिगुणे पाननस्याभ्यङ्गेषु तद्धितम्॥

**अउ8.47**
रक्षसां पललं शुक्लं कुसुमं मिश्रकौदनम्।
बलिः पक्वाममांसानि निष्पावा रुधिरोक्षिताः॥

**अउ8.48**
नक्तमालशिरीषत्वङ्मूलपुष्पफलानि च।
तद्वच्च कृष्णपाटल्या बिल्वमूलं कटुत्रिकम्॥

**अउ8.49**
हिङ्ग्विन्द्रयवसिद्धार्थलशुनामलकीफलम्।
नावनाञ्जनयोर्योज्यो बस्तमूत्रद्रुतोऽगदः॥

**अउ8.50**
एभिरेव घृतं सिद्धं गवां मूत्रे चतुर्गुणे।
रक्षोग्रहान् वारयते पानाभ्यञ्जननावनैः॥

**अउ8.51**
पिशाचानां बलिः सीधुः पिण्याकः पललं दधि।
मूलकं लवणं सर्पिः सभूतौदनयावकम्॥

**अउ8.52**
हरिद्राद्वयमञ्जिष्ठामिसिसैन्धवनागरम्।
हिङ्गुप्रियङ्गुत्रिकटुरसोनत्रिफलावचाः॥

**अउ8.53**
पाटलीश्वेतकटभीशिरीषकुसुमैर्घृतम्।
गोमूत्रपादिकं सिद्धं पानाभ्यञ्जनयोर्हितम्॥

**अउ8.54**
बस्ताम्बुपिष्टैस्तैरेव योज्यमञ्जननावनम्॥

**अउ8.55**
देवर्षिपितृगन्धर्वे तीक्ष्णं नस्यादि वर्जयेत्।
सर्पिष्पानादि मृद्वस्मिन् भैषज्यमवचारयेत्॥

**अउ8.56**
ऋते पिशाचात् सर्वेषु प्रतिकूलं च नाचरेत्।
सवैद्यमातुरं घ्नन्ति क्रुद्धास्ते हि महौजसः॥

**अउ8.57**
ईश्वरं द्वादशभुजं नाथमार्यावलोकितम्।
सर्वव्याधिचिकित्सां च जपन्सर्वग्रहान्जयेत्।
तथोन्मादानपस्मारानन्यं वा चित्तविप्लवम्॥

**अउ8.58**
महाविद्यां च मायूरीं शुचिस्तं श्रावयेत् सदा॥

**अउ8.59**
भूतेशं पूजयेत् स्थाणुं प्रमथाख्यांश्च तद्गणान्।
जपन् सिद्धांश्च तन्मन्त्रान् ग्रहान् सर्वानपोहति॥

**अउ8.60**
यच्चानन्तरयोः किञ्चिद्वक्ष्यतेऽध्याययोर्हितम्।
यच्चोक्तमिह तत् सर्वं प्रयुञ्जीत परस्परम्॥
॥इति अष्टमोऽध्यायः॥

अथ नवमोऽध्यायः।

**अउ9.1**
अथात उन्मादप्रतिषेधं नामाध्यायं व्याख्यास्यमः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ9.2**
षडुन्मादा भवन्ति वातपित्तकफसन्निपाताधिविषनिमित्ताः।
तत्रोन्मादो नाम य उन्मार्गगैः शारीरमानसैर्दोषैर्मनसो मदः॥

**अउ9.3**
तेषां पुनरुन्मार्गगत्वे हेतुः शमलं विकृतोपहितमहितमनुचितमन्नपानविधिनिरपेक्षमाहारजातमत्युपक्षीणदेहानां व्यवायव्याधिवेगसमुद्गमे विषमशरीरचेष्टोपसेवा देवद्विजगुरूल्लङ्घनं वा रागद्वेषजनिताभिराधिभिर्मनोविघातो विषोपविषगरोपयोगो वा॥

**अउ9.4**
एभिर्हीनसत्वस्य मनस्युपहते बुद्धौ प्रचलितायामत्युदीर्णत्वाद्दोषाः प्रकुपिता हृदयमुपसृत्य मनोवहानि स्रोतांस्यावृत्य जनयन्त्युन्मादम्॥

**अउ9.5**
तत्र शिरसः शून्यता चक्षुषोरस्वस्थत्वं स्वनः कर्णयोरुच्छ्वासाधिक्यमास्यसंस्रवणमन्नानभिलाषोऽरोचकोऽविपाको हृदयग्रहोऽस्थाने ध्यानायाससम्मोहोद्वेगाः सततं रोमहर्षो ज्वरोऽभीक्ष्णमुन्मत्तचित्तत्वमुदर्दित्वमर्दिताकृतिकरणं व्याधेः स्वप्ने च दर्शनमभीक्ष्णं भ्रान्तचित्तचलितानवस्थितानामप्रशस्तानां रूपाणां

तिलपीडकवच्चक्राधिरोहणं वातकुण्डलिकाभिरुन्मथनं निमज्जनं कलुषाणामम्भसामावर्तेषु चक्षुषोश्चापसर्पणामिति दोषनिमित्तानामुन्मादानां पूर्वरूपाणि।
ततोऽनन्तरमुन्मादाभिनिर्वृत्तिरेव॥

**अउ9.6**
सामान्यलिङ्गं मनोबुद्धिस्मृत्यादिसम्प्रमोषः॥

**अउ9.7**
ततश्च देहो हतसारथिरिव रथोऽकर्णधार इव चाप्सु प्लवः सुखदुःखाचारधर्माधर्मप्रलुप्तोऽकस्माद् भ्रमति॥

**अउ9.8**
तत्रवातादस्थानस्मितहसितनृत्तगीतवादित्रवागङ्गविक्षेपवाग्भेदभ्रू विक्षेपरोदनक्रोशनास्फोटनानि पर्यटनमजस्रमास्यात् फेनागमो यानमयानैरलङ्करणमनलङ्कारिकैर्द्रव्यैर्लोभोऽभ्यवहार्येषु लब्धेषु चावमानस्तीव्रं मात्सर्यं कार्श्यं पारुष्यमुत्पिण्डितारुणाक्षता जीर्णेऽन्ने चातिबलवत्वम्॥

**अउ9.9**
पित्तात् क्रोधः सन्तर्जनमकस्मान्मुष्टिलोष्टकाष्ठशस्त्रैरभिद्रवणं नग्नता प्रच्छायशिशिराभिरातिरुदकाभिलाषः सन्तापः पीतावस्रंसनमनिमित्तमनलज्वलनोपशङ्काह्नि तारकादर्शनं ताम्रहरितहारिद्रसंरब्धाक्षत्वं च॥

**अउ9.10**
कफादल्पवाक्चेष्टाहारत्वमरोचको वमथुरुष्णसेवा लालासिङ्घणकस्रवणं रहः कामता स्त्रीप्रियत्वं निद्राबीभत्सत्वं शौचद्वेषः श्वयथुरास्ये शुक्लस्तिमितमलाविलाक्षता भुक्ते रात्रौ च बलवत्वमिति।
भवति चात्र॥

**अउ9.11**
सर्वायतनसंस्थानसन्निपाते तदात्मकम्।
उन्मादं दारुणं विद्यात्तं भिषक् परिवर्जयेत्॥

**अउ9.12**
धनकान्तादिनाशेन दुःसहेनाभिषङ्गवान्।
पाण्डुर्दीनो मुहुर्मुह्यन् हाहेति परिदेवते॥

**अउ9.13**
रोदित्यकस्मात् स्मयते तद्गुणान् बहुमन्यते।
शोकक्लिष्टमना ध्यायन् जागरूको विचेष्टते॥

**अउ9.14**
विषेण श्याववदनो नष्टच्छायोऽबलेन्द्रियः।
वेगान्तरेऽपि सम्भ्रान्तो रक्ताक्षस्तं विवर्जयेत्॥

**अउ9.15**
अथानिलज उन्मादे स्नेहपानं प्रयोजयेत्।
पूर्वमावृतमार्गे तु सस्नेहं मृदुशोधनम्॥

**अउ9.16**
कफपित्तोद्भवेऽप्यादौ वमनं सविरेचनम्।
स्निग्धास्विन्नस्य बस्तींश्च शिरसश्च विरेचनम्।
तथास्य शुद्धदेहस्य प्रसादं लभते मनः॥

**अउ9.17**
स्नेहकाले च वातोत्थे तैलं शरीषमिष्यते।
महाकल्याणकं पैत्ते पञ्चगव्यं कफोद्भवे॥

**अउ9.18**
इत्थमप्यनुवृत्तौ तु तीक्ष्णं नावनमञ्जनम्।
हर्षणाश्वासनोत्रासभयताडनतर्जनम्॥

**अउ9.19**
अभ्यङ्गोद्वर्तनालेपधूपान् पानं च सर्पिषः।
युञ्ज्यात्तांनि हि शुद्धस्य नयन्ति प्रकृतिं मनः॥

**अउ9.20**
हिङ्गुसौवर्चलव्योषैर्द्विपलांशैर्घृताढकम्।
सिद्धं समूत्रमुन्मादभूतापस्मारनुत् परम्॥

**अउ9.21**
द्वौ प्रस्थौ स्वरसात्ब्रह्म्या घृतप्रस्थं च साधितम्।
व्योषश्यामात्रिवृद्दिम्बीशङ्खपुष्पीनृपद्रुमैः॥

**अउ9.22**
ससप्तलाकृमिहरैः कल्कितैरक्षसम्मितैः।
पलवृध्या प्रयुञ्जीत परं मात्राचतुष्पलम्॥

**अउ9.23**
उन्मादकुष्ठापस्मारहरं वन्ध्यासुतप्रदम्।
वाक्स्वरस्मृतिमेधाकृद्धन्यं ब्राह्मीघृतं स्मृतम्॥

**अउ9.24**
वराविशालावद्रैलादेवदार्वेलवालुकैः।
द्विसारिवाद्विरजनीद्विस्थिराफलिनीनतैः॥

**अउ9.25**
बृहतीकुष्ठमञ्जिष्ठानागकेसरदाडिमैः।
वेल्लतालीसपत्रैलामालतीमुकुलोत्पलैः॥

**अउ9.26**
सदन्तीपद्मकहिमैः कर्षांशैः सर्पिषः पचेत्।
प्रस्थं भूतग्रहोन्मादकासापस्मारसूदनम्॥

**अउ9.27**
पाण्डुकण्डूविषे शोषे मेहे मोहे ज्वरे गरे।
अरेतस्यल्परजसि दैवोपहतचेतसि॥

**अउ9.28**
अमेधसि स्खलद्वाचि स्मृतिकामेऽल्पपावके।
बल्यं मङ्गल्यमायुष्यं कान्तिसौभाग्यपुष्टिदम्।
कल्याणकमिदं सर्पिः श्रेष्ठं पुंसवनषे च॥

**अउ9.29**
एभ्यो द्विसारिवादीनि जले पक्त्वैकविंशतिम्।
जले तस्मिन् पचेत् सर्पिर्गृष्टिक्षीरचतुर्गुणम्॥

**अउ9.30**
वीराद्विमेदाकाकोलीकपिकच्छूविषाणिभिः।
सूप्यपर्णीयुतैरेतन्महाकल्याणकं परम्।
बृंहणं सन्निपातघ्नं पूर्वस्मादधिकं गुणैः॥

**अउ9.31**
जटिला पूतना केशी चारटी मर्कटी वचा।
त्रायमाणा जया वीरा चोरकः कटुरोहिणी॥

**अउ9.32**
कायस्था सूकरी छत्रा सातिच्छत्रा पलङ्कषा।
महापुरुषदन्ता च वयस्था नाकुलीद्वयम्॥

**अउ9.33**
कटम्भरा वृश्चिकाली शालिपर्णी च तैर्घृतम्।
सिद्धं चातुर्थिकोन्मादग्रहापस्मारनाशनम्॥

**अउ9.34**
महापैशाचकं नाम घृतमेतद्यथामृतम्।
बुद्धिमेधास्मृतिकरं बालानां चाङ्गवर्धनम्॥

**अउ9.35**
लशुनानां शतं त्रिंशदभयात्र्यूषणात् पलम्।
गव्यचर्ममषीप्रस्थो द्व्याढकं क्षीरमूत्रयोः॥

**अउ9.36**
पुराणसर्पिषःप्रस्थमेभिः सिद्धं प्रयोजयेत्।
हिङ्गुचूर्णपलं शीते दत्वा च मधुमानिकाम्॥

**अउ9.37**
तद्दोषगन्तुसम्भूतानुन्मादान् विषमज्वरान्।
अपस्मारांश्च हन्त्याशु पानाभ्यञ्जननावनैः॥

**अउ9.38**
केवलं सिद्धमेभिर्वा घृतमुत्तममात्रया।
पुराणं पाययित्वैनं श्वभ्रे रुन्ध्यात् गृहेऽथवा॥

**अउ9.39**
एतानौषधवर्गान्वा विधेयत्वमगच्छति।
अञ्जनोद्वर्तनालेपनावनादिषु योजयेत्॥

**अउ9.40**
अश्वगन्धाजगन्धोग्रगन्धालशुनसर्षपैः।
रास्नाकायस्थगोलोमीयुक्तैस्तैलं विपाचितम्॥

**अउ9.41**
गोमूत्रसदृशं पाननस्याभ्यङ्गानुवासैनैः।
सर्वोन्मादग्रहालक्ष्मीपाप्मापस्मारनाशनम्॥

**अउ9.42**
शिरीषो मधुकं हिङ्गु लशुनस्तगरं वचा।
कुष्ठं च बस्तमूत्रेण पिष्टं स्यान्नावनाञ्जनम्॥

**अउ9.43**
तद्वद्व्योषं हरिद्रे द्वे मञ्जिष्ठाहिङ्गुसर्षपाः।
शिरीषबीजं चोन्मादग्रहापस्मारनाशनम्॥

**अउ9.44**
ब्राह्मीमैन्द्रीं विडङ्गानि व्योषं हिङ्गुजटां मुरम्।
रास्नां विषघ्नां लशुनं विशल्यां सुरसं वचाम्॥

**अउ9.45**
ज्योतिष्मतीं नागविन्नामनन्तां सहरीतकीम्।
काम्लीं च हस्तिमूत्रेण पिष्ट्वा छायाविशोषिता।
वर्तिनस्याञ्जनालेपधूपैरुन्मादसूदनी॥

**अउ9.46**
पिष्ट्वा फलान्यपामार्गाद्धिङ्गुलं हिङ्गुपत्रिकाम्।
वर्तिर्गोक्रोष्टुपित्तेन मरिचार्धांशकाञ्जनम्।
उन्मादभूतापस्मारे नृषु गोषु च गोचरे॥

**अउ9.47**
अवपीडाश्च विविधाः सर्षपस्नेहसंयुताः।
कटुतैलेन चाभ्यङ्गो ध्मापयेच्चास्य तद्रजः॥

**अउ9.48**
सहिङ्गुतीक्ष्णधूमश्च सूत्रस्थानोदितो हितः।
शृगालशल्यकोलूकजतुकावृकबस्तजैः॥

**अउ9.49**
मूत्रपित्तशकृल्लोमनखचर्मभिराचरेत्।
धूपधूमाञ्जनाभ्यङ्गप्रदेहपरिषेचनम्॥

**अउ9.50**
धूपयेत् सततं चैनं श्वगोमत्स्यैः सुपूतिभिः।
वातश्लेष्मात्मके प्रायः पैत्तिके तु प्रशस्यते॥

**अउ9.51**
तिक्तकं जीवनीयं च सर्पिः स्नेहश्च मिश्रकः॥

**अउ9.52**
शीतानि चान्नपानानि मधुराणि लघूनि च।
विध्येत् सिरां यथोक्तां वा तृप्तं मेद्यामिषस्य वा।
निवाते शाययेदेवं मुच्यते मतिविभ्रमात्॥

**अउ9.53**
प्रक्षिप्यासलिले कूपे शोषयेद्वा बुभुक्षया।
आश्वासयेत् सुहृत्तं वा वाक्यैर्धर्मार्थसंहितैः॥

**अउ9.54**
ब्रूयादिष्टविनाशं वा दर्शयेदद्भुतानि वा।
बद्धं सर्षपतैलाक्तं न्यस्तं चोत्तानमातपे॥

**अउ9.55**
कपिकच्छ्वाथवा तप्तैर्लोहतैलजलैः स्पृशेत्।
कशाभिस्ताडयित्वा वा बध्वा श्वभ्रे विनिक्षिपेत्॥

**अउ9.56**
अथवा वीतशस्त्राश्मजने सन्तमसे गृहे।
सर्पेणोद्धृतदंष्ट्रेण दान्तैः सिंहैर्गजैश्च तम्।
त्रासयेच्छस्त्रहस्तैर्वा किरातारातितस्करैः॥

**अउ9.57**
अथवा राजपुरुषा बहिर्नीत्वा सुसंयतम्।
भीषयेयुर्वधेनैनं तर्जयन्तो नृपाज्ञया॥

**अउ9.58**
देहदुःखभयेभ्यो हि परं प्राणभयं मतम्।
तेन याति शमं तस्य सर्वतो विप्लुतं मनः।
सिद्धा क्रिया प्रयोज्येयं देशकालाद्यपेक्षया॥

**अउ9.59**
इष्टद्रव्यविनाशात्तु मनो यस्योपहन्यते।
तस्य तत्सदृशप्राप्तिसान्त्वाश्वासैः प्रसादयेत्॥

**अउ9.60**
कामशोकभयक्रोधहर्षेर्ष्यालोभसम्भवान्।
परस्परप्रतिद्वन्द्वैरेभिरेव शमं नयेत्॥

**अउ9.61**
भूतानुबन्धमीक्षेत प्रोक्तलिङ्गाधिकाकृतिम्।
यद्युन्मादे ततः कुर्यात् भूतनिर्दिष्टमौषधम्॥

**अउ9.62**
बलिं च दद्यात् पललं यावकं सक्तुपिण्डिकाम्।
स्निग्धं मधुरमाहारं तण्डुलान् रुधिरोक्षितान्॥

**अउ9.63**
पक्वामकानिमांसानि सुरां मैरेयमासवम्।
अतिमुक्तस्य पुष्पाणि जात्याः सहचरस्य च।
चतुष्पथे गवां तीर्थे नदीनां सङ्गमेषु च॥

**अउ9.64**
निवृत्तामिषमद्यो यो हिताशी प्रयतः शुचिः।
निजागन्तुभिरुन्मादैः सत्ववान् न स युज्यते॥

**अउ9.65**
प्रसादश्चेन्द्रियार्थानां बुध्यात्ममनसां तथा।
धातूनां प्रकृतिस्थत्वं विगतोन्मादलक्षणम्॥
॥इति नवमोऽध्यायः॥

अथ दशमोऽध्यायः।

**अउ10.1**
अथातोऽपस्मारप्रतिषेधं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ10.2**
स्मृत्यपायो ह्यपस्मारः स धीसत्त्वाभिसम्प्लवात्।
जायतेऽभिहते चित्ते चिन्ताशोकभयादिभिः॥

**अउ10.3**
उन्मादवत् प्रकुपितैश्चित्तदेहगतैर्मलैः।
हते सत्त्वे हृदि व्याप्ते संज्ञावाहिषु खेषु च॥

**अउ10.4**
तमो विशन् मूढमतिर्बीभत्साः कुरुते क्रियाः।
दन्तान्खादन्वमन्फेनं हस्तौ पादौ च विक्षिपन्॥

**अउ10.5**
पश्यन्नसन्ति रूपाणि प्रस्खलन् पतति क्षितौ।
विजिह्माक्षिभ्रुवो दोषवेगेऽतीते विबुध्यते॥

**अउ10.6**
कालान्तरेण स पुनश्चैवमेव विचेष्टते।
अपस्मारश्चतुर्भेदो वाताद्यैर्निचयेन च॥

**अउ10.7**
रूपमुत्पत्स्यमानेऽस्मिन् हृत्कम्पः शून्यता भ्रमः।
तमसो दर्शनं ध्यानं भ्रूव्युदासोऽक्षिवैकृतम्॥

**अउ10.8**
अशब्दश्रवणं स्वेदो लालासिङ्घाणकस्रुतिः।
अविपाकोऽरुचिर्मूर्छा कुक्ष्याटोपो बलक्षयः॥

**अउ10.9**
निद्रानाशोऽङ्गमर्दस्तृट् स्वप्ने गानं सनर्तनम्।
पानं तैलस्य मद्यस्य तयोरेव च मेहनम्॥

**अउ10.10**
तत्र वातात् स्फुरत्सक्थिः प्रततं च मुहुर्मुहुः।
अपस्मरति संज्ञां च लभते विस्वरं रुदन्॥

**अउ10.11**
उत्पिण्डिताक्षः श्वसिति फेनं वमति कम्पते।
आविध्यति शिरो दन्तान् दशत्याध्मातकन्धरः॥

**अउ10.12**
परितो विक्षिपत्यङ्गं विषमं विनताङ्गुलिः। रूक्षश्यावारुणाक्षित्वङ्नखास्यः कृष्णमीक्षते।
चपलं परुषं रूपं विरूपं विकृताननम्॥

**अ्उ10.13**
अपस्मरति पित्तेन मुहुः संज्ञां च विन्दति।
पीतफेनाक्षिवक्त्रत्वगास्फालयति मेदिनीम्।
भैरवादीप्तरुषितरूपदर्शी तृषान्वितः॥

**अ्उ10.14**
कफाच्चिरेण ग्रहणं चिरेणैव विबोधनम्।
शुक्लाभरूपदर्शित्वं सर्वलिङ्गं तु वर्जयेत्॥

**अ्उ10.15**
अथावृतानां धीचित्तहृद्खानां प्राक्प्रबोधनम्।
तीक्ष्णैः कुर्यादपस्मारे कर्मभिर्वमनादिभिः॥

**अ्उ10.16**
वातिकं बस्तिभूयिष्ठैः पैत्तं प्रायो विरेचनैः।
श्लैष्मिकं वमनप्रायैरपस्मारमुपाचरेत्॥

**अ्उ10.17**
वमनं मदनं लम्बा विशालारिष्टकौटजम्।
रेको मूत्रत्रिवृच्छ्यामा द्रवन्ती सप्तला स्नुही॥

**अ्उ10.18**
दशमूलबलारास्नासरलामरदारुभिः।
यवकोलकुलत्थैश्च समूत्रक्षारसैन्धवैः।
आस्थापनं प्रयुञ्जीत हिङ्गुस्नेहसमन्वितैः॥

**अ्उ10.19**
एभिरन्यैश्च वातघ्नैः कटुतैलं प्रसाधितम्।
वातापस्मारशमनं नस्याभ्यङ्गानुवासनैः॥

**अ्उ10.20**
सर्वतः सुविशुद्धस्य सम्यगाश्वासितस्य च।
अपस्मारविमोक्षार्थं योगान् संशमनान् शृणु॥

**अ्उ10.21**
गोमयस्वरसक्षीरदधिमूत्रैः शृतं हविः।
अपस्मारज्वरोन्मादकामलान्तकरं पिबेत्॥

**अ्उ10.22**
द्विपञ्चमूलत्रिफलाद्विनिशाकुटजत्वचः।
सप्तपर्णमपामार्गं नीलिनीं कटुरोहिणीम्॥

**अ्उ10.23**
शम्याकपुष्करजटाफल्गुमूलदुरालभाः।
द्विपलाःसलिलद्रोणे पक्त्वा पादावशेषिते॥

**अ्उ10.24**
भार्ङ्गीपाठाढकीकुम्भनिकुम्भव्योषरोहिषैः।
मूर्वाभूतीकाभूनिम्बश्रेयसीसारिवाद्वयैः॥

**अ्उ10.25**
मदयन्त्यग्निनिचुलैरक्षांशैः सर्पिषः पचेत्।
प्रस्थं तद्वद्द्रवैः पूर्वैः पञ्चगव्यमिदं महत्॥

**अ्उ10.26**
ज्वरापस्मारजठरभगन्दरहरं परम्।
शोफार्शः कामलापाण्डुगुल्मकासग्रहापहम्॥

**अ्उ10.27**
शिरीषपुष्पपत्रत्वक्सारमूलतुलाद्वयम्।
वरणैरण्डशम्याकदशमूलाटरूषकम्।

**अउ10.28**
शतावरीबलारास्नासुषवीपारिभद्रकम्।
मुरुङ्गीं वञ्चुलं दन्तीं ककुभं सपुनर्नवम्॥

**अउ10.29**
रोहिषस्य जटां पुष्पं करघाटमयूरकम्।
शतार्धांशं पृथग्द्राक्षालाक्षामिसिवरायवान्॥

**अउ10.30**
सकोलान् सकुलत्थांश्च पृथगर्धाढकोन्मितान्।
द्विशतं पिशितात् गव्यात् छागाद्वा तत्पचेदपाम्॥

**अउ10.31**
द्रोणैर्द्वात्रिंशताष्टांशशेषेण च विपाचयेत्।
तैलद्रोणं दधिवहे श्लक्ष्णपिष्टैश्च पालिकैः॥

**अउ10.32**
पाठासमङ्गासुषवीद्विनिशाचन्दनद्वयैः।
एलाजलोत्पलबलाश्वदंष्ट्रासारिवाघनैः॥

**अउ10.33**
मञ्जिष्ठाकुष्ठमधुकलोध्ररास्नाकुटन्नटैः।
शठीशिरीषकुसुमनतनागामराह्वयैः॥

**अउ10.34**
वराङ्गजोङ्गपत्तङ्गविडङ्गैः सप्रियङ्गुभिः।
मुरुङ्गीपत्रनलदसेव्यकुन्दनखद्वयैः॥

**अउ10.35**
तिलपर्ण्या च तत्पानबस्त्यभ्यञ्जननावनैः।
अपस्मारग्रहोन्मादान् सशोषविषमज्वरान्॥

**अउ10.36**
योनिशुक्रामयान् गुल्मं प्रमेहं पाण्डुतां मदम्।
वातशोणितवीसर्पपक्षाघातार्दितादिकान्॥

**अउ10.37**
सर्वान् मारुतजान्रोगान्विशेषाद्विषवातजान्।
निहन्ति कार्मणं कृत्यां मूलदंष्ट्राविषं गरम्।
रसायनानां प्रवरं मेध्यं वाजीकरं परम्॥

**अउ10.38**
ब्राह्मीरसवचाकुष्ठशङ्खपुष्पीशृतं घृतम्।
पुराणं मेध्यमुन्मादालक्ष्म्यपस्मारपाप्मजित्॥

**अउ10.39**
तैलप्रस्थं घृतप्रस्थं जीवनीयैः पलोन्मितैः।
क्षीरद्रोणे पचेत् सिद्धमपस्मारविमोक्षणम्॥

**अउ10.40**
कंसे क्षीरेक्षुरसयोः काश्मर्येऽष्टगुणे रसे।
कार्षिकैर्जीवनीयैश्च सर्पिःप्रस्थं विपाचयेत्।
वातपित्तोद्भवं क्षिप्रमपस्मारं निहन्ति तत्॥

**अउ10.41**
तद्वत् काशाविदारीक्षुकुशक्वाथशृतं पयः॥

**अउ10.42**
मधुकद्विपले कल्के द्रोणे चामलकीरसात्।
सिद्धं सिद्धो घृतप्रस्थः पित्तापस्मारभेषजम्॥

**अउ10.43**
कूष्माण्डस्वरसे सर्पिरष्टादशगुणे शृतम्।
यष्टीकल्कमपस्मारहरं धीवाक्स्वरप्रदम्॥

**अउ10.44**
कपिलानां गवां पित्तं नावनं परमं हितम्।
श्वशृगालविडालानां सिंहादीनां च पूजितम्॥

**अउ10.45**
गोधानकुलनागानां पृषतर्क्षगवामपि।
पित्तेषु साधितं तैलं नस्येऽभ्यङ्गे च शस्यते॥

**अउ10.46**
त्रिफलाव्योषपीतद्रुयवक्षारफणिज्जकैः।
श्याह्वापामार्गकारञ्जबीजैस्तैलं प्रसाधितम्।
बस्तमूत्रे हितं नस्यं चूर्णं वाध्मापयेत् भिषक्॥

**अउ10.47**
वृश्चिकालीबलाकुष्ठभाङ्र्जीलवणपञ्चकम्।
कायस्थां शारदां मुद्गमुशीरं जलदं यवान्॥

**अउ10.48**
व्योषं च बस्तमूत्रेण पिष्ट्वा वर्ती प्रकल्पयेत्।
अपस्मारगरोन्मादसर्पदष्टविषाशिते॥

**अउ10.49**
मुस्तावयस्थात्रिफलाकायस्थाहिङ्गुशाद्वलैः।
व्योषमाषयवैर्मूत्रैर्बस्तमेषर्षभोद्भवैः॥

**अउ10.50**
हन्ति वर्तिरपस्मारकिलासविषमज्वरान्।
पुष्योद्धृतं शुनः पित्तमपस्मारघ्नमञ्जनम्।
तदेव सर्पिषा युक्तं धूपनं परमं हितम्॥

**अउ10.51**
कटभीनिम्बकट्वङ्गमधुशिग्रुत्वचां रसे।
सिद्धं मूत्रसमं तैलमभ्यङ्गार्थं प्रशस्यते॥

**अउ10.52**
पलङ्कषावचापथ्यावृश्चिकाल्यर्कसर्षपैः।
जटिलापूतनाकेशीनाकुलीहिङ्गुचोरकैः॥

**अउ10.53**
लशुनातिरसाच्छत्राकुष्ठैर्विड्भिश्च पक्षिणाम्।
मांसाशिनां यथालाभं बस्तमूत्रे विपाचितम्।
तैलमभ्यञ्जनं कार्यं तैश्च धूपनलेपनम्॥

**अउ10.54**
नकुलोलूकमार्जारगृध्रकीटाहिकाकजैः।
तुण्डैः पक्षैः पुरीषैश्च धूपमस्य प्रयोजयेत्॥

**अउ10.55**
काकोलीशिग्रुलवणहिङ्गुशिवाटिकाः।
कैडर्यं चन्दनं कृष्णां काकनासां ससर्षपाम्॥

**अउ10.56**
शुनः स्कन्धाक्षिनखरान् पर्शुकांश्चेति पेषयेत्।
बस्तमूत्रेण पुष्यर्क्षे तैर्दिह्याद्धूपयेच्च तैः॥

**अउ10.57**
गोपुच्छलोमभिर्दग्धैरथवा बस्तरोमभिः।
खरास्थिभिर्हस्तिनखैस्तद्वद्वा मूत्रकल्कितैः।
उद्वर्तनं सदा कुर्याच्छृतैश्च परिषेचनम्॥

**अउ10.58**
आभिः क्रियाभिः सिद्धाभिर्हृदयं सम्प्रभुच्यते।
स्रोतांसि चास्य शुध्यन्ति स्मृतिं संज्ञां च विन्दति॥

**अउ10.59**
भूतानुबन्धेपस्मारे दोषलिङ्गाधिकाकृतौ।
युञ्ज्याद्यथास्वं भूतोक्तां क्रियां दैवव्यपाश्रयाम्॥

**अउ10.60**
शीलयेत्तैललशुनं पयसा वा शतावरीम्।
ब्राह्मीरसं कुष्ठरसं वचां वा मधुसंयुताम्॥

**अउ10.61**
समं क्रुद्धैरपस्मारो दोषैः शारीरमानसैः।
यज्जायते यतश्चैष महामर्मसमाश्रयः॥

**अउ10.62**
तस्माद्रसायनैरेनं दुश्चिकित्स्यमुपाचरेत्।
तदार्तं चाग्नितोयादेर्विषमात् पालयेत् सदा॥

**अउ10.63**
मुक्तं मनोविकारेण त्वमित्थं कृतवानिति।
न ब्रूयाद्विषयैरिष्टैः क्लिष्टं चेतोऽस्य बृंहयेत्॥

**अउ10.64**
ग्रहोपश्लिष्टदेहानां विभ्रान्तस्मृतिचेतसाम्।
महास्नेहं प्रशंसन्ति पानाभ्यञ्जनबस्तिषु॥

**॥इति दशमोऽध्यायः॥**

(तृतीयं भूततन्त्रं सम्पूर्णम्)

# अष्टाङ्गसंग्रहः उत्तरस्थानम् अध्याय ११-१५

https://sa.wikisource.org/s/9zw

**अष्टाङ्गसंग्रहः**

अथ एकादशोऽध्यायः।

**अउ11.1**
अथातो वर्त्मरोगविज्ञानीयं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ11.2**
सर्वरोगनिदानोक्तैरहितैः कुपिता मलाः।
अचक्षुष्यैर्विशेषेण प्रायः पित्तानुसारिणः॥

**अउ11.3**
सिराभिरूर्ध्वं प्रसृता नेत्रावयवमाश्रिताः।
वर्त्मसन्धिं सितं कृष्णं दृष्टिं वा सर्वमक्षि वा॥

**अउ11.4**
रोगान् कुर्युः चलस्तत्र प्राप्य वर्त्माश्रयाः सिराः।
सुप्तोत्थितस्य कुरुते वर्त्मस्तम्भं सवेदनम्॥

**अउ11.5**
पांसुपूर्णाभनेत्रत्वं कृच्छ्रोन्मीलनमश्रु च।
विमर्दनात् स्याच्च शमः कृच्छ्रोन्मीलं वदन्ति तमू॥

**अउ11.6**
चालयन्वर्त्मनी वायुर्निमेषोन्मेषणं मुहुः।
करोत्यरुङ्निमेषोऽसौ वर्त्म यत्तु निमील्यते॥

**अउ11.7**
विमुक्तसन्धि निश्चेष्टं हीनं वातहतं हि तत्॥

**अउ11.8**
कृष्णाः पित्तेन बह्व्योन्तर्वर्त्म कुम्भीकबीजवत्।
आध्मायन्ते पुनर्भिन्नाः पिटकाः कुम्भिसंज्ञिकाः॥

**अउ11.9**
सदाहक्लेदनिस्तोदं रक्ताभं स्पर्शनाक्षमम्।
पित्तेन जायते वर्त्म पित्तोत्क्लिष्टमुशन्ति तत्॥

**अउ11.10**
करोति कण्डूं दाहं च पित्तं पक्ष्मान्तमाश्रितम्।
पक्ष्मणां शतनं चानु पक्ष्मशातं वदन्ति तम्॥

**अउ11.11**
पोथक्यः पिटकाः श्वेताः सर्षपाभा घनाः क्कफात्।
शोफोपदेहरुक्कण्डूपिच्छिलास्रसमन्विताः॥

**अउ11.12**
कफोत्क्लिष्टं भवेद्वर्त्म स्तम्भक्लेदोपदेहवत्॥

**अउ11.13**
ग्रन्थिः पाण्डुररुक्पाकः कण्डूमान्कठिनःकफात्।
कोलमात्रः स लगणः किञ्चिदल्पस्ततोऽथवा॥

**अउ11.14**
रक्ता रक्तेन पिटका तत्तुल्यपिटकाचिता।

**अउ11.15**
उत्सङ्गाख्या तथोत्क्लिष्टं राजिमत् स्पर्शनाक्षमम्॥

**अउ11.16**
अर्शोऽधिमांसं वर्त्मान्तः स्तब्धं स्निग्धं सदाहरुक्।
रक्तं रक्तेन तत्स्रावि च्छिन्नं च्छिन्नं च वर्धते॥

**अउ11.17**
मध्ये वा वर्त्मनोऽन्ते वा कण्डूषारुग्वती स्थिरा।
मुद्गमात्रासृजा ताम्रा पिट्Aकाञ्जननामिका॥

**अउ11.18**
दोषैर्वर्त्म बहिः शूनं यदन्तः सूक्ष्मखाचितम्।
सस्रावमन्तरुदकं बिसाभं बिसवर्त्म तत्॥

**अउ11.19**
यद्वर्त्मोत्क्लिष्टमुत्क्लिष्टमकस्मान्म्लानतामियात्।
रक्तदोषत्रयोत्क्लेशात् भवत्युत्क्लिष्टवर्त्म तत्॥

**अउ11.20**
श्याववर्त्म मलैः सास्रैः श्यावं रुक्क्लेदशोफवत्॥

**अउ11.21**
श्लिष्टाख्यं वर्त्मनी श्लिष्टे कण्डूश्वयथुरागिणी॥

**अउ11.22**
वर्त्मान्तः पिटका रूक्षाः कर्कशाः सिकतोपमाः॥

**अउ11.23**
सिकतावर्त्मकृष्णं तु कर्दमं कर्दमोपमम्॥

**अउ11.24**
बहलं बहलैर्मांसैः सवर्णैश्चीयते समैः॥

**अउ11.25**
कुकूणकः शिशोरेव दन्तोत्पत्तिनिमित्तजः।
स्यात्तेन शिशुरुच्छूनताम्राक्षो वीक्षणाक्षमः।
सवर्त्मशूलपैच्छिल्यकर्णनासाक्षिमर्दनः॥

**अउ11.26**
पक्ष्मोपरोधे सङ्कोचो वर्त्मनोर्जायते ततः।
खरतान्तर्मुखत्वं च रोम्णामन्यानि वा पुनः॥

**अउ11.27**
कण्टकैरिव तीक्ष्णाग्रैर्घृष्टं तैरक्षि शूयते।
ऊष्यते चानिलादिद्विडल्पाहं शान्तिरुद्धृतैः॥

**अउ11.28**
कनीनके बहिर्वर्त्म कठिनो ग्रन्थिरुन्नतः।
ताम्रः पक्वोस्रपूयस्रुदलज्याध्मायते मुहुः॥

**अउ11.29**
वर्त्मान्तर्मांसपिण्डाभः श्वयथुर्ग्रथितोऽरुजः।
सास्रैः स्यादर्बुदो दोषैर्विषमो बाह्यतश्चलः॥

**अउ11.30**
चतुर्विंशतिरित्येते व्याधयो वर्त्मसंश्रयाः॥

**अउ11.31**
आद्योऽत्रभेषजैः साध्यो द्वौ ततोर्शश्च वर्जयेत्।
पक्ष्मोपरोधो याप्यः स्याच्छेषाञ्छस्त्रौषधैर्जयेत्॥

**अउ11.32**
कुट्टयेत् पक्ष्माशतनं छिन्द्यात्तेष्वपि चार्बुदम्।
भिन्द्याल्लगणकुम्भीकाबिसोत्सङ्गाञ्जनालजीः॥

**अउ11.33**
पोथकीश्यावसिकताश्लिष्टोत्क्लिष्टचतुष्टयम्।
सकर्दमं सबहलं विलिखेत् सुकुकूणकम्॥
॥इति एकादशोऽध्यायः॥

अथ द्वादशोऽध्यायः।

**अउ12.1**
अथातो वर्त्मरोगप्रतिषेधं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ12.2**
कृच्छ्रबोधे पुराणं घृतं द्राक्षाकल्कक्वाथसिद्धं शर्करावचूर्णितं रात्रौ पाययेत्।
स्निग्धांश्च नस्यधूमाञ्जनतर्पणपुटपाकान् प्रयोजयेत्।
वातहरद्रव्यकल्पितांश्च बस्तीन् क्षीरस्विन्नैरेरण्डपल्लवैः स्वेदं च वर्त्मनाम्॥

**अउ12.3**
एवमशान्तौ मुद्गमात्रान्तरैः पदैरग्निना त्वग्दाहं बिन्दुभिराचरेत्॥1Aष्.Uत्.12.4। कुम्भीकापिटकासु वर्त्म लिखित्वा सैन्धवेनानुप्रतिसार्य पटोलामलकमधुकक्वाथेन सेचयेत् घृतेन च॥

**अउ12.5**
पित्तरक्तोक्लिष्टयोर्मधुरौषधसिद्धेन सर्पिषा स्निग्धस्य सिरां विध्येत्।
विरेचयेच्चैनं त्रिवृत्क्वाथवता त्रिफलाकल्केन।
त्रिफलाक्वाथयुक्तेन वा ब्राह्मीचूर्णेन।
चन्दनोशीरमधुकमृद्वीकापुनर्नवबृहतीमूलसिद्धं तैलं नावयेत्।
लिखिते च वर्त्मनि स्रुतरक्ते यष्ट्याह्वनिर्यूहेण प्रक्षालनम्।
चन्दनशृतं पयः परिषेकः।
शीतस्निग्धाश्च शिरोवक्त्रलेपाः॥

**अउ12.6**
पक्ष्मशाते रोमकूपान् सूच्यग्रेण कुट्Aयेज्जलौकोभिर्वा ग्राहयेत्।
पयसेक्षुरसेन वा वमनम्।
स्वादुशीतस्कन्धसाधितं सर्पिर्नावनम्।
काकजङ्घा रोहित मत्स्यमांसं च काकशोणितभावितमन्तर्धूमं दग्धं चूर्णाञ्जनं कुर्यात्॥

**अउ12.7**
सञ्चूर्ण्य पुष्पकासीसं भावयेत् सुरसारसैः।
ताम्रे दशाहं परमं पक्ष्मशाते तदञ्जनम्॥

**अउ12.8**
पोथकीर्विलिख्य शुण्ठीसैन्धवमागधिकाचूर्णैः प्रतिसार्य प्रक्षाल्य चोष्णाम्भसा खदिरसाराढकीशिग्रुपत्रकषायेण सेचयेत्।
ततश्चाम्रजम्बूप्रवालक्वाथेनाश्च्योतनम्।
त्रिफलाखदिरसारोदकेन वा मधुसंयुक्तेन।
विडङ्गलाक्षादार्वीत्वग्गैरिकालमनोह्वाचूर्णः क्षौद्रान्वितोऽञ्जनम्॥

**अउ12.9**
एवमप्यनुपशमे जलौकसो योजयेत्।
पुनः पुनर्वा लेखयेत्।
परिषेकं च त्रिफलामधुकद्विहरिद्राकषायेण मधुयुक्तेन कुर्यात्।
मुस्तशर्कराकपित्थपत्राम्बुना वा॥

**अउ12.10**
कफोत्क्लिष्टं वर्त्म लिखित्वा सैन्धवकासीसपिप्पलीमनश्शिलारसाञ्जनचूर्णैर्मधुमद्भिः प्रतिसारयेत्।
कफघ्नानि च वमनधूमनावनाञ्जनान्याहारविधिश्च।
वर्त्मापक्लेदे कासीसलवणसुमनोमुकुलरसाञ्जनैर्वर्तिरञ्जनम्॥

**अउ12.11**
लगणं कफोत्क्लिष्टवत् साधयेत्।
अशाम्यत्यग्निना दाहो वमनं विरेचनं च। पिप्पलीमधुकनिम्बज्योतिष्मतीदेवदारुविडङ्गप्रियङ्गुत्रिफलाकुष्ठशताह्वासैधवैः सिद्धं तैलं नावयेत्।
तीक्ष्णावपीडाञ्जनकवलांश्च विदध्यादुष्णोपचारं च॥

**अउ12.12**
उत्सङ्गपिटकामञ्जननामिकां च भित्वा निष्पीड्य चोल्लिखितां तगरैलासैन्धवनेपालीचूर्णेन सक्षौद्रेण प्रतिसारयेत्।
हरिद्रामधुकपटोललोध्रः समाक्षिकः परिषेकः॥

**अउ12.13**
बिसवर्त्मादिषु बहलवर्त्मान्तेषु सैधवं प्रतिसारणम्।
बिसश्लिष्टवर्त्मनोस्तथानुपशमेऽग्निना क्षारेण वा दहनम्॥

**अउ12.14**
कुकूणके निम्बपत्रत्रिफलाखदिरमूलकल्कविपक्वं सर्पिर्धात्रीं पाययित्वा सैन्धवसर्षपोपकुल्यायष्ट्याह्ववतोष्णाम्भसा वामयेत्।
पिप्पलीद्राक्षाभयानिर्यूहेण विरेचयेत्।
स्तनौ चास्या मागधिकामुस्ताद्विरजनःकल्केनालिप्योद्वर्तयेत्।
धूपयेच्च सघृतैः सिद्धार्थकः।
पाययेच्चैनां पटोलमुस्तमृद्वीकागुडूचीत्रिफलाकषायम्॥

**अउ12.15**
बालस्य वर्त्मनी लिखित्वा मधुसैन्धवरसाञ्जनैः प्रतिसार्यामलक्यश्मन्तकजम्बूपल्लवक्वाथेन प्रक्षालयेत्।
जलौकोभिर्वा ग्राहयेत्।
वेदनायां तु कुष्ठगुडूचीकल्कोदकेन सगुडक्षौद्रेण परिषेको मूर्धानं चास्यकटुतैलेनाभ्यज्य पाठाकल्केन प्रलिप्यार्जुनबिल्वनिर्गुण्डीमार्कवतर्कारीसैर्यककार्पासीमालतीपत्रनिर्यूहेण सेचयेत्॥

**अउ12.16**
मरिचविडङ्गहरिद्राकल्कसिद्धं तैलं प्रतिमर्शः।
मूर्वाताम्ररजसी स्तन्यपिष्टे पिण्डाञ्जनम्।
शङ्खमनश्शिलासैन्धवरसाञ्जनक्षौद्रैर्वा रसक्रिया।

लोहशिवाटिकामृदः कपालेऽनेकशः प्रतप्ताः स्तन्येननिर्वापिताः श्लक्ष्णचूर्णमञ्जनम्।
लाक्षावेल्लमनःशिलालगैरिकदार्वीत्वग्भिर्वा।
पुनः पुनश्च धात्रीं वमनविरेचनैरुपपादयेत्॥

**अउ12.17**
पक्ष्मोपरोधे समुपचितं वर्त्म लेखनेनोत्क्लिष्टं रक्तं विस्रावणेन सशोफं शिरोविरेककवलवमनैर्यापयेत्॥

**अउ12.18**
प्रवृद्धेषु तु रोमसु विशुद्धदेहस्य सहिष्णोर्भ्रुवोधस्ताद्द्वौ भागौ पक्ष्मान्तात् भागमेकं समुत्सृज्य यवमात्रं तदाकृति तिर्यक् छेदयेदार्द्रवाससा च रक्तं गृह्णीयात्॥

**अउ12.19**
तत्स्तनुभूते रक्ते क्षौमसूत्रेण बालेन वा धनुर्वक्रया सूच्या मुद्गमात्रान्तरैः पदैः सीव्येत्।
ततोऽस्य ललाटे पट्टं बध्वा तत्सीवनसूत्रं तत्र सूचीपदैर्नातिगाढश्लथमासज्जेत्।
शतधौतघृतेन चास्य सक्षौद्रेण कवलिकां दद्यात्॥

**अउ12.20**
न चैतत् बध्नीयात्।
व्रणवेदनायां वस्त्रबद्धेन यष्टीमधुकचूर्णेन संस्कृतं सर्पिः परिषेको वटादिक्वषायाश्च सक्षीराः।
पञ्चमे षष्ठे वाहनि स्थिरीभूतेषु शस्त्रपदेषु सीवनसूत्रमवलम्बकाच्छित्वापनयेत्।
व्रणं च स्वर्णगैरिकरजसावचूर्णयेत्।
तीक्ष्णनस्याञ्जनानि चावचारयेत्॥

**अउ12.21**
अत्युत्क्षिप्ते तु सूत्रे श्वयथुः स्यात्।
तत्र मृदुः स्वेदः स्नैहिकं च नस्यम्॥

**अउ12.22**
निर्भुज्य वा वर्त्मदोषोपहतां वलीं विलिख्य तुम्बुरुवक्रकुशाभयाबीजान्यतमकल्केन प्रतिसारयेत् क्षारेण वा दहेत्तप्रया वा शलाकया॥

**अउ12.23**
उपपक्ष्माणि तु लाक्षारसेन लक्षयित्वा सन्दंशेनोद्धृत्य तनुसूच्यग्रेणाग्निवर्णेन रोमकूपान् दहेत्।
ततश्च पूर्ववत् परिषेको नावनं च॥

**अउ12.24**
बाह्यालजेर्भिन्नालिखितस्य क्षारेणाग्निना वा दाहो व्रणवच्चोपचारः।
अर्बुदस्य च स्विन्नस्यामूलच्छिन्नस्य लिखितप्रतिसारितस्य चेति।
भवन्ति चात्र॥

**अउ12.25**
निवातेऽधिष्ठितस्याप्तैः शुद्धस्योत्तानशायिनः।
बहिः कोष्णाम्बुतप्तेन स्वेदितं वर्त्म वाससा॥

**अउ12.26**
निर्भुज्य वस्त्रान्तरितं वामाङ्गुष्ठाङ्गुलीधृतम्।
न स्रंसते चलति वा वर्त्मैवं सर्वतस्ततः॥

**अउ12.27**
मण्डलाग्रेण तत्तिर्यक् कृत्वा शस्त्रपदाङ्कितम्।
लिखेत्तेनैव पत्रैर्वा शाकशेफालिकादिजैः।
फेनेन तोयराशेर्वा पिचुना प्रमृजन्नसृक्॥

**अउ12.28**
स्थिते रक्ते सुलिखितं सक्षौद्रैः प्रतिसारयेत्।
यथास्वमुक्तैरनु च प्रक्षाल्योष्णेन वारिणा॥

**अउ12.29**
घृतेन सिक्तमभ्यक्तं बध्नीयान्मधुसर्पिषा।
ऊर्ध्वाधःकर्णयोर्दत्वा पिण्डीं च यवसक्तुभिः॥

**अउ12.30**
तृतीयेऽहनि मुक्तस्य परिषेकं यथायथम्।
कुर्याच्चतुर्थे नस्यादीन् मुञ्चेदेवाह्नि पञ्चमे॥

**अउ12.31**
समं नखनिभं शोफकण्डूघर्षाद्यपीडितम्।
विद्यात् सुलिखितं वर्त्म लिखेद्भूयो विपर्यये॥

**अउ12.32**
रुक्पक्ष्मवर्त्मशतनस्रंसनान्यतिलेखनात्।
स्नेहस्वेदादिकस्तस्मिन्निष्टो वातहरः क्रमः॥

**अउ12.33**
अभ्यज्य नवनीतेन श्वेतलोध्रं प्रलेपयेत्।
एरण्डमूलकल्केन पुटपाकं पचेत्ततः॥

**अउ12.34**
स्विन्नं प्रक्षालितं शुष्कं चूर्णितं पोट्टलीकृतम्।
स्त्रियाः क्षीरे छगल्या वा मृदितं नेत्रसेचनम्॥

**अउ12.35**
शालितण्डुलकल्केन लिप्तं तद्वत् परिष्कृतम्।
कुर्यान्नेत्रेऽतिलिखिते मृदितं दधिमस्तुना।
केवलेनापि वा सेकं मस्तुना जाङ्गलाशिनः॥

**अउ12.36**
मेद्यांस्तु व्रीहिवक्त्रेण विभिद्य कठिनोन्नतान्।
निष्पीडयेदनु विधिः शेषः स्यातत्र पूर्ववत्॥
॥इति द्वादशोऽध्यायः॥

अथ त्रयोदशोऽध्यायः।

**अउ13.1**
अथातः सन्धिसितासितरोगविज्ञानीयं नामा ध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ13.2**
वायुः क्रुद्धः सिराः प्राप्य जलाभं जलवाहिनीः।
अश्रु स्रावयते वर्त्मशुक्लसन्धेः कनीनकात्।
तेन नेत्रमरुग्रागशोफं स्यात् स जलास्रवः॥

**अउ13.3**
कफात् कफास्रवे श्वेतं पिच्छिलं बहलं स्रवेत्॥

**अउ13.4**
कफेन शोफस्तीक्ष्णाग्रः क्षारबुद्बुदकोपमः।
पृथुमूलश्चलः स्निग्धः सवर्णो मृदुपिच्छिलः।
महानपाकः कण्डूमानुपनाहः स नीरुजः॥

**अउ13.5**
रक्ताद्रक्तास्रवे ताम्रं बहूष्णं चाश्रु संस्रवेत्॥

**अउ13.6**
वर्त्मसन्ध्याश्रया शुक्ले पिटका दाहशूलिनी।
ताम्रा मुद्गोपमा भिन्ना रक्तं स्रवति पर्वणी॥

**अउ13.7**
पूयास्रावे मलाः सास्रा वर्त्मसन्धेः कनीनकात्।
स्रावयन्ति मुहुः पूयं सासृक् त्वङ्मांसपाकतः॥

**अउ13.8**
पूयालसो व्रणः सूक्ष्मः शोफसंरम्भपूर्वकः।
कनीनसन्धावाध्मायी पूयास्रावी सवेदनः॥

**अउ13.9**
कनीनस्यान्तरलजी शोफो रुक्तोददाहवान्॥

**अउ13.10**
अपाङ्गे वा कनीने वा कण्डूषापक्ष्मपोटवान्।
पूयास्रावी कृमिग्रन्थिः ग्रन्थिः कृमियुतोऽर्तिमान्॥

**अउ13.11**
उपनाहकृमिग्रन्थिपूयालसकपर्वणीः।
शस्त्रेण साधयेत् पञ्च सालजीनास्रवांस्त्यजेत्॥

**अउ13.12**
पित्तं कुर्यात् सिते बिन्दूनसितश्यावपीतकान्।
मलाक्तादर्शतुल्यं वा सर्वं शुक्लमदाहरुक्।
रोगोऽयं शुक्तिकासंज्ञः सशकृद्भेदतृड्ज्वरः॥

**अउ13.13**
कफाच्छुक्ले समं श्वेतं चिरवृध्यधिमांसकम्॥

**अउ13.14**
शुक्लार्मशोफस्त्वरुजः सवर्णो बहलो मृदुः।
गुरुः स्निग्धोम्बुबिन्द्वाभो बलासग्रथितः स्मृतः॥

**अउ13.15**
बिन्दुभिः पिष्टधवलैरुत्सन्नैः पिष्टकं वदेत्॥

**अउ13.16**
रक्तराजीततं शुक्लमूष्यते यत् सवेदनम्।
सशोफाश्रूपदेहं च सिरोत्पातः स शोणितात्॥

**अउ13.17**
उपेक्षितः सिरोत्पातो राजीस्ता एव वर्धयन्।
कुर्यात् सास्रं सिराहर्षं तेनाक्ष्युद्वीक्षणाक्षमम्॥

**अउ13.18**
सिराजालं सिराजालं बृहद्रक्तं घनोन्नतम्॥

**अउ13.19**
शोणितार्म समं श्लक्ष्णं पद्माभमाधिमांसकम्॥

**अउ13.20**
नीरुक्श्लक्ष्णोर्जुनो बिन्दुः शशलोहितलोहितः॥

**अउ13.21**
मृद्वाशुवृध्यरुङ्मांसं प्रस्तारि श्यावलोहितम्॥

**अउ13.22**
प्रस्तार्यर्म मलैः सास्रैः स्नावर्म स्नावसन्निभम्॥

**अउ13.23**
शुष्कासृक्पिण्डवच्छयावं यन्मांसं बहलं पृथु॥

**अउ13.24**
अधिमांसार्म तत् दाहघर्षवत्यः सिरावृताः।
कृष्णासन्नाः सिरासंज्ञाः पिटकाः सर्षपोपमाः॥

**अउ13.25**
शुक्तिहर्षसिरोत्पातपिष्टकग्रथितार्जुनम्।
साधयेदौषधैः षट्कं शेषं शस्त्रेण सप्तकम्॥

**अउ13.26**
नवोत्थं तदपि द्रव्यैरर्मोक्तं यत्तु पञ्चधा।
तच्छेद्यमसितप्राप्तं मांसस्नावसिरावृतम्।
चर्मोद्दालवदुच्छ्रायि दृष्टिप्राप्तं तु वर्जयेत्॥

**अउ13.27**
पित्तं कृष्णेऽथवा दृष्टौ शुक्लं तोदाश्रुरागवत्।
छित्वा त्वचं जनयति तेन स्यात्कृष्णमण्डलम्॥

**अउ13.28**
पक्वजम्बूनिभं किञ्चिन्निम्नं च क्षतशुक्रकम्।
तत् कृच्छ्रसाध्यं याप्यं तु द्वितीयपटलव्यधात्॥

**अउ13.29**
तत्र तोदादिबाहुल्यं सूचीविद्धाभकृष्णता।
तृतीयपटलच्छेदादसाध्यं निचितं व्रणैः॥

**अउ13.30**
शङ्खशुक्लं कफात्साध्यं नातिरुक् शुद्धशुक्रकम्॥

**अउ13.31**
आताम्रपिच्छिलास्रस्रुदाताम्रपिटकातिरुक्।
अजाविट्सदृशोच्छ्रायकार्ष्ण्या वर्ज्यासृजाजका॥

**अउ13.32**
सिराशुक्रं मलैः सास्रैस्तज्जुष्टं कृष्णमण्डलम्।
सतोददाहताम्राभिः सिराभिरवतन्यते॥
अनिमित्तोष्णशीताच्छघनास्रस्रुच्च तत्त्यजेत्॥

**अउ13.33**
दोषैः सास्रैः सद्दक्कृष्णं नीयते शुक्लरूपताम्।
धवलास्रोपलिप्ताभं निष्पावार्धदलाकृति॥

**अउ13.34**
अतितीव्ररुजारागदाहश्वयथुपीडितम्।
पाकात्ययेन तच्छुक्रं वर्जयेत्तीव्रवेदनम्॥

**अउ13.35**
यस्य वा लिङ्गनाशोऽन्तःश्यावं यद्वा सलोहितम्।
अत्युत्सेधावगाढं वा सास्रनाडीव्रणावृतम्॥

**अउ13.36**
पुराणं विषमं मध्ये विच्छिन्नं यच्च शुक्रकम्।
पञ्चेत्युक्ता गदाः कृष्णे साध्यासाध्यविभागतः॥
॥इति त्रयोदशोऽध्यायः॥

अथ चतुर्दशोऽध्यायः।

**अउ14.1**
अथातः सन्धिसितासितरोगप्रतिषेधं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ14.2**
उपनाहं भिषक् स्विन्नं व्रीहिमुखेन भित्वा मण्डलाग्रेण समन्ताल्लेखयेत्।
ततः सैधवपिप्पलीचूर्णेन सक्षौद्रेण प्रतिसारयेत्।
पूर्ववच्च बध्नीयात्।
पटोलपत्रामलकक्वाथेनाश्च्योतयेत्॥

**अउ14.3**
पर्वणामुत्तरसन्धित्रिभागे बडिशेनावलम्ब्य वृद्धिपत्रेणार्धमात्रे छिन्द्यात्।
अन्यथाश्रुनाडी स्यात्।
मधुसैन्धवप्रतिसारितां चार्मवच्चिकित्सेत्॥

**अउ14.4**
पूयालसे सिरां विध्येत्ततस्तमुपनाहयेदक्षिपाकोक्तं चक्षेत।
सैन्धवार्द्रककासीसायस्ताम्रैः सुसूक्ष्मैः सक्षौद्रैरञ्जनम्॥

**अउ14.5**
कृमिग्रन्थिं करीषेण स्विन्नं भित्वा विलिख्य च कासीससैन्धवत्रिफलामाक्षिकैः प्रतिसारयेत्॥

**अउ14.6**
शुक्तिकां पित्ताभिष्यन्दवत् साधयेत्॥

**अउ14.7**
बलासग्रथितं पिष्टकं च सिराव्यधवर्जं कफाभिष्यन्दवत्॥

**अउ14.8**
विशेषतस्तिलनालान् यवनालान् वा हरितशलाकानर्धमासमजाक्षीरेण भावयित्वा शोषयित्वा च दाहयेत्।
ततस्तद्भस्म क्षारकल्पेन परिस्राव्यादर्वीप्रलेपाद्विपचेत्।
रसक्रियेयं बलासग्रथितशोफोपदेहहरा।
अयमेव च कल्पः फणिज्जाअर्जकास्फोतबिल्वकपित्थनिर्गुण्ड्येरण्डकुमुदोत्पलजातीकुसुमेषु पृथक् कार्यः॥

**अउ14.9**
सैन्धवालमरिचकट्फलशङ्खसमुद्रफेनैर्वर्तिः पिष्टकेऽञ्जनम्।
शुण्ठीशिग्रुफलपिप्पलीसैन्धवचूर्णो बीजपूरकरसाप्लुतोऽञ्जनं पिष्टकमपहरति।
तद्वत्त्रिकटुककट्फलचूर्णो बलासग्रथितं च॥

**अउ14.10**
बृहतीफलं पिप्पलीतण्डुलपूरितं पुटपाकेन पचेत्।
तैस्तण्डुलैश्चूर्णाञ्जनं बलासग्रथितपिष्टकघ्नम्।
अत्यर्थशोफे हरितालसैन्धवशुण्ठीदेवदारुपुनर्नवैर्बिडालकः॥

**अउ14.11**
सिरोत्पातहर्षजालार्जुनेषु रक्ताभिष्यन्दवत् प्रतिकुर्यात्।
विशेषेण सिराहर्षे स्वर्णगैरिको मधुयुक्तोऽञ्जनम्।
स्तन्यान्वितं वा कासीसं क्षौद्रद्रुतं वा कासीससैन्धवमर्जुने मातुलुङ्गरसेन सशर्करेणाश्च्योतनं मस्तुना वा॥

**अउ14.12**
शङ्खनाभिर्माक्षिकेण युक्ता सितया वा समुद्रफेनकोऽञ्जनम्।
स्फटिककुङ्कुमशङ्खनाभिमधुयष्टिका वा क्षौद्रार्द्रास्तद्वद्वा रसाञ्जनं कासीसं वा॥

**अउ14.13**
अर्म तु पञ्चविधमपि यत्तनुरक्तं धूमाविलं दधिनिभं वा तच्छुक्रवत् कायशिरोविरेकलेखनाञ्जनैरुपाचरेत्॥

**अउ14.14**
अथेतरस्मिन् स्निग्धस्यातुरस्य पेयाविलेपिजाङ्गलरसान्यतमाशितस्य कृतस्वस्त्ययनस्य सुखशयनगतस्योत्तानदेहस्य किञ्चिदवाक्शिरसः सुखोष्णाम्बुप्लुततान्तवस्विन्ननयनस्य सैन्धवेन सबीजपूरकरसेनाञ्जयित्वाङ्गुष्ठकेन निमीलितमक्षि विमृद्नीयादाबलासग्रथितरूपोत्पत्तेः।
इत्थं च संरोषिताक्षस्य प्रचलितेऽर्माधिमांसके निश्चलं परिचारकः शिरोधारयेत्॥

**अउ14.15**
अन्यश्च वामदक्षिणान्यतरपार्श्वेऽनुकूलं स्थितो दृढवस्त्रगर्भाभ्यामङ्गुष्ठाभ्यां वर्त्मनी निक्षिपेत्।
अथ वैद्यः कनीनकात् प्रवृद्धेऽर्मण्यपाङ्गमक्षिमाणस्य यत्र यत्र वली जायते तत्र तत्रार्म बडिशेन मुचुट्या वा नात्यायतं गृहीत्वा किञ्चिदुन्नम्य कृष्णशुक्लमण्डलाभ्यां सर्वतः सूच्यग्रेण मोक्षयित्वा किञ्चिदाञ्छेत्।
अथ तीक्ष्णेन मण्डलाग्रेण वृद्धिपत्रेण वा विलिख्य कनीनकं चोपानीय कनीनकसममेव चतुर्भागशेषं छिन्द्यात्।
वर्जयेच्च कनीनकं सिराश्चाश्रुवहाः।
तथा हि नाक्षि व्यापद्यते॥

**अउ14.16**
यत्तु जालवदर्म व्यापि तदेषिण्या यावत्कनीनकमनुसरन्नुन्मोच्योन्नमय्य पूर्ववत् छिन्द्यात्।
तद्वदपाङ्गात् प्रवृद्धे कनीनकमीक्षमाणस्य यावदपाङ्गं चोपनीयापाङ्गसममेव तथा यावद्वर्जयेदपाङ्गं सिराश्चेत्यादि।
ततः प्लोतेन रक्तं विशोध्य सम्यक् छिन्नमवेक्ष्य सैन्धवचूर्णेन पुनः पुनः प्रतिसारयेद्यवनालभस्मना वा प्लोतशुद्धं च पुनर्मधुना।
ततः शीताम्बु परिषिक्तं सर्पिषा सुखोष्णेन परिषिच्य मधुघृताक्तं पूर्ववत् बध्नीयात्।
मूर्ध्नि पादयोश्चास्मै शतधौतघृतं शीतांश्च प्रदेहान् दद्यात्॥

**अउ14.17**
स्नेहोक्तं चाचारमादिशेत्।
द्वितीये चाह्नि सायं प्रातर्मधुकसर्पिषा कोष्णेन शिरस्तथावबद्धमेव चाक्षि सिञ्चेत्।
पञ्चाहं चोष्णोदकानुपानं सर्पिः पीत्वा जीर्णे पथ्यमश्नीयात्॥

**अउ14.18**
तृतीये दिवसे विमुच्य करञ्जबीजसिद्धेन क्षीरेणाक्षि स्वेदयेत्।
लोध्रमधुककिंशुकपटोलद्विहरिद्राकोरण्डमुकुलक्वाथेन मधुमिश्रेणाश्च्योतयेत्। सप्तमेऽहनि सर्वथा मुञ्चेत् आतपाकाशदर्शनं च परिहरेत्॥

**अउ14.19**
सशोफे तु नेत्रे धूमः शिरोविरेचनं च।
अनुपशान्तरागे सिराविस्रावणम्।
सास्रावे नस्यम्॥

**अउ14.20**
तिलान् सुलिखितान् मधुककाकोलीसुनिषण्णकपञ्चमूलशर्कराश्रुतशीते पयसि सप्ताहं भावितांस्तेनैव पयसा पीडयेत्।
मधुकशताह्वासारिवानन्तागरुकाकोलीहरेणुकैलावालुकचूर्णं च पीड्यमानेषु षोडशभागेन प्रक्षिपेत्।
तत्तैलमेभिरेवौषधैः पयसा चाष्टगुणेन सिद्धं नावनादश्रुरागघ्नं दृष्टिप्रसादनं च कृष्णगते तु व्रणे व्रणशुक्रवत् क्रिया।
अर्मशेषे च लेखनाञ्जनानि॥

**अउ14.21**
तत्र सम्यक्छिन्ने वर्णविशुद्धिः।
स्वस्थता च।
हीनच्छेदात् पुनर्वृद्धी रागाश्रुपातप्रकाशदर्शनाक्षमत्वादि च।
अतिच्छेदादक्षिपाकस्तम्भस्फुरणास्रस्रुतितिमिरसंरम्भविबद्धवर्त्मानि।
तेषु यथास्वं दोषोद्रेकात् प्रतिकुर्यात्।
नागरमनश्शिलालैलासैन्धवशर्कराभिरर्धकर्षांशाभिर्युक्तं रसाञ्जनार्धपलं क्षौद्रद्रुतमञ्जनादर्मशेषश्लेष्मतिमिरपिल्लामयघ्नम्॥

**अउ14.22**
सिराजाले सिरा यास्तु स्थूलाः कठिनाश्चता बडिशेन गृहीत्वा मण्डलाग्रेणोल्लिखेत्॥

**अउ14.23**
सिरापिटकाः सूच्यग्रेणावलम्बिताः कृष्णमनुपघ्नन् छिन्द्यात्।
सूक्ष्मास्त्ववलिखेत्।
अर्मवच्चैतयोः शेषमाचरेत्॥

**अउ14.24**
शुक्रकेषु यथास्वदोषानुसारेण त्रिफलाघृतपानरक्तमोक्षविरेचनाश्च्योतनमुखालेपनस्यतर्पणपुट।
पाकान् प्रयुञ्जीत॥

**अउ14.25**
तत्र व्रणशुक्रे त्रिवृन्निर्यूहेण त्रिर्विपक्वं सर्पिः पाययेत्।
सिरां च विध्येत्।
दुष्टशेषं च पिण्डितमक्षिगमसृक् जलौकोभिरपहरेत्।
मधुककाकोलीमृद्वीकोत्पलविदारीक्वाथेन मञ्जिष्ठाक्षीरकाकोलीमधुकक्वथिताजक्षीरेण वा सशर्करेणाश्च्योतयेत् शीतैश्चास्य शिरोवक्त्रं दिह्यात् सिञ्चेच्च।
एवमप्यनुबद्धवेदनं शताह्वायष्ट्याह्वता घृतमण्डेनानुवासयेत्॥

**अउ14.26**
अश्रुरागरुजाशान्तिं यदा यस्योपलक्षयेत्।
तदातदाञ्जनैः शुक्रं लेखनीयैरुपाचरेत्॥

**अउ14.27**
वैडूर्यस्फटिकशङ्खमुक्ताविद्रुमरूप्यायस्त्रपुताम्रसीसालमनश्शिलाकुक्कुटाण्डत्वक्समुद्रफेनरसाञ्जनसैन्धवैरजापयःपिष्टैर्वर्तयश्छयायाशुष्काः क्षौद्रघृष्टाः प्रातः सायं च प्रयुक्ता व्रणशुक्रनुदः।
करिवराहगोगर्दभाश्वाजोष्ट्रदशनाःशङ्खमुक्तासमुद्रफेनाश्च मरिच चतुर्थांशयुता जलपिष्टा वर्तयः क्षतशुक्रहराः।
लाक्षासुवर्णगैरिकचन्दनजातीमुकुलैर्वर्तिरसृकूपित्तप्रसादनी व्रणशुक्रहरा च॥

**अउ14.28**
निम्नं च शुक्रं सरुजमुन्नमयेत् स्नेहपाननस्यजाङ्गलरसैः।
नीरुजं तर्पणपुटपाकाभ्याम्॥

**अउ14.29**

तत्र तर्पणं मृगविष्किरपिशितं काश्मर्यसुनिषण्णोत्पलमृणालशृङ्गाटकशेरुद्राक्षाक्षीरविदारीजीवनीयांश्च क्षीरेण पाचयेत् तस्मान्नवनीतमुद्धृत्य चन्दनमधुशर्करानन्तानीलोत्पलकल्कैरष्टगुणेन च पयसा विपक्वं पूर्ववद्योजयेत्॥

**अउ14.30**

पुटपाकं च कुक्कुटमुद्धृतान्त्रं वेशवारीकृत्य चन्दनसारिवामधुकशर्करानन्तानीलोत्पलप्रपौण्डरीक जीवनीयकल्कैः समधुघृतैः संसृज्य प्रागिव कल्पयेत्।

द्वित्वक्छिन्नमेवं यापयेत्॥

**अउ14.31**

शुद्धशुक्रे हरिद्रामधुकसारिवालोध्रनिर्यूहेणाश्च्योतनम्।

लोध्रचूर्णेण वा तान्तवबद्धेनोष्णाम्बुमृदितेन।

शुद्धकोष्ठस्य च दन्तीज्योतिष्मतीकल्कोऽवपीडकः।

शिरोविरेचनद्रव्यविपक्वं वा तैलं मर्शः प्रतिमर्शो वा॥

**अउ14.32**

शुण्ठीसैन्धवमधुयष्टिकाबृहतीमूलताम्ररजोभिरामलकरसपिष्टैस्ताम्रपात्रं प्रलेपयेत्।

तच्च सघृतैर्यवैरामलकपत्रैश्च बहुशो धूपयेत्।

वर्तिरेषा महानीला मधुतोयघृष्टा शुद्धशुक्रं नाशयति।

पूर्वोक्ता च दन्तवर्तिः।

अशाम्यति तु शुक्रे सर्वत्र पुनः पुनर्यथोक्तमेव पर्यायेण योजयेत्।

अन्तरान्तरा च रक्तं विस्रावयेत्।

अभिष्यन्दप्रतिषेधं चेक्षेत॥

**अउ14.33**

अथोत्सादनार्थं शुद्धशुक्रे सम्प्रहर्षणानि दद्यात्।

त्रिफलारसेन त्र्यहं भावितेन सैन्धवेनाञ्जयेत्।

तद्वत् पिप्पलीभिर्वा।

मरिचपिप्पलीशिरीषबीजबलासग्रथितोक्तक्षाराञ्जनैर्वा॥

**अउ14.34**

सम्प्रहर्षणाद्रागाश्रुवेदनासु सन्धावाञ्जनानि युञ्ज्यात्।

शङ्खं ताम्रे स्तन्येन घृष्टं सघृतैर्यवैः शमीपत्रैश्च धूपयेत् अनेन सन्धावाञ्जनेनाञ्जयेत्।

तद्वत् सुवर्णं रूप्यमयो व घृष्टं सघृतैर्बदरीपत्रैर्धूपितमञ्जनम्।

शङ्खो निस्तुषाश्च हरितमुद्गाः पिष्टा वर्तिश्चूर्णो वा मधुयुक्तोऽञ्जनं शुक्रघर्षणम्।

मधूकसारश्च मधुना बिभीतकास्थिमज्जा वा॥

**अउ14.35**

मसूरा निस्तुषाः स्तन्यपिष्टास्तरुणदर्भाङ्कुरा घृतमाजं गोक्षीरं शरश्चायसे ताम्रेण घृष्टं प्रत्यञ्जनं वेदनाघ्नम्।

यवगोधूमजीवनीयमांसीचूर्णेन सघृतशर्करोत्कारिका स्वेदोपनाहे प्रणीता वेदनामपनयति शुक्रं चोत्सादयति।

तद्वदानूपमांसवेशवारो वसापयः सर्पिर्विमिश्रः सिद्धः॥

**अउ14.36**

अथैवमुपनाहप्रचलितस्याञ्जनम्।

गोखराश्चोष्ट्रदन्ताः समुद्रफेनः शङ्खश्चार्जुनकषायपिष्टा वर्तिर्लेखनी।

समुद्रफेनशङ्खखर्परशुकास्थिखरनागाश्वगोबालास्तिन्दुककषायपिष्टा वा॥

**अउ14.37**

प्रत्यञ्जनं च तरुणबदरखदिरतिन्दुकास्थ्नामन्तर्धूमदग्धानां चूर्णम्।

उत्सन्नं वा सशल्यं वा शुक्रं बालादिभिर्लिखेत् पुटपाकेन वा।

बलासग्रथितोक्तक्षाररसक्रियया वा॥

**अउ14.38**
सिराशुक्रे त्वदृष्टिघ्ने तरुणे व्रणशुक्रवत् कुर्यात्॥

**अउ14.39**
अञ्जनं चास्य प्रपौण्डरीकमधुकहरिद्रालोहरजोञ्जनबृहतीक्षीरकाकोलीरजापयःपिष्टा यवैर्घृतयुक्तैरामलकीपत्रैश्च पर्यायेण धूपिता वर्तिः॥

**अउ14.40**
अप्रशान्तमेव मर्मवत् साधयेत्।
समाक्षिकं तु रसाञ्जनं प्रतिसारणम्।
सप्तमे दिवसे कुक्कुटाण्डकपालस्फटिकचन्दनमनश्शिलालैरश्वराहदशनैश्च वर्तिं कृत्वाञ्जयेत्।
उदधिकफशङ्खचन्दनैरजापयःपिष्टैर्वर्तिर्मधुघृष्टा प्रत्यंजनं सिराशुक्रजित्।
अनुपशमे पश्यति चातुरे किञ्चिदिदमेवासकृत् कुर्वीत॥

**अउ14.41**
अजकामदृष्ट्युपघातिनीं कृष्णान्तजामस्रविस्रावणैर्मधुरविरेचनैः क्षीरबस्तिभिञ्च साधयेत्।
सिराशुक्रवच्च शस्त्रकर्मादिविधिनेति।
भवति चात्र॥

**अउ14.42**
अजकायामसाध्यायां शुक्रेऽन्यत्र च तद्विधे।
वेदनोपशमं स्नेहपानासृक्स्रावणादिभिः।
कुर्यात् बीभत्सतां जेतुं शुक्रत्वोत्सेधसाधनम्॥

**अउ14.43**
नारिकेलास्थिभल्लातततालवंशकरीरजम्।
भस्माद्भिः स्रावयेत्ताभिर्भावयेत् करभास्थिजम्॥

**अउ14.44**
चूर्णं शुक्रेष्वासाध्येषु तद्वैवर्ण्यघ्नमञ्जनम्।
साध्येषु साधनायालमिदमेव च शीलितम्॥

**अउ14.45**
अजकां पार्श्वतो विध्वा सूच्या विस्राव्य चोदकम्।
समं प्रपीड्याङ्गुष्ठेन वसार्द्रेणानु पूरयेत्॥

**अउ14.46**
व्रणं गोमांसचूर्णेन बद्धं बद्धं विमुच्य च।
सप्तरात्राद्व्रणे रूढे कृष्णभांगे समे स्थिते॥

**अउ14.47**
स्नेहाञ्जनं च कर्तव्यं नस्यं च क्षीरसर्पिषा।
तथापि पुनराध्माते भेदच्छेदादिकां क्रियाम्।
युक्त्या कुर्याद्यथा नातिच्छेदेन स्यान्निमज्जनम्॥

**अउ14.48**
नित्यं च शुक्रेषु शृतं यथास्वं पाने च मर्शे च घृतं विदध्यात्।
न हीयते लब्धबला तथान्तस्तीक्ष्णाञ्जनैर्दृक् प्रततं प्रयुक्तैः॥
॥इति चतुर्दशोऽध्यायः॥

अथ पञ्चदशोऽध्यायः।

**अउ15.1**
अथातो दृष्टिरोगविज्ञानीयं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ15.2**
सिरानुसारिणि मले प्रथमं पटलं श्रिते।
अव्यक्तमीक्षते रूपं व्यक्तमप्यनिमित्ततः॥

**अउ15.3**
प्राप्ते द्वितीयं पटलमभूतमपि पश्यति।
भूतं तु यत्नादासन्नं दूरे सूक्ष्मञ्च नेक्षते॥

**अउ15.4**
दूरान्तिकस्थं रूपञ्च विपर्यासेन मन्यते।
दोषे मण्डलसंस्थाने मण्डलानीव पश्यति॥

**अउ15.5**
द्विधैकं दृष्टिमध्यस्थे बहुधा बहुधा स्थिते।
दृष्टेरभ्यन्तरगते ह्रस्ववद्धविपर्ययम्॥

**अउ15.6**
नान्तिकस्थमधस्संस्थे दूरगं नोपरिस्थिते।
पार्श्वे पश्येन्न पार्श्वस्थे तिमिराख्योयमामयः॥

**अउ15.7**
प्राप्नोति काचतां दोषे तृतीयपटलाश्रिते।
तेनोर्ध्वमीक्षते नाधस्तनुचैलावृतोपमम्।
यथावर्णञ्च रज्येत दृष्टिर्हीयेत च क्रमात्॥

**अउ15.8**
तथाप्युपेक्षमाणस्य चतुर्थं पटलं गतः।
लिङ्गनाशं मलः कुर्वन् छादयेद्दृष्टिमण्डलम्॥

**अउ15.9**
तत्र वातेन तिमिरे व्याविद्धमिव पश्यति।
चलाविलारुणाभासं प्रसन्नञ्चेक्षते मुहुः॥

**अउ15.10**
जालानि केशान् मशकान्नश्मींश्चोपोक्षितेत्र च।
काचीभूते दृगरुणा पश्यत्यास्यमनासिकम्॥

**अउ15.11**
चन्द्रदीपाद्यनेकत्वं वक्रमृज्वपि मन्यते।
वृद्धः काचो दृशं कुर्याद्रजो धूमावृतामिव॥

**अउ15.12**
स्पष्टारुणाभां विस्तीर्णां सूक्ष्मां वा हतदर्शनाम्।
सलिङ्गनाशो वाते तु सङ्कोचयति दृक्सिराः।
दृङ्मण्डलं विशत्यन्तर्गम्भीरा दृगसौ स्मृता॥

**अउ15.13**
पित्तजे तिमिरे विद्युत्खद्योतोद्योतदीपितम्।
शिखितित्तिरिपत्राभं प्रायो नीलञ्च पश्यति॥

**अउ15.14**
काचे दृक्कांस्यनीलाभा तादृगेव च पश्यति।
अर्केन्दुपरिवेषाग्निमरीचीन्द्रधनूंषि च॥

**अउ15.15**
भृङ्गनीला निरालोका दृक्स्निग्धा लिङ्गनाशतः।
दृष्टिः पित्तेन ह्रस्वाख्या सा ह्रस्वा ह्रस्वदर्शिनी।
भवेत् पित्तविदग्धाख्या पीता पीताभदर्शना॥

**अउ15.16**
कफेन तिमिरे प्रायः स्निग्धं श्वेतञ्च पश्यति।
शङ्खेन्दुकुन्दकुसुमैः कुमुदैरिव चाचितम्॥

**अउ15.17**
काचे तु निष्प्रभेन्द्वर्कप्रदीपाद्यैरिवाचितम्।
सिताभासा च दृष्टिस्स्याल्लिङ्गनाशे तु दृश्यते॥

**अउ15.18**
मूर्तः कफो दृष्टिगतः स्निग्धो दर्शननाशनः।
बिन्दुर्जलस्येव चलः पद्मिनीपुटसंश्रितः॥

**अउ15.19**
उष्णे सङ्कोचमायाति च्छायायां परिसर्पति।
शङ्खकुन्देदुकुमुदस्फटिकोपमशुक्लिमा॥

**अउ15.20**
रक्तेन तिमिरे रक्तं तमोभूतञ्च पश्यति।
काचेन रक्ता कृष्णा वा दृष्टिस्तादृक् च पश्यति।
लिङ्गनाशेपि दृक् तादृङ्निष्प्रभा हतदर्शना॥

**अउ15.21**
संसर्गसन्निपातेषु विद्यात् सङ्कीर्णलक्षणान्।
तिमिरादीनकस्माच्च तैः स्याद्व्यक्ताकुलेक्षणः।
तिमिरे शेषयोर्दृष्टौ चित्रो रागः प्रजायते॥

**अउ15.22**
द्योतते नकुलस्येव यस्य दृङ्निचिता मलैः।
नकुलान्धःस तत्राह्नि चित्रं पश्यति नो निशि॥

**अउ15.23**
अर्केऽस्तमस्तकन्यस्तगभस्तौ स्तम्भमागताः।
स्थगयन्ति दृशं दोषा दोषान्धः स गदोपरः॥

**अउ15.24**
दिवाकरकरस्पृष्टा भ्रष्टा दृष्टिपथान्मलाः।
विलीनलीना यच्छन्ति व्यक्तमत्राह्नि दर्शनम्॥

**अउ15.25**
उष्णतप्तस्य सहसा शीतवारिनिमज्जनात्।
त्रिदोषरक्तसंपृक्तो यात्यूष्मोर्ध्वं ततोक्षिणी।
दाहोषे मलिनं शुक्रमहन्याविलदर्शनम्॥

**अउ15.26**
रात्रावान्ध्यं च जायेत विदग्धोष्णेन सा स्मृता॥

**अउ15.27**
भृशमम्लाशनाद्दोषैस्साम्रैर्या दृष्टिराचिता।
सक्लेदकण्डूः कलुषा विदग्धाम्लेन सा स्मृता॥

**अउ15.28**
शोकज्वरशिरोरोगसन्तप्तस्यानिलादयः।
धूमाविलां धूमदृशं दृशं कुर्युः स धूमरः॥

**अउ15.29**
सहसैवाल्पसत्वस्य पश्यतो रूपमद्भुतम्।
भास्वरं भास्करादिं वा वाताद्या नयनाश्रिताः॥

**अउ15.30**
कुर्वन्ति तेजः संशोष्य दृष्टिं मुषितदर्शनाम्।
वैडूर्यवर्णां स्तिमितां प्रकृतिस्थामिवाव्यथाम्।
औपसर्गिक इत्येष लिङ्गनाशः अत्र वर्जयेत्॥

**अउ15.31**
विना कफाल्लिङ्गनाशान् गम्भीरां ह्रस्वजामपि॥

**अउ15.32**
षट्काचा नकुलान्धश्च याप्याश्शेषांस्तु साधयेत्।
द्वादशेति गदा दृष्टौ निर्दिष्टाः सप्तविंशतिः॥

**॥इति पञ्चदशोऽध्यायः॥**

# अष्टाङ्गसंग्रहः उत्तरस्थानम् अध्याय १६-२०

https://sa.wikisource.org/s/9zx

**अष्टाङ्गसंग्रहः**

अथ षोडशोऽध्यायः।

**अउ16.1**
अथातस्तिमिरप्रतिषेधं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ16.2**
तिमिरं काचतां याति काचोऽप्यान्ध्यमुपेक्षया।
नेत्ररोगेष्वतो घोरं तिमिरं साधयेत् द्रुतम्॥

**अउ16.3**
तुलां पचेत जीवन्त्या द्रोणेऽपां पादशेषिते।
तत्क्वाथे द्विगुणक्षीरं घृतप्रस्थं विपाचयेत्॥

**अउ16.4**
प्रपौण्डरीककाकोलीपिप्पलीलोध्रसैन्धवैः।
शताह्वामधुकद्राक्षा सितादारुफलत्रयैः।
कार्षिकैर्निशि तत्पीतं तिमिरापहरं परम्॥

**अउ16.5**
द्राक्षाचन्दनमञ्जिष्ठाकाकोलीद्वयजीवकैः।
सिताशतावरीमेदापुण्ड्राह्वमधुकोत्पलैः॥

**अउ16.6**
पचेज्जीर्णघृतपस्थं समक्षीरं पिचून्मितैः।
हन्ति तच्छुक्रतिमिररक्तराजीशिरोरुजः॥

**अउ16.7**
पटोलनिम्बकटुकादार्वीसेव्यवरावृषम्।
सधन्वयासत्रायन्तीपर्पटं पालिकं पृथक्॥

**अउ16.8**
प्रस्थमामलकानां च क्वाथयेदर्मणेऽम्भसः।
तदाढकेर्धपलिकैः पिष्टैः प्रस्थं घृतात् पचेत्॥

**अउ16.9**
मुस्तभूनिम्बयष्ट्याह्वकुटयोदीच्यचन्दनैः।
सव्योषचव्यैस्तत्सर्पिर्घ्राणकर्णाक्षिरोगजित्॥

**अउ16.10**
विद्रधिज्वरदुष्टारुर्विसर्पापचिकुष्ठनुत्।
विशेषाच्छुक्रतिमिरनक्तान्ध्योष्णाम्लदाहहृत्॥

**अउ16.11**
त्रिफलाष्टपलं क्वाथ्यं पादशेषं जलाढके।
तेन तुल्यपयस्केन त्रिफलापलकल्कवान्॥

**अउ16.12**
अर्धप्रस्थो घृतात्सिद्धः सितया माक्षिकेण वा।
युक्तं पिबेत्ततिमिरी तद्युक्तं वा वरारसम्॥

**अउ16.13**
यष्टीमधुद्विकाकोलीव्याघ्रीकृष्णामृतोत्पलैः।
पालिकैः ससिताद्राक्षैर्घृतप्रस्थं पचेत् समैः॥

**अउ16.14**
अजाक्षीरवरावासामार्कवस्वरसैः पृथक्।
महात्रैफलमित्येतत् परं दृष्टिविकारजित्॥

**अउ16.15**
त्रैफलेनाथ हविषा लिहानस्त्रिफलां निशि।
यष्टीमधुकसंयुक्तां मधुना च परिप्लुताम्॥

**अउ16.16**
मासमेकं हिताहारः पिबन्नामलकोदकम्।
सौपर्णं लभते चक्षुरित्याह भगवान् निमिः॥

**अउ16.17**
गव्यं घृतं लोहरजो भाजने बादरे स्थितम्।
त्रिफलाचूर्णसहितं पीतं तिमिरनाशनम्॥

**अउ16.18**
पुराणं च सिताभीरुयष्टीमधुकचूर्णवत्।
निषिक्तमग्निवर्णैर्वा जीर्णं सर्पिरयोगुडैः॥

**अउ16.19**
हेमरूप्यायसैश्चूर्णैर्युक्तां वा त्रिफलां पृथक्।
घृतक्षौद्रान्वितामद्यात् केवलां वा विचूर्णिताम्॥

**अउ16.20**
ताप्यायस्त्रिफलाचूर्णं मधुजीर्णघृतद्रुतम्।
लोहपात्रे स्थितं मासं माषराशौ च भक्षयेत्॥

**अउ16.21**
सक्तून् वाद्यात्ससर्पिष्कांस्त्रिफलाचूर्णसंयुतान्।
भुञ्जीत वा सुसिद्धेन सूपेनामलकैः सह॥

**अउ16.22**
प्रातर्भक्तस्य वा पूर्वमद्यात् पथ्यां पृथक् पृथक्।
मृद्वीकाशर्कराक्षौद्रैः सततं तिमिरातुरः॥

**अउ16.23**
क्वाथोसनात् भृङ्गरसस्तैलं कालतिलोद्भवम्।
लोहपात्रे तदेकत्र साधितं नावनं हितम्॥

**अउ16.24**
स्रोतोजांशांश्चतुष्षष्टिं हेमायोरूप्यताम्रकैः।
युक्तान् प्रत्येकमेकांशैरन्धमूषोदरस्थितान्॥

**अउ16.25**
ध्मापयित्वा समावृत्तं ततस्तच्च निषेचयेत्।
रसस्कन्धकषायेण सप्तकृत्वः पृत्थक् पृथक्॥

**अउ16.26**
वैडूर्यमुक्ताशङ्खानां त्रिभिर्भागैर्युतं ततः।
चूर्णाञ्जनं प्रयुञ्जीत तत्सर्वतिमिरापहम्॥

**अउ16.27**
निर्दग्धं बदराङ्गारैस्तुत्थं चेत्थं निषेचितम्।
क्रमादजापयः सर्पिः क्षौद्रैस्तस्मात् पलद्वयम्॥

**अउ16.28**
कार्षिकैस्ताप्यमरिचस्रोतोजकटुकानतैः।
पटुलोध्रशिलापथ्याकणैलाञ्जनफेनकैः॥

**अउ16.29**
युक्तं पलेन यष्ट्याश्च मूषान्तर्ध्मातचूर्णितम्।
हन्ति काचार्मनक्तान्ध्यरक्तराजीः सुशीलितः।
चूर्णो विशेषात्तिमिरं भास्करो भास्करो यथा॥

**अउ16.30**
मनोह्वासैन्ध्हवव्योषशङ्खनाभीरसाञ्जनम्।
कतकं चन्दनं फेनो विडङ्गानि सितोपला॥

**अउ16.31**
कुक्कुटाण्डकपालं च जलपिष्टा सुखावती।
हन्त्येषा मधुना घृष्टा काचतैमिर्यशुक्लकान्॥

**अउ16.32**
त्रिफलाकुक्कुटाण्डत्वक्कासीसमयसो रजः।
नीलोत्पलं विडङ्गानि फेनं च सरितां पतेः॥

**अउ16.33**
आजेन पयसा पिष्ट्वा लेपयेत्ताम्रभाजनम्।
सप्तरात्रे गते भूयः पिष्टं क्षीरेण वर्तयेत्।
एषा दृष्टिप्रदा वर्तिरपि स्याद्भिन्नचक्षुषः॥

**अउ16.34**
अञ्जनं कृष्णसर्पास्ये निहितं कुशवेष्टिते।
ततस्ततः समुद्धृत्य मासात् सञ्चूर्णयेत् सह॥

**अउ16.35**
सुमनःक्षारकैः शुष्कैरर्धांशैः सैन्धवेन च।
प्रयोजयेद्रागवति तिमिरे तद्वराञ्जनम्॥

**अउ16.36**
पयसा त्रयमेतच्च चूर्णयित्वा सुभावितम्॥

**अउ16.37**
सामान्यं साधनं त्वेतत्प्रतिदोषमतः शृणु॥

**अउ16.38**
वातजे तिमिरे तत्र दशमूलाम्भसा घृतम्।
क्षीरे चतुर्गुणे श्रेष्ठाकल्कपक्वं पिबेत्ततः॥

**अउ16.39**
त्रिफलापञ्चमूलानां कषायं क्षीरसंयुतम्।
एरण्डतैलसंयुक्तं योजयेत विरेचनम्॥

**अउ16.40**
शङ्खिनीतिल्वकश्यामादन्तीर्निष्काथ्य वा जले।
त्रिवृत्कल्कप्रतीवापं तेन पक्वं घृतं पिबेत्॥

**अउ16.41**
प्रपौण्डरीकबृहतीबलानलदसैन्धवैः।
दारुबिल्वाडकीकृष्णा हरिद्द्रामधुयष्टिभिः।
सिद्धं चतुर्गुणक्षीरं तैलं नस्तो निषेचयेत्॥

**अउ16.42**
सितैरण्डजटासिंहीफलदारुनिशानतैः।
शताह्वाबिल्वमूलैश्च तैलं पक्वं पयोऽन्वितम्।
नस्यं सर्वोर्ध्वजत्रूत्थवातश्लेष्मामयार्तिषु॥

**अउ16.43**
वसाञ्जने च वैयाघ्री वाराही वा प्रशस्यते।
गृध्राहिकुक्कुटोत्था वा मधुकेनान्विता पृथक्॥

**अउ16.44**
प्रत्यञ्जनं च स्रोतोजं रसक्षीरघृतैः क्रमात्।
निषिक्तं पूर्ववद्योज्यं तिमिरघ्नमनुत्तमम्॥

**अउ16.45**
नचेदेवं शमं याति ततस्तर्पणमाचरेत्॥

**अउ16.46**
शताह्वाकुष्ठनलदकाकोलीद्वययष्टिभिः।
प्रपौण्डरीकसरलपिप्पलीदेवदारुभिः।
सर्पिरष्टगुणक्षीरं पक्वं तर्पणमुत्तमम्॥

**अउ16.47**
प्रसादनं स्नेहनं च पुटपाकं प्रयोजयेत्॥

**अउ16.48**
वातपीनसवच्चात्र निरूहं सानुवासनम्॥

**अउ16.49**
पित्तजे तिमिरे सर्पिर्जीवनीयफलत्रयैः।
विपाचितं पाययित्वा स्निग्धस्य व्यधयेत्सिराम्।
शर्करैलात्रिवृच्चूर्णैर्मधुयुक्तैर्विरेचयेत्॥

**अउ16.50**
मञ्जिष्ठालोध्रमधुकसारिवाचन्दनैः शृतम्।
जलं सशर्करास्तन्यं नेत्रसेके प्रशस्यते॥

**अउ16.51**
स्तन्यं वा पद्मकोशीरक्षीरिवृक्षाङ्कुरैः शृतम्।
तप्तैर्निर्वापितं सर्पिरसकृल्लोहपिण्डकैः॥

**अउ16.52**
विमर्दितसिताद्राक्षं हिमं तच्चाक्षिसेचनम्।
शीतानालेपसेकादीन् मुखे मूर्ध्नि च शीलयेत्॥

**अउ16.53**
सारिवापद्मकोशीरमुस्ताशाबरचन्दनैः।
वर्तिः शस्ताञ्जने चूर्णस्तथा पद्मोत्पलाञ्जनैः।
सनागपुष्पकर्पूरयष्ट्याह्वस्वर्णगौरिकैः॥

**अउ16.54**
लोध्रमूर्वाप्रपुण्ड्राह्वमांसीयष्ट्याह्वचन्दनैः।
सोशीरैः साधितं सर्पिः सक्षीरं तर्पणं हितम्॥

**अउ16.55**
एभिरेवौषधैश्छागे पक्वे यकृति तद्रसे।
पूर्ववत् पुटपाकश्च कार्यस्तिमिरनाशनः॥

**अउ16.56**
श्लेष्मोद्भवेऽमृताक्वाथवराकणशृतं घृतम्।
विध्येत् सिरां पीतवतो दद्याच्चानु विरेचनम्।
क्वाथं पूगाभयाशुण्ठीकृष्णाकुम्भनिकुम्भजम्॥

**अउ16.57**
करञ्जकट्फलवचात्रिफलापञ्चकोलकैः।
सदार्वीकैः पयो युक्तं सिद्धं तैलं च नावनम्॥

असं16.58। शङ्खप्रियङ्गुनैपालीकटुत्रिकफत्रिकैः।
दृग्वैमल्याय विमला वर्तिः स्यात् कोकिला पुनः॥

**अउ16.59**
कृष्णलोहरजोव्योषसैन्धवत्रिफलाञ्जनैः।
पीताख्या द्विनिशाकुष्ठनतपत्रकणोषणैः॥

**अउ16.60**
पत्रपीतावराव्योषशिलालनतसैन्धवैः॥

**अउ16.61**
मनोह्वाशङ्खसिन्धूत्थमरिचैस्तिमिरं जयेत्।
वर्तिः प्रगाढमप्याशु शुक्रपिल्लामयार्म च॥

**अउ16.62**
तालीसपाठाकिणिहीवेल्लमांसीनिशाभयैः।
पिष्टैः क्षीरिद्रुमक्वाथे घृतं सिद्धं च तर्पणम्॥

**अउ16.63**
पुटपाकं च पिशितैर्जाङ्गलैः सैन्धवान्वितैः।
सपिप्पलीमधुघृतैः कल्कितैः प्रागिवाचरेत्॥

**अउ16.64**
शिग्रुपत्रैर्जलस्विन्नैः कार्यः स्वेदश्च मात्रया॥

**अउ16.65**
रक्तजे पित्तवत् कार्यं सन्निपाते यथोल्बणम्॥

**अउ16.66**
व्याघ्रर्ष्यगोशिखिवसा यवक्वाथपयोयुता।
दूर्वामधुककल्केन विपक्वा तर्पणे हिता॥

**अउ16.67**
यष्ट्यनन्ताद्विबृहतीपिप्पलीलवणद्वयैः।
सलोहचन्दनैः पक्वं यकृता शल्यकस्य च।
मृगगोधाशशानां च पुटपाकं प्रकल्पयेत्॥

**अउ16.68**
दद्यादुशीरनिर्यूहे चूर्णितं कणसैन्धवम्।
तत्स्रुतं सघृतं भूयः पचेत् क्षौद्रं क्षिपेद्घने।
शीते चास्मिन् हितमिदं सर्वजे तिमिरेऽञ्जनम्॥

**अउ16.69**
कुष्ठं वा शर्करोपेतमान्तरिक्षेण वारिणा।
निष्काथ्यं सर्पिःक्षौद्राभ्यां संसृष्टं प्रागिवाञ्जनम्॥

**अउ16.70**
स्रोतोऽञ्जनं ससौवीरं वेष्टयित्वाजमेदसा।
वटपत्रैरनु तथा दर्भैः कृष्णमृदानु च।
गोमयानलपक्वं तत् प्रशस्तं चूर्णमञ्जनम्॥

**अउ16.71**
उरभ्रशल्यकश्वाविण्मार्जारशिखिजन्मभिः।
वसाभिर्विधिनानेन योगा योज्याः पृथक् पृथक्॥

**अउ16.72**
वटप्ररोहमधुकदूर्वालोध्रतिलोत्पलैः।
वयोम्बुपिष्टैः सघृतैः शिरो वक्त्रं च लेपयेत्॥

**अउ16.73**
कुर्याच्छिरः परीषेकमेभिरेव पयःशृतैः॥

**अउ16.74**
सन्निपाते यदुदितं दोषोद्रेकं विभज्य तत्।
संसर्गेऽपि प्रयुञ्जीत काचे तिमिरवत् क्रिया॥

**अउ16.75**
न तु तत्र सिरां विध्येत् दृक्स्थिता यन्त्रपीडनात्।
कुर्युरान्ध्यं मला दद्यात् स्रव्ये त्वस्रे जलौकसः॥

**अउ16.76**
धूमराख्याम्लपित्तोष्णविदाहे जीर्णसर्पिषा।
स्निग्धं विरेचयेच्छीतैश्शीतैर्दिह्या च सर्वतः॥

**अउ16.77**
गोशकृद्रसदुग्धाज्यैर्विपक्वं शस्यतेऽञ्जनम्।
स्वर्णगौरिकतालीसचूर्णावापा रसक्रिया॥

**अउ16.78**
पुराणगुडकासीसपिप्पलीकट्फलाद्रजः।
भावितं त्रिफलाम्भोभिः शुष्कं गोविड्रसाप्लुतम्।
निशान्ध्वतिमिरे सद्यो गुटिका हन्ति तत्कृता॥

**अउ16.79**
दध्ना विघृष्टं मरिचं रात्र्यन्धांजनमुत्तमम्।
भृष्टं घृतं कुम्भयोनेः पत्रैः पाने च पूजितम्॥

**अउ16.80**
कारञ्जिकोत्पलस्वर्णगौरिकाम्भोजकेसरैः।
गोविड्रसेन पिष्टेयं वर्तिर्नक्तान्ध्यनाशिनी॥

**अउ16.81**
क्षौद्रजातीरसाभ्यां वा द्विहरिद्रारसाञ्जनैः।
अजामूत्रेण वा कौन्तीकृष्णास्त्रोतोजसैन्धवैः॥

**अउ16.82**
गोशकृद्रसपिष्टैर्वा द्विनिशापिप्पलीयुतैः।
कालानुसारीतालीसपत्रयष्ट्याह्वनागरैः॥

**अउ16.83**
कणा वा कापिले पित्ते मासार्धं परिभाविता।
यकृत्पित्तेषु वा गोधाशशर्ष्यरुरुबर्हिणाम्॥

**अउ16.84**
खादेच्च प्लीहयकृती माहिषे तैलसर्पिषा।
घृते सिद्धानि जीवन्त्याः पल्लवानि च भक्षयेत्।
तथातिमुक्तकैरण्डसोहलाभीरुजानि च॥

**अउ16.85**
व्रणवच्चाक्षिरोगेषु भोज्याभोज्यानि निर्दिशेत्॥

**अउ16.86**
अविधारितवेगस्य भजतोऽञ्जननावनम्।
त्यजतः क्रोधशोकौ च तिमिरं नाश्नुतेऽन्तरम्॥

**अउ16.87**
त्रिफलामश्नतो रात्रौ संस्कृतं पिबतो घृतम्।
भुक्त्वा चापिबतस्तोयं तिमिरं लघु शाम्यति॥

**अउ16.88**
सुषभव्यं सुकन्यां च स्कन्दं च्यवनमश्विनौ।
पडेतान् यः स्मरेन्नित्यं तस्य चक्षुर्न हीयते॥

**अउ16.89**
चिन्ताभिघातभीशोकरौक्ष्यामोत्कुटिकासनात्।
विरेकनस्यवमनपुटपाकादिविभ्रमात्॥

**अउ16.90**
विदग्धाहारवमनात् क्षुत्तृष्णादिविधारणात्।
अक्षिरोगावसानाच्च पश्येत्तिमिररोगिवत्॥

**अउ16.91**
सूर्योपरागानलविद्युदादिविलोकनेनोपहतेक्षणस्य।
सन्तर्पणं स्निग्धहिमादि योज्यं तथाञ्जनं हेम घृतेन घृष्टम्॥

**अउ16.92**
चक्षूरक्षायां सर्वकालं मनुष्यैर्यत्नः कर्तव्यो जीविते यावदिच्छा।
व्यार्थो लोकोऽयं तुल्यरात्रिन्दिवानां पुंसामन्धानां विद्यमानेऽपि वित्ते॥

**अउ16.93**
त्रिफलारुधिरस्रुतिर्विशुद्धिर्मनसो निर्वृतिरञ्जनं सनस्यम्।
शकुनाशनता सपादपूजा घृतपानं च सदैव नेत्ररक्षा॥

**अउ16.94**
अहितादशनात् सदा निवृत्तिर्भृशभास्वच्चलसूक्ष्मवीक्षणाच्च।
मुनिना निमिनोपदिष्टमेतत् परमं रक्षणमीक्षणस्य पुंसाम्॥

**अउ16.95**
तमालतृटिकुङ्कुमान्यसितमुत्पलं पिप्पली सिताञ्जनमयोरजो मरिचकाकमाचीत्वचः।
सयष्टिमधुकाञ्जनान्युदधिफेनमक्ष्यामयेष्वनुत्तममतोऽञ्जनं विमलमाशु तैमिर्यहृत्॥
॥इति षोडशोऽध्यायः॥

अथ सप्तदशोऽध्यायः।

**अउ17.1**
अथातो लिङ्गनाशप्रतिषेधं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयोमहर्षयः॥

**अउ17.2**
लिङ्गनाशे नीलिका पटलमान्ध्यमिति पर्यायाः।
सः श्लैष्मिक एव प्राक् साध्योऽभिहितः।
तस्य पुनः षडुपद्रवाः।
आवर्तकी, शर्करा, राजीमती, छिन्नांशुका, चन्द्रकी, छत्रकी चेति॥

**अउ17.3**
तत्र श्वेतारुणावर्तवदनवस्थिता दृष्टिरावर्तकी।
अर्कक्षीरलेशेनेव कूर्चिकापिण्डेनेव चाचिता शर्करा।
शालिशूकाभराज्यावृता राजीमती।
छिन्नविषमदग्धाभा सरुक् छिन्नांशुका।
कांस्यसमच्छाया चन्द्रकसंस्थाना चन्द्रकी।
नैकवर्णा छत्रनिभा छत्रकी।
ता न विध्येत्।
अपि च॥

**अउ17.4**
न विध्येदसिरार्हाणां न तृट्पीनसकासिनाम्।
नाजीर्णभीरुवमितशिरःकर्णाक्षिशूलिनाम्।
नात्युष्णशीतवाताभ्रे नासम्पूर्णां च नीलिकाम्॥

**अउ17.5**
असञ्जाता हि विषमा दधिमस्तुतनुश्च सा।
शलाकयावघृष्टापि पुनरूर्ध्वं प्रपद्यते।
करोति वेदनां तीव्रां दृष्टिं च स्थगयेत् पुनः॥

**अउ17.6**
सा च सम्पूर्यते शीघ्रं श्लेष्मलर्वातपित्तलैः।
चिरात्सोपद्रवा च स्यान्निष्प्रेक्ष्यात्वर्हति व्यधम्॥

**अउ17.7**
अथ स्निग्धस्य विरिक्तस्य घृतैः सम्भोजितस्य निशि रसेन प्रीणितोत्तमाङ्गस्याभुक्तवतः सज्जोपकरणस्य विमलेऽहनि साधके च कृतस्वस्त्ययनस्य विहितादित्यविदेहाधिपतिप्रणामस्य पूर्वाह्णे निवातप्रकाशदेशस्थस्य प्रत्यादित्यमास्तरणेन लब्धमार्दवायां भामौ प्रसारितचरणयुग्ममुपविष्टस्य क्षितितलगतसमतलोभयपाणेः पृष्ठतः सुखोपविष्टेन परिचारकेण हस्ताभ्यां निश्चलमवलम्बितशिरसः किञ्चिदुत्तानास्यस्य स्वां नासामितरच्चेक्षणमीक्षमाणस्यातुरस्य जङ्घयोरुपरिष्टान्नात्युच्छ्रितासननिविष्टो भिषग् दक्षिणहस्तानुलोममक्षि मुखबाष्पस्विन्नं निमीलितमीषदङ्गुष्ठोदरविमृदिततारकतया परिप्लुतदोषं सव्याङ्गुष्ठप्रदेशिनीभ्यामुन्मील्य दक्षिणमध्यमाप्रदेशिन्यङ्गुष्ठैर्निष्कम्पं गृहीतया शलाकया कृष्णभागाद्भागद्वयस्यापाङ्गादेकभागस्य च सङ्गमे दृष्टेरार्जवं नात्यूर्ध्वमधो वा नेत्रसहजन्मनि सन्धौ विध्येत्॥

**अउ17.8**
एवमेव दक्षिणं दक्षिणाङ्गुष्ठप्रदेशिन्युन्मीलितमितरेण करेणैव चातुरस्य दक्षिणपार्श्वे स्थित्वा॥

**अउ17.9**
अथ शब्दवदवेदनं साम्बुबिन्दुस्रुति च सम्यग्विद्धं विद्यात्।
प्रविष्टमात्रां च शलाकां धारयेत्।
रागाश्रुवेदनानुत्पादनार्थं च स्तन्येन सेचयेत्।
ततः पुनरातुरमाश्वास्य भ्रमयन् शलाकामा दृष्टिमध्यात् प्रवेशयेत्॥

**अउ17.10**
अधश्चास्यावलिकयतो लिङ्गनाशमद्रुतमविलम्बितमनुसुखमधोमुखमपनयेदुच्छिङ्खयेच्चैनम्।
तथा हि दृक् स्रस्तकफस्य विशुध्यति।
विशुद्धदृष्टेश्चाङ्गुलिं तन्तून् ज्ञातीन् सन्ततींश्च दर्शयेत्।
प्रेक्षमाणस्य चानिमीलितान्नेत्राच्छन्नैः शनैः भ्रमयन्नेव शलाकामपकर्षेत्।
अथ व्यपगतदोषस्य यथावत् पश्यतः सुखोष्णघृताप्लुतं पिचुमीक्षणस्योपरि दत्वा बध्नीयात्।
ततो निवातमागारमनुप्रवेश्य संवेश्य च सोपधाने मृदुशयने शयानं दक्षिणेऽक्षिणि विद्धे वामेन पार्श्वेन वामे दक्षिणेनोभयस्मिन्नुत्तानमनुकूलाभिः कथाभिरुपाचरेत्।
यथाशक्ति चैनमुपवासयेत्।
उद्गारक्षवथुकासनिष्ठीवनोत्क्षेपणानि त्र्यहं परिहरेत्।
स्नानाम्बुपानदन्तधावनाधोमुखावस्थानानिसप्ताहम्॥

**अउ17.11**
स्नेहविधिं चेक्षेत।
मूर्ध्नि पादयोश्च घृताभ्यङ्गमाचरेत्।
तृतीये चाह्नि मुक्त्वाक्षि परिषेचयेदेरण्डपल्लवशृतेन दुग्धोष्णेन दुग्धेन।
जीवनीयैर्वा सिद्धेन पयसा हविषा वा।
तद्वल्लघुना पञ्चमूलेन।
ततः पूर्ववद् बध्नीयात्॥

**अउ17.12**
ततः प्रभृत्येवमेव प्रत्यहमासप्ताहम्।
सप्तमे तु दिवसे सर्वथा मोक्षयेत्।
दशमे वा।
भोजयेच्चैनं व्योषामलकयुक्तं द्रवमीषत्स्नेहलवणं वाट्यमुष्णोदकद्वितीयं विलेपीं वा।
एवमाचरतो रुजारागादयो नानुवर्तन्ते॥

**अउ17.13**
तदनुवृत्तौ तु यष्टीमधुकलोध्रमृद्वीकासैन्धवैः सिद्धेन ससितेनाजपयसा नयनमाश्च्योतयेत्।
मधुककुष्ठोत्पलद्राक्षालाक्षाशर्कराभिर्वा।

पृश्निपर्णीमुस्तमधुकशतावरीपंद्मकसैन्धवैर्वा॥

**अउ17.14**
शिरोवक्त्रलेपं च सारिवागैरिकयवदूर्वाघृतैः कुर्यात्।
मातुलुङ्गरसाप्लुतैर्वा मृदुभृष्टैस्तिलैः ससर्षपैः।
अजाक्षीरद्रुतैर्वा मृदुभृष्टैस्तिलैः ससर्षपैः।
अजाक्षीरद्रुतैर्वा पयस्यासारिवापत्रमञ्जिष्ठायष्ट्याह्वैर्हिमः सुखोष्णो वा लेपः।
तद्वद्देवदारुनागरमद्मकैर्वा॥

**अउ17.15**
जाङ्गलरसेन च जीवनीयक्वाथवता भोजयेत्।
वातहरवर्गसिद्धेन च पयसा।
पद्मकादिगर्भसिद्धं सर्पिः पाननावनसेकेषु विदध्यात्।
तथानुपशमे सिरां विध्येत्।
अधिमन्थसाधनं चेक्षेत॥

**अउ17.16**
यथोक्ताचारातिक्रमात्तु व्यधः पाकमुपयाति।
अभिष्यन्दाधिमन्थादयः स्युर्व्यधदोषाच्च।
तान्यथास्वमुपत्रमेत॥

**अउ17.17**
व्यधदोषाः पुनरध ऊर्ध्वं कृष्णासन्नमपाङ्गासन्नं सिराव्यधश्च॥

**अउ17.18**
तत्राधोव्यधादत्यर्थशूलास्रस्रुतिरागाः शलाकायांश्चोपलेपो बहलपिच्छिलः कृष्णां वलिभिरुपचीयते नयनं स्रवति तद्वर्जयेत्॥

**अउ17.19**
ऊर्ध्वव्यधादतिमात्ररुक्।
तत्रात्युष्णघृतपरिषेको वातहरं च कर्म॥

**अउ17.20**
कृष्णासन्नव्यधान्नसुखमपनीयते पटलम्।
कृष्णे च रुजा।
दृष्टिरपि च रक्तावच्छादिता कृष्णमण्डलाभा भवति।
तत्र सर्पिस्सेकविरेकरक्तमोक्षैः सिद्धिः॥

**अउ17.21**
अपाङ्गासन्नव्यधाच्छोफशूलतोदभेदाः सास्राः स्रुतयः।
तत्र घृतसेकोपवासौ भ्रुवोरन्तरे च दाहः॥

**अउ17.22**
सिराव्यधाद्रक्तागमो विविधाश्च वेदनाः।
तत्र स्तन्यमधुकविपक्वेन सर्पिषा परिषेकोऽपाङ्गे वा दाहः॥

**अउ17.23**
सिराजालवति तु नेत्रे प्राक् सिराजालमपनयेत्।
ततो लब्धबलं स्निग्धं च विध्येत्॥

**अउ17.24**
अथ शलाकाभ्रमणदोषाः।
क्षोभणमूर्ध्वमधोऽत्यर्थदृष्टिघट्टनमतिदृष्टिप्रेरणं च।
शलाकाक्षोभणाद्धिस्पन्दनतोदभेदपरिमन्थाः।

तस्मिन्यष्टीमधुकपोट्टल्या घृतमृदितया सेको जलौकसश्च।
ऊर्ध्वप्रणयनाद्रागोऽतिवेदना च।
तत्रोपवासो घृतसेकश्च स्पर्शसुखः।
अधोनयनाच्छूलं रक्तागमश्च।
तत्र क्षोभणवत् सिद्धिः।
अत्यर्थदृष्टिघट्टनाद्दृष्ट्याकुलता।
तत्र सर्पिर्मण्डोनुवासनं नावनं च।
अतीत्य दृष्टिं शलाकायाः प्रेरणाद्रक्तस्रवणं रक्ताभरूपदर्शनं च।
तत्र सर्पिस्सेकोपवासजलौकसः॥

**अउ17.25**
लिङ्गनाशदोषास्तु स्फुटनमवगलनं विस्तरणमुत्प्लवनं लीनता च।
तत्र शलाकया स्पृष्टो लिङ्गनाशो यः स्फुटति तमेरण्डपत्रस्विन्नं खण्डशः शोधयेत्।
ततः कृष्णासैन्धवमधुभिरवपीडनम्।
अवगलति तु शलाकामपनीय स्तन्यसेकं दद्यादवपीडनं च शुण्ठीगुडं जलौकसश्च।
विस्तीर्यमाणे सुखोष्णाम्बुप्लुतेन वाससा स्वेदो घृतमण्डश्च प्रतिमर्शः।
तद्वदुत्प्लवमाने वित्रासनं शीताम्भसा प्रततं चोच्छिङ्खनं च॥

**अउ17.26**
स्थिरे चले च दोषे पत्रभङ्गस्वेदः।
तथाप्यनपगच्छति शलाकापगमने वा पुनरुत्प्लवने स्नेहपाननस्यादिभिरुपपाद्य पुनर्विध्येत्।
एवमपि पुनरुत्प्लवने भ्रुवोरन्तरे दाहः॥

**अउ17.27**
यस्त्वपकृष्यमाणो दृष्टिमण्डले लीयते तत्र क्षीरेण नाडीस्वेदं दद्यात्।
शताह्वामधुकचूर्णसंसृष्टं च घृतं प्रतिमर्श इति।
भवति चात्र॥

**अउ17.28**
स्वेददाहप्रतीमर्शान् सद्योविद्धे तु सेचनम्॥

**अउ17.29**
अवपीडं तृतीयेऽह्नि युञ्ज्यात्तद्वज्जलौकसः।
सप्ताहान्ते सिरामोक्षं विरेकं बस्तिकर्म च॥

**अउ17.30**
यन्त्रणामनुरुध्येत दृष्टेरा स्थैर्यलाभतः।
रूपाणि सूक्ष्मदीप्तानि सहसा नावलोकयेत्॥

**अउ17.31**
कुर्याच्छलाकास्थूलाग्रा विशालव्रणतां तनुः।
पटलोत्प्लवनं तीक्ष्णा क्षतमन्तः खरारुजः।
कण्ठा च विषमाश्रूणि ह्रस्वा दीर्घा च दुर्ग्रहा॥

**अउ17.32**
आढकीमूलमरिचहरितालरसाञ्जनैः।
विद्धेऽक्ष्णि सगुडा वर्तिर्योज्या दिव्याम्बुपेषिता॥

**अउ17.33**
जातीशिरीषधवमेषविषाणषुष्पवैडूर्यमौक्तिकफलं पयसा सुपिष्टम्। आजेन ताम्रममुना प्रतनुप्रदिग्धं सप्ताहतः पुनरिदं पयसैव पिष्टम्॥

**अउ17.34**
पिण्डाञ्जनं हितमनातपशुष्कमक्ष्णि विद्धे प्रसादजननं बलकृच्च दृष्टेः।
स्रोतोजविद्रुमशिलाप्पतिफेनतीक्ष्णैरस्यैव तुल्यमुदितं गुणकल्पनाभिः॥
॥इति सप्तदशोऽध्यायः॥

अथ अष्टादशोऽध्यायः।

**अउ18.1**
अथातः सर्वगाक्षिरोगविज्ञानीयं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ18.2**
वातेन नेत्रेऽभिष्यण्णे नासानाहोऽल्पशोफता।
शङ्खाक्षिभ्रूललाटास्यतोदस्फुरणभेदनम्॥

**अउ18.3**
शुष्काल्पा दूषिका शीतमल्पं चाश्रु चला रुजः।
निमेषोन्मेषणं कृच्छ्राज्जन्तूनामिव सर्पणम्॥

**अउ18.4**
अक्ष्याध्मातमिवाभाति सूक्ष्मैश्शल्यैरिवाचितम्।
स्निग्धोष्णैश्चोपशमनम् सोभिष्यन्द उपेक्षितः॥

**अउ18.5**
अधिमन्थो भवेत्तत्र कर्णयोर्नदनं भ्रमः।
अरण्येव च मथ्यन्ते ललाटाक्षिभ्रुवादयः॥

**अउ18.6**
हताधिमन्थः सोपि स्यात् प्रमादात्तेन वेदनाः।
अनेकरूपा जायन्ते व्रणो दृष्टौ च दृष्टिहा॥

**अउ18.7**
मन्याक्षिशङ्खतो वायुरन्यतो वा प्रवर्तयेत्।
व्यथां तीव्रामपैच्छिल्यरागशोफं विलोचनम्।
सङ्गोचयति पर्यश्रु सोन्यतोवातसंज्ञितः॥

**अउ18.8**
तद्वज्जिह्मं भवेन्नेत्रमूनं वा वातपर्यये॥

**अउ18.9**
दाहो धूमायनं शोफः श्यावता वर्त्मनोर्बहिः।
अन्तःक्लेदोऽश्रु पीतोष्णं रागः पीताभदर्शनम्।
क्षारोक्षितक्षताक्षित्वं पित्ताभिष्यन्दलक्षणम्॥

**अउ18.10**
ज्वलदङ्गारकीर्णाभं यकृत्पिण्डसमप्रभम्।
अधिमन्थे भवेन्नेत्रम् स्यन्दे तु कफसम्भवे॥

**अउ18.11**
अधिमन्थे भवेन्नेत्रम् स्यन्दे तु कफसम्भवे।
जाड्यं शोफो महान् कण्डूर्निद्रान्नानभिनन्दनम्।
सान्द्रस्निग्धबहुश्वेतपिच्छावद्दूषिकाश्रुता॥

**अउ18.12**
अधिमन्थे नतं कृष्णमुन्नतं शुक्लमण्डलम्।
प्रसेको नासिकाध्मानं पांसुपूर्णमिवेक्षणम्॥

**अउ18.13**
रक्ताश्रुराजीदूषीका रक्तमण्डलदर्शनम्।
रक्तस्यन्देन नयनं सपित्तस्यन्दलक्षणम्॥

**अउ18.14**
मन्थेऽक्षिताम्रपर्यन्तमुत्पाटनसमानरुक्।
रागेण बन्धूकनिभं ताम्यति श्पर्शनाक्षमम्।
असृङ्निमग्नारिष्टाभं कृष्णमग्न्याभदर्शनम्॥

**अउ18.15**
अधिमन्था यथास्वं च सर्वे स्यन्दाधिकव्यथाः।
शङ्खदन्तकफोलेषु कपाले चातिरुक्कराः॥

**अउ18.16**
वातपित्तातुरं घर्षतोदभेदोपदेहवत्।
रूक्षदारुणवर्त्माक्षिकृच्छ्रोन्मीलनिमीलनम्॥

**अउ18.17**
विकूणनविशुष्कत्वशीतेच्छाशूलपाकवत्।
उक्तः शुष्काक्षिपाकोऽयम् सशोफः स्यात्त्रिभिर्मलैः॥

**अउ18.18**
सरक्तैस्तत्र शोफोऽतिरुग्दाहष्ठीवनादिमान्॥

**अउ18.19**
अश्रूष्णशीतविशदपिच्छिलाच्छघनं मुहुः॥

**अउ18.20**
अल्पशोफोऽल्पशोफस्तु पाकोऽन्यैर्लक्षणैस्तथा॥

**अउ18.21**
अक्षिपाकात्यये शोफः संरम्भः कलुषाश्रुता।
कफोपदिग्धमसितं सितं प्रक्लेदरागवत्।
दाहो दर्शनसंरोधो वेदनाश्चानवस्थिताः॥

**अउ18.22**
अन्नसारोऽम्लतां नीतः पित्तरक्तोल्बणैर्मलैः।
सिराभिर्नेत्रमारूढः करोति श्यावलोहितम्॥

**अउ18.23**
सशोफदाहपाकाश्रु भृशं चाविलदर्शनम्।
अम्लोषितोऽयमित्युक्ता गदाः षोडश सर्वगाः॥

**अउ18.24**
हताधिमन्थमेतेषु साक्षिपाकात्ययं त्यजेत्॥

**अउ18.25**
वातोद्भूतः पञ्चरात्रेण दृष्टिं सप्ताहेन श्लेष्मजातोऽधिमन्थः।
रक्तोत्पन्नो हन्ति तद्वत्त्रिरात्रान्मिथ्याचारात् पैत्तिकः सद्य एव॥
॥इति अष्टादशोऽध्यायः॥

अथ एकोनविंशोऽध्यायः।

**अउ19.1**
अथातोऽभिष्यन्दप्रतिषेधं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयोमहर्षयः॥

**अउ19.2**
अथ खलु सर्वगाक्षिरोगाणां पूर्वरूप एव शिरोविरेककवलधूमोपवासानासेवेतान्यत्र मारुतोद्रेकात्॥

**अउ19.3**
सर्वत्र तु चन्दनमरिचपत्रैलास्वर्णगैरिकतगररसाञ्जनलवणयष्ट्याह्वैर्बिडालकं कुर्यात्॥

**अउ19.4**
तथा दार्वीतुत्थहरीतकीभिर्वातपित्ते।
कफे तु हरीतकीनागररसाञ्जनस्वर्णगैरिकैः॥

**अउ19.5**
अपि च।
कुष्ठामिसिपिप्पलीचन्दनोत्पलैर्बिडालको वेदनाघ्नः।
मुस्तागरुचन्दनैः क्षौद्रयुतैः शूलदाहरागघ्नः।
सन्धवागरुत्रिजातकत्रिकटुकस्वर्णगैरिककुष्ठतगरशैलेयकैः शूलश्वयथुदाहरागनुत्॥

**अउ19.6**
शिग्रुफलमनोह्वाशाबरलोध्रैः क्रमाच्चतुर्गुणप्रवृद्धैः श्लक्ष्णरजोभिः सूक्ष्मतान्तवस्थैर्नयनमवचूर्णयेत्॥

**अउ19.7**
श्वेतलोध्रत्वचं बहिर्विलिखितां निम्बपत्रकल्केन प्रदिग्धां पुटपाके विपक्वामर्धपलोन्मितां मरिचचतुष्टययुक्तां श्लक्ष्णरजीकृतां वस्त्रबद्धामक्ष्ण्यवकिरेत्।
एतदवगुण्ठनं शूलदाहाश्रुश्वयथुकण्डूषापाकक्लेदोपदेहहरम्।
तयैव च पोट्टलिकयाश्च्योतनकालेऽवन्तिसोमाप्लुतयाश्च्योतयेत्॥

**अउ19.8**
पूर्ववद्वा लोध्रवल्कलकल्कमुपस्कृतं तन्मात्रमेव मरिचद्वयेन मनश्शिलापादेनाष्टांशकैश्च यष्टीमधुकशतपुष्पाञ्जनैर्युक्तं प्रकल्पयेत्।
अपि च॥

**अउ19.9**
आरण्याश्छगणरसे पटावबद्धाः सुस्विन्ना नखवितुषीकृताः कुलत्थाः।
तच्चूर्णं सकृचूदवर्णनान्निशीथे नेत्राणां विधमति सद्य एव कोपम्॥

**अउ19.10**
अथ दारुहरिद्रापलमुदकार्धप्रस्थेनाष्टांशशेषं क्वथितं माक्षिकयुक्तमाश्च्योतनं कुर्वीत॥

**अउ19.11**
एवं चानुपशमे वाताभिष्यन्दिनमादावेव जाङ्गलरसैर्भेजयित्वा दशमूलरास्नात्रिफलाक्वाथेन जीवनीयकल्केन च पयोयुतं सिद्धमितरद्वा पुराणसर्पिः पाययेत्॥

**अउ19.12**
आश्च्योतनं चास्यैरण्डमूलपल्लवैः शृतमजाक्षीरं कुर्यात्।
सालपर्णीपृश्निपर्णीद्विबृहतीमधुकोरुपूगैर्वा।
तद्वत्तगरद्रीबेरशार्ङ्गेष्ठोदुम्बरमधुकपिप्पलीबृहतीद्वयैरण्डमूलैर्वा॥

**अउ19.13**
अंशुमतीद्वयबृहतीकण्टकारिकाभिर्वा तान्तवावबद्धाभिः सुरामद्यधान्याम्लान्यतमाप्लुताभिरानूपमांसाम्लक्वाथेन वा॥

**अउ19.14**
तैरेव च मांसैर्वेशवारीकृतस्विन्नैर्महास्नेहवद्भिर्यवचूर्णलवणप्रगाढामुत्कारिकां कृत्वा ललाटगण्डादीन् स्वेदयेत्॥

**अउ19.15**
अथवा रास्नाभीरुदशमूलबलाकोलकुलत्थयवानामजाक्षीरस्विन्नानां बाष्पेण।
रास्नादिभिरेव सिद्धं तैलं सर्पिर्वा नावनम्।
एवंविधैरेव नाडीस्वेदं कुर्यात्॥

**अउ19.16**
सरलसुरभिघनदेवदारुहिंस्राकरञ्जफलबिल्वसर्षपैश्च सभृष्टतिलैः पयसा पिष्टैः सुखोष्णैर्मुखालेपोऽक्षिवेदनास्तम्भप्रशमनः॥

**अउ19.17**
एवमस्यानुपशान्तरुजः सिरां मोक्षयेत्।
स्नेहस्वेदविष्यन्दं हि वातदुष्टमसृङ्निर्द्रियमाणं नानिलप्रकोपाय।
पुनश्च स्निग्धाय तिल्वकेन संयुक्तं वा तिल्वककषायानुपानं सर्पिर्विरेचनं दद्यात्।
शुद्धं च वातप्रतिश्यायवदास्थापयेदनुवासयेच्च॥

**अउ19.18**
अथ तिलान् निस्तुषान् बिल्वफलक्वाथेन भावयेन्निशि दिवा शोषयेदेवं पञ्चाहम्।
तेभ्यस्तैलं गृहीत्वा वराहमेदोयुक्तं बिल्वमूलमधुयष्टिकाकल्केन पयसा च पचेत्।
तेन नस्यं शिरोबस्तिं च कुर्यात्।
सर्वगन्धनिर्यूहेण वा मधुकगर्भं सक्षीरं तैलम्।
स्नैहिकं च धूमं पिबेत्॥

**अउ19.19**
उपशान्तरुजोऽस्य च तर्पणम्।
काश्मर्यमधुकः कुमुदोत्पलोरुपूगकुष्ठबृहतीतमालमांसीसारिवाप्रपौण्डरीकदर्भमूलकशेरुकाभिः पयः साधयेत् तत्तर्पणनस्याभ्यङ्गेषु विदध्यात्॥

**अउ19.20**
कृष्णसर्पशिरो वा क्षीरे क्वाथयेत्।
ततः स्नेहमुद्धृत्य चन्दनोशीरशर्करोत्पलकल्केन क्षीरवता पक्वं तर्पणम्।
अथवा पञ्चमूलजीवनीयकुक्कुटमांसैःपयो विपचेत्, ततो नवनीतं घनानन्तासारिवोशीरचन्दनैः सपयस्कैः साधयेत्॥

**अउ19.21**
पुटपाकं च छागोरभ्रवराहाणामन्यतमस्य यकृत् पिप्पलीसैन्धवमधुघृतोपेतं कुर्यात्।
अञ्जनं चास्य दृक्प्रसादनार्थम्॥

**अउ19.22**
कृष्णतिलान् निस्तुषान् कृत्वा स्तन्येन सप्ताहं भावयेच्छोषयेच्च।
तच्चूर्णं सितोपलासमं कृत्वा मधुकार्धभागेन सैन्धवांशेन कृष्णसर्पशिरसश्चान्तर्धूमदग्धस्य भागेन संसृष्टं दिव्योदकपिष्टां गुटिकां कारयेत्॥

**अउ19.23**
गोधासर्पवसायामाजमेदसि च सैन्धवपिप्पलीचूर्णं रसाञ्जनं चावपेत्।
एषा मासं स्थिता रसक्रिया दृष्टिप्रसादनी रुजाहरा च॥

**अउ19.24**
उद्धृतसरेण गव्येन दध्नाम्लेन राजतं भाजनमालिम्पेत्।
नीलीभूतं च तद्विशुष्कं मस्तुना वर्तयः कृताः छायाविशोषिता वाताक्षिरोगं जयन्ति।
मागधिकाकण्टकारिकाद्वयमूलत्वङ्मधुकसितासैन्धवताम्ररजांस्यजाक्षीरेण पिष्ट्वा ताम्रपात्रमालेपयेत्।
सप्ताहात् सप्ताहादपनीय पुनस्तथैव पिष्ट्वा लेपयेत्।
सप्तभिः सप्तरात्रैर्गुटिका कृताः परं वाताक्षिरोगवेदनारागशोफतिमिरकाचनक्तान्ध्यतापाधिमन्थाभिघातहराः॥

**अउ19.25**
प्रत्यञ्जनं चात्र स्फटिकशङ्खनाभिमधुकगैरिकैरिक्षुरसपिष्टैर्वर्त्तिः॥

**अउ19.26**
अयमेव च सर्वो विधिरधिमन्धादिष्वपि प्रयोज्यः॥

**अउ19.27**
विशेषतस्त्वधिमन्थे सहचरस्फूर्जातककतकबीजबिल्ववृक्षादनीनिर्यूहेण सपयस्कं सर्पिः सिद्धं पिबेत्॥

**अउ19.28**
सर्पिषानुपशमे तैलं वसां मज्जानं पूर्वोक्तविधिवद्व्यत्यासेन कुर्यात्।
सर्वथानुपशान्तावुपरिभ्रुवोर्यथोक्तो दाहः॥

**अउ19.29**
पित्ताभिष्यन्दाधिमन्थयोः शर्करावचूर्णितं सर्पिः पानम्।
तिक्तकानामन्यतमं वा॥

**अउ19.30**
प्रपौण्डरीकामलकद्विबृहतीदर्भदशमूलशतावरीतालीसपत्रमञ्जिष्ठानीलोत्पलक्वाथः सितास्तन्येनाश्च्योतनम्।
मधुककटङ्कटेरीनिर्यूहो वा।
सक्षौद्रश्चन्दनमधुकलोध्रमञ्जिष्ठास्वर्णगैरिकक्वाथस्तीव्रशूलदाहहरः॥

**अउ19.31**
लोध्रदार्वीमधुकप्रपौण्डरीकान्यापोथ्य नन्तकेन बध्नीयात्।
तेन क्षौद्रसलिलाप्लुतेन सेको वेदनाघ्नः।
तेनैव च सशर्करस्त्रीस्तन्ये च्छागदुग्धे वा दाहरागघ्नः॥

**अउ19.32**
श्वेतलोध्रं मधुकं च समं घृतेन भर्जयित्वा चूर्णयेत्।
ततः पोट्टलिकावबद्धं स्तन्येन तोयेन वा मृदितमाशु शूलदाहरागशोफानपोहति।
चन्दननलिनकुमुदनलदादिभिर्वा क्षीरसंस्कृतैः।
तैश्च शिरोवक्त्रप्रलेपपरिषेकाः॥

**अउ19.33**
एवमसिद्धौ सिराव्यधः पुनः स्निग्धस्य च त्रिफलाकाश्मर्यक्वाथशर्करात्रिवृच्चूर्णैर्विरेकः॥

**अउ19.34**
शङ्खमधुकसैन्धवबृहतीमूलत्वचः पयसाजेन पिष्ट्वा ताम्रपात्रं परलेपयेत्।
पुनः सप्ताहादेवं सप्तभिः सप्तरात्रैर्गुटिकाः कुर्यात्।
ताः स्तन्यघृष्टाः पित्तामयेष्वञ्जनाद्रुजमपहरन्ति॥

**अउ19.35**
सुवर्णगैरिकं निशां देव्येम्भासि स्थितमहः शोषयेत् सप्ताह मेवमेव च सुशीतेन मधुरवर्गकषायेण भावयेदेतच्चूर्णाञ्जनं दाहरागघ्नम्॥

**अउ19.36**
पञ्चाशद्दार्वीपलानि पलिकानि च सारिवामधुककाकोलीद्विनिशामृद्वीकाकाश्मर्यसुनिषण्णकमञ्जिष्ठालोध्रोशीरचन्दानि जलद्रोणेष्टभागावशेषं पचेत्।
परिस्रुतं च पुनरादर्वीलेपादवतार्य च सितोपलासमांशं मधुघृतद्विपलं प्रक्षिपेत्।
रसक्रियेयं मधुरा सर्वाक्षिरोगेषु हिता॥

**अउ19.37**
काश्मर्यस्वरसपिष्टः सारिवाशर्कराकल्को नस्यमिक्षुरसपिष्टं वा यष्ट्याह्वम्।
क्षतशुक्रोक्तं चात्र तर्पणं पुटपाकश्च॥

**अउ19.38**
श्लेष्माभिष्यन्देधिमन्थे च त्र्यहमुपवासस्तीक्ष्णानि धूमकवलनावनानि।
शार्ङ्गेष्ठाकुष्ठतगरमुरुङ्गीव्योषैलादारुभिर्बिडालकः॥

**अउ19.39**
तिल्वकबृहतीनिदिग्धिकालोध्रारग्वधमूलत्वग्भिर्गोमूत्रक्वथितैराश्च्योतनं शोफोपदेहकण्डूघ्नम्॥

**अउ19.40**
निम्बपत्रकल्कदिग्धं वा लोध्रमङ्गारस्वेदितं चूर्णितं तान्तवावबद्धमुष्णाम्बुमृदितम्।
तद्वदेवाभयामलकोपकुल्यापाटलीचूर्णानि।
शिग्रुपल्लवरसो वा मधुमिश्रः।
मधुशिग्रुपाटलीबिल्वमूलशुण्ठीक्वाथो वा॥

**अउ19.41**
निम्बपटोलजातिपत्रलोध्रद्वयमहौषधैः खण्डशः कल्पितैर्वस्त्रबद्धैः सक्षौद्रैर्गौडे सीधौ वा परिप्लुतैः सेकः परं श्लेष्मशूलघ्नः॥

**अउ19.42**
रोहिषपूतीककरञ्जकपित्थास्फोतपीलुबिल्वपत्रशिग्रुसुरसार्कनिम्बपत्रैर्गोमूत्रक्वथितैः स्वेदः॥

**अउ19.43**
तथापि शोफघर्षानुबन्धे यवमदनभूर्जशमीपत्रैः सघृतैर्घृतेनैव वा नाड्याक्षि धूपयेत्।
लघ्वशितं च द्वितीयेह्नि प्रातर्व्योषविपक्वं यवक्षारावचूर्णितं सर्पिः पाययेत्।
ततः सिराव्यधो विरेकश्च॥

**अउ19.44**
बृहतीत्वक्शुण्ठीताम्रकांस्यरजांसि दधिमस्तुना पिष्ट्वा तास्रपात्रे प्रलेपयेत्।
तथैव च सप्ताहे।
सप्तसप्ताहे च गते वर्तयः कार्याः मरिचहरिद्राभयाञ्जनैर्वा जलपिष्टा वर्तिः।
त्रिकटुकत्रिफलाविडङ्गसारहरिद्राभिर्वा॥

**अउ19.45**
हरीतकी तुत्थं च समभागं तुत्थादष्टांशेन मरिचमेषा वर्तिः कुमारी सर्वश्लेष्माक्षिरोगघ्नी॥

**अउ19.46**
विडङ्गचूर्णो वा वारुण्या भावितः शङ्खो बीजपूररसेन मधुकं त्रिफलारसेन पृथगैकध्यं वा चूर्णाञ्जनं वा पिण्डो वा पोथकीबहलकफोत्क्लेशाभिष्यन्दानपहरति॥

**अउ19.47**
स्वर्णगैरिकसैन्धवमनश्शिलालाक्षानतकरञ्जिकासुरसशङ्खव्योषतालीसकुष्ठकलिङ्गकदेवदारुनलदजातीमुकुलरसाञ्जनैः सुरामण्डपिष्टैर्वर्त्तिः सर्वश्लेष्माक्षिरोगविकारहरा॥

**अउ19.48**
पुष्पकासीसचूर्णं ताम्रसमुद्गे सुरसपत्रस्वरसेन सप्ताहं भावयेत्।
तच्चूर्णाञ्जनं वर्त्मोपचयपक्ष्मशातघ्नम्॥

**अउ19.49**
सैन्धवव्योषवराविडङ्गलोध्रप्रपौण्डरीकमधुकतुत्थकतार्क्ष्यशैलताम्रचूर्णैः छागपयःपिष्टैर्मार्कवस्वरसपरिपीतैर्वर्त्तिः काण्डचित्राख्या सर्वाक्षिरोगान् जयति॥

**अउ19.50**
कण्ड्वां मनश्शिलासैन्धवश्वेतमरिचैर्मातुलुङ्गरसपिष्टैर्वर्त्तिः।
सशोफायां नागरदेवदारुसैन्धवजातिक्षारकैः सुरामण्डपिष्टैः॥

**अउ19.51**
नक्तमाललशुनशिग्रुशिग्रुकबीजैर्वा रसक्रिया।
तर्पणं च॥

**अउ19.52**
यकृदाजमगरुप्रियङ्गुनलददेवदारुयुतं पयसि क्वाथयेत्तस्मिन् शीते खजमथिते यन्नवनीतं तदेभिरेवौषधैर्विपक्वम्।
पुटपाकश्च कुष्ठतगरदार्वीसर्वगन्धैराजेन यकृता सह पिष्टैर्मधुघृतयुतैः॥

**अउ19.53**
रक्तजं पुनरभिष्यन्दमधिमन्थं च पित्तवदुपत्रमेत्।
स्तन्येक्षुरसशर्करोदकान्यतमेन वाश्च्योतयेत्।
पुनःपुनश्चास्य रुधिरमवसेचयेत् सिराव्यधेन जलौकोभिश्च।
तीव्रवेदनायां महतीं घृतमात्रां पाययेत्॥

**अउ19.54**
आढकीकुर्यटपाटलीश्रीपर्णीविदुलार्जुनबृहतीचम्पकमालतीमूलानि खर्जूररसपिष्टानि गुटिकाञ्जनम्॥

**अउ19.55**
केशैर्जलार्द्रैः कांस्यमुद्घर्षयेत् तान् कांस्यमलदिग्धानन्तर्धूमं दग्ध्वा तत् भस्म त्रिफलाक्वाथे सुरसास्वरसे क्षीरे च छागे पञ्चाहं भावयेत्।
एतच्चूर्णं स्रोतोजतुल्यं प्रत्यञ्जनम्॥

**अउ19.56**
कृष्णसर्पं पयसि क्वाथयेत्ततः पूतशीतमथितात् स्नेहमुपोषिताय कृकवाकवे दद्यात्।
तस्य यत् पुरीषं तत् स्नेहाञ्जनम्॥

**अउ19.57**
कृष्णसर्पमुखमञ्जनसर्पिषोः पूर्णं दर्भवेष्टितं मृदवलिप्तमधोमुखं गोमयेनाग्निनादग्ध्वा ततोञ्जनमादाय पत्रनलदनीलोत्पलतुल्यं चूर्णीकृतं परं दृक्प्रसादजननमञ्जनम्॥

**अउ19.58**
घृतमण्डश्च शर्करामधुकनीलोत्पलैर्मानुषीदुग्धयुक्तैः सिद्धो नस्यमिति।
भवति चात्र॥

**अउ19.59**
सर्वेक्षिरोगा यत् प्रायो जायन्ते स्यन्दपूर्वकाः।
यतश्च रक्तं सन्दूष्य तानतस्त्वरया जयेत्॥

**अउ19.60**
सर्वोर्ध्वजत्रुगस्रोतस्यन्दनात् स्यन्द उच्यते।
तत्स्थानां तद्वदङ्गानामधिमन्थोऽतिमन्थनात्॥

**अउ19.61**
वातेऽक्षिसेकस्सैरण्डबृहतीमधुशिग्रुणा।
सिद्धेन पञ्चमूलेनससितैः पित्तरक्तयोः॥

**अउ19.62**
दार्वीलाक्षोत्पलद्राक्षामञ्जिष्ठामधुकद्वयैः।
श्लेष्मणि त्रिफलाशुण्ठीनिम्बलोध्राटरूषकैः।
समस्तैस्सन्निपातोत्थे कुर्यात् स्यन्देऽक्षिसेचनम्॥

**अउ19.63**
तुत्थव्योषाभयालोध्रयष्ट्याह्वैस्ताम्रसंस्थितैः।
धान्याम्लपिष्टैः सेकोयं सर्वाभिष्यन्दरुक्प्रणुत्॥

**अउ19.64**
तद्वतुत्थाभयालोध्रयष्टीमधुरसाञ्जनैः।
शताह्वार्द्धांशसंयुक्तैः सेकः सर्वाक्षिशूलजित्॥

**अउ19.65**
पुष्पाञ्जनसिताक्षौद्रैस्ताम्रसंस्थैस्तिलाम्भसा।
सेचनं हन्ति रुग्रागदाहश्वयथुघर्षणम्॥

**अउ19.66**
द्विनिशात्रिफलामुस्तैः प्रमदादुग्धकल्कितैः।
सेकः सशर्कराक्षौद्रैरभिघातरुजापहः॥

**अउ19.67**
निषिक्तं तुत्थकं वारान् गोर्जले पञ्चविंशतिम्।
स्तन्ये वा छागदुग्धे वा सद्यःकोपे तदञ्जनम्॥

**अउ19.68**
बदरीदलयष्ट्याह्वतुत्थधात्रीफलैः समैः।
पुट्Aअन्तर्बादराग्नीद्धैर्दृगुत्कोपघ्नमञ्जनम्॥

**अउ19.69**
बृहत्यैरण्डमूलत्वक्शिग्रुमूलैः ससैन्धवैः।
वर्त्तिराजपयःपिष्टैस्सर्ववाताक्षिरोगजित्॥

**अउ19.70**
सुमनःक्षारकाः शङ्खस्त्रिफला मधुकं बला।
पित्तरक्तापहा वर्त्तिः पिष्टा दिव्येन वारिणा॥

**अउ19.71**
सैन्धवं त्रिफला व्योषं शङ्खनाभिस्समुद्रजः।
फेनः शैलेयकं सर्जो वर्त्तिः श्लेष्माक्षिरोगजित्॥

**अउ19.72**
शङ्खविद्रुमवैडूर्यलोहिताक्षप्लवास्थिभिः।
स्रोतोजश्वेतमरिचैर्वर्त्तिः सर्वाक्षिरोगजित्॥

**अउ19.73**
पिप्पल्यः किंशुकरसो वसा सर्पस्य सैधवम्।
घृतं च जीर्णं सर्वाक्षिविकारघ्नी रसक्रिया॥

**अउ19.74**
कृष्णसर्पवसा क्षौद्रं रसो धात्र्या रसक्रिया।
शस्ता सर्वाक्षिरोगेषु काचार्मपटलेषु च॥

**अउ19.75**
रसाञ्जनं शृङ्गवेरमभया तुत्थकं शुभम्।
यथोत्तरं द्विगुणितैस्तैर्वर्त्तिरपराजिता॥

**अउ19.76**
ऋते वातादभिष्यन्दात्तिमिराणि कुकूणकम्।
पोथकीपिटकाः पिल्लानर्माणि च नियच्छति॥

**अउ19.77**
ताम्रे मस्तुसमुद्घृष्टं तुत्थकं श्यावतां गतम्।
सर्वाभिष्यन्दशुक्लार्मसिराजालजिदञ्जनम्॥

**अउ19.78**
मरिचवरलवणभागो भागौ द्वौ कणसमुद्रफेनाभ्याम्।
सौवीरभागनवकं चित्रायां चूर्णितं कफामयजित्॥

**अउ19.79**
मरिचामलकजलोद्भवतुत्थाञ्जनताप्यधातुभिः क्रमवृद्धैः।
षण्माक्षिक इति योगस्तिमिरार्मक्लेदकाचकण्डूघ्नः॥

**अउ19.80**
पिप्पलीं सतगरोत्पलपत्रा वर्तयेत् समधुकां सहरिद्रां।
एतया सततमञ्जयितव्यं यः सुपर्णसममिच्छति चक्षुः॥
॥इति एकोनविंशोऽध्यायः॥

अथ विंशोऽध्यायः।

**अउ20.1**
अथातः अक्षिपाकपिल्लप्रतिषेधं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ20.2**
शुष्काक्षिपाके वाताभिष्यन्दविहितं सर्पिः पिबेत्।
कुलीररसक्षीरसिद्धं वा॥

**अउ20.3**
दार्वीप्रपौण्डरीकयोः क्वाथ आश्च्योतनमक्षिपाकघ्नम्।
मञ्जिष्ठामधुककालानुसारीसारिवालोध्रलाक्षाप्रपौण्डरीकाणामक्षिपाकरक्तराजीघ्नम्।
मृद्वीकाचन्दनकल्कस्तण्डुलाम्बुपरिस्रुतो मधुमानश्रुदाहहरः।
लोध्रकोरण्डकपुष्पक्वाथो वेदनाहरः॥

**अउ20.4**
अणुतैलं नस्यम्।
सारिवाविदारीबलामधुकोत्पलद्राक्षाटरूषकजीवकचन्दनैर्जाङ्गलरसक्षीरोपेतं तैलं साधितं नावनात् सर्वोर्ध्वजत्रुजान् गदान् वातपित्तोत्तरान् निहन्ति॥

**अउ20.5**
स्निग्धाश्चात्र तर्पणपुटपाकाः।
वातपित्तान्यतरोद्रेकतश्च यथास्वमभिष्यन्दविधिः॥

**अउ20.6**
आदर्शमण्डले घृताक्तकेशान् घृष्ट्वान्तर्धूमं दहेत् सा मषी घृतपिष्टायसभाजनस्थिताक्षिपाकमञ्जना दपहरति॥

**अउ20.7**
मञ्जिष्ठाफलत्रिककटङ्कटेरीनिष्क्वाथे लोहस्रोतोञ्जनचूर्णमापिण्डीभावात् पचेत्।
एतच्चूर्णाञ्जनमभयं दाहोषारागाश्रुहरम्॥

**अउ20.8**
ताम्ररजस्सैर्यकपुष्पपुण्ड्राह्वमधुककालानुसारीसारिवाः छागेन पयसा पिष्टाः पिण्डाञ्जनम्॥

**अउ20.9**
आनूषवसा शुण्ठीसैन्धवचूर्णान्विता स्नेहाञ्जनम्।
एवमप्यशान्तौ मधुकसिद्धः शताह्वाचूर्णयुक्तो घृतमण्डस्तथा पयो वा बस्तिः॥

असउ20.10। सशोफाल्पशोफयोस्तु स्निग्धस्विन्नस्यानु सिराविध्येत्॥

**अउ20.11**
द्राक्षाभयाक्वाथस्त्रिवृत्कल्कवान् सघृतो विरेकः।
विरिक्तस्य यथादोषोदयमास्थापनम्॥

**अउ20.12**
ततः पिण्डस्विन्नशिरसः सर्षपतैलेन सैन्धवयुतेन वा सर्पिषा फणिज्जकयुक्तेन वा अणुतैलेन शिरोविरेकः।
विरिक्तशिरसोऽनुवासनं क्षीरसर्पिषा धूमपानं च॥

**अउ20.13**
शिरोनेत्रं चास्य सुनिषण्णकपतूरैरण्डपत्रैः क्षीराम्बुस्विन्नैः संस्वेदयेत्॥

**अउ20.14**
घृतभृष्टं लोध्रचूर्णं सूक्ष्मवासस्थमुष्णोदकविमृदितमाश्च्योतनम्।
शुष्काक्षिपाकोक्तं च वेदनाघ्नम्॥

**अउ20.15**
एवमशान्तवेदनं सन्धावैरुपक्रमेत्॥

**अउ20.16**
शशशिरःकपालं सैन्धवं कांस्ये स्तन्यघृष्टं सन्धावो वेदनाघ्नः।
तद्वत्ताम्रं च लोहे गोमूत्रघृष्टं घृतधूपितम्॥

**अउ20.17**
शिग्रुपल्लवरसश्च ताम्रघृष्टो घृतधूपितः।
शङ्खं ताम्रे स्तन्येन घृष्टं घृताभ्यक्तयवशमीपत्रधूपितं घर्षवेदनाघ्नम्॥

**अउ20.18**
उदुम्बरफलं लोहे स्तन्यघृष्टं घृताभ्यक्तशमीपत्रधूपितं शूलरागाश्रुघर्षघ्नम्।
दधिसरः पिप्पलीसैन्धवयुक्तस्ताम्रे घृष्टश्शोफघर्षाश्रुवेदनाघ्नः॥

**अउ20.19**
मृत्कपालं कांस्ये तिलोदकघृष्टं घृताक्तनिम्बपत्रधूपितं शोफकण्डूघर्षाश्रुशूलरागघ्नम्॥

**अउ20.20**
सन्धावाञ्जितं चाक्षि स्तन्येनानुसिञ्चेत्।
त्रिःपरं च तैर्नाञ्जयेत्।
अथाञ्जनानि॥

**अउ20.21**
मधुकबृहतीत्वक्ताम्ररजांस्यजाक्षीरपिष्टानि शम्यामलकपत्रैर्घृताप्लुतैरनेकशो धूपितानि पिण्डाञ्जनं शोफवेदनाघ्नम्॥

**अउ20.22**
तालीसपत्रपिप्पलीलोहरजोञ्जनकासीसतगरजातीमुकुलसैन्धवैर्गोमूत्रपिष्टैस्ताम्रमालिप्तं सप्तरात्रं स्थापयित्वा पुनस्तद्वदेवपिष्टैर्गुटिकाः कार्यास्ताः स्तन्यघृष्टाः स्तम्भश्वयथुहर्षघर्षाश्रुकण्डूघ्न्यः॥

**अउ20.23**
अबद्धास्थिसहकारमांसं विगतत्वचं समताम्रचूर्णमीषत् सैन्धवोपेतं गव्येन दध्ना पिष्ट्वा ताम्रमालेपयेत्।
शुष्कं शुष्कं तथैव च पिष्ट्वा पुनर्लेपयेत्।

एतत् सप्तभिः सप्ताहैः पिण्डाञ्जनं कृतं सर्वाक्षिपाकाश्रुघर्षशोफरागवर्त्मोपचयघ्नम्।
अश्मन्तकाम्लवेतसपरूषककोलदाडिमैः कृता रसक्रिया सशोफाल्पशोफपूयालसान् नाशयति।
इत्थमपि शोफानुवृत्तौ पुनरस्रावसेकः शिरोविरेकश्च॥

**अउ20.24**
अम्लोषितं पित्ताभिष्यन्दवदुपाचरेत्।
पिल्लसाधनं चेक्षेत॥

**अउ20.25**
पित्तकफरक्तनिचयोत्क्लिष्टवर्त्मपोथकीबिसाख्यकुकूणकपक्ष्मोपरोधपूयालसशुष्काक्षिपाकाल्पशोफाम्लोषिता वातवर्ज्याश्चस्यन्दाधिमन्था इत्यष्टादशदीर्घकालानुबन्धिनो रोगाः पिल्लसंज्ञाः॥

**अउ20.26**
एषां क्रिया यथास्वमुपदिष्टैव।
पुनश्च पिल्लीभूतानां सामान्येनोपदिश्यते॥

**अउ20.27**
अथ पिल्लाक्षिरोगिणं स्नेहयित्वा वामयेत्।
कृतक्रमस्य सिराव्यधस्ततो विरेकः।
कृतविरेकस्य वर्त्मनी लिखेत्।
सकृल्लेखनादशुद्धौ पुनर्लेखयेत् जलौकोभिश्च ग्राहयेत्॥

**अउ20.28**
प्रियङ्गुलोध्रपद्मकेसरचन्दनमधुककल्केन समाक्षिकेण बिडालकः।
तुवरिकाफलत्रिकरोचनाक्वाथेन मधुमता सायं प्रातः सदा प्रक्षालनमञ्जनान्ते च कषायवृक्षपल्लवकषायेण॥

**अउ20.29**
तैरेव च पत्रैरुष्णाप्रियतायामन्तरान्तरा स्वेदः॥

**अउ20.30**
तुत्थकपलं विंशतिश्च श्वेतमरिचानि धान्याम्ल पिष्टानि तत्पलैस्त्रिंशता ताम्रपात्रे समालोडितानि बहुवर्णामपि पिल्लानां परममाश्च्योतनम्॥

**अउ20.31**
अञ्जनं चास्याम्रधातकीपुष्पतिलपर्णीकल्केन च वर्तिः हरीतक्याढकीश्चाष्टगुणेम्भास्यष्टभागावशेषं क्वाथयेत् पुनश्च परिस्राव्यादर्वीप्रलेपाद्रसक्रियेयं पिल्लाक्षिरोपणी।
पलाशशाखास्वरसे क्वाथ्यमाने बृहत्युशीररजोदद्यात् तत्घनीभूतं शीतमञ्जनम्।
सुरसारसपिष्टैर्वा वचलदेवदारुभिः।
गोपित्तपिष्टाभ्यां वा व्योषरसाञ्जनाभ्याम्॥

**अउ20.32**
हरितालसौवीरकाञ्जनसमांशं वा ताम्रचूर्णमञ्जनम्।
परिपेलवकासीसहरिद्राद्वयसर्षपप्रियङ्गुतगरपिप्पलीकल्केन ताम्रभाजनमन्तर्लेपयित्वा सौवीरककुम्भेधोमुखं सप्ताहं वासयेत् ततो गुटिकाश्चूर्णं वा कुर्यात्॥

**अउ20.33**
तुत्थगैरिकचूर्णं छगलीपयःपिष्टं गुटिका प्रत्यञ्जनम्।
चूर्ण एव वा दिव्योदकभावितः।
स एव वा तदाप्लुतो नेत्राश्च्योतनमिति।
भवति चात्र॥

**अउ20.34**
वर्त्मावलेखं बहुशस्तद्वच्छोणितमोक्षणम्।
पुनः पुनर्विरेकं च पिल्लरोगातुरो भजेत्॥

**अउ20.35**
पूयालसेत्वशान्तेन्ते दाहः सूक्ष्मशलाकया॥

**अउ20.36**
चतुर्नवतिरित्यक्ष्णोर्हेतुलक्षणसाधनैः।
परस्परमसङ्कीर्णाःकात्स्न्र्येन गदिता गदाः॥

**अउ20.37**
सर्वदा च निषेवेत स्वस्थोपि नयनप्रियः।
पुराणयवगोधूमशालिषष्टिककोद्रवान्॥

**अउ20.38**
मुद्गादीन्कफपित्तघ्नान् भूरिसर्पिःपरिप्लुतान्।
शाकं चैवंविधं मांसं जाङ्गलं दाडिमं सिताम्॥

**अउ20.39**
सैन्धवं त्रिफलां द्राक्षां वारि पाने च नाभसम्।
आतपत्रं पदत्राणं विधिवद्दोषशोधनम्॥

**अउ20.40**
वर्जयेद्वेगसंरोधमजीर्णाध्यशनानि च।
क्रोधशोकदिवास्वप्नरात्रिजागरणातपान्।
विदाहविष्टम्भकरं यच्चेहाहारभेषजम्॥

**अउ20.41**
द्वे पादमध्ये पृथुसन्निवेशे सिरे गते ते बहुधा च नेत्रे।
ताम्रङ्क्षणोद्वर्तनलेपनादीन् पादप्रयुक्तान् नयनं नयन्ति॥

**अउ20.42**
मलोष्णसङ्घट्टनपीडनाद्यैस्ता दूष्यन्ते नयनानि दुष्टाः।
भजेत् सदा दृष्टिहितानि तस्मादुपानदभ्यञ्जनधावनानि॥

**॥इति विंशोऽध्यायः॥**

# अष्टाङ्गसंग्रहः उत्तरस्थानम् अध्याय २१-२५

https://sa.wikisource.org/s/9zy

**अष्टाङ्गसंग्रहः**

अथ एकविंशोऽध्यायः।

**अउ21.1**
अथातः कर्णरोगविज्ञानीयं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ21.2**
प्रतिश्यायजलक्रीडाकर्णकण्डूयनैर्मरुत्।
मिथ्यायोगेन शब्दस्य कुपितोन्यैश्च कोपनैः॥

**अउ21.3**
प्राप्य श्रोत्रसिराः कुर्याच्छूलं स्रोतसि वेगवत्।
अर्धावभेदकं स्तम्भं शिशिरानभिनन्दनम्॥

**अउ21.4**
चिराच्च पाकः पक्वं तु लसीकामल्पशः स्रवेत्।
श्रोत्रं शून्यमकस्माच्च स्यात् सञ्चारविचारवत्॥

**अउ21.5**
शूलं पित्तात् सदाहोषा शीतेच्छाश्वथथुज्वरम्।
आशुपाकं प्रपक्वं च सपीतलसिकास्रुति।
सा लसीकास्पृशोद्यद्यत्तत्पाकमुपैति च॥

**अउ21.6**
कफाच्छिरोहनुग्रीवागौरवं मन्दता रुजः।
कण्डूःश्वयथुरुष्णेच्छा पाकाच्छ्वेतघनस्रुतिः॥

**अउ21.7**
करोति श्रवणे शूलमभिघातादिदूषितम्।
रक्तं पित्तसमानार्ति किञ्चिद्वाधिकलक्षणम्॥

**अउ21.8**
शूलं समुदितैर्दोषैः सशोफज्वरतीव्ररुक्।
पर्यायादुष्णशीतेच्छं जायते श्रुतिजाड्यवत्।
पक्वं सितासितारक्तघनपूयप्रवाहि च॥

**अउ21.9**
शब्दवाहिसिरासंस्थे शृणोति पवने मुहुः।
नादानकस्माद्विविधान् कर्णनादं वदन्ति तम्॥

**अउ21.10**
श्लेष्मणानुगतो वायुर्नादो वा समुपेक्षितः।
उच्चैः कृच्छ्राच्छ्रुतिं कुर्यात् बधिरत्वं क्रमेण च॥

**अउ21.11**
वोतन शोषितः श्लेष्मा स्रोतो लिम्पेत्ततो भवेत्।
रुग् गौरवं पिधानं च स प्रतीनाहसंज्ञितः॥

**अउ21.12**
कण्डूशोफौ कफाच्छ्रोत्रे स्थिरौ तत्संज्ञया स्मृतौ॥

**अउ21.13**
कफो विदग्धः पित्तेन सरुजं नीरुजं तथा।
घनपूतिबहुक्लेदं कुरुते पूतिकर्णकम्॥

**अउ21.14**
वातादिदूषितं श्रोत्रं मांसासृक्लेदजा रुजम्।
खादन्तो जन्तवः कुर्युस्तीव्रां स कृमिकर्णकः॥

**अउ21.15**
श्रोत्रकण्डूयनाज्जाते क्षते स्यात् पूर्वलक्षणः।
विद्रधिः पूर्ववच्चान्यः शोफोर्शोर्बुदमीरितम्॥

**अउ21.16**
तेषु रुक्पूतिकर्णत्वं बधिरत्वं क्रमेण च॥

**अउ21.17**
गर्भेऽनिलात् सङ्कुचिता शष्कुली कूचिकर्णकः॥

**अउ21.18**
एको नीरुगनेको वा गर्भे मांसाङ्कुरः स्थिरः।
पिप्पलीपिप्पलीमानः सन्निपाताद्विदारिका॥

**अउ21.19**
सर्वणः सरुजः स्तब्धः श्वयथुः स उपेक्षितः॥

**अउ21.20**
कटुतैलनिभं पक्वः स्रवेत् कृच्छ्रेण रोहति।
सङ्कोचयति रूढा च सा ध्रुवं कर्णशष्कुलीम्॥

**अउ21.21**
सिरास्थः कुरुते वायुः पालीशोषं तदाह्वयम्॥

**अउ21.22**
कृशा दृढा च तन्त्रीवत् पाली वातेन तन्त्रिका॥

**अउ21.23**
सुकुमारे चिरोत्सर्गात् सहसैव प्रवर्धिते।
कर्णे शोफः सरुक्पाल्यामरुणः परिपोटवान्॥

**अउ21.24**
परिपोटश्चपवनात् उत्पातः पित्तशोणितात्॥

**अउ21.25**
गुर्वाभरणभारायैः श्यावो रुग्दाहपाकवान्।
श्वयथुः स्फोटपिटकारागोषाक्लेदसंयुतः॥

**अउ21.26**
पाल्यां शोफोनिलकफात् सर्वतो निर्व्यथः स्थिरः।
स्तब्धः सवर्णः कण्डूमानुन्मन्थो गल्लिरश्च सः॥

**अउ21.27**
दुर्विद्धे वर्धिते कर्णे सकण्डूदाहपाकरुक्।
श्वयथुः सन्निपातोत्थः स नाम्ना दुःखवर्धनः॥

**अउ21.28**
कफासृक्कृमिजाः सूक्ष्माः सकण्डूक्लेदवेदनाः।
लिह्याख्याः पिटकास्ता हि लिह्युः पालीमुपेक्षिताः॥

**अउ21.29**
पिप्पली सर्वजं शूलं विदारी कूचिकर्णकः।
एषामसाध्या याप्यैका तन्त्रिकान्यांस्तु साधयेत्॥

**अउ21.30**
पञ्चविंशतिरित्युक्ताः कर्णरोगा विभागतः॥
॥एकविंशोऽध्यायः॥

द्वाविंशोऽध्यायः।
कर्णरोगप्रतिषेधः

**अउ22.1**
अथातः कर्णरोगमप्रतिषेधं नामाध्यायं व्याख्यास्यामः।
इति हस्माहुरात्रेयादयोमहर्षयः॥

**अउ22.2**
वातजे कर्णशूले रात्रौ रात्रौ रसभोजनोत्तरं वातहरद्रव्यसिद्धं सर्पिः पिबोन्निरन्नो वा पयोनुपानम्॥

**अउ22.3**
ततो दशमूलसिद्धे छागे पयसि गोशृङ्गनिहितेऽग्निवर्णान् पाषाणान् सन्दंशेन गृहीत्वावपेत्।
तेनोष्मणा नाडीस्वेदेन च स्वभ्यक्तं स्वेदयेत्।
बिल्वयवकोलकुलत्थमाषार्कशिग्रुपत्रैर्वा सानूपमांसैः क्वथितैः॥

**अउ22.4**
स्विन्नं च पूरयेत् कुष्ठरास्नामधुकवंशावलेखशुण्ठीशिखिचन्द्रकमाषसरलपयोविपक्वेन तैलेन।
जीवकमधुककुष्ठमण्डूकीदेवदारुमहौषधकल्काष्टगुणक्षीरिसिद्धेन वा॥

**अउ22.5**
मयूरनालकुलत्थागरुमाषदेवदारुकल्कक्षारशुक्ताम्लसाधिताभ्यां वा तैलवसाभ्याम्।
मधुकक्षीरकाकोलीमाषशतावरीकल्कसर्वगन्धोदकक्षीरविपक्वया वा वराहवसया॥

**अउ22.6**
रास्नामधुककाकोलीदेवदारुकल्कपयोविपाचितया वा शिंशुमारवसया।
मांसीकुष्ठमेदासरलसुरभिमधुकक्षीरविपक्वया वा गोधावसया॥

**अउ22.7**
जीवकशताह्वामधुकमांसीक्षीरसिद्धां कुक्कुटमयूरवसां कर्णपूरणनस्याभ्यङ्गेषु विदध्यात्।
मधुकक्षीरकाकोलीकल्केन चतुर्गुणशिग्रुह्रस्वपञ्चमूलकैरण्डपत्ररसमष्टगुणक्षीरसाधितं तैलं वा॥

**अउ22.8**
घृततैलवसाभ्यक्तानि तरुणान्यश्वत्थपत्राणि पुटपाक्स्विन्नानि प्रपीड्य तद्रसेन कर्णं पूरयेत्॥

**अउ22.9**
तद्वच्च तैललवणाभ्यक्तान्यर्कोरुपूगमूलकारलुकबिल्वमहावृक्षान्यतमपत्राणि॥

**अउ22.10**
महापञ्चमूलसरलागरुदेवदार्व्यन्यतमकाष्ठमष्टादशाङ्गुलं त्रिभागे क्षौमेणावेष्ट्य तैलेन सिक्त्वाग्रे प्रदीपयेत्।
ततो दह्यमानाद्यः स्नेहः पतति स सद्यः कर्णरुजमपहरति॥

**अउ22.11**
मधूच्छिष्टकैडर्यमधुशिग्रुफलवचायवनलदैलागुग्गुलुभिः श्लक्ष्णपिष्टैः क्षौमवस्त्रं धूमवर्त्तिप्रमाणपरिणाहं लेपयेततः सूत्रेणावेष्ट्य डुण्डुकनालेन धूमं पातुं दद्यात्॥

**अउ22.12**
डुण्डुकनालमेववानेन कल्केनाभ्यज्य विशोषयित्वा धूमं विदध्यात्॥

**अउ22.13**
श्रेयसीदेवदारुकाकोलीकुष्ठनिचुलबीजैः क्षीरपिष्टैस्तिलयुतैः कर्णं बहिर्लेपयेत्।
सर्वधान्यस्नेहगोक्षीरसिद्धामुत्कारिकामेरण्डपत्रावच्छादिते कर्णे स्वेदार्थं प्रणयेत्।
पुनः पुनश्च नाडीस्वेदान् पिण्डस्वेदांश्च।
वातव्याधिप्रतिश्यायार्दिताविधानं च सनिरूहानुवासनं कुर्यात्॥

**अउ22.14**
परिहार्याणि च परिहरेद्विशेषतः प्रवातं शीताम्बुपानं शिरःस्नानं च॥

**अउ22.15**
पित्तजे तु शूले प्रातः शर्करायुतं सर्पिः पाययेत्।
ततः स्निग्धं विरेचयेत्।
द्राक्षामधुकसिद्धं स्तन्यं कर्णपूरणं प्रयुञ्जीत।
माक्षिकं वा।
मधुकपद्मककल्कस्तन्य्सिद्धं वा सर्पिः।
सितामधुकखर्जूरमृद्वीकाभिर्वा सक्षीरेक्षुरसं प्रियालकतैलं पाचितमभ्यङ्गनस्यकर्णपूरणैः शूलदाहघ्नम्॥

**अउ22.16**
मधुककुडवं षोडशगुणेनाम्भसाष्टावशेषं साधयित्वा तेन तैलार्द्धकुडवमष्टगुणक्षीरं यष्टीसधुकोशीरसारिवाकाकोलीजीवकानन्तामृणालमञ्जिष्ठालोध्रचन्दनबिसगर्भं पचेत्।
तच्च पूर्ववत् प्रणयेत्॥

**अउ22.17**
एषामेव च कल्केन सघृतेन कर्ण परितो लेपयेत्।
स्वेदयेच्च।
तथा क्षीरसर्पिर्नस्यं शिरोभ्यङ्गश्च।
एवमप्यनुपशमे तु पुनर्विरेकः॥

**अउ22.18**
कफजे पिप्पलीविपक्वं घृतमथवा सक्षौद्रं पाययित्वा तं वामयेत्।
ततस्तीक्ष्णं धूमं पाययेत्॥

**अउ22.19**
कर्णं चास्य पूरयेत् सरलदेवदारुहिंस्रापटोलपत्रसुरससिद्धेन तैलेन।
देवदारुपिप्पलीमालतीपत्रक्वाथहरिद्राकुष्ठत्रिफलैलाक्वाथकल्कसिद्धेन वा।
रसाञ्जनमार्कववैजयन्तीशिग्रुलशुनार्द्रकमूलकदलीनां वा पृथक् समस्तानां वा रसेन मधुना वा रक्षोघ्नतैलेन वा।
तथा शूलशोफगौरवाणि प्रशाम्यन्ति॥

अस22.20। धान्याम्लक्वथितदशमूलबाष्पेण नाडीस्वेदमाचरेत्।
स्विन्नं कुशाम्रत्रिवृन्नलदशुण्ठीमुस्तसाधितेन तैलेन पूरयेत्।
कफघ्नांश्च गण्डूषान् धारयेत्॥

**अउ22.21**
रक्तजे पैत्तिकवत् सिद्धिः सिराव्यधश्च॥

**अउ22.22**
पक्वेषु कर्णशूलेषु पूयप्रवाहिषु यथास्वं धूमनस्यगण्डूषवमनान्याचरेत्॥

**अउ22.23**
उपदिग्धं च स्रोतः सायंप्रातः पिचुवर्तिभिः प्रमृज्य यवागरुमदनैः सघृतैर्गुग्गुलुना वा धूपयित्वा मधुना पूरयेत्॥

**अउ22.24**
पलाशधवतिनिशककुभसर्जत्वक्क्वाथ रसक्रियया स्वभ्यक्तां पिचुवर्तिं स्रोतसि दद्यात्।
बदरीसल्लकीजम्बूधातकीवटप्लक्षोदुम्बरक्वाथेनैवमेव च रसक्रियया।
हरिद्राधातकीत्रिफलाजम्बूसल्लकीकिंशुकक्वाथेन च।
तथा सौराष्ट्रिकापद्मकधातकीसमङ्गाश्वत्थधवलोध्ररसाञ्जनक्वाथेन॥

**अउ22.25**
एभिरेवौषधैः सूक्ष्मचूर्णीकृतैः स्रोतसोऽवकिरणमेवं क्लेदशूलगौरवाणि शाम्यन्ति।
एषामेव च कषायेण सक्षौद्रेण कपित्थस्वरसेन वा प्रक्षालनम्।
तथा सुरसादिवर्गः प्रक्षालनावचूर्णनयोः प्रयोज्यः॥

**अउ22.26**
नादबाधिर्ययोर्वातशूलोक्तः सर्वो विधिः।
श्लेष्मानुबन्धे तु प्राक्श्लेष्माणमपहरेद्वमननावनाभ्यां तीक्ष्णधूमैश्च॥

**अउ22.27**
बाधिर्यं च बालवृद्धक्षीणकासशोषिणां चिरोत्थितं च वर्जयेत्॥

**अउ22.28**
इतरत्तु स्नेहस्वेदनस्यशिरोबस्तिबस्तिकर्मप्रभृतिभिर्दोषानुबन्धमवेक्ष्य साधयेत्॥

**अउ22.29**
तत्र प्रागेव पुराणसर्पिषा वा वातहरतैलेन वा स्निग्धं स्नेहेनैव विरेचयेत्।
कृतसंसर्जनस्य पुनः स्निग्धस्य शोणितमपहरेत्।
कर्णासन्नं जलौकोभिस्ततो बस्तिकर्ममूर्धतैलनस्यधूमान् कर्णपूरणं च शीलयेत्॥

**अउ22.30**
तरुणबिल्वफलानि गोमूत्रेण क्वाथयेत्तेन क्वाथेन सितामधुकबीजकबीजकल्केन च पयोयुक्तं तैलं पाचयेत्।
तत्तैलमुष्णं शीते बिल्वक्वाथे प्रक्षिप्य मन्थयेत् यावत् पिण्डीभूतमुद्धृत्य चैतत्पुनरन्यत्र बिल्वोदके मन्थयेत्।
ततश्चोद्धृत्याष्टगुणे पयसि मधुकगन्धचन्दनगर्भं साधितमाशु कर्णपूरणात् बाधिर्यं नाशयति॥

**अउ22.31**
तिलान् नवप्रलूनान् वस्त्रबद्धान् वहन्तीष्वप्सु रात्रिमुषितान् दिवा शोषयेत् पञ्चरात्रम्।
एवं गते पञ्चरात्रे मधुयष्टिकाक्षीरकाकोलीमहापञ्चमूलदेवदारुशताह्वाजीवकक्वथिते पयसि पञ्चाहमेवं वासयेच्छोषयेच्च।
ततोनेनैव क्षीरेणैषामेव च द्रव्याणां चूर्णमात्रया युक्तान् प्रपीडयेत्।
तत्तैलं नीलोत्पलानन्ताचन्दनागरुमधुकजीवककाकोलीसुनिषण्णकमूलकल्कैरष्टगुणेन पयसा पचेत्।
एतन्नस्ये कर्णपूरणे शिरसि चाभ्यञ्जने प्रणीतमाशु शूलनादबाधिर्याणि सर्ववातविकारांश्च पित्तानुबन्धानपोहति भग्नास्थिसन्धानजननं च॥

**अउ22.32**
शुष्कमूलकभस्मक्षारद्वयहिङ्गुशुण्ठीमिसिवचाकुष्ठमरदारुसौभाञ्जनभूर्जग्रन्थिमुस्तालवणत्रयैः सोद्भिदैस्तैलं शुक्तकदलीबीजपूरकरससंयुक्तं सिद्धं शूलनादबाधिर्यकण्डूशोफक्लेदोपदेहकृमिपूतिकर्णेषु॥

**अउ22.33**
अथ कर्णौ सुस्राविव भवतस्तत्समीपे यथोक्तां सिरां मोक्षयेत्।
सश्वयथुपरिस्रावे मन्दश्रुतेर्वमनमाचरेत्॥

**अउ22.34**
प्रतीनाहे स्नेहस्वेदक्लिन्नं कर्णं कर्णशोधनेन विशोध्य तैलस्य पूरयेन्मातुलुङ्गरसस्य वा सशुक्तक्षौद्रसैन्धवस्य॥

**अउ22.35**
शोध्यमाने वेदना रक्तागमो वा यदि भवेत्ततो घृतमण्डेन पूरयेन्नस्यं च शीलयेत्।
मलपूर्ण्येष एव विधिः॥

**अउ22.36**
कण्ड्वां तीक्ष्णनस्यधूमादीन् कफघ्नान्वितरेत्।
रूक्षतिक्तकटुश्चाहारः।
शोफेप्येवमेव विधिः।
कटुतीक्ष्णोष्णाश्च प्रदेहपरिषेकाः॥

**अउ22.37**
पूतिकर्णे कर्णस्रावोक्तो विधिः कृमिकर्णे च।
विशेषतश्चात्र कृमिघ्नः।
तथा सर्षपतैलेन पूरणम्।
हरितालचूर्णवता गोमूत्रेण वा।
वार्ताकबीजेन धूपनम्॥

**अउ22.38**
कर्णविद्रधिं वमनपूर्वं विद्रधिवदामं पक्वं च चिकित्सेत्।
क्षतविद्रधिं पित्तकर्णशूलवदर्शांसि नासार्शोवदर्बुदानि च॥

**अउ22.39**
विदारिकामामां कर्णविद्रधिवद्यथादोषोदयं च साधयेत्॥

**अउ22.40**
पालीशोषे वातशूलवन्नस्यमालेपं स्वेदंच कुर्यात्।
स्विन्नमुद्वर्त्तयेत्तिलप्रियालबीजमधुकयवाश्वगन्धाकल्केन॥

**अउ22.41**
उद्वर्तितं च मधुकपयस्याशतपुष्पाश्वगन्धाकल्काष्टगुणवाजिगन्धाबृहत्यभीरुक्वाथक्षीरसाधितेन तैलेनाभ्यज्यात्।
शतावर्यश्वगन्धैरण्ड्Aपयस्याजीवकक्षीरसिद्धेन वा॥

**अउ22.42**
गोधाप्रतुदविष्किरानूपौदकमांसवसामज्जानं सर्पिस्सर्षपतैलं च यथालाभं सङ्गृह्यार्कालर्कबलातिबलानन्ताविदारिगन्धाजलशूकमधुरवर्गप्रतीवापं विपचेदयमभ्यङ्गः पाल्याः परं मांसजननः॥

**अउ22.43**
एवमपि तु या क्षीयते पाली तस्या यद्दुष्टं तच्छित्वा विधिवत् सन्धाय यथोक्तेन क्रमेणोपचरेत्॥

**अउ22.44**
तन्त्रिकामपि चैवमेव नस्याभ्यङ्गादिभिर्यापयेत्॥

**अउ22.45**
परिपोटकेप्ययमेव विधिः।
तथा मधुकखरमञ्जरीसैन्धवाश्वगन्धादेवदारुमूलकावल्गुजफलमूलमधूच्छिष्टैः सक्षीरैर्महास्नेहः सिद्धोभ्यङ्गः।
तिलमधुकप्रपौण्डरीकसिद्धार्थकघृतक्षीरकृतयोत्कारिकयोपनाहः॥

**अउ22.46**
उत्पाते जलौकोभिरपनीतरक्ते शीतैः प्रदेहः।
तिलमधुकसारिवोत्पललोध्रकदम्बबलाम्रजम्बूपल्लवैस्सधान्याम्लं तैलं साधितमभ्यङ्गः।
तथा क्षीरसर्पिर्विसर्पोक्तानि च घृतानि॥

**अउ22.47**
उन्मन्थे तीक्ष्णैः शिरोविरेकः।
तिलसर्षपलोध्रहरिद्राद्वयैरुद्वर्तितायाः कर्णपाल्यास्तालीसतमालैलाकट्फलरसाञ्जनैर्लेपः
तालपत्र्यश्वगन्धार्कसैन्धवावल्गुजबीजसुरसलाङ्गलिकाभिर्गोधाकुलीरवसायुक्तं तैलं विपक्वमभ्यञ्जनम्।
तैलमेव वा पटोलकटुरोहिणीरसाञ्जनीशरीषैः॥

**अउ22.48**
दुःखवर्द्धने जम्ब्वाम्राश्मन्तकपत्रक्वाथपरिषिक्तां कर्णपालीं तैलेनाभ्यज्य यष्टीमधुकहरिद्राप्रपौण्डरीकमञ्जिष्ठाचूर्णेनावचूर्णयेत्।
लाक्षाविडङ्गपक्वेन तैलेनाभ्यञ्जयेत्॥

**अउ22.49**
लेहिकापिटकासु कर्णपालीं बहुशो गामयापण्डस्विन्नामुरभ्रीमूत्रपिष्टैः कृमिघ्नैरालिम्पेत्।
कुटजकरञ्जेङ्गुदबीजारग्वधत्वग्भिर्वा।
एभिरेव च सर्वैस्समरिचनिम्बपत्रमधूच्छिष्टैस्सर्षपतैलं सिद्धं लेहिकाव्रणघ्नोऽभ्यङ्गः परिदहने जलजाभिरसृक् स्रावयेत्।
शीतैश्च प्रदिह्यात्॥

**अउ22.50**
सर्वेषु च पालीरोगेषु स्नेहस्वेदशोधनाभ्यङ्गप्रदेहनस्यास्रविस्रवणानि यथार्हं प्रयुञ्जीत।
प्रकोपकारणानि च परिहरेत्॥

**अउ22.51**
उत्पच्यमानायां तु पाल्यां सर्जरसापामार्गपटोलनिम्बनिचुलत्वग्भिरालेपः।
उत्पुटन्त्यां शिग्रुशम्याकपूतीकगोवराहपित्तगोधावसासर्पिर्भिः।
श्यावायां गौरीसुगन्धाश्यामानन्तातण्डुलीयकमूलैः।
कण्डूमत्यां पाठानन्तातार्क्ष्यशैलेयमाक्षिकैः।
दह्यमानायां क्षीरिवृक्षजीवनीयकल्कमधुघृतैः।
व्रणितायां क्षौद्रजीवनीयैः।
कृशायां गोधावराहवसाभिः।
ग्रथितायां ग्रन्थिं पाटयित्वा विलिख्य च कृष्णासैन्धवमधुभिः प्रतिसारयेत्।
स्नाववत्यां मधुमधुकमधूकमधुपर्णीभिर्लेपः।
एभिरेव च यथास्वं स्नेहानभ्यङ्गार्थं प्रकल्पयेत्॥

**अउ22.52**
अथ रोगतो बलाद्वा विच्छिन्नं कर्णमनुसन्दध्यात्॥

**अउ22.53**
समासतस्तु पञ्चदश कर्णसन्धयः प्रायो नामानुगतसंस्थानस्थानविशेषतया सम्भवन्ति॥

**अउ22.54**
तद्यथा।
पृथुलायतसमोभयपालीश्चक्रनेभिः॥

**अउ22.55**
वृत्तायतसमोभयपालिरुत्पलभेदकः॥

**अउ22.56**
अभ्यन्तरदीर्घपालिः कवाटः॥

**अउ22.57**
विपरीतोर्द्धकवाटः॥

**अउ22.58**
ह्रस्ववृत्तसमोभयपालिर्वल्लूरकः॥

**अउ22.59**
अणुस्थूलसमविषमपालिर्व्यायोजिमः॥

**अउ22.60**
बाह्यपालिर्गण्डाधारः॥

**अउ22.61**
अतोविपरीतस्त्वासङ्गिमः॥

**अउ22.62**
अपालिराहार्यः।
स एव मांसलपीठो निर्वेधिमः॥

**अउ22.63**
शुष्कशष्कुलिरुत्सन्नपालिः॥

**अउ22.64**
इतराल्पपालिः सङ्क्षिप्तः॥

**अउ22.65**
अनधिष्ठानपालिः पर्यन्तयोश्च क्षीणमांसो हीनः॥

**अउ22.66**
तनुविषमपालवाल्लः॥

**अउ22.67**
ग्रथितनिर्मांसस्तब्धसिरावृतसूक्ष्मपालिर्यष्टी॥

**अउ22.68**
निर्मांससङ्क्षिप्ताग्राशोणितपालिः काकौष्ठ इति॥

**अउ22.69**
एषामाद्या दश सिध्यन्ति।
न त्वितरे॥

**अउ22.70**
तत्र बाह्यायां पाल्यां दीर्घायामाभ्यन्तरः सन्धिः।
तथेतरायां बाह्यः।
समः समयोश्च॥

**अउ22.71**
अण्वादिविषमयोस्तु परस्परविपर्ययौ॥

**अउ22.72**
या त्वेकैव पाली स्थूला पृथ्वी स्थिरा च स्यात् तां द्विधा पाटयित्वोपरि छित्वा सन्दध्यात्॥

**अउ22.73**
गण्डोत्कृत्तेन वा सशोणितेन सानुबन्धेन मांसेन पालीं कल्पयेत्।
यस्य पालीद्वयमपि नास्ति तस्याप्येष एव विधिः।
अथवा समानवयोदोषादेः सञ्चार्य कर्णपीठं समं मध्य निवेश्य वर्द्धयेत्॥

**अउ22.74**
सन्धानविधिः पुनरातुरे ग्रथितकेशान्ते बन्धनमुपधारिते छेद्यभेद्यलेख्यैरुपपन्नैरुपपाद्य कर्णं शोणितमवेक्षेत दुष्टमदुष्टं वेति॥

**अउ22.75**
ततो वातदुष्टे धान्याम्लोष्णोदकाभ्यां पित्तदुष्टे क्षीरशीतोदकाभ्यां श्लेष्मदुष्टे वारुणीसलिलाभ्यां प्रक्षाल्य पुनश्चावलिख्यानुन्नतमहीनविषमं सन्धिं निवेश्य ततो मधुघृताभ्यामभ्यज्य पिचुप्लोतयोरन्यतरेणावगुण्ठ्य सूत्रेण नातिगाढमशिथिलं च बध्वा सिराव्यथोक्तेन कपालस्य वा चूर्णेनावकीर्याचारिकमुपदिशेत्॥

**अउ22.76**
सन्धिमश्लिष्यन्तं क्षौमसूत्रेण सीव्येत्।
अतिक्षीणपालिकं वा शोणिताक्तेन पिचुना वेष्टयेत्।
व्रणवच्चैनमुपाचरेत्।
त्र्यहाच्चतुरहाद्वा सलिलेन परिषिच्य पिचुं सूत्रं चापनयेत्।
न चाशुद्धरक्तमतिप्रवृत्तरक्तं क्षीणरक्तं वा कर्णं सन्दध्यात्॥

**अउ22.77**
तस्य हि स्वयमपि सन्धिर्विश्लिष्यते आध्मायते श्यावतामुपैति पच्यते शुष्यति चिराद्रोहति रूढोप्याभरणं न क्षमते।
सशोफकण्डूसन्तापो ग्रन्थिमांश्च भवति।
तत्र च यथास्वं प्रतिकुर्वीत।
दुष्टरक्ते च रक्तमवसेचयेत्।
क्षीणरक्तं स्नेहपाननस्यमांसरसाशनाभ्यङ्गैर्बृहयेत्॥

**अउ22.78**
सर्वत्र चैवमपि सोपद्रवसन्धौ सन्धिं विमुच्य पूर्वापचारोपस्थापितस्मृतिः सम्यक्सन्दधीतेति।
भवति चात्र॥

**अउ22.79**
न कर्णे शोफरागादियुक्ते सन्धानमाचरेत्।
न घस्मरस्य नात्युष्णे नाविशुद्धतनोरपि॥

**अउ22.80**
सुरूढं जातरोमाणं श्लिष्टसन्धिं समं स्थिरम्।
सुवर्ष्माणमरोगं च शनैः कर्णं विवर्द्धयेत्॥

**अउ22.81**
अन्यथा दाहरुक्तोदशोफाः स्युस्तत्र कारयेत्।
शीतान्प्रदेहसेकादीन् शुद्धिं च क्लेदनाशिनीम्॥

**अउ22.82**
स्नेहावानूपजौ तैलं सर्पिर्लाक्षारसं समम्।
साधयेन्मधुरस्कन्धहयगन्धामयूरकैः॥

**अउ22.83**
पिष्टैर्दशगुणक्षीरे तत्परं कर्णवर्द्धनम्।
कठिनाः सरुजः क्षामाः पाल्यः स्वेदितमर्द्दिताः।
अभ्यक्तास्तेन जायन्ते मृदवो नीरुजः स्थिराः॥

**अउ22.84**
बृहत्यौ कच्छुरां वारिशूकमर्कजटां घृतम्।
माक्षिकं शङ्खिनीं तैलं सप्ताहं ताम्रभाजने।
थापयेत् तत्परं कर्णमालेपात् पोषयेत् कृशम्॥

**अउ22.85**
चर्मचटिका जलौको हयबन्धा शबरकन्दकं तुल्यम्।
माहिषनवनीतयुतं कपित्थगं कर्णवर्धनं साक्षात्।
कुर्याच्चाभ्यञ्जनालेपान् पलिशोषे प्रकीर्तितान्॥

**अउ22.86**
अथ कुर्याद्वयस्थस्य च्छिन्नां शुद्धस्य नासिकाम्।
छिन्द्यान्नासासमं पत्रं ततुल्यं च कपोलतः॥

**अउ22.87**
त्वङ्मांसं नासिकासन्ने रक्षस्तत्तनुतां नयेत्।
सीव्येत् गण्डं ततः सूच्या सीवन्या पिचुयुक्तया॥

**अउ22.88**
नासाच्छेदेथ लिखिते परिवर्त्योपरि त्वचम्।
कपोलवध्रं सन्दध्यात् सीव्येन्नासां च यत्नतः॥

**अउ22.89**
नाडीभ्यामुत्क्षिपेदन्तः सुखोच्छ्वासप्रवृत्तये।
आमतैलेन सिक्त्वानु पतङ्गमधुकाञ्जनैः॥

**अउ22.90**
शोणितस्थापनैश्चान्यैः सुश्लक्ष्णैरवचूर्णयेत्।
ततो मधुघृताभ्यक्तं बध्वाचारिकमादिशेत्॥

**अउ22.91**
ज्ञात्वावस्थान्तरं कुर्यात् सद्योव्रणविधिं ततः।
छिन्द्याद्रूढेधिकं मांसं नासोपान्ताच्च चर्म तत्।
सीव्येत्ततश्च सुश्लक्ष्णं हीनं संवर्धयेत् पुनः॥

**अउ22.92**
निवेशिते यथान्यासं सद्यःच्छिन्नेप्ययं विधिः॥

**अउ22.93**
नाडीयोगाद्विनौष्ठस्य नासासन्धानवद्विधिः॥
इति द्वाविंशोऽध्यायः॥

अथ त्रयोविंशोऽध्यायः।

**अउ23.1**
अथातो नासारोगविज्ञानीयं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ23.2**
अवश्यायानिलरजोभाष्यातिस्वप्नजागरैः।
नीचात्युच्चोपधानेन पीतेनान्येन वारिणा॥

**अउ23.3**
अत्यम्बुपानरमणच्छर्दिबाष्पग्रहादिभिः।
क्रुद्धा वातोल्बणा दोषा नासायां स्त्यानतां गताः।
जनयन्ति प्रतिश्यायं वर्धमानं क्षयप्रदम्॥

**अउ23.4**
तत्र वातात् प्रतिश्याये मुखशोषो भृशं क्षवः।
घ्राणोपरोधनिस्तोददन्तशङ्खशिरोव्यथाः॥

**अउ23.5**
कीटका इव सर्पन्ति मन्यते परितो भ्रुवौ।
स्वरसादश्चिरात् पाकः शिशिराच्छकफस्रुतिः॥

**अउ23.6**
पित्तात्तृष्णाज्वरघ्राणापिटकासम्भवभ्रमाः।
नासाग्रपाको रूक्षोष्णताम्रपीतकफस्रुतिः॥

**अउ23.7**
कफात् कासोरुचिः श्वासो वमथुर्गात्रगौरवम्।
माधुर्यं वदने कण्डूः स्निग्धशुक्लकफस्रुतिः॥

**अउ23.8**
सर्वजो लक्षणैः सर्वैरकस्माद्वृद्धिशान्तिमान्॥

**अउ23.9**
दुष्टं नासासिराः प्राप्य प्रतिश्यायं करोत्यसृक्।
उरसः सुप्तता ताम्रनेत्रत्वं श्वासपूतिता।
कण्डूः श्रोत्राक्षिनासासु पित्तोक्तं चात्र लक्षणम्॥

**अउ23.10**
सर्व एव प्रतिश्याया दुष्टता यान्त्युपेक्षिताः।
यथोक्तोपद्रवाधिक्यात् स सर्वेन्द्रियतापनः॥

**अउ23.11**
साग्निसादज्वरश्वासकासोरःपार्श्ववेदनः।
कुप्यत्यकस्माद् बहुशो मुखदौर्गन्ध्यशोषकृत्॥

**अउ23.12**
नासिकाक्लेदसंशोषशुद्धिरोधकरो मुहुः।
पूयोपमासितारक्तग्रथितश्लेष्मसंस्रुतिः।
मूर्च्छन्ति चात्र कृमयो दीर्घस्निग्धसिताणवः॥

**अउ23.13**
पक्वलिङ्गानि तेष्वङ्गलाघवं क्षवथोः शमः।
श्लेष्मा सुचिक्कणः पीतो ज्ञानं च रसगन्धयोः॥

**अउ23.14**
तीक्ष्णाघ्राणोपयोगार्करश्मिसूत्रतृणादिभिः।
वातकोपिभिरन्यैर्वा नासिकातरुणास्थनि॥

**अउ23.15**
विघट्टितेऽनिलः क्रुद्धो रुद्धः शृङ्गाटकं व्रजम्।
निवृत्तः कुरुतेऽत्यर्थं क्षवथुं स भृशक्षवः॥

**अउ23.16**
शोषयन् नासिकास्रोतः कफं च कुरुतेऽनिलः।
शूकपूर्णाभनासात्वं कृच्छ्रादुच्छ्वसनं ततः।
स्मृतोऽसौ नासिकाशोषः नासानाहे तु जायते॥

**अउ23.17**
नद्धत्वमिव नासायाः श्लेष्मरुद्धेन वायुना।
निश्वासोच्छ्वाससंरोधात् स्रोतसी संवृते इव॥

**अउ23.18**
पचेन्नासापुटे पित्तं त्वङ्मांसं दाहशूलवत्।
स घ्राणपाकः स्रावस्तु तत्संज्ञः श्लेष्मसम्भवः॥

**अउ23.19**
अच्छो जलोपमोऽजस्रं विशेषान्निशि जायते॥

**अउ23.20**
कफः प्रवृद्धो नासायां रुध्वा स्रोतांस्यवीनसम्।
कुर्यात् सघुर्घुरश्वासं पीनसाधिकवेदनम्॥

**अउ23.21**
अवेरिव स्रवत्यस्य प्रक्लिन्ना तेन नासिका।
अजस्रं पिच्छिलं शीतं पक्वं सिङ्घाणकं घनम्॥

**अउ23.22**
रक्तेन नासा दग्धेव बाह्यान्तः स्पर्शनासहा।
भवेद्धूमोपमोच्छवासा सा दीप्तिर्दहतीव च॥

**अउ23.23**
तालुमूले मलैर्दुष्टे मारुतो मुखनासिकात्।
श्लेष्मा च पूतिर्निर्गच्छेत् पूतिनासं वदन्ति॥

**अउ23.24**
निचयादभिघाताद्वा पूयासृङ्नासिका स्रवेत्।
तत्पूयरक्तमाख्यातं शिरोदाहरुजाकरम्॥

**अउ23.25**
पित्तश्लेष्मावरुद्धोन्तर्नासायां शोषयेन्मरुत्।
कफं स शुष्कः पुटतां प्राप्नोति पुटकं तु तत्॥

**अउ23.26**
अर्शोर्बुदानि विभजेद्दोषलिङ्गैर्यथायथम्॥

**अउ23.27**
सर्वेषु कृच्छ्रोच्छ्वसनं पीनसं प्रततं क्षुतम्।
सानुनासिकवादित्वं पूतिनासः शिरोव्यथा।
अष्टादशानामित्येषां यापयेद्दुष्टपीनसम्॥
इति त्रयोविंशोऽध्यायः॥

अथ चतुर्विंशोऽध्यायः॥

**अउ24.1**
अथातो नासारोगप्रतिषेधं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ24.2**
सर्वेष्वादौ पीनसेषु स्नेहस्वेदवमनधूमगण्डूषस्निग्धोष्णभोजननिवातशयनासनानि सेवेत॥

**अउ24.3**
पाचनार्थं च गुडार्द्रकक्षीरत्रिकटुकाजमांसमद्याम्लभोजनानि॥

**अउ24.4**
रोहिषाजाजीवचाचोरकोपकुञ्चिकातर्कारीचातुर्जातकरजो वस्त्रावबद्धं मुहुर्मुहुरुपजिघ्नेत्।
घृताक्तसक्तून् मल्लकसम्पुटे कृत्वा धूमं च पिबेत्॥

**अउ24.5**
पक्वे तु शिरोविरेचनमवपीडं च युञ्ज्यात्॥

**अउ24.6**
निदानोक्तानि च वर्जयेत्।
विशेषेण शीताम्बुस्नानपानात्युच्चोपधानानुपधानक्रोधशोकान्॥

**अउ24.7**
अथ वातप्रतिश्याये पूर्वमेव वातहरद्रव्यविपक्वं ससैन्धवं प्रातः सर्पिः पिबेन्महाषट्पलं वा॥

**अउ24.8**
दशमूलकुलत्थकोलयवशुष्कमूलकव्योषलवणपञ्चकैः सदधि धान्याम्लं सर्पिः सिद्धमाहारे पाने च प्रणीतं प्रतिश्याययक्ष्माकासश्वासग्रहणीगुल्मविबन्धघ्नम्॥

**अउ24.9**
जीर्णस्नेहं जाङ्गलरसेन व्योषदाडिमसैन्धववता बालमूलकरसेन सर्वधान्ययूषेण वा भोजयेत्।
नागरं वा पयसा पिबेत्॥

**अउ24.10**
कृष्णादशमूलशुण्ठीयवैरण्डमूलक्काथासिद्धेन पयसोत्तमाङ्गं स्वेदयेत्।
तदेव च पानभोजनयोर्विदध्यात्।
अर्दितोक्तांश्च स्वेदान्।
एवमपरिपच्यमाने पुनः पुनर्नाडीस्वेदं वातहरं चास्थापनमनुवासनं शिरोबस्तिं च॥

**अउ24.11**
पक्वे तु तैलं क्षवकचूर्णयुक्तं ससैन्धवं सर्पिर्वा शिरोविरेचनम्॥

**अउ24.12**
पित्तप्रतिश्याये पद्मकोशीरपटोलसारिवाविदारीशतावरीक्षीरिद्रुमशुङ्गशठीकर्कटाख्यादुरालभानामर्द्धढकमष्टगुणेम्भासि विपाच्य पादावशेषे मधुकमृद्वीकाचन्दनशृङ्गाटककशेरुकश्वेतपाकान्यक्षमात्राणि दत्वा घृतप्रस्थं पयसा सह साधयेत्।
तत् प्रातः पानाय युञ्ज्यात्।
जीर्णे सुखोष्णतोयपरिषिक्तं ससैन्धवेन रसेन भोजयेत्।
सुस्निग्धं विरेचयेत् द्राक्षापटोलश्रीपर्णीमूर्वात्रिवृत्क्वाथेन त्रिवृत्पथ्यापूगफलचूर्णान्वितेन॥

**अउ24.13**
विरिक्तभुक्तस्य शीतैः शिरोवक्त्रलेपपरिषेककवलग्रहान् वितरेत्॥

**अउ24.14**
व्यजनपवनविधूयमानश्च नीलशाद्वलोपवनशिशिरकरकिरणधारागृहाणि सेवेत॥

**अउ24.15**
तत्र च पक्वे दोषे शिरोविरेकं पुराणघृतेन ससैन्धवेन घृतमण्डेन वा कट्फलान्वितेन कुर्यात्।
विशुद्धस्रोतसश्च जाङ्गलरसेन क्षीरेण वा शीतेन भोजनम्॥

**अउ24.16**
कफजे तु यवक्षारावचूर्णितमुष्णोदकानुपानं घृतं पाययेत्।
जीर्णे च तिलमाषपललवतीं यवागूम्।
ततो वामनीयौषधक्वाथसिद्धया ससर्पिष्कया सैन्धवमाषचूर्णप्रगाढया पेययोष्णाम्भसा च वामयेत्॥

**अउ24.17**
ततस्तीक्ष्णधूमकवलयवान्नचणकप्रायाहारनाडीस्वदेरुपाचरेत्।
अरुचिगौरवयोस्तु विशोधयेत्॥

**अउ24.18**
पक्वे क्षवकविडङ्गसैन्धवादीभिर्नस्यम्।
तैलाप्लुतो नागरचूर्णानुविद्धो मुद्ग आहारो यथासात्म्यं च रूक्षतीक्ष्णोष्णम्॥

**अउ24.19**
शुद्धघ्राणपथस्य देवदारुसरलकाकोलीजीवकमधुकपिप्पल्यनन्ताक्षीरविपक्वं तैलं नस्यम्॥

**अउ24.20**
सान्निपातिके दोषबलतः प्रतिकुर्यात्।
रसाञ्जनातिविषामुस्तभद्रदारुसाधितं चात्र तैलं नावनम्॥

**अउ24.21**
रक्तजे पैत्तिको रक्तपित्तोक्तश्च विधिः॥

**अउ24.22**
दुष्टप्रतिश्याये व्योषचित्रकयवक्षारबीजकविडङ्गपूतीकरञ्जत्वग्लवणत्रयैर्मांसरसप्रतीवापविपक्वं सक्षौद्रं सर्पिः पाययेत्।
जीर्णे घृते जाङ्गलरसेन तलोपसेकं भोजयेत्।
स्निग्धं च कफप्रतिश्यायवदुपाचरेत्॥

**अउ24.23**
पक्वेऽवपीडं व्योषेन्द्रयवविडङ्गसारजीरकसैन्धवैर्बस्तमूत्रपिष्टैर्दद्यात्।
विशुद्धघ्राणस्रोतसं च पुनरुपस्नेह्य विरेचयेत्।
भृष्टान्यवान् भूस्तृणकाम्रातकजीरकत्रिवृतायुक्तान् गोमूत्रेण क्वाथयेत्।
तं क्वाथमभयानागरमरिचक्रमुकसैन्धवयावशूकचूर्णयुक्तं सबीजपूरकरसं पाययेत्।
कोष्णोदकं चानुकण्ठयेत्॥

**अउ24.24**
विरिक्तं च काले मुस्तहरिद्रानागरयवक्षारपूतीकरञ्जरेणुकाभिरजाविगोत्रदधिभिश्च सिद्धं सर्पिरुपयोजयेत्।
तीक्ष्णानि च निरूहानुवासनानि।
अरिष्टांश्च पानार्थम्॥

**अउ24.25**
एवमप्यशान्तौ हिङ्गुक्षारामरदारुविपक्वं घृतं मांसरसानुपानं पिबेत्॥

**अउ24.26**
कोशाम्रपल्लवमूर्वा तर्कारीङ्गुदीफलफणिज्जकमहापञ्चमूलकण्टकारिकासारिवोरुपूगहिंस्रानिम्बशिग्रुफलरक्षोघ्नकृमिघ्नदन्ती पूतिकरञ्जपिप्पलीवार्ताकबीजाहिमारकमूलत्वक्पत्रपुष्पफलैरजामूत्रपिष्टैरजाश्वशकृद्रसयुक्तैर्धूमवर्तिं कृत्वा घृताभ्यक्तां पातुं प्रयच्छेत्॥

**अउ24.27**
पिप्पलीवर्धमानं चोपयुञ्जीत।
कृमिघ्नैश्च योगैर्यापयेत्॥

**अउ24.28**
भृशक्षवथौ पुटके च निम्बकट्फलकुष्ठमरिचचूर्णैः क्लेदनाय प्रधमनम्।
पिप्पलीकुष्ठशुण्ठीविडङ्गमृद्वीकाकषायकल्कविपक्वं तैलं घृतं वा नावनम्॥

**अउ24.29**
नासाशोषे बलातैलं पाने शिरोबस्तौ च।
स्निग्धस्य स्वेदः।
क्षीरसर्पिर्नस्यं मधुरवर्गसाधितं वा तैलम्।
स्नेहिको धूमः।
तथा नासानाहेऽपि।
एवमनुपशमे शिरोविरेकः॥

**अउ24.30**
नासापाके दीप्तौ च जालौकोभिरस्रविस्रावणम्।
शीतैरूर्ध्वाधोविरेकलेपसेकाः।

नासास्रावे तीक्ष्णं नस्यं धूमश्च॥

**अउ24.31**
अवीनसे पूतिनासे च गुडमरिचहिङ्गुशिवाटिकाविडङ्गैरजामूत्रपिष्टैर्नस्यम्।
कफप्रतिश्यायवच्च स्नेहस्वेदवमनानि॥

**अउ24.32**
वमितवतो निर्गुण्डीशिग्रुतर्कारीफणिज्जकक्षवकसुरसार्जकपत्रस्वरसेन सार्षपं पीलुजं वा तैलं विपाच्य नस्यं विदध्यात्॥

**अउ24.33**
लाक्षाविडङ्गपिप्पलीलवङ्गक्षवकनिशाकुष्ठवचाकरञ्जिकाकल्कैर्वा तिलतैलम्।
शिग्रुबृहतीदन्तीमूलबिल्वव्योषसुरससैन्धवैर्वा॥

**अउ24.34**
उत्पन्नमात्रं पूयरक्तं रक्तप्रतिश्यायवच्चिकित्सेत्।
प्रवृद्धं नाडीव्रणवत्।
कृतवमनस्य चास्य नस्यधूमौ प्रयोजयेत्॥

**अउ24.35**
अर्शांसि विधिवत् क्षारेणाग्निना वा दहेत्।
स्थूलानि तु शस्त्रेण स्पृष्ट्वा दाहानन्तरं शीतां क्रियां योजयेत्॥

**अउ24.36**
वर्तिं च नासायां कुम्भनिकुम्भाग्निकसैन्धवपिप्पलीमनश्शिलालकल्कमधुघृतप्रदिग्धाम्॥

**अउ24.37**
तुवरिकाबिभीतकहरिद्रालोध्रप्रियङ्गुकरञ्जिकाकल्कगुडोदकविपक्वं तैलं नावनम्।
करञ्जकलोध्रोत्पलमधुकतिन्दुकास्थित्रिफलाखदिरसारविपक्वं॥

**अउ24.38**
यथादोषं च स्नेहवमनविरेकादीन् प्रणिदध्यात्॥

**अउ24.39**
अर्बुदं बडिशेन गृहीत्वा मण्डलाग्रेण मूले समं छिन्द्यात्।
छिन्नं चोच्छिङ्खयेत्।
चलप्रमृष्टं च व्रणं शलाकया दहेत्तैलेन वा।
अग्निदग्धं म्रङ्क्षयेत्ततः शिशिरैः प्रदेहैः॥

**अउ24.40**
उपरूढव्रणस्य लोध्रावापं तीक्ष्णोष्णलवणद्रव्यगोमूत्रयुक्तं सार्षपं कारञ्जं वा तैलं नावनम्।
पित्तजे रक्तजे वार्बुदे गोदन्तसैन्धवालकासीसकांस्यनीलैरम्बुपिष्टैरालेपः।
ततश्च शीताः प्रदेहसेकाः।
शीतैरेव च साधितानि घृतान्यभ्यङ्गनस्यपानानि॥

**अउ24.41**
मांसमेदः सन्निपातार्शोर्बुदानि चैवं साधयेदिति।
भवति चात्र॥

**अउ24.42**
उपसंहरति।
हीनच्छेदात् पुनर्बृद्धिरतिच्छेदात् स्वरक्षयः।
गन्धाज्ञानं च वीसर्पो मूर्च्छा छिन्द्यादतः समम्॥
इति चतुर्विंशोऽध्यायः॥

अथ पञ्चविंशोऽध्यायः।

**अउ25.1**
अथातो मुखरोगविज्ञानीयं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ25.2**
मात्स्यमहिषवाराहपिशितामकमूलकम्।
माषसूपदधिक्षीरशुक्तेक्षुरसफाणितम्॥

**अउ25.3**
अवाक्शय्यां च भजतो द्विषतो दन्तधावनम्।
धूमच्छर्दनगण्डूषानुचितं च सिराव्यधम्।
क्रुद्धाः श्लेष्मोल्बणा दोषाः कुर्वन्त्यन्तर्मुखं गदान्॥

**अउ25.4**
तत्र खण्डौष्ठ इत्युक्तो वातेनौष्ठो द्विधाकृतः॥

**अउ25.5**
ओष्ठकोपे तु पवनात् स्तब्धावोष्ठौ महारुजौ।
दाल्येते परिपाट्येते परुषासितकर्कशौ॥

**अउ25.6**
पित्तात्तीक्ष्णासहौ पीतौ सर्षपाकृतिभिश्चितौ।
पिटकाभिर्बहुक्लेदावाशुपाकौ #

**अउ25.7**
कफात् पुनः।
शीतासहौ गुरू शूनौ सवर्णपिटकाचितौ॥

**अउ25.8**
सन्निपातादनेकाभौ दुर्गन्धास्रावपिच्छिलौ।
अकस्मान्म्लानसंशूनरुजौ विषमपाकिनौ॥

**अउ25.9**
रक्तोपसृष्टौ रुधिरं स्रवतः शोणितप्रभौ।
खर्जूरसदृशं चात्र क्षीणे रक्तेर्बुदं भवेत्॥

**अउ25.10**
मांसपिण्डोपमौ मांसात् स्यातां मूर्च्छत्कृमी क्रमात्॥

**अउ25.11**
तैलाभश्वयथुक्लेदौ सकण्ड्वौ मेदसा मृदू॥

**अउ25.12**
क्षतजाववदीर्येते पाट्येते चासकृत् पुनः।
ग्रथितौ च पुनः स्यातां कण्डूलौ दशनच्छदौ॥

**अउ25.13**
जलबुद्बुदवद्वातकफादोष्ठे जलार्बुदम्॥

**अउ25.14**
गण्डालजी स्थिरः शोफो गण्डे दाहरुजान्वितः॥

**अउ25.15**
वातादुष्णासहादन्ताः शीतस्पर्शाधिकव्यथाः।
दाल्यन्त इव शूलेन शीताख्यो दालनश्च सः॥

**अउ25.16**
दन्तहर्षे प्रवाताम्लशीतभक्षाक्षमा द्विजाः।
भवन्त्यम्लाशनेनैव सरुजश्चलिता इव॥

**अउ25.17**
दन्तभेदे द्विजास्तोदभेदरुक्स्फुटनान्विताः।
चालश्चलद्भिर्दशनैर्भक्षणादधिकव्यथैः॥

**अउ25.18**
करालस्तु करालानां दशनानां समुद्भवः॥

**अउ25.19**
दन्तोधिकोधिदन्ताख्यः स चोक्तः खलवर्द्धनः।
जायमानेऽतिरुग्दन्ते जाते तत्र तु शाम्यति॥

**अउ25.20**
अधावनान्मलो दन्ते कफो वा वातशोषितः।
पूतिगन्धिः स्थिरीभूतः शर्करा #

**अउ25.21**
साप्युपेक्षिता।
शातयत्यणुशो दन्तकपालानि कपालिका॥

**अउ25.22**
श्यावः श्यावत्वमायातो रक्तपित्तानिलैर्द्विजः।

**अउ25.23**
समूलं दन्तमाश्रित्य दोषैरुल्बणमारुतैः।
शोषिते मज्ज्ञि सुषिरे दन्तेऽन्नमलपूरिते॥

**अउ25.24**
पूतित्वात् कृमयः सूक्ष्मा जायन्ते जायते ततः।
अहेतुतीव्रार्तिशमः ससंरम्भोसितश्चलः।
प्रलूनः पूयरक्तस्रुत् स चोक्तः कृमिदन्तकः॥

**अउ25.25**
श्लेष्मरक्तेन पूतीनि वहन्त्यस्रमहेतुकम्।
शीर्यन्ते दन्तमांसानि मृदुक्लिन्नासितानि च।
शीतादोसौ #

**अउ25.26**
उपकुशः पाकः पित्तासृगुद्भवः।
दन्तमांसानि दह्यन्ते रक्तान्युत्सेधवन्त्यतः॥

**अउ25.27**
कण्डूमन्ति स्रवन्त्यस्रमाध्मायन्तेसृजिस्थिते।
चला मन्दरुजो दन्ताः पूतिवक्त्रं च जायते॥

**अउ25.28**
दन्तयोस्त्रिषु वा शोफो बदरस्थिनिभो घनः।
कफास्रात्तीव्ररुक् शीघ्रं पच्यते दन्तपुप्पुटः॥

**अउ25.29**
दन्तमांसे मलैः सास्रैर्बाह्यान्तः श्वयथुर्गुरुः।
सरुग्दाहः स्रवेत् भिन्नः पूयास्रं दन्तविद्रधिः॥

**अउ25.30**
श्वयथुर्दन्तमूलेषु रुजावान्रक्तपित्तजः।
लालास्रावी स सुषिरो दन्तमांसप्रशातनः॥

**अउ25.31**
स सन्निपातज्वरवान् सपूयरुधिरस्रुतिः।
महासुषिर इत्युक्तो विशीर्णद्विजबन्धनः॥

**अउ25.32**
दन्तान्ते कीलवच्छोफो हनुकर्णरुजाकरः।
प्रतिहन्त्यभ्यवहृतिं श्लेष्मणा सोधिमांसकः॥

**अउ25.33**
घृष्टेषु दन्तमांसेषु संरम्भो जायते महान्।
यस्मिंश्चलन्ति दन्ताश्च स विदर्भोऽभिघातजः॥

**अउ25.34**
दन्तमांसाश्रितान्रोगान् यः साध्यानप्युपेक्षते।
अन्तस्तस्यास्रवन् दोषः सूक्ष्मां सञ्जनयेद्गतिम्।
पूयं मुहुः सा स्रवति त्वङ्मांसास्थिप्रभेदिनी॥

**अउ25.35**
ताः पुनः पञ्च विज्ञेया लक्षणैः स्वैर्यथोदितैः॥

**अउ25.36**
शाकपत्रखरास्रस्ता स्फुटिता वातदूषिता।
जिह्वा पित्तात् सदाहोषा रक्तैर्मांसाङ्कुरैश्चिता।
शाल्मलीकण्टकाभैस्तु कफेन बहला गुरुः॥

**अउ25.37**
कफपित्तादधः शोफो जिह्वास्तम्भकृदुन्नतः।
मत्स्यगन्धिर्भवेत् पक्वः सोलसो मांसशातनः॥

**अउ25.38**
प्रबन्धनेऽधो जिह्वायाः शोफो जिह्वाग्रसन्निभः।
साङ्कुरः कफपित्तास्रैर्लालोषास्तम्भवान् खरः।
अधिजिह्वः सरुक्कण्डूवाक्याहारविघातकृत्॥

**अउ25.39**
तादृगेवोपजिह्वस्तु जिह्वाया उपरि स्थितः॥

**अउ25.40**
तालुमांसेनिलाद्दुष्टे पिटकाः सरुजाः खराः।
बह्व्यो घनास्रावयुतास्तास्तालुपिटकाः स्मृताः॥

**अउ25.41**
तालुमूले कफात्सास्रान्मत्स्यबस्तिनिभो मृदुः।
प्रलम्बः पिच्छिलः शोफो नासयाहारमीरयन्।
कण्ठोपरोधतृट्कासवमिकृत् गलशुण्डिका॥

**अउ25.42**
तालुमध्ये निरुङ्मांसं संहतं तालुसंहतिः॥

**अउ25.43**
पद्माकृतिस्तालुमध्ये रक्ताच्छ्वयथुरर्बुदम्॥

**अउ25.44**
कच्छपः कच्छपाकारश्चिरवृद्धिः कफादरुक्॥

**अउ25.45**
कोलाभः श्लेष्ममेदोभ्यां पुप्पुटो नीरुजः स्थिरः॥

**अउ25.46**
पित्तेन पाकः पाकाख्यः पूयास्रावी महारुजः॥

**अउ25.47**
वातपित्तज्वरायासैस्तालुशोषस्तदाह्वयः॥

**अउ25.48**
जिह्वाप्रबन्धजाः कण्ठे दारुणा मार्गरोधिनः।
मांसाङ्कुराः शीघ्रचया रोहिणी शीघ्रकारिणी॥

**अउ25.49**
कण्ठास्यशोषकृद्वातात् सा हनुश्रोत्ररुक्करी।
पित्ताज्ज्वरोषातृण्मोहकण्ठधूमायनान्विता॥

**अउ25.50**
क्षिप्रजा क्षिप्रपाकातिरागिणी स्पर्शनासहा।
कफेन पिच्छिला पाण्डुरसृजा स्फोटकाचिता॥

**अउ25.51**
तप्ताङ्गारनिभा कर्णरुक्वरी पित्तजाकृतिः।
गम्भीरपाका निचयात् सर्वलिङ्गसमन्विता॥

**अउ25.52**
दोषैः कफोल्बणैः शोफः कोलवत् ग्रथितोन्नतः।
शूककण्टकवत् कण्ठे शालूको मार्गरोधनः॥

**अउ25.53**
वृन्दो वृत्तोन्नतो दाहज्वरकृत् गलपार्श्वगः॥

**अउ25.54**
हनुसन्ध्याश्रितः कण्ठे कार्पासीफलसन्निभः।
पिच्छिलो मन्दरुक्शोफः कठिनस्तुण्डिकेरिका॥

**अउ25.55**
बाह्यान्तःश्वथुर्घोरो गलमार्गार्गलोपमः।
गलौघो मूर्द्धगुरुतातन्द्रालालाज्वरप्रदः॥

**अउ25.56**
वलयं नातिरुक्शोफस्तद्वदेवायतोन्नतः॥

**अउ25.57**
मांसकीलो गले दोषैरेकोनेकोथवाल्परुक्।
कृच्छ्रोछ्वासोभ्यवहृतिः पृथुमूलो गिलायुकः॥

**अउ25.58**
भूरिमांसाकुङ्रवृता तीव्रतृङ्ज्वरमूर्द्धरुक्।
शतघ्नी निचिता वर्तिः शतघ्नीवातिरुक्करी॥

**अउ25.59**
व्याप्तसर्वगलः शीघ्रजन्मपाको महारुजः।
पूतिपूयनिभास्नावी श्वयथुर्गलविद्रधिः॥

**अउ25.60**
जिह्वावसाने कण्ठादावपाकं श्वयथुं मलाः।
जनयन्ति स्थिरं रक्तं नीरुजं तद्गलार्बुदम्॥

**अउ25.61**
पवनश्लेष्ममेदोभिर्गलगण्डो भवेत् बहिः।
वर्द्धमानः स कालेन मुष्कवल्लम्बते निरुक्॥

**अउ25.62**
कृष्णारुणो वा तोदाढ्यः स वातात् कृष्णराजिमान्।
वृद्धस्तालुगले शोषं कुर्याच्च विरसास्यताम्॥

**अउ25.63**
स्थिरः सवर्णः कण्डूमान् शीतस्पर्शो गुरुः कफात्।
वृद्धस्तालुगले लेपं कुर्याच्च मधुरास्यताम्॥

**अउ25.64**
मेदसा श्लेष्मवद्धानिवृध्योः सोनुविधीयते।
देहं वृद्धस्य कुरुते गले शब्दं स्वरेऽल्पता॥

**अउ25.65**
श्लेष्मरुद्धानिलगतिः शुष्ककण्ठो हतस्वरः।
ताम्यन् प्रसक्तं श्वसिति येन स स्वरहानिलात्॥

**अउ25.66**
करोति वदनस्यान्तर्व्रणान् सर्वसरोऽनिलः।
सञ्चारिणोऽरुणान्रूक्षानो ष्ठौ ताम्रौ चलत्वचौ॥

**अउ25.67**
जिह्वा शीतासहा गुर्वी स्फुटिता कण्टकाचिता।
विवृणोति च कृच्छ्रेण मुखं पाको मुखस्य सः॥

**अउ25.68**
अधः प्रतिहतो वायुरर्शोगुल्मकफादिभिः।
यात्यूर्ध्वं वक्त्रदौर्गन्ध्यं कुर्वन्नूर्ध्वगुदस्तु सः॥

**अउ25.69**
मुखस्य पित्तजे पाके दाहोषे तिक्तवक्त्रता।
क्षारोक्षितक्षतसमा व्रणास्तद्वच्च रक्तजे॥

**अउ25.70**
क्वफजे मधुरास्यत्वं कण्डूमत्पिच्छिला व्रणाः॥

**अउ25.71**
अन्तः कपोलमाश्रित्य श्यावपाण्डु कफोर्बुदम्।
कुर्यात्तत् घट्टितं छिन्नं मृदितं च विवर्धते॥

**अउ25.72**
मुखपाको भवेत् सास्रैः सर्वैः सर्वाकृतिर्मलैः॥

**अउ25.73**
पूत्यास्यता च तैरेव दन्तकाष्ठादिविद्विषः॥

**अउ25.74**
औष्ठे गण्डे द्विजे मूले जिह्वायां तालुके गले।
वक्त्रे सर्वत्र चेत्युक्ता पञ्चसप्ततिरामयाः॥

**अउ25.75**
एकादशैको दश च त्रयोदश तथा च षट्।
अष्टावष्टादशाष्टौ च क्रमात् तेष्वनुपक्रमाः॥

**अउ25.76**
करालो मांसरक्तोष्ठावर्बुदानि जलाद्विना।
कच्छपस्तालुपिटका गलौघः सुषिरो महान्॥

**अउ25.77**
स्वरघ्नोर्ध्वगुदश्यावशतघ्नीवलयालसाः।
नाड्योष्ठकोपौ निचयाद्रक्तात् सर्वैश्च रोहिणी॥

**अउ25.78**
दशने स्वरभ्रंशी कृच्छ्रोच्छ्वासोऽतिवत्सरः।
याप्यस्तु हर्षो भेदश्च शेषान् शस्त्रौषधैर्जयेत्॥

**इति पञ्चविंशोऽध्यायः।**

# अष्टाङ्गसंग्रहः उत्तरस्थानम् अध्याय २६-३०

https://sa.wikisource.org/s/9zz

**अष्टाङ्गसंग्रहः**

अथ षट्विंशोऽध्यायः।

**अउ26.1**
अथातो मुखरोगप्रतिषेधं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ26.2**
स्निग्धस्विन्नस्य खण्डौष्ठस्यौष्ठान्तौ विलिख्य सुश्लिष्टौ क्षौमसूत्रेण सीव्येत्।
शतधौतघृताभ्यक्तां चास्मै कबलिकां व्रणस्योपरि दद्यात्।
प्रक्लिन्नं च व्रणं व्रणचिकित्सया साधयेत्॥

अस26.3। ज्योतिष्मतीलोध्रमधुकपटोलोत्पलकाकमाचीश्रावणीसारिवाभिस्तैलं विपक्वमभ्यञ्जनाच्छोधनरोपणम्।
तथा वातहरमधुरौषधसिद्धं तैलं नस्यम्॥

**अउ26.4**
वातज औष्ठकोपे देवदारुगुग्गुलुसर्जरसमधूच्छिष्टसिद्धेन महास्नेहेनाभ्यङ्गः।
तेनैव समधुकचूर्णेन प्रतिसारणाम्।
तदभ्यक्तेन पिचुना प्रच्छादनम्।
एरण्डपल्लवैः क्षीरक्वथितैर्नाडीस्वेदः खण्डौष्ठोक्तं नावनं शिरोऽभ्यङ्गश्च॥

**अउ26.5**
पित्तोत्थेऽभिघातजे च जालौकोभिर्विस्रावणम्।
पत्तङ्गयष्टीछिन्नरुहाविपक्वं सर्पिरभ्यङ्गः।
मधुमधुकलोध्रसर्जरसैः प्रतिसारणम्।
पित्तविद्रधिवच्च चिकित्सा॥

**अउ26.6**
रक्तजेप्यचिरोत्थिते पैत्तिकवत् प्रतिकुर्यात्।
कफजे जलौकोभिः शाकादिपत्रैर्वा रक्तं विस्राव्य व्योषपाठायवक्षारस्वर्जिकाक्षारैः सक्षौद्रैः प्रतिसारयेत्।
कुष्ठतगरदन्तीश्यामाबिडहरितालविडङ्गैर्वा।
स्वेदनस्यधूमकवलांश्च कफघ्नानवचारयेत्॥

**अउ26.7**
मेदोजे दन्तच्छदं स्वेदयित्वा वृद्धिपत्रेण विपाट्य शुद्धमेदसमग्निनानुपचरेत्।
कफजोक्तैश्च प्रतिसारणम्।
जलार्बुदोक्तं तैलं रोपणम्॥

**अउ26.8**
जलार्बुदं भित्वा विशोध्य त्रिकटुकटुकातेजोवतीयवक्षारस्वर्जिकासैन्धवकासीसचूर्णैः सक्षौद्रैः प्रतिसारयेत्।
अवगाढमतिवृद्धं वा क्षारेणाग्निना वा दहेत् हरिद्रालोध्रमधुकमालतीहरेणुतगरैर्विपक्वं तैलं रोपणम्॥

**अउ26.9**
गण्डालजीमपक्वां शोफवद्विदग्धामुपनाह्य पक्वां विदार्य व्रणवत् साधयेत्॥

**अउ26.10**
शीतदन्तस्योष्णामुबुस्विन्नस्य व्रीहिमुखेन पालीं लिखित्वा पिचुतैलेन दहेत्।
प्रतिसारयेच्च प्रियङ्गुजम्ब्वस्थिदाडिमत्वक्त्रिफलारसाञ्जनसैन्धवशुण्ठीमुस्तचूर्णैः समधुघृतैः।
क्षीरिवृक्षकषायो गण्डूषः।
अणुतैलं नस्यम्॥

**अउ26.11**
दन्तहर्षे भेदे च वातहरसिद्धं तैलमेलाकुष्ठपाटलीस्वग्विपक्वो मज्जा वा गण्डूषः।
स्निग्धाश्च नस्यादयः॥

**अउ26.12**
दन्तचाले दशमूलक्वाथेन तैलसर्पिर्वसाक्षौद्रैश्च कवलः।
पिप्पलीसैन्धवतुत्थलोध्रपतङ्गस्रोतोजमुस्तात्रिफलाः प्रतिसारणम्।

नियतं च स्नैहिकधूमपायी स्निग्धमधुराहारो विस्रावणपरः स्यात्।
चन्दनपद्मकमधुकविदारीकशेरुकनीलोत्पलमृद्वीकाजीवकर्षभकशर्कराणां प्रत्येकं पलेन क्षीरेण च मांसरसद्विगुणेन तैलप्रस्थं विपाचयेत्।
एतन्नस्यगण्डूषप्रयोगात् परं दशननयनश्रवणबलकरम्॥

**अउ26.13**
अधिदन्तकं क्षारेणालिप्य जर्जरं विज्ञाय कृमिदन्तकविधिनोत्पाड्य तद्वदेवोपचरेत्।
अनवस्थितशोणितं च दग्ध्वा व्रणवदुपक्रमेत॥

**अउ26.14**
दन्तशर्करां दन्तमूलान्यपीडयन् दन्तलेखनेन विलिख्य क्षारतैलेनावसेचयेत्।
मूषाकूर्पपाटलीत्वक्चूर्णेन प्रतिसारणम्।
सदा च दन्तधावनादीन् सेवेत।
दन्तहर्षोक्तं च कुर्यात्॥

**अउ26.15**
कपालिकायामेतदेव विशेषतः शीलयेत्॥

**अउ26.16**
कृमिदन्तके सुषिरं गुडेन मधूच्छिष्टेन सर्पिष वापूरयित्वा तप्तया कुब्जशलाकया दहेत्।
सप्तच्छर्दाकक्षीरं वा पूरणम्।
सर्षपकरञ्जतैलं॥

**अउ26.17**
हिङ्गुविडङ्गस्वर्जिकाकट्फलकासीसकुष्ठचूर्णस्तान्तवबद्धो दन्तस्योपरि तिष्ठन् रुजमपहरति।
कुन्दुरुष्कचूर्णो वा।
एभिरेव च सिद्धं तैलं गण्डूषः।
दृढगूढमूलमांसे सरुजे विस्रावणम्।
भग्नस्फुटितविवर्णसुप्तचलस्य सरुजस्य च॥

**अउ26.18**
एवमनुपशमे सन्दंशयन्त्रेण दन्तमायतं गृहीत्वा विचाल्य शस्त्रेण पार्श्वेभ्यो मोक्षयित्वोद्धरेत्।
दन्तनिर्घातनेनोत्पीड्य मुद्गरेणाश्मना वा निर्घातयेत्।
न तूत्तरं दन्तम्॥

**अउ26.19**
तस्योद्धरणाच्छोणितात्ययस्ततश्चेन्द्रियभ्रंशो वात व्याधिर्वा॥

**अउ26.20**
प्रक्षालितमुखश्च समधुकचूर्णं तैलं मधु वा गण्डूषं धारयेत्॥

**अउ26.21**
विदारीमधुकशृङ्गाटककशेरुकाभिस्तैलं दशगुणे पयसि सिद्धं नस्यम्॥

**अउ26.22**
उत्तरदन्तोद्धरणेप्ययमेव प्रतीकारः।
शीतोपचारश्च सुतराम्॥

**अउ26.23**
शीतादे शोणितं विस्राव्य रसाञ्जनमुस्तत्रिफलार्जुनत्वक्प्रियङ्गुमहौषधकषायं गण्डूषं धारयेत्।
एभिरेव च सक्षौद्रैः प्रतिसारणं।
मधुरवर्गसिद्धं तैलं नस्यम्।
तेजोवतीव्योषहरिद्राद्वयकुष्ठपाठाकटुरोहिणीलोध्रसमङ्गामुस्तैः प्रतिसारणं सर्वदन्तमांसामयेषु कण्डूश्वयथुवेदनारक्तस्रुतिहरम्।
तथा व्याषयवक्षारमनश्शिलासैन्धवदार्वीत्वग्भिः एभिरेवाषैर्धगुटिका सर्वमुखरोगहरा॥

**अउ26.24**
उपकुशे सुखोष्णाम्बुस्विन्नान्युत्सन्नानि दन्तमांसान्यवलिखेन्मण्डलाग्रेण शाकादिपत्रैर्वा।
ततः सुखोष्णो घृतमण्डस्तैलं वा गण्डूषः।
मरिचकुष्ठमधुकप्रियङ्गुलाक्षापतङ्गगैरिकरसाञ्जनशुण्ठीसैन्धवैर्मधुघृतमण्डयुक्तैः प्रतिसारणम्।
पृथक्पर्णीविडङ्गविदारीमधुकपयस्यासुरदारुविपक्वं तैलं गण्डूषो नस्यं च।
मधुरवर्गसिद्धमेव वा सर्पिः पुनः पुनश्च रुधिरावसेकः॥

**अउ26.25**
दन्तपुप्पुटके स्विन्नछिन्नभिन्नविलिखिते स्वर्जिकामधुकशुण्ठीसैन्धवैः प्रतिसारणम्॥

**अउ26.26**
दन्तविद्रधौ तिक्तकटुकषायोष्णैः समूत्रैः कबलो लेपश्च।
वृश्चिकालीकुष्ठकटुकायवक्षारैः प्रतिसारणम्।
तं च पाकतो रूक्षशीतैरन्तर्बहिः प्रयुक्तैर्वारयेत्।
पक्वे तु पाटनमवगाढे दाहः।
त्रिफलासुमनोरिष्ठक्वाथो गण्डूषः।
यष्टीमधुकसिद्धः सर्पिर्मण्डो नस्यम्॥

**अउ26.27**
सुषिरे छिन्नलिखिते लोध्रमुस्तत्रिफलाकिंशुकपतङ्गताक्ष्र्यशैलशतपुष्पाकट्फलैरवघर्षः।
तेषामेव क्वाथो गण्डूषः।
क्षीरिवृक्षकिंशुकामलकानां वा।
गैरिकोत्पलमधूकसारिवाचन्दनप्रपौण्डकशर्करानन्तालोध्रागरुसिद्धं तैलं नावनम्॥

**अउ26.28**
अधिमांसकमचिरोत्थितं स्रावयेत्।
विवृद्धन्तु बडिशेन मचुट्या वा गृहीत्वा मण्डलाग्रेण छित्वा तीक्ष्णैः प्रतिसारयेत्।
कटुतीक्ष्णैः कवलस्तैलं वा यवक्षारावचूर्णितम्॥

**अउ26.29**
विदर्भे दन्तमूलानि शस्त्रेण विशोध्य क्षारं प्रयुज्य घृतमण्डं गण्डूषे दद्यात्।
लोध्रपतङ्गमञ्जिष्ठामधुकचूर्णः प्रतिसारणम्।
काकोलीयष्टीमधुशर्कराविपक्वं तैलं नावनम्॥

**अउ26.30**
दन्तनाडीमेषयित्वा संवृतां शस्त्रेण विवृतयित्वा तदाश्रितं दन्तमशेषमुद्धृत्य शलाकया दहेत्।
कुब्जामवगाढामनेकगतिं वा गुडमधुसिक्थान्यतमपूर्णाम्।
ततः क्षीरिवृक्षकषायेण गण्डूषं धारयेत्।
तत्सिद्धेन वा तैलेन॥

**अउ26.31**
दन्तीखदिरसारमदनस्वादुकण्टकक्वाथे लोध्रवालकोशीरदेवदारुमञ्जिष्ठामधुककल्कविपक्वं तैलं सर्षपतैलं वा नाडीशोधनरोपणम्॥

**अउ26.32**
प्रपौण्डरीकहरिद्राद्वयमधुकमधूच्छिष्टलोध्रकटुकीशर्करापद्मकचन्दनमूर्वोपोदकावास्तुकतण्डुलीयकमञ्जिष्ठाम्लीकाकपित्थपत्रैर्वा॥

**अउ26.33**
नस्यं च विडङ्गमधुकमुस्तनिर्गुण्डीखदिरमञ्जिष्ठोशीरसुरतरुसिद्धं तैलं।
धूमासृक्स्रावणनावनानि शीलयेत्।
नाडीसाधनं चेक्षेत॥

**अउ26.34**
वातजेषु जिह्वाकण्टकेषु वातौष्ठकोपोक्तो विधिः।
पित्तजेषु विघृष्टस्रुतरुधिरेषु स्वादुभिर्द्रव्यैरवघर्षणगण्डूषनावनानि कुर्यात्।
तद्वत् कफजेषु तीक्ष्णैः॥

**अउ26.35**
जिह्वालसे नवोत्थिते तीक्ष्णाः प्रतिसारणादयः।
न चात्र शस्त्रमवचारयेत्।
सिरां तु विध्येत्॥

**अउ26.36**
अधिजिह्वामुन्नम्य बडिशेन गृहीत्वा मण्डलाग्रेण छिद्यात्।
तीक्ष्णाश्च नस्यादयः।
उपजिह्वां शाकपत्रेणाङ्गुलिशस्त्रेण वा विस्राव्य यवक्षारेण प्रतिसारयेत्॥

**अउ26.37**
गलशुण्डिकां कफघ्नैरुपाचरेत्।
वृद्धायां तूर्वारुबीजनिभमसिराततमग्रमुपरिजिव्हायानिविष्टं बडिशेन मुचुट्या वा वस्त्रवेष्टिताभ्यां वामाङ्गुष्ठप्रदेशिनीभ्यां गृहीत्वा मण्डलाग्रेण नात्यग्रे नातिमूले छिन्द्यात्।
अग्रच्छेदादनुपशमः शोफो लालादिवृद्धिर्वा।
अतिच्छेदाच्छोणितक्षयेण मरणम्।
सम्यक्च्छिन्नायां पूर्ववत् प्रतिसारणादयः॥

**अउ26.38**
तालुसङ्घाते पुप्पुटे कच्छपे च नवे विधिरयम्।
शस्त्रकर्मणि तु विशेषः।
अत्र हि विलेखनम्॥

**अउ26.39**
तालुपाके त्वपक्वस्य श्वय्थोः कासीसरसाञ्जनक्षौद्रैः प्रतिसारणम्।
मधुरकषायैः शीतैर्गण्डूषः।
पक्वस्य मण्डलाग्रेणाष्टापदवत् भेदनम् तीक्ष्णैरवघर्षणम्।
पटोलारिष्टजातीकरवीरगुडूचीवृषकटुकाहरिद्राद्वयवेत्राग्रकण्टकारिकाक्वाथः कवलो मधु तैलं च॥

**अउ26.40**
तालुशोषे मधुकपिप्पलीनागरसिद्धं सर्पिरुत्तरं भक्तिकं सतृष्णः पिबेत्।
अम्लैश्चास्य गण्डूषः।
पयस्यामधूकमधूलिकाविपक्वं क्षीरसर्पिर्नस्यम्।
स्निग्धो धूमः।
तृष्णाघ्नमन्नपानम्॥

**अउ26.41**
कण्ठरोगेषु तु ज्वराद्यनुपद्रुतेषु कटुनीक्ष्णैर्नस्यावघर्षणगण्डूषादयः सिराव्यधो रसाञ्जनेन्द्रयवदार्वीनिम्बक्वाथः पानम्।
व्योषयवक्षारदार्वीरसाञ्जनतेजोवतीपाठानिम्बत्वक्त्रिफलाचित्रकैः शुक्तगोमूत्रक्वथितैः कवलो गुटिका वा प्रतिसारणम्।
तालीसपत्रगृहधूमपञ्चकोलकैलामरिचपलाशमुष्ककक्षारयवक्षारैर्यवक्वाथेन गुटिकाः कृताः सर्वकण्ठरोगेष्वमृतोपमाः॥

**अउ26.42**
अथ वातरोहिणीकामन्तर्बहिः स्विन्नामङ्गुलिशस्त्रकेण मधुलवणगर्भेण वा नखेन विस्राव्य तीक्ष्णैः प्रतिसारयेत्।
महापञ्चमूलक्वाथो गण्डूषः।
एलापुनर्नवसिंहीकपित्थकल्कपयोविपक्वं तैलं गण्डूषो नावनं च॥

**अउ26.43**
पित्तजामप्येवं विस्राव्य पतङ्गशर्करालोध्रप्रियङ्गुभिः प्रतिसारयेत्।
एषामेव कषायो गण्डूषः।
द्राक्षापरूषकोशीरमधुकचन्दनक्वाथो वा।
त्रिफलातिल्वकश्यामाश्रीपर्णीत्वङ्मधुयष्टिकाभिर्दशगुणे पयसि सिद्धं सर्पिर्नस्यकवलभोजनेषु॥

**अउ26.44**
रक्तजामप्येवं प्रत्याख्यायोपक्रमेत्॥

**अउ26.45**
श्लैष्मिकीं स्वेदयित्वा विलिख्य कटुकवर्गेणागारधूमत्रिफलासैन्धवयुक्तेन प्रतिसारयेत्।
तद्विधाश्च गण्डूषाः।
निम्बजात्यपामार्गविडङ्गविपक्वं तैलं नस्यम्॥

**अउ26.46**
शालूकवृन्दतुण्डिकेरीगिलायुष्वप्येष एव विधिः॥

**अउ26.47**
गलविद्रधौ विस्राविताया लोध्रवरारसाञ्जनपतङ्गगैरिकरोचनापिप्पलीसैन्धवचूर्णैरवघर्षणम्।
एभिरेव क्वथितैर्गण्डूषः।
किराततिक्तकलोध्रदार्वी शतपुष्पानिम्बपत्रकुष्ठैलागुडूचीचित्रकतगरमुस्ताक्वाथ कल्कविपक्वं तैलं नावनम्॥

**अउ26.48**
गलगण्डमनिलजं स्वेदयित्वा विस्रावयेत् रूढव्रण च तिलप्रियाललट्वामूलकशणातसीबीजैरुपनाहयेत्।
तिल्वकाग्निमन्थपुनर्नवकालामृतासौभाञ्जनक गजपिप्पल्येकैषिकार्कमूलकरघाटकपुष्पैः सुराम्लपिष्टैः पुनः पुनर्लेपयेत्।
निम्बगुडूचीकुटजहंसपादीकृष्णाबलाद्वयदेवदारुसिद्धं च तैलं पाययेत्॥

**अउ26.49**
श्लैष्मिकेप्ययमेव विधिः तीक्ष्णतराश्च स्वेदप्रलेपादयः।
विशल्यातिविषाविषाणिकाशुकनासाजगन्धागुञ्जाफलकटुकालाबुभिः।
पलाशक्षारम्बुपिष्टैः सुखोष्णो लेपः।
वत्सकादिना पञ्चलवणयुक्तेन सिद्धं तैलं पानम्।
तीक्ष्णांश्च वमनादीन् शीलयेत्।

पर्यायतश्च स्वेदं शोणितावसेचनं च।
तथानुपशमे पाचयित्वा व्रणवदुभावप्युपाचरेत्।
यवान्नमुद्गादियूषांच व्योषोत्कटान् पानभोजनयोर्विदध्यात्॥

**अउ26.50**
मेदाज स्विन्नस्य सिरां विध्येत्।
पूर्वोक्ताः प्रलेपाः प्रातः प्रातश्चासनादिसाररजो गोमूत्रेण पिबेत्।
एवमप्यशान्तौ शस्त्रेण विदार्य मेदो विशोध्य सीव्येत्।
दाहयोग्यं वा वसाघृतक्षौद्रान्यतमेन यथावद्दहेत्।
रोचनाकासीसतुत्थकचूर्णितं तैलं व्रणशोधनरोपणम्।
असनादिसारगोपुरीषभस्मयुक्तं वा॥

**अउ26.51**
मुखपाकेषु सामान्यतस्त्रिफलाक्वाथो मधुमानन्ये च तिक्तकटुककषाया मुखधावनाः।
मृद्वीकापाठाजातीमातुलुङ्गार्जुनपत्रजीवकपल्लवानामनभ्यवहरता चर्वणम्॥

**अउ26.52**
दारुहरिद्रार्धतुलां विंशतिगुणेऽम्भसि श्रपयित्वा तं क्वाथं सगैरिकमादर्वीप्रलेपात् साधितं क्षौद्रयुक्तं घृतभाजने निदध्यात्।
एतन्निष्ठीवनं सर्वमुखामयनाडीघ्नम्।
अयमेव च पृथक्कल्पो यष्टीमधुकपटोलीनिम्बाटरूषकजातीलोध्रारिमेदत्रिफलाजम्बूखदिरत्वचाम्॥

**अउ26.53**
यवक्षारभागाः सप्त सुवर्णगैरिकात् भागद्वयं मूर्वाकटुकातिविषामलकानामेको भागस्तत् सर्वं कुतलक्षारोदकपिष्टं गुटिकाः कृत्वा खादेन्निष्ठीवेच्च॥

**अउ26.54**
खदिरसारतुलामरिमेदतुलाद्वयं च तोयवहेऽष्टभागावशेषं क्वाथयेदवतारितं परिस्रुतं च पुनराघनीभावात्।
घनीभूते शीते च कार्षिकाणि श्लक्ष्णीकृतानि प्रक्षिपेच्चन्दनपद्मकोशीरवालकमञ्जिष्ठाधातकीमुस्तप्रपौण्डरीकमधुकत्रिफलाचातुर्जातकलाक्षानलदताक्ष्र्यशैललोध्रद्विरजनीसमङ्गापाठाकट्फलैलेयपतङ्गागरुगैरिकाञ्जनानि।
पालिकांश्च जातीफललवङ्गकङ्कोलकेबुकान्।
कर्प्पूरार्द्धकुडवं च।
ता गुटिका वदनस्थाः सर्वान् मुखरोगान् जयन्ति।
सौरभं सौमनस्यं रुचिं च जनयन्ति॥

**अउ26.55**
एषामेव च कल्ककषायैस्तैलं साधितं कवले नियुञ्ज्यात्॥

**अउ26.56**
तत्र वातजे मुखपाके दशमूलकाकोलीरास्नामधुकसारिवाक्वाथेन कुष्ठकल्केन च सिद्धं तैलं नस्यं गण्डूषश्च।
स्नैहिको धूमः।
पिप्पल्येलालवणोत्तमैः प्रतिसारयेत्॥

**अउ26.57**
पैत्तिके क्षीरेक्षुरसद्राक्षाशर्करोदकैर्गण्डूषः।
मधुरद्रव्यसिद्धं पयः पानं कवलो नस्यं च।
पद्मकसमङ्गामञ्जिष्ठालोध्रधातकीविपक्वः सर्पिर्मण्डो नावनम्।
मदयन्तिकापत्रैर्निष्ठीवनं च॥

**अउ26.58**
कफजे कटुकक्षारलवणैः प्रतिसारणम्।
स्थिरासु तु पिटकासु प्राक्शाकादिपत्रेण लेखनम्।
मुष्ककपलाशामलकीक्षारगोमूत्रैर्गण्डूषः।
तद्विपक्वं च तैलम्।
निर्गुण्डीफणिज्जकार्जकसुरसपत्रैर्निष्ठीवनम्।
देवदारुपाठातिविषादन्तीन्द्रयवकटुकागोमूत्रेण कल्कताः क्वथिता वा पीताः सर्वकफामयान् निघ्नन्ति॥

**अउ26.59**
रक्तजे पित्तवत् सिद्धिः।
सर्वजे यथादोषोदयम्।
रोचनाकासीससौराष्ट्रिकारसाञ्जनानि मोचरसो मधु चैकतो विपक्वं लोहभाजनस्थं कल्कं विशुष्कं चुर्णीकृतं मधुना व्रणलेपं कुर्यात्॥

**अउ26.60**
अथ सर्वसरमर्बुदमचिरोत्थितमवृद्धं मण्डलाग्रेण छित्वा मुष्ककभस्मना मधुमिश्रेण प्रतिसारयेत् स्वर्जिकाशुण्ठीचूर्णेन वा।
मधुतैलं निम्बगुडूचीक्वाथश्च गण्डूषः।

यवान्नभोजी तीक्ष्णानि कवलाभ्यङ्गनस्यान्याचरेत्॥

**अउ26.61**
पूतिमुखं स्निग्धस्विन्नं वामयित्वा शिरोविरेकैरुपाचरेत्।
ततः स्वर्जिकाहिङ्गुगृहधूममनश्शिलैलाशुण्ठीविडङ्गतेजोवतीभिर्गुटिकाः कृत्वा मधुद्रुता मुखपरिशोधनार्थं दद्यात्।
समङ्गाधातकीपद्मलोध्रप्रियङ्गुचूर्णैः सलिलमवचूर्णितं मुखधावनम्।
शीतादोपकुशोक्तं च कुर्यात् नस्यधूमकवलांश्च शीलयेत्।
भवति चात्र॥

**अउ26.62**
मुखदन्तमूलगलजाः प्रायो रोगाः कफास्रभूयिष्ठाः।
तस्मात्तेषामसकृद्रुधिरं विस्रावयेद्दुष्टम्॥

**अउ26.63**
कायशिरसोर्विरेको वमनं कवलग्रहाः कटुकतिक्ताः।
प्रायः शस्तं तेषां कफरक्तहरं तथा कर्म॥

**अउ26.64**
यवतृणधान्यं भक्तं विदलैःक्षारोषितैरपस्नेहाः।
यूषा भक्ष्याश्च हिता यच्चान्यच्छ्लेष्मनाशाय॥

**अउ26.65**
प्राणानिलपथसंस्थाः श्वसितमपि निरुन्धते प्रमादवतः।
कण्ठामयाश्चिकित्सितमतो द्रुतं तेषु कुर्वीत॥
॥इति षड्विंशोऽध्यायः॥

अथ सप्तविंशोऽध्यायः।

**अउ27.1**
अथातः शिरोरोगविज्ञानीयं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ27.2**
धूमातपतुषाराम्बुक्रीडातिस्वप्नजागरैः।
उत्स्वेदाधिपुरोवातबाष्पनिग्रहरोदनैः॥

**अउ27.3**
अत्यम्बुमद्यपानेन कृमिभिर्वेगधारणैः।
उपधानमृजाभ्यङ्गद्वेषाधः प्रततेक्षणैः॥

**अउ27.4**
असात्म्यगन्धदुष्टामभाष्याद्यैश्च शिरोगताः।
जनयन्त्यामयान् दोषाः #

**अउ27.5**
तत्र मारुतकोपतः॥
निस्तुद्येते भृशं शङ्खौ घाटा सम्भिद्यते तथा।
भ्रुवोर्मध्यं ललाटं च पततीवातिवेदनम्॥

**अउ27.6**
बाध्येते स्वनतः श्रोत्रे निष्कृष्येत इवाक्षिणी।
घूर्णतीव शिरः सर्वं सन्धिभ्य इव मुच्यते॥

**अउ27.7**
स्फुरत्यति सिराजालं कन्धराहनुसङ्ग्रहः।
प्रकाशासहता घ्राणस्रावोऽकस्माद्व्यथाशमौ॥

**अउ27.8**
मार्दवं मर्दनस्नेहस्वेदबन्धैश्च जायते।
शिरस्तापोऽयम् #

**अउ27.9**
अर्धे तु मूर्ध्नः सोऽर्धावभेदकः।
पक्षात् कुप्यति मासाद्वा स्वयमेवोपशाम्यति।
अतिवृद्धस्तु नयनं श्रवणं वा विनाशयेत्॥

**अउ27.10**
शिरोभितापे पित्तोत्थे शिरोधूमायनं ज्वरः।
स्वेदोऽक्षिदहनं मूर्च्छा निशि शीतैश्च मार्दवम्॥

**अउ27.11**
अरुचिः कफजे मूर्ध्नो गुरुस्तिमितशीतता।
सिरानिष्पन्दतालस्यं रुङ्मन्दाह्न्यधिका निशि।
तन्द्रा शूनाक्षिकूटत्वं कर्णकण्डूयनं वमिः॥

**अउ27.12**
रक्तात्पित्ताधिकरुजः सर्वैः स्यात् सर्वलक्षणः।
सङ्कीर्णैर्भोजनैर्मूर्ध्नि क्लेदिते रुधिरामिषे।
कोपिते सन्निपाते च जायन्ते मूर्ध्नि जन्तवः॥

**अउ27.13**
शिरसस्ते पिबन्तोऽस्रं घोराः कुर्वन्ति वेदनाः।
चित्तविभ्रंशजननीर्ज्वरः कासो बलक्षयः॥

**अउ27.14**
रौक्ष्यशोफव्यथच्छेददाहस्फुरणपूतिताः।
कपाले तालुशिरसोः कण्डूः शोफः प्रमीलकः।
ताम्राच्छसिङ्घाणकता कर्णनादश्च जन्तुजे॥

**अउ27.15**
वातोल्बणाः शिरःकम्पं तत्संज्ञं कुर्वते मलाः॥

**अउ27.16**
पित्तप्रधानैर्वाताद्यैः शङ्खे शोफः सशोणितैः।
तीव्रदाहरुजारागप्रलापज्वरतृड्भ्रमाः॥

**अउ27.17**
तिक्तास्यः पीतवदनः क्षिप्रकारी स शङ्खकः।
त्रिरात्राज्जीवितं हन्ति सिध्यत्यप्याशु साधितः॥

**अउ27.18**
पित्तानुबन्धः शङ्खाक्षिभ्रूललाटेषु मारुतः।
रुजां सस्पन्दनां कुर्यादनुसूर्योदयोदयाम्॥

**अउ27.19**
आमाध्याह्नं विवर्द्धिष्णुः क्षुद्वतः सा विशेषतः।
अव्यवस्थितशीतोष्णसुखा शाम्यत्यतः प्रम।
सूर्यावर्तः सः #

**अउ27.20**
इत्युक्ता दश रोगाः शिरोगताः॥

**अउ27.21**
शिरस्येव च वक्ष्यन्ते कपाले व्याधयो नव॥

**अउ27.22**
कपाले पवने दुष्टे गर्भस्थस्यापि जायते।
सवर्णो नीरुजः शोफस्तं विद्यादुपशीर्षकम्॥

**अउ27.23**
यथादोषोदयं ब्रूयात् पिटकार्बुदविद्रधीन्॥

**अउ27.24**
कपाले क्लेदबहुलाः पित्तासृक्श्लेष्मजन्तुभिः।
कङ्गुसिद्धार्थकनिभाः पिटकाः स्युररूंषिकाः॥

**अउ27.25**
कण्डूकेशच्युतिस्वापरौक्ष्यकृत् स्फुटनं त्वचः।
सुसूक्ष्मं कफवाताभ्यां विद्याद्दारणकं तु तत्॥

**अउ27.26**
रोमकूपानुगं पित्तं वातेन सह मूर्च्छितम्।
प्रच्यावयति रोमाणि ततः श्लेष्मा सशोणितः॥

**अउ27.27**
रोमकूपान् रुणध्यस्य तेनान्येषामसम्भवः।
तदिन्द्रलुप्तं रुज्जा च प्राहुश्चाचेति चापरे॥

**अउ27.28**
खलतेरपि जन्मैवं शातनं तत्र तु क्रमात्॥

**अउ27.29**
सा वातादग्निदग्धाभा पित्तात्स्वेदसिरावृता।
कफात् घनत्वग्वर्णांश्च यथास्वं निर्दिशेत्त्वचि॥

**अउ27.30**
दोषैः सर्वाकृतिः सर्वैरसाध्या सा नखप्रभा।
दग्धाग्निनेव निर्लोमा सदाहा या च जायते॥

**अउ27.31**
शोकश्रमक्रोधकृतः शरीरोष्मा शिरोगतः।
केशान् सदोषः पचति पलितं सम्भवत्यतः॥

**अउ27.32**
तद्वातात् स्फुटितं श्यावं खरं रूक्षं ज्वलत्प्रभम्।
पित्तात् सदाहं पीताभं कफात्स्निग्धं विवृद्धिमत्॥

**अउ27.33**
स्थूलं सुशुक्लं सर्वैस्तु विद्याद्व्यामिश्रलक्षणम्।
शिरोरुजोद्भवं चान्यद्विवर्णं स्पर्शनासहम्॥

**अउ27.34**
असाध्या सन्निपातेन खलतिः पलितानि च।
शरीरपरिणामोत्थान्यपेक्षन्ते रसायनम्॥
॥इति सप्तविंशोऽध्यायः॥

अष्टाविंशोऽध्यायः।

**अउ28.1**
अथातः शिरोरोगप्रतिषेधं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ28.2**
वातजे शिरोभितापे वातव्याधिविहितं कुर्यात्।
निवातस्थं च नक्तमभ्यक्तशिरसं सर्पिः पयोनुपानं तैलं वा पाययेत्।
माषान् वा ससर्पिष्कानुष्णपयोनुपानान् भक्षयेत्।
तद्वद्वा मुद्गान्॥

**अउ28.3**
आनूपपिशितवेशवारेण यवतिलमुद्गमाषकुलत्थकुष्ठदारुहरिद्रातसीसैन्धववर्वा महास्नेहवतीमुत्कारिकां दत्वा शिरो वेष्टयेत्।
ततः प्रत्यूषे दशमूलसिद्धेन पयसा कवोष्णेन परिषेकं कुर्यात्।
तत्सिद्धैश्च पायसैः पिण्डस्वेदं लेपं वा॥

**अउ28.4**
कूर्ममहिषवराहकुक्कुटशल्लकीनां वसा ससैन्धवा नस्यं शिरःकर्णपूरणं च।
तथैव च पञ्चमूलबलासारिवाद्वयक्वाथे मधुकजीवकर्षभकपुनर्नवगर्भं सपयः सर्पिस्तैलं चैकतो विपक्वम्॥

**अउ28.5**
कार्पासमज्जत्वङ्मुस्तासुमनःकोरकाण्युष्णाम्बुपिष्टानि नावनं सर्वशिरोरुजाघ्नम्।
तद्वत् त्वक्पत्रशर्कराशिग्रुकरञ्जबीजानि।
तथा चन्दनोत्पलतगरकुष्ठैः सघृतैर्लेपः।
देवदारुकुष्ठचोरकयष्टीमधुककमलनीलोत्पलैलाप्रपौण्डरीकैश्च॥

**अउ28.6**
कुङ्कुमशर्करासंस्कृतमाज्यं रक्तपितानुबन्धे मर्शः।
न चात्र रक्तमवसेचयेद्वातोद्रेकभयात्।
स्नैहिकं धूमं पिबेत्।
शिरोबस्तिं च शीलयेत्।
बस्तिकर्म चाचरेत्॥

**अउ28.7**
एवमसिद्धौ वातजे श्लेष्मजे च यथोक्तो दाहः॥

**अउ28.8**
अर्धावभेदकेप्ययमेव विधिः।
निर्गुण्डीपत्ररसश्च सघृतमण्डसैन्धवो नस्यम्।
शिरीषमूलफलानि वा।
सारिवोत्पलकुष्ठवचामधुकपिप्पलीभिः सतैलाम्लो लेपः।
अशाम्यति दोषानुबन्धमवेक्ष्य प्रतिकुर्वीत॥

**अउ28.9**
सूर्यावर्तेत्वयमेव विधिः विशेषतस्तु सिरामोक्षः॥

**अउ28.10**
पित्तजे रक्तजे च शिरोभितापे स्निग्धस्य सिरां विध्येत्।
कायं च विरेचयेत्।
सुशीतैः शतधौतघृतान्वितैः शिरो वक्त्रं सिञ्चेत् प्रदिह्याच्च॥

**अउ28.11**
चन्दनसारिवामधुकदूर्वोत्पलप्रपौण्डरीकमञ्जिष्ठाविदारीभिः सक्षीरं सर्पिर्विपाचितं नावनं शिरोबस्तिश्च।
जीवनीयविपक्वात् पयसो नवनीतमुद्धृत्य जीवनीयक्वाथकल्काभ्यां पाचितं पानभोजननस्याभ्यङ्गबस्तिषु प्रणीतं पित्तरक्तजान् सर्वान्विकारान् साधयति।
जीवनीयगर्भं षोडशगुणे पयसि सिद्धमाज्यं वा॥

**अउ28.12**
क्षीरेक्षुजाङ्गलरसखर्जूरद्राक्षाकशेरुकमृणालसिद्धः सर्पिर्मण्डोऽनुवासनम्।
अञ्जनादिवर्गशृतं क्षीरमास्थापनम्॥

**अउ28.13**
शङ्खकं प्रत्याख्यायैवमेवोपचरेत्।
विसर्पवच्च।
विशेषतस्तु कृष्णतिलशतावरीनीलोत्पलमूर्वापुनर्नवैर्लेपः॥

**अउ28.14**
कफजे शिरोभितापे लङ्घयेत्।
पुराणसर्पिस्निग्धं वा वामयेत्।
स्वेदः पिण्डेन रूक्षेण।
शिग्रुनिम्बैरण्डक्वाथेन वा नाडीस्वेदः॥

**अउ28.15**
देवकाष्ठकुष्ठशार्ङ्गेष्टासरलरोहिषैः सलवणैः सुखोष्णैरालेपः।
यवचूर्णमधुकचन्दनहरिद्राकुष्ठप्रियङ्गुशतपुष्पासुरदारुभिस्तैलाजक्षीरयुक्तैः ससैन्धवैरुपनाहः॥

**अउ28.16**
विडङ्गतैलं नस्यं सार्षपं वा तदेव वा व्योषसिद्धम् मधूकसारकल्को वा मधुयुतस्त्वग्वा मेषशृङ्ग्या इङ्गुदस्य वा।
एभिरेव च धूमवर्तिः॥

**अउ28.17**
शिरोविरेचनद्रव्यैर्वा सूत्रस्थानोक्तैः प्रधमनम्।
तैरेव च पक्वं तैलं मर्शः प्रतिमर्शो वा॥

**अउ28.18**
शिरोविरेचनान्ते कर्णनादोक्तं स्नेहनस्यम्।
तीक्ष्णाः कवलाः मनश्शिलानलदतुत्थकासीसचूर्णः ससर्पिष्को धूमः।
नलदचूर्णस्य च मुहुर्मुहुराघ्राणनम्॥

**अउ28.19**
सन्निपाते व्यामिश्रो विधिः॥

**अउ28.20**
कृमिजे दुरालभासुरदारुरोहिषपूतीकत्रिफलाकट्फलवचात्रिकटुकैरजामूत्र्युक्तं सर्पिः पक्वं पानम्।
उपस्निग्धस्विन्नस्य देवदारुपूतीककटभीसर्षपविडङ्गतिलकण्टकविपक्वेन तैलेन शिरः कर्णौ चाभ्यज्य स्वेदयेत्॥

**अउ28.21**
ततः कृमिमूर्च्छनार्थमसृङ्नस्तोवसेचयेत्।
ततो रुधिरगन्धमदेन प्राविसृताः सप्तच्छदस्य त्वग्रसेन पुष्परसेन वानन्तरनिषिक्तेन कृमयः पतन्ति॥

**अउ28.22**
सरलदेवदारुकट्फलसर्षपापामार्गक्षवककटुकालाबुसुरसबीजपिप्पलीतण्डुलचूर्णस्तत्पक्वं वा तैलं सद्यः कृमीन् निरस्यति।
विडङ्गतण्डुला वाजिमूत्रपिष्टाः शिरीषबीजानि वा छागमूत्रपिष्टानि।
पुष्करमध्यबीजानि वा॥

**अउ28.23**
गोमांसेन छागमांसेन वा वसापिष्टेन यवागूं कृत्वा शिरो विलेपयेत्।
ततो निम्बार्कवंशसुरसकुटजकरञ्जकरवीरपत्रक्वाथेन सेचयेत्।
अजामूत्रेण वा कवोष्णेन।
पूतिमत्स्ययुताश्च धूमाः॥

**अउ28.24**
एवं कृमिष्वपगतेषु तेजोवतीपूतीकबिम्बीसुरसनक्तमालविडङ्गहरीतकीसर्षपार्ककरवीरमूलमालतीदेवदारुक्षवकमुस्तफणिज्जकपिप्पलीशतपुष्पामधूकशणनिम्बसारकल्कैरजामूत्रयुतैः सार्षपं तैलमैङ्गुदं पैलुकं वा विपक्वं युक्त्या नावनम्॥

**अउ28.25**
न तु जातुरुधिरमवसेचयेत्।
जन्तुभिः पीतशोणिते हि शिरसि पुनरस्रावसेकादकाण्डे मृत्युः स्यात्।
कृमिचिकित्सितं चेक्षेत्॥

**अउ28.26**
शिरः कम्पमक्षीणस्यान्यव्याध्यनुपद्रुतस्य दाहवर्ज्यं मारुतविधानेनोपक्रमेत॥

**अउ28.27**
उपशीर्षके जन्मोत्तरकालजाते नवोत्थिते वातव्याधिविहितान् स्नेहान् पाननावनाभ्यञ्जनेषु योजयेत्।
अभ्यक्तं च स्वेदयित्वोपनाहयेद्यथा विदाहो न भवति।
विदाहे विद्रधिवत् कर्म॥

**अउ28.28**
पिटकार्बुदविद्रधिषु यथास्वमाचरेत्।
व्रणीभूतासु पिटकासु निम्बनिशामधुकधात्रीफलैर्विपक्वं तैलं शोधनरोपणम्॥

**अउ28.29**
मूर्वाचन्दनसारिवाधातकीकान्तालोध्रमधुकसमङ्गापद्मकेसरशतपर्वकंमूलैर्विद्रधिषु।
एभिरेव च सिद्धं सर्पिर्नस्यम्।
रूढं तु विद्रधौ यदि त्वक् सुप्तेव भवति ततो वामयेत्।
उपस्निग्धं च विरेचयेत्॥

**अउ28.30**
अरूंषिकासु जलौकोपहृतशोणितं शिरः क्षुरामृष्टं वा निम्बोदकेन परिषिच्याश्वशकृद्रसेन लवणप्रगाढेन लेपयेत्।
किञ्चित् कालं स्थितं चोष्णोदकाम्लकाञ्जिकान्यतरधौतं विडङ्गव्योषलाक्षागारधूममनोह्वालवचारसाञ्जनहरिद्राद्वयैरालिम्पेत्।
तिलमष्या वा स्नुहीक्षीरयुक्तया।
मधुकोत्पलतिलैरण्डमार्कवपत्रैर्वा।
शिग्रुमूलकसर्षपबीजैर्वा गोमूत्रपिष्टैः।
वालकामलकनागरमूलकसर्षपबीजैर्वा क्षीरपिष्टैः।
शिरीषत्वग्यष्टीमधुकाभ्यां वा।
पुराणपिण्याककुक्कुटपुरीषाभ्यां वा॥

**अउ28.31**
कपालभृष्टकुष्ठचूर्णं तैलयुक्तं कण्डूक्लेददाहस्वेदवेदनाघ्नम्।
तथा चाचोक्तं चित्रकादितैलमभ्यञ्जनम्। दन्तीपाठाकोशातकीचित्रकातिविषामहालाङ्गलकीसिद्धं तैलं व्रणाभ्यङ्गः॥

**अउ28.32**
मनश्शिलैलाहरितालपिप्पलीकुष्ठकासीसहरिद्राकरञ्जमुस्तातगरविडङ्गंचित्रकसिद्धार्थककरवीरमूलचूर्णगर्भं तैलमादित्यपाकं व्रणरोपणम्।
एवमनुपशमे वमनधूमकायशिरोविरेकान् कुर्यात्॥

**अउ28.33**
दारणके ललाटे सिरां विध्येत्।
अभ्यङ्गस्नाननावनानि च शीलयेत् प्रियालबीजमधुककुष्ठमाषसर्षपैः सक्षौद्रैर्लेपः।
कोद्रवतृणक्षाराम्भः प्रक्षालनम्॥

**अउ28.34**
इन्द्रलुप्ते यथासन्नं सिरां विध्वा तुत्थकासीसमनश्शिलामरिचैर्लेपयेत्।
भद्रदारुकुटन्नटाभ्यां वा चित्रककरवीरनक्तमालमालतीसिद्धेन वा तैलेनाभ्यज्यात्॥

**अउ28.35**
अवगाढपदं वा सूचीकूर्चकेन प्रच्छाय भूयोभूयः प्रदिह्यात् कपोतपङ्कामूलेन लाङ्गीलकामूलेन वा महिषीक्षीरपिष्टेन॥

**अउ28.36**
घृष्टलिप्तमेरण्डपत्रावच्छादितं रात्रिमुषितं माहिषनवनीतेन लिम्पेत्।
मार्कवपत्रसहचरपुष्पपक्वं वा।
वार्ताकफलैस्तैलं पक्वं क्षौद्राञ्जनयुक्तमालेपः।
सक्षौद्रो वा क्षुद्रवार्ताकरसः।
जलशूलो वा पलाशक्षारसान्द्रः॥

**अउ28.37**
गोशकृता वा घृष्टमिन्द्रलुप्तमरुष्करसेनावलिप्यान्तर्धूमदग्धकूर्ममष्यावचूर्णयेत्।
कूर्मकपालभस्मना वा सुरसारसाक्तेन प्रदिह्यात्।
हस्तिदन्तमष्या वा तैलान्वितया।
पूतीकरञ्जप्रत्राणि वा ससैन्धवानि लेपः।
पिप्पल्यञ्जनरसाञ्जनबाकुचिकाफललोहरजांसि वा गोमूत्रपिष्टानि।
खलतिविहितानि चाचरेत्।
सलिलसेकमारोमोद्गमात् परिहरेत्॥

**अउ28.38**
खलताविन्द्रलुप्तोक्तः क्रमो यथादोषं च संशुद्धिः॥

**अउ28.39**
त्रिफलार्जुनसैर्यकत्वक्पुष्पकृष्णपिण्डीतकफलमूलनीलोत्पललोहचूर्णकासीसजम्वूमार्कवमञ्जिष्ठामेषशृङ्गीखदिररजः सकर्दममर्दितोक्ताणुतैलयुक्तमसन सारसमुद्गके न्यस्तं कर्दमे मासं निखातं स्थितमुद्धृतं सूचीकूर्चप्रच्छितायाः खलतेर्लेपः परं रोमसञ्जननः॥

**अउ28.40**
रक्ताग्निमन्थपुष्पकिंशुकनलदमूलमधुकहस्तिदन्तभस्मान्यविक्षीरपिष्टानि लेपः॥

**अउ28.41**
जम्बूद्वयत्वक्पत्रमधुकभृङ्गरजास्त्रिफलाश्लेष्मातकमञ्जिष्ठाफणिज्जकबलाद्राक्षाजशृङ्गीचपलातिविषाकट्फलकल्केन क्षीरिवृक्षक्काथेन च तिलतैलमक्षतैलं चैकध्यं साधयेत् तन्नस्येऽभ्यङ्गे च नियुञ्ज्यात्।
एवमेव मधुरवर्गकल्केन॥

**अउ28.42**
खलतिपलितयोश्च प्रयोगान् परस्परं विदध्यात्।

**अउ28.43**
अकालपलितेषु वातादीनवेक्ष्य स्नेहस्वेदसंशो धनास्रविस्रावणानि कुर्यात्।
ततोस्यार्दितप्रोक्तमणुतैलं नस्यमभ्यञ्जनं च॥

**अउ28.44**
मधुकामलकमाक्षिकैः केशमूलानि लिम्पेत्।
तिलामलकक्षौद्रतैलैर्वा।
तुत्थकाम्रजम्ब्वस्थिकासीसकिट्टशर्कराभिर्वा।
सैर्यकपुष्पनीलिनीत्रिफलाभृङ्गरजोभिर्वा कृष्णाजमूत्रपिष्टैः॥

**अउ28.45**
असनपुष्पपत्रमये पात्रे बहिरामलकीकल्कप्रदिग्धे निहितमक्षतैलं षण्मासं व्रीहिपल्ले स्थितमभ्यङ्गान्नावनाच्च पलितं जयति।
अयमेव कल्पः सैरीयकेपि॥

**अउ28.46**
कपिकच्छूफलमूलगर्भमक्षतैलं सिद्धमयःपात्रे पूर्ववत् स्थितं समानं पूर्वेण॥

**अउ28.47**
रामतरणीमूलपलद्वयं यष्टीमधुकपलं सारिवार्धपलमेकत्रजर्जरीकृतमक्षतैलपलैर्दशभिराप्लुतं लोहभाजने दशाहं दिवसकरकरप्रतप्तं नावनात् पलितघ्नं सर्वेन्द्रियदार्ढ्यावहं च॥

**अउ28.48**
कृष्णातिलतिलपर्णीत्रिफलामधुककासीसपद्मककर्दममांसीमार्कवमसनपत्रस्वरसपिष्टं त्रिरात्रमयः पात्रे स्थापयेत्।
ततः पूर्वोक्तरसद्रुतेन पद्मिनीकर्दमप्रलिप्तप्रधौतान् केशान् कपालं च लेपयेत्।
ततः पद्मिनीकर्दमैः प्रच्छाय कौशेयेन वेष्टयेत्।
तृतीये चाह्नि प्रक्षाल्यैवमेव कुर्यात्।
एवमलिकुलनीलाः केशाः शिरो विभूषयन्ति।
भवति चात्र॥

**अउ28.49**
खलतौ पलिते वल्यां हरिल्लोम्नि च शोधितम्।
नस्यवक्त्रशिरोभ्यङ्गप्रदेहैः समुपाचरेत्॥

**अउ28.50**
सिद्धं तैले बृहत्याद्यैर्जीवनीयैश्च नावनम्॥

**अउ28.51**
क्षीरात्साहचरात् भृङ्गरजसः सौरसाद्रसात्।
प्रस्थस्तैलस्य कुडवो यष्टीमधुपलान्वितः॥

**अउ28.52**
सिद्धश्शैलासने भाण्डे शृङ्गे मेषस्य वा स्थितः।
नस्यं स्यात् #

**अउ28.53**
क्षीरपिष्टौ वा दुग्धिकाकरवीरकौ।
उत्पाट्य पलितं देयावाशये पलितापहौ॥

**अउ28.54**
आदित्यवल्या मूलानि कृष्णसैरेयकस्य च।
फलं कृष्णशणात्पत्रं सुरसाद्यष्टिमार्कवम्॥

**अउ28.55**
सुराह्वं काकमाची च पृथग्दशपलांशिकम्।
प्रपौण्डरीकमञ्जिष्ठालोध्रकृष्णागरूत्पलम्॥

**अउ28.56**
आम्रास्थिकर्दमःकृष्णो मृणाली रक्तचन्दनम्।
नीलीभल्लातकास्थीनि कासिसं मदयन्तिका॥

**अउ28.57**
सोमराज्यसनं शस्त्रं कृष्णं पिण्डीतचित्रकौ।
पुष्पाण्यर्जुनकाश्मर्या आमजम्बूफलाज्जनम्॥

**अउ28.58**
प्रत्येकं पञ्चपलिकं पिष्टं सत्रिफलाकणम्।
अक्षतैलाढकं तेन पचेद्धात्रीरसार्मणे॥

**अउ28.59**
कुर्यादादित्यपाकं वा यावच्छुष्को भवेद्रसः।
लोहपात्रे ततः पूतं महानीलं प्रयोजितम्॥

**अउ28.60**
तत्पाने नावनेऽभ्यङ्गे शुद्धस्य नियतात्मनः।
सर्वजत्रूर्ध्वरोगघ्नं पलितघ्नं विशेषतः।
एभिरेव च भैषज्यैः शिरो वक्त्रं च लेपयेत्॥

**अउ28.61**
क्षीरं प्रियालं यष्ट्याह्वं जीवनीयो गणस्तिलाः।
कृष्णाः प्रलेपो वक्त्रस्य हरिल्लोमवलीहितः॥

**अउ28.62**
तिलाः सामलकाः पद्मकिञ्जिल्को मधुकं मधु।
बृंहयेद्रञ्जयेच्चैतत् केशान् मूर्ध्नः प्रलेपनात्॥

**अउ28.63**
पचेत् सैन्धवशुक्ताम्लैरयश्चूर्णं सतण्डुलम्।
तेनालिप्तं शिरः शुद्धमस्निग्धमुषितं निशाम्।
तत्प्रातस्त्रिफलौधातं स्यात्कृष्णस्निग्धमूर्द्धजम्॥

**अउ28.64**
अयश्चूर्णोऽम्लपिष्टश्च रागः सत्रिफलो वरः॥

**अउ28.65**
कन्यायास्तिलनिम्बवीजमधुकश्रेष्ठावचामार्कवात्।
चूर्णंछागलगव्यमाहिषपलस्नेहेन सम्प्लावितम्।
पात्रे स्थापितमायसे क्षितितले मासं निधायोद्धृतं।
पालित्यं खलतिं च दर्पणनिभां हन्त्येतदभ्यञ्जनात्॥

**अउ28.66**
बीजैःश्लेष्मातकस्य व्यपगमिततुषैःकाञ्जिकश्लक्ष्णपिष्टैर्यल्लिप्ताल्लोहदण्डाद्दिनकरकिरणैस्तापिपतात् प्रच्यवेत।
तत्तैलं केशकार्ष्ण्यं जनयति परमं नावनाभ्यञ्जनाभ्यां मूर्द्धघ्राणाक्षिदन्तश्रवणगलरुजं हन्ति निश्शेषतश्च॥

**अउ28.67**
बलामधूकमधुकविदारीचन्दनोत्पलैः।
जीवकर्षभकद्राक्षाशर्कराभिश्च साधितः॥

**अउ28.68**
प्रस्थस्तैलस्य सक्षीरो जाङ्गलार्धतुलारसे।
नस्यं सर्वोर्ध्वजत्रूत्थवातपित्तामयापहम्॥

**अउ28.69**
मयूरं पक्षपित्तान्त्रपादविट्तुण्डवर्जितम्।
दशमूलबलारास्नामधुकैस्त्रिफलैर्युतम्॥

**अउ28.70**
जले पक्त्वा घृतप्रस्थं तस्मिन् क्षीरसमं पचेत्।
कल्कितैर्मधुरद्रव्यैः सर्वजत्रूर्ध्वरोगनित्।
तदभ्यासीकृतं पानबस्त्यभ्यञ्जननावनैः॥

**अउ28.71**
एतेनैवकषायेण घृतप्रस्थं विपाचयेत्।
चतुर्गुणेनपयसा कल्कैरेभिश्च कार्षिकैः॥

**अउ28.72**
जीवन्तीत्रिफलामेदामृद्वीकर्द्धिपरूपकैः।
समङ्गाचविकाभार्ङ्गीकाश्मरीकर्कटाह्वयैः॥

**अउ28.73**
आत्मगुप्तामहामेदातालखर्जूरमस्तकैः।
मृणालबिसखर्जूरयष्टीमधुकजीवकैः॥

**अउ28.74**
शतावरीविदारीक्षुबृहतीसारिबायुगैः।
मूर्वाश्वदंष्ट्रर्षभकशृङ्गाटककशेरुकैः॥

**अउ28.75**
रास्नास्थिरातामलकीसूक्ष्मैलाशठिपौष्करैः।
पुनर्नवातवक्षीरीकाकोलीधन्वयासकैः॥

**अउ28.76**
मधुकाक्षोडवातामुञ्जाताभिषुकैरपि।
महामाधूरमित्येतन्मायूरादधिकं गुणैः॥

**अउ28.77**
धात्विन्द्रियस्वरभ्रंशश्वासकासार्दितापहम्।
योन्यसृक्शुक्रदोषेषु शस्तं वन्ध्यासुतप्रदम्॥

**अउ28.78**
आखुभिः कुक्कुटैर्हंसैः शशैश्चेति प्रकल्पयेत्॥

**अउ28.79**
जत्रूर्ध्वजानां व्याधीनामेकत्रिंशच्छतद्वयम्।
परस्परमसङ्कीर्णं विस्तरेण प्रकाशितम्॥

**अउ28.80**
ऊर्ध्वमूलमधःशाखमृषयः पुरुषं विदुः।
मूलप्रहारिणस्तस्माद्रोगान् शीघ्रतरं जयेत्॥

**अउ28.81**
सर्वेन्द्रियाणि येनास्मिन् प्राणा येन च संश्रिताः।
तेन तस्योत्तमाग्गस्य रक्षायामादृतो भवेत्॥
॥इति अष्टाविंशोऽध्यायः॥

अथ एकोनत्रिंशोऽध्यायः।

**अउ29.1**
अथातो व्रणविभक्तिपरिज्ञानीयं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्त्रेयादयो महर्षयः॥

**अउ29.2**
यावदायुर्वृणीते विवृणोति वा शरीरमितिव्रणः॥

**अउ29.3**
स च द्विविधो निज आगन्तुश्च।
तत्र निजो दोषसमुत्थः।
आगन्तुः शस्त्रानुशस्त्रोपललगुडनखदशनविषाणविषारुष्करादिनिमित्तः।
सोऽपि पुनर्वातादिभिरधिष्ठितो निजतां लभते॥

**अउ29.4**
पुनश्च द्वेधा व्रणो दुष्टः शुद्धश्च।
तत्रदोषदूषितो दुष्टः॥

**अउ29.5**
तस्य सामान्यलिङ्गमतिसंवृतविवृतत्वमतिमृदुकठिनतात्युत्सादावसादावतिशीतोष्णभावोतिरक्तकृष्णपाण्डुता पूतीमांससिरास्नायुप्रतिच्छन्नत्वं पुतीपूयास्रावः सोत्सङ्गिता दाहपाककण्डूश्वयथुवेदनासंरम्भपिटकोपद्रवोपद्रुतत्वं दीर्घकालानुबन्धश्च॥

**अउ29.6**
विशेषतस्तु पञ्चदशधा भिद्यते॥

**अउ29.7**
तत्र श्यावोऽरुणः कृष्णो भस्मास्थिकपोतगलान्यतमवर्णो वा दधिमस्तुक्षाराम्बुमांसधावनपुलाकोदकनिभाल्पस्रावो रूक्षश्चटचटायमानशीलोऽकस्माद्विविधशूलस्फुरणायामतोदभेदस्वापबहुलो निर्मांसश्च वातात्॥

**अउ29.8**
क्षिप्रजः पीतनीलहरितकृष्णकपिलपिङ्गलो गोमूत्रभस्मशङ्खकिंशुकोदकमार्द्वीकतैलाभोष्णभूरिक्लेदो दाहोषाज्वररागपाकावदरणधूमायनान्वितः क्षारोक्षितक्षतोपमवेदनः पिटकाजुष्टश्च पित्तात्॥

**अउ29.9**
स्निग्धः स्थूलौष्ठाः पाण्डुश्चण्डकण्डूर्नवनीतवसामज्जपिष्टतिलनारिकेलाम्बुसदृशश्वेतशीतबहलपिच्छिलक्लेदः स्वापस्तम्भस्तैमित्यगौरवोपदेहयुक्तः सिरास्नायुजालावततो मन्दवेदनः कठिनश्च कफात्॥

**अउ29.10**
प्रवालरक्तः कृष्णस्फोटपिटकाजालोपचितो वाजिस्थानगान्धिः।
सरक्तपूयस्रावी पित्तलिङ्गश्च रक्तात्॥

**अउ29.11**
यथास्वलिङ्गसङ्करे द्वाभ्यां त्रिभिः सर्वैश्च दुष्टं वियात्।
अपि च।
घृतमण्डाभो मत्स्यधावनगन्धिर्मृदुर्विसर्पी कृष्णपूयश्च पित्तरक्ताभ्याम्॥

**अउ29.12**
वातादिभिरेव च व्रणस्यानधिष्ठानं शुद्धिः।
तत्र यथोक्तदुष्टलिङ्गाभावात् संरम्भरहितत्वं जिह्वावर्णता श्लक्ष्णत्वं नीरुजत्वं निरास्रावता श्यावपर्यन्तत्वं समौष्ठमध्यता किञ्चिदुन्नतमध्यता वा॥

**अउ29.13**
त्वङ्मांससिरास्नायुसन्ध्यस्थिकोष्ठमर्माण्यष्टौ व्रणाशयाः।
आशयविशेषाच्चास्रावविशेषः॥

**अउ29.14**
तत्र घृष्टासु वा त्वक्षु स्फोटेषु वा भिन्नेषु सलिलप्रकाशो भवत्यास्रावः।
किञ्चिद्विस्रः पीतावभासश्च॥

**अउ29.15**
मांसगतः सर्पिःप्रकाशो बहलः पिच्छिलश्च॥

**अउ29.16**
सिरागतस्तु सद्यश्छिन्नासु सिरासु रक्तातिप्रवृत्तिः।
पक्वासु च तोयनाडीभिरिवाम्भसः पूयस्यागमनम्।
स च तनुर्विच्छिन्नः पिच्छिलोऽवलम्बी श्यावश्च॥

**अउ29.17**
स्नावगतः स्निग्धो घनः सिङ्घाणकप्रतिमः सरक्तश्च॥

**अउ29.18**
सन्धिगतः समन्तात् प्रपीड्यमानो न प्रवर्तते तथाकुञ्चनप्रसारणोन्नमननमनप्रवाहणेषु स्रवति पिच्छिलोऽवलम्बी स फेनरुधिरोन्मिश्रश्च॥

**अउ29.19**
अस्थि त्वभिहतं स्फुटितं भिन्नं दोषावदारितं वा दोषभक्षितत्वान्निस्सारं भवति।
आस्रावश्चात्र मज्जमिश्रः सरुधिरः स्निग्धश्च॥

**अउ29.20**
कोष्ठश्रितस्तु व्रणो मूत्रपुरीषरुधिरपूयोदकानि स्रवति॥

**अउ29.21**
मर्मगतस्तु नोच्यते त्वगादिष्वेवावरुद्धत्वात्॥

**अउ29.22**
तेषु यथापूर्वं सुखसाध्यत्वम्।
तथायतश्चतुरस्रो वृत्तस्त्रिपुटकश्च व्रणः।
शेषास्तु विकृताकृतयो दुरुपचाराः।
ते च प्रायशो भवन्त्यागन्तवः।
स्वयं विदीर्णाश्च दोषजा न तु वैद्यकृताः॥

**अउ29.23**
वयस्थानां दृढानां प्राणवतां सत्ववतामात्मवतां दीप्ताग्नीनां च व्रणाः सुचिकित्स्याः॥

**अउ29.24**
तत्र वयस्थानां प्रत्यग्रधातुत्वादाशुव्रणसंरोहो भवति।
दृढानां स्थिरबहुमांसत्वाच्छस्त्रमवचार्यमाणं सिरास्नाय्वादीन् न प्राप्नोति।
प्राणवतां वेदनाहारविहारयन्त्रणादिभिर्न ग्लानिः।
सत्ववतां दारुणैरपि क्रियाविशेषैर्न व्यथा भवति।
आत्मवतां सुनियमिताहारविहारादिभिरुपदेशैर्नान्यथा भवति दीप्ताग्नीनाम् प्रक्लिन्नदेहत्वात्।
प्रकृतितश्चाप्रक्लेदिशरीराणां तद्वधयोश्च देशकालयोरास्रावदैर्गन्ध्याभावादाशु विशुद्धेन मांसेनानुपद्रवमापूरणम्॥

**अउ29.25**
एत एव गुणा वृद्धकृशाल्पप्राणभीरुमन्दाग्निप्रक्लेदिदेहदेशकालेषु विपरीताः शिष्योपनयनीयं चेक्षेत॥

**अउ29.26**
तथा स्फिक्पायुप्रजननललाटगण्डौष्ठपृष्ठकर्णफलकोशोदरजत्रुमुखाभ्यन्तरस्थाः सुखरोपणीयाः।
विपरीतास्त्वक्षिदन्तनासापाङ्गश्रोत्रनाभिजठरसेवनीनितम्बपार्श्वकुक्षिवक्षःकक्षास्तनसन्धिभागगताः। सफेनपूयरक्तानिलवाहिनोन्तःशल्याश्चाधोभागाच्चोर्ध्वभागनिर्वमना रोमान्तोपनखमर्मजङ्घास्थिघ्राणाश्रिताश्च।
भगन्दरश्चान्तर्मुखः सेवनीकट्यस्थिसंश्रितः।
अपि च॥

**अउ29.27**
कुष्ठिनां विषजुष्टानां शोषिणां मधुमेहिनाम्।
व्रणाः कृच्छ्रेण सिध्यन्ति येषां च स्युर्व्रणे व्रणाः॥

**अउ29.28**
याप्यास्त्ववपाटिका निरुद्धमणिरुद्धगुदव्रणग्रन्थिप्रभृतयः सर्वास्थिक्षतं च॥

**अउ29.29**
असाध्याः पुनर्मांसपिण्डवदुद्गताः प्रसेकिनोन्तःपूया वेदनावन्तश्च पायुवदुद्वृत्तौष्ठाः कठिना गोशृङ्गवदुन्नतमांसप्ररोहा दुष्टशोणितास्राविणस्तनुपिच्छिलास्रावस्राविणो वा मध्योन्नताः समवसन्नसुषिरपर्यन्ताः शणतूलवत्स्नायुजालवन्तो दुर्दर्शना मेदोमज्जवसामस्तुलुङ्गस्राविणश्च दोषसमुत्थाः पीतासितामूत्रपुरीषवातवाहिनश्च कोष्ठस्थाः रक्तशयजाश्च क्षारोदकसमास्रावाः पक्वाशयजाश्च पुलाकोदकमिव स्रवन्तः क्षीणमांसानां च सर्वतोगतयस्त्वणुमुखमांसबुद्बुदवन्तः सशब्दवातवाहिनश्च शिरःकठस्था विसर्पज्वरपिपासारोचकाविपाककासश्वासातीसारच्छर्दियुक्ताः भिन्नो च शिरःकपाले यत्र मस्तुलुङ्गदर्शनं त्रिदोषलिङ्गप्रादुभावो वा स्यादिति।
भवति चात्र॥

**अउ29.30**
स्नायुक्लेदात् सिराच्छेदात् गाम्भीर्यात् कृमिभक्षणात्।
अस्थिभेदात् सशल्यत्वात् सविषत्वादतर्कितात्॥

**अउ29.31**
मिथ्याबन्धादतिस्नेहाद्रौक्ष्याद्रोमादिघट्टनात्।
क्षोभादशुद्धकोष्ठत्वात् सौहित्यादतिकर्शनात्॥

**अउ29.32**
मद्यपानाद्दिवास्वप्नाद्व्यायामाद्रात्रिजागरात्।
व्रणो मिथ्योपचाराच्च नैव साध्योपि सिध्यति॥

**अउ29.33**
कपोतवर्णप्रतिमा यस्यान्ताः क्लेदवर्जिताः।
स्थिराश्च पिटकावन्तो रोहतीति तमादिशेत्॥
॥इति एकोनत्रिंशोऽध्यायः॥

अथ त्रिंशोऽध्यायः।

**अउ30.1**
अथातो व्रणप्रतिषेधं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ30.2**
व्रणस्य शोफावस्थायां शस्त्रकर्मविधौ श्वयथुचिकित्सिते च साधनमुद्दिष्टम्।
तत्रापतर्पणमेवादौ प्रधानतमम्।
अपि च॥

**अउ30.3**
दोषोच्छ्रायोपशान्त्यर्थमुपदिष्टं यथायथम्।
अवेक्ष्य देहप्राणादीन् कर्तव्यमपतर्पणम्॥

**अउ30.4**
रागसंरम्भरहिताः परिम्लाना हृताश्रयाः।
सद्यः शाम्यन्ति शुद्धानां व्रणाः शोफाश्च देहिनाम्॥

**अउ30.5**
लेपाभ्यङ्गपरीषेकान् यथोक्तांश्च प्रयोजयेत्।
यथाम्बुभिः सिच्यमानः शान्तिमग्निर्नियच्छति।
दोषाग्निरेवं सहसा प्रलेपाद्यैः प्रयोजितैः॥

**अउ30.6**
प्रतिलोममेव चानुलिपेन्नानुलोमम्।
तथाह्यौषधं सम्यगवतिष्ठते।
अनुप्रविशति च रोमकूपान्।
न तु शुष्यदुपेक्षितव्यमन्यत्रपीडयितव्यात्।
शुष्कं हि दाहोषारागश्यावत्वशूलानि वर्धयति॥

**अउ30.7**
यस्तु शीतस्तनुर्मुहुर्मुहुश्च प्रयुज्यते स प्रदेहो रक्तपित्तत्वचां प्रसादकृत्।
प्रलेपस्तूष्णः शीतो वा बहलश्च तथा वातश्लेष्मप्रशमनस्तस्योपयोगः क्षताक्षतेषु।
यस्तु क्षतेषूपयुज्यते स भूयः कल्क इति संज्ञां लभते॥

**अउ30.8**
दशविधश्च समासादालेपः।
तद्यथा।
स्नैहिको निर्वापणः प्रसादनः स्तम्भनो विलायनः पाचनः पीडनः शोधनो रोपणः सवर्णीकरणश्च॥

**अउ30.9**
तत्र वाते स्निग्धद्रव्यैः स्नेहाढ्यैः स्नेहेनैव वा स्नैहिकः।
पित्ते पित्तप्राये च शोफे विषाग्निक्षारदग्धे च शीतैर्निर्वापणः।
स एव चान्तर्दुष्टे रक्ते प्रसादनः।
स एव च पुनरस्रातिप्रवृत्तौ स्तम्भनसंज्ञः।
श्लेष्ममेदोभूयिष्ठे शीतैश्चाविदग्धे पिष्टलब्धे ग्रथिते वा रूक्षैर्विलायनः।
तैरेव च विदग्धे पाचनः।
सूक्ष्मास्ये व्रणे रूक्षैः पिच्छिलैश्च पीडनः।
अशुद्धे यथास्वमुपदिष्टैः शोधनः।
शुद्धे रोपणः।
रूढे च सवर्णीकरणः।
नामभिरेवचैषां स्वरूपमाख्यातम्॥

**अउ30.10**
न च प्रदेहं रात्रौ प्रयुञ्जीत।
माभूच्छैत्यपिहितस्योष्मणो बहिरनिस्सरणाद्विकारपरिवृद्धिः॥

**अउ30.11**
पुष्कलावतस्तु पठति॥

**अउ30.12**
तमसा पिहितोह्यूष्मा रोमकूपैरनावृतैः।
लेपांद्दिनैव निर्याति रात्रौ नालेपयेदतः॥

**अउ30.13**
न च पर्युषितं लेपं दद्यात् भूयस्तमेव वा।
व्यम्लः पर्युषितो हि स्यात् भ्रष्टवीर्यस्तथेतरः॥

**अउ30.14**
शोफे व्रणे च कठिने विवर्णे वेदनान्विते।
सविषे च विशेषेण जलजाद्यैर्हरेदसृक्।
वेदनायाःप्रशान्त्यर्थं पाकस्याप्राप्तयेपि च॥

**अउ30.15**
निर्वापणान् पुनश्चात्र न्यग्रोधाद्यैः सुशीतलान्।
कुर्यात् प्रदेहसेकादीन् सघृतक्षीरशर्करान्॥

**अउ30.16**
न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलैः।
प्रदेहो भूरिसर्पिर्भिः शोफनिर्वापणः परम्।
प्रदेहः ससितस्तद्वत् सक्तवो मधुकं घृतम्॥

**अउ30.17**
वातोल्बणानां स्तब्धानां कठिनानां महारुजाम्।
स्रुतासृजां च शोफानां व्रणानामपि चेदृशाम्॥

**अउ30.18**
ग्राम्यानूपौदकामिषवेशवारकृसरापायसोत्कारिकाभिः स्वेदो योज्यः॥

**अउ30.19**
सदाहशूलांस्तु तिलानतसीश्च भृष्ट्वा पयसि निर्वाप्य तेनैव क्षीरेण पिष्ट्वा प्रलेपयेत्॥

**अउ30.20**
बलामधुकपृश्निपर्णीच्छिन्नरुहाभीरुजीवन्तीशर्करामदनक्षीरमहास्नेहसिद्धोत्कारिका कवोष्णा शूलदाहहरा॥

**अउ30.21**
तद्वन्मधुकयवचूर्णतैलसर्पिर्भिः कोष्ण आलेपः।
तथा सतिलो मुद्गपायसमुपनाहः॥

**अउ30.22**
दशमूलसिद्धेन सुखोष्णेनाम्भसा पयसा वा घृततैलाभ्यां वा परिषेकः शोफे व्रणे वा दाहशूलघ्नः॥

**अउ30.23**
स्थिराणां मन्दवेदनानां शोफानां विम्लापनं कार्यम्॥

**अउ30.24**
अभ्यज्य स्वेदयित्वा च वेणुनाड्या ततः शनैः।
विम्लापनार्थं मृद्नीयात्तलेनाङ्गुष्ठकेन वा॥

**अउ30.25**
तथास्फोतपत्रमसूरकल्केनालेपः।
सुसिद्धपिष्टैः सघृतैर्मुद्गयवगोधूमैर्वा॥

**अउ30.26**
विलीयते स चेन्नैवं ततस्तमुपनाहयेत्।
आवदग्धस्तथा शान्तिं विदग्धः पाकमश्नुते॥

**अउ30.27**
शिग्रुशणफलचित्रककिण्वनिष्पावसर्षपतिलातसीसकुकोलगृहधूमैरम्लपिष्टैः सुखोष्णैः स्निग्धैः सलवणैरुत्कारिकां कृत्वा तथा प्रलिप्यैरण्डपत्रेणावच्छाद्यबध्नीयात्॥

**अउ30.28**
पाकाभिमुखे च शोफे यथेष्टमातुरं भोजयेत् पाचनार्थं पाकवेदनाशस्त्रकर्मसहनार्थं च॥

**अउ30.29**
पक्वे तु यथोक्तेन विधिना शस्त्रमवचारयेत्।
सुपक्वे पिण्डिते शोफे पीडनैरुपपीडिते।
दारणं दारणाअर्हस्य दोषपाकोद्धते हितम्॥

अस30.30। चित्रकचिरबिल्वदन्तीकरवीरमूलकपोतपङ्कगृध्रपुरीषैर्गुग्गुल्वतसीस्नुहीक्षीरपलाशक्षारसुवर्णक्षीरीदक्षशकृन्मुकूलकैर्वा क्षारौषधैर्वा क्षारेण वा॥

**अउ30.31**
पूयगर्भानणुद्वारान् सोत्सङ्गान् मर्मगानपि।
निःस्नेहैः पीडनद्रव्यैः समन्तात्प्रतिपीडयेत्॥

**अउ30.32**
शुष्यन्तं समुपेक्षेत प्रलेपं पीडनं प्रति।
न मुखे चैनमालिम्पेत्तथा दोषः प्रसिच्यते॥

**अउ30.33**
कलाययवगोधूममुद्गमाषहरेणवः।
द्रव्याणां पिच्छिलानां च त्वङ्मूलानि प्रपीडने॥

**अउ30.34**
विवर्णान् पिच्छिलान् पूतिगन्धीन् क्लेदरुजावतः।
व्रणानशुद्धान् विज्ञाय शोधनैरोभिराचरेत्॥

**अउ30.35**
शङ्खिन्यङ्कोलसुमनःकरवीरसुवर्चलाः।
त्रिफला खदिरो दार्वी कोलपत्रं पलङ्कषा।
प्रक्षालने कषायाणि वर्गश्चारग्वधादिकः॥

**अउ30.36**
पटोलीतिलयष्ट्याह्वत्रिवृद्दन्तीनिशाद्वयम्।
निम्बपत्राणि चालेपः सपटुर्व्रणशोधनः॥

**अउ30.37**
अजगन्धाजशृङ्गी च गवाक्षी लाङ्गली निशा।
पूतीकश्चित्रकः पाठा पटोलीवेल्लरेणुकाः॥

**अउ30.38**
कटुत्रयं यवक्षारो लवणानि सुराष्ट्रजा।
निकुम्भकुम्भकासीसहरितालमनश्शिलाः।
कल्काज्यतैलरसजाचूर्णवर्तिषु भेषजम्॥

**अउ30.39**
तत्र गम्भीरेषु पित्तात्मकेषु दाहपाकवत्सु व्रणेष्वतीक्ष्णोष्णैरेभिः कार्पासीफलमिश्रं कल्कं घृतं च साधयित्वा योजयेत्॥

**अउ30.40**
उत्सन्नमांसेष्वल्पस्रावेषु रूक्षेषु तिलापामार्गबृहतीद्वययुक्तैः पूर्वोक्तैः पूतीकादिभिः सर्षपं तैलं च॥

**अउ30.41**
प्रचलप्रदेशजेषु क्लेदबहुलेषूत्सन्नस्थिरमांसेषु तैलेन चासिध्यत्सु रसक्रियां कुर्यात्।
यथोक्तानां संशोधनौषधानां कषाये पुनः परिस्राव्याधिशृते मनश्शिलातुवरीकासीसचूर्णप्रतीवापसिद्धां च मातुलुङ्गरसोपेतां सक्षौद्रां युञ्जीत॥

**अउ30.42**
मेदोयुक्तेषु गम्भीरेषु क्लेदिषु कल्कैश्चासिध्यस्सु॥

**अउ30.43**
वचायां सैन्धवे किण्वे कासीसे रजनीद्वये।
शोधनाग्र्येषु चान्येषु चूर्णं कुर्वीत शोधनम्॥

**अउ30.44**
अन्तःशल्यानणुद्वारान् गम्भीरान् मांससंश्रितान्।
सन्धिमर्मनिविष्टांश्च शोधयेद्वर्तिभिर्व्रणान्॥

**अउ30.45**
वाताभिभूतान् सास्रावान् धूपयेदुग्रवेदनान्।
श्रीवेष्टकसर्जरससालदेवदारुशिंशपाखदिरासनकैडर्यसारयवमधूच्छिष्टभूर्जपत्रपक्षौमसर्पिर्भिः॥

**अउ30.46**
निर्वापयेत् भृशं शीतैः पित्तरक्तविषोल्बणान्॥

**अउ30.47**
शुष्काल्पमांसे गम्भीरे व्रण उत्सादनं हितम्॥

**अउ30.48**
अश्वगन्धापामार्गतालपत्रीसुवर्चलाबलातिबलानन्ताधातकीकुसुमसमङ्गाभिः पद्मकादिवर्गेण न्यग्रोधादिना च कल्कस्तथा सर्पीष्यभ्यञ्जनार्थे॥

**अउ30.49**
अद्यान्मांसादमांसानि विधिनोपहितानि च।
मांसं मांसादमांसेन वर्धते शुद्धचेतसः॥

**अउ30.50**
उत्सन्नमृदुमांसानां व्रणानामवसादनम्॥

**अउ30.51**
मन्थदन्तीशिरीषकरञ्जफलभूर्जग्रन्थिकुक्कुटाण्ड्Aत्वक्कपोतकलविङ्कपुरीषनेपालीहरितालचूर्णानि सक्षौद्राणि॥

**अउ30.52**
सरुजे कठिने स्तब्धे रूक्षे शुष्यति च व्रणे॥

**अउ30.53**
मार्दवजननार्थं व्रणाविरोधि वातघ्नसिद्धस्य सर्पिषः पानम्।
तद्विधैरेव च सिद्धं तैलमभ्यङ्गः।
पूर्वोक्ताश्च स्वेदाः।
तथा सर्पिर्मज्जवसाभिर्धूपाः सुस्निग्धसक्तुसैन्धवकिण्वतिलपिष्टकृसरपायसानूपवेशवाराःकिञ्चिदुष्णा बहुशः प्रलेपाः॥

**अउ30.54**
पित्तविद्रधिवीसर्पशोफकुष्ठघृतानि च।
सर्वव्रणेषु योज्यानि पानसेकप्रलेपने॥

**अउ30.55**
अतिमृदुमांसेषु व्रणेषु दारुणीकरणार्थं त्रिफलालोध्राम्रसर्जजम्बूप्रियङ्ग्वशोकवल्कलानि।
सौराष्ट्रीकासीसरोचनावचूर्णनम्।
सारैर्गन्धैश्च धूपः॥

**अउ30.56**
उत्सन्नमांसान् कठिनान् कण्डूयुक्तांश्चिरोत्थितान्।
व्रणान् सुदुःखशोध्यांश्च शोधयेत् क्षारकर्मणा॥

**अउ30.57**
स्रवन्तोऽश्मरिजा मूत्रं चान्ये रक्तवाहिनः।
छिन्नाश्च सन्धयो येषां यथोक्तैर्ये च साधनैः।
साध्यमाना न सिध्यन्ति शोध्याःस्युस्तेऽग्निकर्मणा॥

**अउ30.58**
व्रणानामथ शुद्धानां रोपणानि प्रयोजयेत्।
असनादिन्यग्रोधादिवर्गधवसल्लकीकुटजत्वचो मञ्जिष्ठासमङ्गामृताश्वगन्धारग्वधधातकीपुष्पाणि पद्मकादिश्च प्रक्षालनादिषु सप्तसु प्रयोज्या इति।
भवन्ति चात्र॥

**अउ30.59**
उत्सन्नदुष्टपिशिते सङ्क्लिष्टध्यामशोणिते।
व्रणे प्रच्छर्दनं शस्तं कफदुष्टे विशेषतः॥

**अउ30.60**
विरेचनं पित्तदुष्टे दीर्घकालानुबन्धिनि।
रूक्षे सवेदने बस्तिरधःकाये विशेषतः॥

**अउ30.61**
जत्रूर्ध्वजे च श्वयथौ कण्ड्वाढ्ये तीक्ष्णनावनम्।
तज्ज एवानिलाढ्ये तु श्वयथौ स्नेहनावनम्॥

**अउ30.62**
तथा सशोफरुक्स्रावे धूमो वातकफोल्बणे।
रुजादिमति वक्त्रस्थे यथास्वं कवलो हितः॥

**अउ30.63**
द्वावाद्यौ पञ्चमूलाख्यौ गणो यश्चानिलापहः।
ते व्रणे वातिके योज्याः कषायादिषु सप्तसु॥

**अउ30.64**
न्यग्रोधपद्मकाद्यौ तु पैत्ते वर्गश्च पित्तजित्।
आरग्वधादिः श्लेष्मघ्नः कफे मिश्रास्तु मिश्रजे॥

**अउ30.65**
पिष्टोम्लैर्वातिके लेपस्तैलसर्पिर्वसायुतः।
घनः कोष्णश्च पैत्ते तु पयःपिष्टो घृतान्वितः॥

**अउ30.66**
तनुवस्त्रान्तरः शश्वदुष्णो गोमूत्रपेषितः।
रूक्षस्तैलेन वा स्निग्धो बहलः कफजे हितः॥

**अउ30.67**
अपेतपूतिमांसानां मांसस्थानामरोहताम्।
कल्कं संरोहणं कुर्यात्तिलानां मधुकान्वितम्।
स्निग्धोष्णतिक्तमधुरकषायत्वैः स सर्वजित्॥

**अउ30.68**
स क्षौद्रनिम्बपत्राभ्यां युक्तः संशोधनः परम्।
पूर्वाभ्यां सर्पिषा चासौ युक्तः स्यादाशु रोपणः।
तिलवद्यवकल्कं तु केचिदिच्छन्ति तद्विदः॥

**अउ30.69**
सास्रपित्तविषागन्तुगम्भीरान् सोष्मणो व्रणान्।
क्षीररोपणभैषज्यशृतेनाज्येन रोपयेत्।
रोपणौषधसिद्धेन तैलेन कफवातजान्॥

**अउ30.70**
अबध्यानां चलस्थानां शुद्धानां वा प्रदुष्यताम्।
यथास्वं रोपणैः कुर्याद्रसजां सनिशाद्वयैः॥

**अउ30.71**
समानां स्थिरमांसानां त्वक्स्थानां चूर्ण इष्यते।
नीरुजामवगाढानां शुद्धानां वर्तयो हिताः॥

**अउ30.72**
समङ्गामोचसरलसोमवल्काः सचन्दनाः।
पद्मकादिश्च कल्कोयं परमं रोपणोऽथवा।
पुण्ड्राह्वतिलजीवन्तीगोजिह्वाधातकीबलाः॥

**अउ30.73**
प्रप्रौण्डरीकमधुककाकोलीद्वयचन्दनःइ।
साधितं तैलमाज्यं वा तद्वत् कम्पिल्लकेन वा।
दूर्वारसेन वा दार्व्यास्त्वचा वा व्रणरोपणम्॥

**अउ30.74**
पटोलनिम्बपत्राणि लोध्रमुस्ताप्रियङ्गवः। सूक्ष्मैलाधातकीसर्ज्जखदिरागरुचन्दनम्॥

**अउ30.75**
कम्पिल्लकं विडङ्गानि वत्सकं त्रिफला बला।
कल्कैरेभिर्घृतं सिद्धं तैलं वा रोपणं परम्॥

**अउ30.76**
पद्मकं पद्मकिञ्जल्कं दार्वी मूर्वा तिलोत्पलम्।
मेदा समङ्गा यष्ट्याह्वं प्रलेपो वर्णसाधनः॥

**अउ30.77**
ककुभोदुम्बराश्वत्थजम्बूकट्फललोध्रजैः।
त्वचमाशु निगृह्णन्ति त्वक्चूर्णैश्चूर्णिता व्रणाः॥

**अउ30.78**
लाक्षामनोह्वामञ्जिष्ठाहरितालनिशाद्वयैः।
प्रलेपः सघृतक्षौद्रस्त्वग्विशुद्धिकरः परम्॥

**अउ30.79**
ध्यामकाश्वत्थनिचुलमूलं लाक्षालगैरिकम्।
सहेमश्यामृतासङ्गःकासीसं चेति वर्णकृत्॥

**अउ30.80**
कालेयकलताम्रास्थिहेमकालारसोत्तमैः।
लेपः सगोमयरसः सवर्णकरणः परम्॥

**अउ30.81**
अयोरजःसकासीसं त्रिफलाकुसुमानि च।
प्रलेपः कुरुते काष्र्ण्यं सद्य एव नवत्वचि॥

**अउ30.82**
दग्धयानूपसत्वानां श्लक्ष्णचूर्णितया त्वचा।
भल्लाततैलप्लुतया शुक्लमालेपयेद्व्रणम्॥

**अउ30.83**
सप्तरात्रिस्थितं क्षीरे छागले रोहिणीफलम्।
तैनेव पिष्ट्वा सुश्लक्ष्णं कृष्णमालेपयेद्व्रणम्॥

**अउ30.84**
नवं कपालिकामूलं वैदुलं सस्थिराह्वयम्।
कासीसं मधुकं लेपो व्रणे कृष्णे मधुद्रुतः॥

**अउ30.85**
कपित्थान्मांसमुध्दृत्य मूत्रस्याज्यस्य पूरणम्।
क्षिपेच्चात्र मनोह्वालवंशनिर्लेखरोचनाः॥

**अउ30.86**
कासीसं प्रपुनाटञ्च मासं न्यस्तं ततो भुवि।
अधोऽर्जुनस्य तच्छुक्लव्रणालेपः सवर्णकृत्॥

**अउ30.87**
दग्धो वारणदन्तोऽन्तर्धूमं तैलं रसाञ्जनम्।
रोमसञ्जननो लेपस्तद्वत्तैलपरिप्लुता।
चतुष्पान्नखरोमास्थित्वक्शृङ्गखुरजा मषी॥

**अउ३०.88**
जीर्णशाल्योदनं स्निग्धमल्पमुष्णोदकोत्तरम्।
भुञ्जानो जाङ्गलैर्मांसैः शीघ्रं व्रणमपोहति॥

**॥इति त्रिंशोऽध्यायः॥**

# अष्टाङ्गसंग्रहः उत्तरस्थानम् अध्याय ३१-३५

https://sa.wikisource.org/s/a00

**अष्टाङ्गसंग्रहः**

अथ एकत्रिंशोऽध्यायः।

**अउ31.1**
अथातः सद्योव्रणप्रतिषेधं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ31.2**
आगन्तोर्व्रणस्य प्रागुपदिष्टः सम्भवः।
तत्र तत्र यथायथं प्रतीकारश्च।
विविधाभिघातजनितैस्तु सुबह्वाकृतिभिरपि सद्योव्रणैरधिष्ठितमङ्गं समासात् त्रिविधं भवति छिन्नं विद्धं पिच्चितं च।
त्रिविधमपि चैतत्त्वगादिक्षणनात् क्षतमित्युच्यते॥

**अउ31.3**
तत्र छिन्नं पञ्चधा भिद्यते।
तद्यथा त्वक्छेदे घृष्टम्।
किञ्चिन्मांसस्याप्यवकृत्तम्।
तस्यैवावगाढस्य विशेषेण विशालमायतं च विच्छिन्नम्।
किञ्चिच्छेषेष्वस्थिस्नाय्वादिषु विलम्बितम्।
अशेषाङ्गछेदे पातितम्॥

**अउ31.4**
विद्धं त्वष्टविधम्।
तत्र मांसमनुप्राप्ते शल्येऽनुविद्धम्।
द्वितीये पार्श्वे त्वचमुन्नाम्योत्तुण्डितम्।
किञ्चिन्निस्सृतेऽतिविद्धम्।
सर्वथा निस्सृते निर्विद्धम्।
एतदेव चतुर्विधं कोष्ठे पृथुमुखैर्वा प्रहरणैः कुन्तादिभिर्विद्धमनुभिन्नं भिन्नोत्तुण्डितमतिभिन्नं निर्भिन्नमिति च संज्ञां लभते॥

**अउ31.5**
यत् पुनः प्रहारेण पीडनेन वा गात्रमस्थियुक्तमसृङ्मज्जप्लुतं पृथुतामापद्यते तत् पिच्चितम्।
तत् द्विविधम्।
सव्रणमव्रणं च।
तत्र सव्रणमुक्तम्।
अव्रणं पुनर्भङ्गेषूपदेक्ष्यते।
भवति चात्र॥

**अउ31.6**
सद्यः सद्योव्रणं सिञ्चेद्यष्टीमधुकसर्पिषा।
तीव्रव्यथं कवोष्णेन बलातैलेन वा पुनः॥

**अउ31.7**
क्षतोष्माणो निग्रहार्थं तत्कालविसृतस्य च।
कषायशीतमधुरस्निग्धा लेपादयो हिताः॥

**अउ31.8**
सद्योव्रणेष्वायतेषु सन्धानार्थं विशेषतः।
मधुसर्पिःप्रयुञ्जीत पित्तघ्नीश्च हिमाः क्रियाः॥

**अउ31.9**
ससंरम्भेषु कर्तव्यमूर्ध्वं चाधश्च शोधनम्।
उपवासो हितं भक्तं प्रततं रक्तमोक्षणम्॥

**अउ31.10**
घृष्टपिच्चितयोरेष सुतरामिष्यते विधिः।
तयोर्ह्यल्पं स्रवत्यस्रं पाकस्तेनाशु जायते॥

**अउ31.11**
अत्यर्थमस्रं स्रवति प्रायशोऽन्यत्र विक्षते।
ततो रक्तक्षयाद्‌वायौ कुपितेऽतिरुजाकरे॥

**अउ31.12**
स्नेहपानपरीषेकस्वेदलेपोपनाहनम्।
स्नेहबस्तिं च कुर्वीत वातघ्नौषधसाधितम्॥

**अउ31.13**
इति साप्ताहिकः प्रोक्तः सद्योव्रणहितो विधिः।
सप्ताहात् गतवेगे तु पूर्वोक्तं विधिमाचरेत्॥

**अउ31.14**
क्षालनाभ्यङ्गलेपेषु तस्मिन् दुष्टे प्रयोजयेत्।
आरग्वधादिकं वर्गं सुरसादिं च शोधनम्॥

**अउ31.15**
कल्कस्त्रिवृत्तिलैरण्डपत्रैर्योज्यः ससैन्धवैः।
वातिके पैत्तिके कुम्भयष्ट्याह्वरजनीतिलैः।
श्लैष्मिके तिलतेजोह्वानिकुम्भस्वर्जिकाग्निकैः॥

**अउ31.16**
एष दुष्टव्रणविधिः कुष्ठमेहव्रणेष्वपि॥

**अउ31.17**
प्रायः सामान्यकर्मेदं वक्ष्यते तु पृथक् पृथक्॥

**अउ31.18**
घृष्टे रुजं निगृह्याशु वर्णे चूर्णानि निक्षिपेत्।
कल्कादीन्यवकृते तु विच्छिन्नप्रविलम्बिनोः।
सीवनं विधिनोक्तेन बन्धनं चानुपीडनम्॥

**अउ31.19**
असाध्यं स्फुटितं नेत्रमुदीर्णं लम्बते तु यत्।
सन्निवेश्य यथास्थानमव्याविद्धसिरं भिषक्॥

**अउ31.20**
पीडयेत् पाणिना पद्मपत्रव्यवहितेन तत्।
ततोऽस्य सेचने नस्ये तर्पणे च हितं हविः॥

**अउ31.21**
विपक्वमाजं यष्ट्याह्वजीवकर्षभकोत्पलैः।
सपयस्कैः परं तद्धि सर्वनेत्राभिघातजित्॥

**अउ31.22**
गलपीडावसन्नेक्ष्णि वमनोऽत्कासनक्षवाः।
प्राणायामोऽथवा कार्यः क्रिया च क्षतनेत्रवत्॥

**अउ31.23**
कर्णे स्थानातुच्युते स्यूते स्रोतस्तैलेन पूरयेत्॥

**अउ31.24**
कृकाटिकायां छिन्नायां निर्गच्छत्यपि मारुते।
समं निवेश्य बध्नीयात् स्यूत्व शीघ्रं निरन्तरम्॥

**अउ31.25**
आजेन सर्पिषा चात्र परिषेकः प्रशस्यते।
उत्तानोन्नानि भुञ्जीत शयीत च सुयन्त्रितः॥

**अउ31.26**
घातं शाखासु तिर्यक्स्थं गात्रे सम्यङ्निवेशिते।
स्यूत्वा वेल्लितबन्धेन बध्नीयात् घनवाससा।
चर्मणा गोष्फणाबन्धः कार्यश्चासङ्गते व्रणे॥

**अउ31.27**
पादौ विलम्बिमुष्कस्य प्रोक्ष्य नेत्रे च वारिणा।
प्रवेश्य वृषणौ सीव्येत् सीवन्या तुन्नसंज्ञया॥

**अउ31.28**
कार्यश्च गोष्फणाबन्धः कट्यामावेश्य पट्टकम्।
स्नेहसेकं न कुर्वीत तेन क्लिद्यति हि व्रणः॥

**अउ31.29**
कालानुसार्यगुर्वेलाजातीचन्दनपर्पटैः।
शिलादार्व्यमृतातुत्थैः सिद्धं तैलं च रोपणम्॥

**अउ31.30**
छिन्नां निश्शेषतः शाखां दग्ध्वा तेइलेन युक्तितः।
बध्नीयात् कोशबन्धेन ततो व्रणवदाचरेत्॥

**अउ31.31**
कार्यः शल्याहृते विद्धे क्रमो भङ्गातु पिच्चिते॥

**अउ31.32**
शिरसोऽपहृते शल्ये बालवर्तिं प्रवेशयेत्।
मस्तुलुङ्गस्रुतेः क्रुद्धो हन्यादेनं चलोऽन्यथा।
व्रणे रोहति चैकेइकं शनैरपनयेत् कचम्॥

**अउ31.33**
मस्तुलुङ्गस्त्रुतौ खादेन्मस्तिष्कानन्यजीवजान्।
शल्ये हृतेङ्गादन्यस्मात् स्नेहवर्तिं निधापयेत्॥

**अउ31.34**
दूरावगाढाः सूक्ष्मास्या ये व्रणाः स्रुतशोणिताः।
सेचयेच्चक्रतैलेन सूक्ष्मनेत्रार्पितेन तान्॥

**अउ31.35**
भिन्ने कोष्ठेऽसृजा पूर्णे मूर्च्छा हृत्पार्श्ववेदनाः।
ज्वरो दाहस्तृडाध्मानं भक्तस्यानभिनन्दनम्॥

**अउ31.36**
सङ्गो विण्मूत्रमरुतां श्वासः स्वेदोक्षिरक्तता।
लोहगन्धित्वमास्येऽस्य स्यात् गात्रे च विगन्धिता॥

**अउ31.37**
आमाशयस्थे रुधिरे रुधिरं छर्दयत्यपि।
आध्मानेनातिमात्रेण शूलेन च विशस्यते॥

**अउ31.38**
पक्वाशयस्थे रुधिरे सशूलं गौरवं भवेत्।
नाभेरधस्ताच्छीतत्वं खेभ्यो रक्तस्य चागमः॥

**अउ31.39**
अभिन्नोप्याशयः सूक्ष्मैः स्रोतोभिरभिपूर्यते।
असृजा स्यन्दमानेन पार्श्वैर्मूत्रेण बस्तिवत्॥

**अउ31.40**
तत्रान्तर्लोहितं शीतपादोच्छवासकराननम्।
रक्ताक्षं पण्डुवदनमानद्धं च विवर्जयेत्॥

**अउ31.41**
आमाशयस्थे वमनं हितं पक्वाशयाश्रिते।
विरेचनं निरूहश्च निःस्नेहोष्णैर्विशोधनैः॥

**अउ31.42**
यवकोलकुलत्थानां रसैः स्नेहविवर्जितैः।
भुञ्जीतान्नंयवागूं वा पिबेत् सैन्धवसंयुताम्॥

**अउ31.43**
अतिनिस्सृतरक्तस्तु भिन्नकोष्ठः पिबेदसृक्॥

**अउ31.44**
क्लिष्टच्छिन्नान्त्रभेदेन कोष्ठभेदो द्विधा स्मृतः।
मूर्च्छादयोऽल्पाः प्रथमे द्वितीयेत्वतिबाधकाः।
क्लिष्टान्त्रः संशये देही छिन्नान्त्रो नैव जीवति॥

**अउ31.45**
यथास्वं मार्गमापन्ना यस्य विण्मूत्रमारुताः।
व्युपद्रवः सभिन्नेऽपि कोष्ठे जीवत्यसंशयम्॥

**अउ31.46**
अभिन्नमान्त्रं निष्क्रान्तं प्रवेश्यं नत्वतोन्यथा।
उलुङ्गिलशिरोग्रस्तं तदप्येके वदन्ति तु॥

**अउ31.47**
प्रक्षाल्य पयसा दिग्धं तृण शोणित पांसुभिः।
प्रवेशयेत् क्लृप्तनखो घृतेनाक्तं शनैः शनैः।
क्षीरेणार्द्रीकृतं शुष्कं भूरिसर्पिः परिप्लुतम्॥

**अउ31.48**
अङ्गुल्या प्रमृशेत् कण्ठं जलेनोद्वेजयेच्च तम्।
तथान्त्राणि विशन्त्यन्तस्तत्कालं पीडयेत च॥

**अउ31.49**
व्रणसौक्ष्म्यात् बहुत्वाद्वा कोष्ठमान्त्रमनाविशत्।
तत्प्रमाणेन जठरं पाटयित्वा प्रवेशयेत्।

**अउ31.50**
यथास्थानस्थिते सम्यगान्त्रे सीव्येदनु व्रणम्।
स्थानादपेतमादत्ते जीवितं गुपितं च तत्॥

**अउ31.51**
वेष्टयित्वानुपट्टेन घृतेन परिषेचयेत्।
पाययेत ततः कोष्णं चित्रातैलयुतं पयः।
मृदुक्रियार्थं शकृतो वायोश्चाधः प्रवृत्तये॥

**अउ31.52**
त्वगश्वकर्णककुभबदरीसल्लकीधवात्।
तत्कल्कसाधितं तैलं प्रधानं व्रणरोपणम्॥

**अउ31.53**
अनुवर्तेत वर्षं च यथोक्तां व्रणयन्त्रणाम्॥

**अउ31.54**
उदरान्मेदसो वर्तिं निर्गतां भस्मना मृदा।
अवकीर्य कषायैर्वा श्लक्ष्णैर्मूले ततः समम्॥

**अउ31.55**
दृढं च बध्वा सूत्रेण वर्द्धयेत् कुशलो भिषक्।
तीक्ष्णेनाग्निप्रतप्तेन शस्त्रेण सकृदेव तु॥

**अउ31.56**
स्यादत्यथा रुगाटोपो मृत्युर्वा छिद्यमानया॥

**अउ31.57**
सक्षौद्रे च व्रणे बद्धे सुजीर्णेन्ने घृतं पिबेत्।
क्षीरं वा शर्कराचित्रालाक्षागोक्षुरकैः शृतम्।
रुग्दाहजित् सयष्ट्याह्वैः परं पूर्वोदितो विधिः॥

**अउ31.58**
मेदोग्रन्थ्युदितं चात्र तैलमभ्यञ्जने हितम्॥

**अउ31.59**
तालीसं पद्मकं मांसी हरेण्वगरुचन्दनम्।
हरिद्रे पद्मबीजानि सोशीरं मधुकं च तैः।
पक्वं सद्योव्रणेषूक्तं तैलं रोपणमुत्तमम्॥

**अउ31.60**
मूढप्रहाराभिहते पतिते विषमोच्चकैः।
कार्यं वातास्रजित्तृप्तिमर्दनाभ्यङ्गसेचनम्॥

**अउ31.61**
विश्लिष्टदेहं मथितं क्षीणं मर्महतं हतम्।
वासयेत्तैलपूर्णायां द्रोण्यां मांसरसाशिनम्॥

**अउ31.62**
प्रहर्तृयन्त्रायुधघातगात्रैः सद्योव्रणाः काममनन्तरूपाः।
तथापि न त्रित्वमतिक्रमन्ते चयादिभेदैरिव मारुताद्याः॥
इति एकत्रिंशोऽध्यायः॥

अथ द्वात्रिंशोऽध्यायः।

**अउ32.1**
अथातो भङ्गप्रतिषेधं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ32.2**
पतनपीडनप्रहाराक्षेपणव्यालदंशनप्रभृतिभिरभिघातविशेषैरनेकविधमस्थिभङ्गमुपदिशन्ति॥

**अउ32.3**
तत्तुभङ्गजातं द्व्यधिष्ठानं सन्धावसन्धौ च।
तत्र सन्धिमुक्तं षड्विधमुत्पिष्टं विश्लिष्टमवक्षिप्तमतिक्षिप्तं तिर्यक्क्षिप्तं विवर्तितमिति॥

**अउ32.4**
तस्य सामान्यलक्षणं प्रसारणाकुञ्चन विवर्तनाक्षेपणाशक्तिरुग्ररुजता स्पर्शासहिष्णुत्वं च॥

**अउ32.5**
अथोत्पिष्टे स्वस्थान एव सन्धावुभयतः शोफो वेदना विशेषतश्च रात्रौ भवति।
विश्लिष्टेल्पशोफो वेदनासातत्यं सन्धिविक्रिया च।
अवक्षिप्ते सन्धिविश्लेषस्तीव्रा च रुक्।
अतिक्षिप्ते द्वयोरपि सन्ध्यस्थ्नोरतिक्रान्तता वेदना च।
तिर्यक् क्षिप्तेत्वेकस्यास्थ्नः पार्श्वतो गमनमत्यर्थं वेदना च।
विवर्तिते सन्धिपार्श्वगमनाद्विषमाङ्गता वेदना च॥

**अउ32.6**
असन्धिभग्नं पुनर्द्वादशविधम्।
तद्यथा।
कर्कटकं वक्रं स्थुटितं वेल्लितमस्थिच्छल्लिकाश्वकर्णं पिच्चितं दारितं चूर्णितमतिपातितं शेषितं मज्जानुगतमिति॥

**अउ32.7**
श्वयथुबाहुल्यं स्पन्दनं विवर्तनं स्पर्शासहिष्णुता च पीड्यमाने शब्दः स्रस्ताङ्गता वेदनातिप्रवृत्तिः सर्वासु चावस्थासु शर्म न लभत इति साधारणमसन्धिभग्नरूपम्॥

**अउ32.8**
वैशेषिकं तु संव्यूढमुभयतोस्थिमध्यभग्नं ग्रन्थिरिवोन्नतं कर्कटकानुकारि कर्कटकम्॥

**अउ32.9**
आभुग्नमविमुक्तमस्थि वक्रम्।
शूकपूर्णमिवाध्मातं विपुलैकदारि स्फुटितम्॥

**अउ32.10**
द्विधाभूतं वेल्लते प्रकम्पमानं वेल्लितकम्॥

**अउ32.11**
पार्श्वतोऽस्थि हीनमुद्गतमस्थिच्छल्लिका॥

**अउ32.12**
अश्वकर्णवदुद्गतमश्वकर्णम्॥

**अउ32.13**
पृथुतां गतमनल्पशोफं पिच्चितम्॥

**अउ32.14**
अणुबहुविदारि वेदनावच्च दारितम्॥

**अउ32.15**
स्पृश्यमानं शब्दवच्चूर्णितम्॥

**अउ32.16**
अस्थ्यवयवोस्थिमध्यमनुप्रविशन्नतिपातितम्॥

**अउ32.17**
अन्यतरपार्श्वावशिष्टं शेषितम्॥

**अउ32.18**
क्षतं भग्नमुन्नम्यमानं मज्ञि मज्जति मज्जानुगतम्॥

**अउ32.19**
एषामन्त्यानि पञ्च कृच्छ्रसाध्यानि कृशातिबालवृद्धासहानामत्याशिनां वातात्मकानां कुष्ठिनामुपद्रववतां च॥

**अउ32.20**
असाध्यं तु भिन्नं कटीकपालं सन्धिमुक्तं वा जघनमुत्पिष्टं कूर्परो विवर्तितस्तथा ललाटं चूर्णितमसंश्लिष्टकपालं च शिरः शंखपृष्ठस्तनान्तरभङ्गं चेति।
भवन्ति चात्र॥

**अउ32.21**
अथावनतमुन्नाम्यमुन्नतं चावपीडयेत्।
आञ्छेदधिक्षिप्तमधोगतं चोपरि वर्तयेत्। आञ्छनोत्पडिनोन्नामचर्मसङ्क्षेपबन्धनैः॥

**अउ32.22**
सन्धीन् शरीरगान् सर्वांश्चलानप्यचलानपि।
इत्येतैः स्थापनोपायैः सम्यक्संस्थाप्य निश्चलम्।
पट्टैः प्रभूतसर्पिर्भिर्वेष्टयित्वा सुखैस्ततः॥

**अउ32.23**
कदम्बोदुम्बराश्वथसर्जार्जुनपलाशजैः।
वंशोद्भवैर्वा पृथुभिस्तनुभिः सुनिवेशितैः॥

**अउ32.24**
सुश्लक्ष्णैः सप्रतिष्टम्भैर्वल्कलैः शकलैरपि।
कुशाह्वयैः समं बन्धं पट्टस्योपरि योजयेत्॥

**अउ32.25**
शिथिलेन हि हि बन्धेन सन्धिस्थैर्यं न जायते।
गाढेनातिरुजादाहपाकश्वयथुसम्भवः॥

**अउ32.26**
त्र्यहात्त्र्यहादृतौ घर्मे सप्ताहन्मोक्षयेद्धिमे।
साधारणे तु पञ्चाहात् भङ्गदोषवशेन वा॥

**अउ32.27**
न्यग्रोधादिकषायेण ततः शीतेन सेचयेत्।
तं पञ्चमूलपक्वेन पयसा तु सवेदनम्॥

**अउ32.28**
सुखोष्णं चावचार्यं स्याच्चक्रतैलं विजानता।
विभज्य देशं कालं च वातघ्नौषधसंयुतम्॥

**अउ32.29**
प्रततं लेपसेकांश्च विदध्यात् भृशशीतलान्।
गृष्टिक्षीरं ससर्पिष्कं मधुरौषधसाधितम्।
प्रातः प्रातः पिबेत् भग्नः शीतलं लाक्षयायुतम्॥

**अउ32.30**
सव्रणस्य तु भग्नस्य व्रणो मधुघृतोत्तरैः।
कषायैः प्रतिसार्योऽथ शेषो भङ्गोदितः क्रमः॥

**अउ32.31**
लम्बानि व्रणमांसानि प्रलिप्य मधुसर्पिषा।
सन्दधीत व्रणान् वैद्यो बन्धनैश्चोपपादयेत्॥

**अउ32.32**
तान्समान्सुस्थितान्ज्ञात्वा फलिनीलोध्रकट्फलैः।
समङ्गाधातकीयुक्तैश्चूर्णितैरवचूर्णयेत्॥

**अउ32.33**
पञ्चवल्कलचूर्णैर्वा मधुशुक्तसमन्वितैः।
धातकीलोध्रचूर्णैर्वा रोहन्त्याशु तथा व्रणाः॥

**अउ32.34**
विश्लिष्टोत्पिष्टयोः सन्धिमेवमेवाविघट्टयन्।
उपाचरेद्यथास्वं च विसर्पादीनुपद्रवान्॥

**अउ32.35**
इति भङ्ग उपक्रान्तः स्थिरधातोरृतौ हिमे।
मांसलस्याल्पदोषस्य सुसाधो दारुणोऽन्यथा॥

**अउ32.36**
पूर्वमध्यान्तवयसामेकद्वित्रिगुणैः क्रमात्।
मासैः स्थैर्यं भवेत् सन्धेर्यथोक्तं भजतां विधिम्॥

**अउ32.37**
सामान्यं साधनमिदं विशेषो वक्ष्यतेत्वतः॥

**अउ32.38**
नखसन्धिं समुत्पिष्टं रक्तानुगतमारया।
अवमथ्य स्रुते रक्ते शालिपिष्टेन लेपयेत्॥

**अउ32.39**
भग्नान् सन्धिविमुक्तांश्च कृत्वा पूर्ववदङ्गुलीन्।
तनुनावेष्टय पट्टेन घृतसेकं प्रदापयेत्॥

**अउ32.40**
चक्रयोगेन मतिमानाञ्छेदूर्वास्थि निर्गतम्॥

**अउ32.41**
आञ्छेदूर्ध्वमधस्ताच्च कटीभग्नं चिकित्सकः॥

**अउ32.42**
मुसलेनोत्क्षिपेत् कक्षमंससन्धौ विसङ्गते।
स्थानस्थितं च बध्नीयात् स्वस्तिकेन समाहितः॥

**अउ32.43**
कौर्परं तु भिषक्सधिमंगुष्ठेनानुमार्जयेत्।
अनुमृज्य ततः सन्धिं पीडयेत् कूर्पराच्च्युतम्।
प्रसार्याकुञ्चयेच्चैनं स्नेहसकं च कारयेत्॥

**अउ32.44**
मणिबन्धे च जानौ च गुल्फे चैषः क्रियाक्रमः॥

**अउ32.45**
उभे तले समे कृत्वा तलभग्नस्य दोहिनः।
बध्नीयादामतैलेन परिषेकं च कारयेत्॥

**अउ32.46**
प्राग्गोमयमयं पिण्डं धारयेन्मृन्मयं ततः।
हस्ते जातबले कार्यं क्रमात् पाषाणधारणम्॥

**अउ32.47**
सन्नमुन्नामयेत् स्विन्नमक्षकं मुसलेन तु।
तथोन्नतं पीडयेत बध्नीयान्निबिडं ततः॥

**अउ32.48**
ऊरुवच्च विधातव्यं बाहुभङ्गे प्रसाधनम्॥

**अउ32.49**
ग्रीवायां तु विवृत्तायां प्रविष्टायामधोपि वा।
अवटावथ हन्वोश्च प्रगृह्योन्नमयेच्छिरः।
समं कुशाभिर्बध्नीयादुत्तानं शाययेच्च तम्॥

**अउ32.50**
हन्वस्थिनी समानीय हनुसन्धौ विसङ्गते।
स्वेदयित्वा स्थितेसम्यक् पञ्चाङ्गीबन्धमाचरेत्।
घृतं वातघ्नमधुरैः सिद्धं नस्यं च पूजितम्॥

**अउ32.51**
दन्तानभग्नांश्चलितान् सरक्तानवपीडयेत्।
वयस्थस्याम्बुभिः शीतैः परिषिच्य प्रलेपयेत्॥

**अउ32.52**
बहिर्निर्वापणैरन्तः सन्धानीयैरुपाचरेत्।
लाद्वयशृते क्षीरे पद्मकादिशृतं घृतम्॥

**अउ32.53**
नस्यगण्डूषयोर्योज्यं चलद्विजहितानि च।
कल्कितैस्तद्धितैश्चास्य दन्तमांसानि लेपयेत्।
त्रीन्मासान्मृदु भुञ्जीत रसान्नं कठिनांस्त्यजेत्॥

**अउ32.54**
नासां विवृत्तां सन्नं वा ऋजूकृत्य शलाकया।
प्रत्येकं नस्ततो नाडीं द्विमुखीं सम्प्रवेशयेत्।
ततः पट्टेन संवेष्ट्य घृतसेकं प्रदापयेत्॥

**अउ32.55**
भग्नं कर्णं घृताभ्यक्तं न्यस्य बन्धेन योजयेत्।
सद्यःक्षतविधानं च ततः पश्चात् समाचरेत्॥

**अउ32.56**
कटीजङ्घोरुभग्नानां कवाटशयनं हितम्।
यन्त्रणार्थं ततः कीलाः पञ्च कार्या निबन्धनाः।
जङ्गो रुपार्श्वयोर्द्वौ द्वौ तल एकश्च कीलकः॥

**अउ32.57**
श्रोण्यां वा पृष्टवंशे वा वक्षस्यक्षकयोस्तथा।
विमोक्षे भग्नसन्धीनां विधिमेनं समाचरेत्॥

**अउ32.58**
सन्धींश्चिरविमुक्तांस्तु स्निग्धस्विन्नान् मृदूकृतान्।
ऊक्तैर्विधानैर्बुध्या च यथास्वं स्थानमानयेत्॥

**अउ32.59**
असन्धिभग्ने रूढे तु विषमोल्बणसाधिते।
आपोथ्य भग्नं यमयेत्ततो भग्नवदाचरेत्॥

**अउ32.60**
भङ्गो नैति यथा पाकं प्रयतेत तथा भिषक्।
पक्वमांससिरास्नायुः सन्धिः श्लेषं न गच्छति॥

**अउ32.61**
वातव्याधिविनिर्दिष्टान् स्नेहान् भग्नस्य योजयेत्।
चतुष्प्रयोगान् बल्यांश्च बस्तिकर्म च शीलयेत्॥

**अउ32.62**
शालिक्षीररसाज्याद्यैः पौष्टिकैरविदाहिभिः।
मात्रयोपचरेत् भग्नं सन्धिसंश्लेषकारिभिः॥

**अउ32.63**
ग्लानिर्न शस्यते तस्य सन्धिविश्लेषकृद्धि सा॥

**अउ32.64**
लवणं कटुकं क्षारमम्लं मैथुनमातपम्।
व्यायामं च न सेवेत भग्नो रूक्षं च भेषजम्॥

**अउ32.65**
सम्यग्यमितमप्यस्थि दुर्न्यासाद्दुर्निबन्धनात्।
सङ्क्षोभादपि यत् गच्छेद्विक्रियां तद्विवर्जयेत्।
आदितो यच्च दुर्जातमस्थि सन्धिरथापि वा॥

**अउ32.66**
तरुणास्थीनि भुज्यन्ते भज्यन्ते नलकानि तु।
कपालानि विभिद्यन्ते स्फुटन्त्यन्यानि भूयसा॥

**अउ32.67**
अनुल्बणमनाविद्धं स्वस्थाने पर्यवस्थितम्।
अवेदनं च चेष्टायां भग्नं विद्यात् सुसाधितम्॥

**अउ32.68**
कृष्णास्तिलान्विरजसो दृढवस्त्रबद्धान् सप्तक्षपा बहति वारिणि वासयेत्।
संशोषयेदनुदिनं प्रतिसार्य चैनान् क्षीरे तथैव मधुकक्वथिते च तोये॥

**अउ32.69**
पुनरपि पीतपयस्कांस्तान् पूर्ववदेव शोषितान् बाढम्।
विगततुषानरजस्कान् संचूर्ण्य विचूर्णितैर्युञ्ज्यात्॥

**अउ32.70**
नलदवालकलोहितयष्टिका नखमिसिप्लवकुष्ठबलात्रयैः।
अगरुकुङ्कुमचन्दनसारिवा सरलसर्जरसामरदारुभिः॥

**अउ32.71**
पद्मकादिगणोपेतैस्तिलपिष्टं ततश्च तत्।
समस्तगन्धभैषज्यसिद्धदुग्धेन पीडयेत्॥

**अउ32.72**
शैलेयरास्नाशुमतीकशेरुकालानुसारीनतपत्रलोध्रैः।
सक्षीरशुक्लैः सपयः सदूर्वैस्तैलं पचेत्तन्नलदादिबिश्च॥

**अउ32.73**
गन्धतैलमिदमुत्तममस्थिस्थैर्यकृज्जयति चाशु विकारान्।
वातपित्तजनितानतिवीर्यं व्यापिनोऽपिविविधैरुपयोगैः॥
॥इति द्वात्रिंशोऽध्यायः॥

अथ त्रयस्त्रिंशोऽध्यायः।

**अउ33.1**
अथातो भगन्दरप्रतिषेधं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ33.2**
हस्त्यश्वपृष्ठगमनकठिनोत्कटकासनैः।
अर्शोनिदानाभिहितैरपरैश्च निषेवितैः॥

**अउ33.3**
अनिष्टदिष्टपाकेन सद्यो वा साधुगर्हणैः।
प्रायेण पिटकापूर्वो योङ्गुले द्व्यङ्गुलेपि॥

**अउ33.4**
पायोर्व्रणोऽन्तर्बाह्यो वा दुष्टासृङ्मांसगो भवेत्।
बस्तिमूत्राशयाभ्याशगतत्वात् स्यन्दनात्मकः॥

**अउ33.5**
भगबस्तिगुदान्तेषु दीर्यमाणेषु भूरिभिः।
वातं मूत्रं शकृच्छुक्रं खैः सूक्ष्मैर्वहति क्रमात्॥

**अउ33.6**
दोषैः पृथग्युतैः सर्वैरागन्तुः सोऽष्टमः स्मृतः॥

**अउ33.7**
अपक्वं पिटकामाहुः पाकप्राप्तं भगन्दरम्॥

**अउ33.8**
गूढमूलां ससंरम्भां रूदाढ्यां रूढकोपिनीम्।
भगन्दरकरीं विद्यात् पिटकां नत्वतोन्यथा॥

**अउ33.9**
तत्र श्यावारुणा तोदभेदस्फुरणरुक्वरी।
पिटका मारुतात् #

**अउ33.10**
पित्तादुष्ट्रग्रीवावदुच्छ्रिता।
रागिणी तनुरूष्माढ्या ज्वरधूमायनान्विता॥

**अउ33.11**
स्थिरा स्निग्धा महामूला पाण्डुःकण्डूमती कफात्॥

**अउ33.12**
श्यावाताम्रा सदाहोषा घोररुग्वातपित्तजा॥

**अउ33.13**
पाण्डुरा किञ्चिदाश्यावा कृच्छ्रपाका कफानिलात्॥

**अउ33.14**
पादाङ्गुष्ठसमा सर्वैर्दोषैर्नानाविधव्यथा।
शूलारोचकतृड्दाहज्वरच्छार्दिरुपद्रुता॥

**अउ33.15**
व्रणतां यान्ति ताः पक्वाः प्रमादात् तत्र वातजा।
चीयतेऽणुमुखैश्छिद्रैः शतपोनकवत् क्रमात्।
अच्छं स्रवद्भिरास्रावमजस्रं फेनसंयुतम्॥

**अउ33.16**
शतपोनकसंज्ञोऽयं उष्ट्रग्रीवस्तु पित्तजः॥

**अउ33.17**
बहुपिच्छापरिस्रावी परिस्रावी कफोद्भवः॥

**अउ33.18**
वातपित्तात् परिक्षेपी परिक्षिप्य गुदं गतिः।
जायते परितस्तत्र प्राकारं परिखेव च॥

**अउ33.19**
ऋजुर्वातकफादृज्व्या गुदो गत्यावदीर्यते॥

**अउ33.20**
कफपित्ते तु पूर्वोत्थं दुर्नामाश्रित्य कुप्यतः।
अर्शोमूले ततः शोफः कण्डूदाहादिमान् भवेत्॥

**अउ33.21**
स शीघ्रं पक्वभिन्नोस्य क्लेदयन् मूलमर्शसः।
स्रवत्यजस्रं गतिभिरयमर्शोभगन्दरः॥

**अउ33.22**
सर्वजः शम्बुकावर्तः शम्बुकावर्तसन्निभः।
गतयो दारयन्त्यस्मिन् रुग्वेगैर्दारुणैर्गुदम्॥

**अउ33.23**
अस्थिलेशोऽभ्यवहृतो मांसगृध्या यदा गुदम्।
क्षिणोति तिर्यङ्निर्गच्छन्नुन्मार्गं च ततो गतिः॥

**अउ33.24**
स्यात्तदा पूयदीर्णायां मांसकोथेन तत्र च।
जायन्ते कृमयस्तेऽस्य खादन्तः परितो गुदम्।
विदारयन्ति न चिरादुन्मार्गी क्षतजश्च सः॥

**अउ33.25**
तेषु रुग्दाहकण्ड्वादीन् विद्याद्व्रणविभक्तितः॥

**अउ33.26**
षट् कृच्छ्रसाधनास्तेषां निचयक्षतजौ त्यजेत्।
प्रवाहिणीं बलीं प्राप्तं सेवनीं वा समाश्रितम्॥

**अउ33.27**
अथ भगन्दारिणमपक्वपिटकं पाकपरिहाराथमपतर्पणेन व्रणप्रतिषेधविहितेन शीघ्रमुपाचरेत्॥

**अउ33.28**
पक्वपिटकं पुनरुपस्निग्धमर्कादिक्वाथशुद्धं स्वभ्यक्तमवगाहस्विन्नं भुक्तवन्तं शयनस्थमर्शसमिव यन्त्रयित्वा पराचीनमर्वाचीनं बहिर्मुखमन्तर्मुखं वा भगन्दरं सम्यगीक्षेत॥

**अउ33.29**
ततोऽन्तर्मुखे यन्त्रं प्राणिधाय प्रवाहणप्रविष्टं भगन्दरमभिसमीक्ष्य सम्यगेषित्वा शस्त्रेण पाटयेत्।
बहिर्मुखेत्वेषाणीं प्रणिधाय साशयमुद्धरेच्छस्त्रेणानन्तरं चोऽभयमप्यग्निना क्षारेण चोपत्रमेत उष्ट्रग्रीवं तु क्षारेणैव॥

**अउ33.30**
ततो निर्वापणशोधनरोपणैर्यथाकालं साधयोदिति सामान्यो विधिः॥

**अउ33.31**
अथ शतपोनके नाडीरेकान्तरिताः पाटयित्वा रोपयेत्।
रूढासु चेतराश्चिकित्सेत्।
अन्यथा तु विवृतं व्रणं गुदस्रोतोविदारणाद्वातविण्मूत्राण्यनुप्रपद्यन्ते।
ततश्चोन्मार्गगो वायुराध्मानाटोपपायुशूलादीनुपजनयति।
तत्र स्नेहाभ्यक्तगुदस्य स्निग्धान् पिण्डनाडीकुम्भीस्वेदान् प्रयुञ्जीतावगाहं वा।
स्विन्नं च वच हिंगुकुष्ठव्योषलवणपञ्चकाजमोदान् सर्पिर्मद्याकाञ्जिककुलत्थयूषान्यतमेन पाययेत्।
व्रणं चास्य मधुकतैलेनोष्णेन सिञ्चेत्।
गुदं च बलातैलादिभिर्वातघ्नैः।
अनेन विधिना वाय्वादयः स्वमार्गमापतन्ति।
तत्कृताश्च विकारा निवर्तन्ते॥

**अउ33.32**
एवमेव च परिक्षेपिण्यामपि क्रमात् गतिं नाडीविहितेन क्षारसूत्रेण द्विशस्त्रिशोवावदारयेत्।
सकृदेवह्यवदरणादसाध्यता याप्यता वा स्यात्॥

**अउ33.33**
अर्शोभगन्दरे पूर्वमर्शांसि च्छिन्द्यात् ततो गत्यनुसारेण भगन्दरम्॥

**अउ33.34**
उन्मार्गिणं तु प्रत्याख्यायोपाचरेत्।
अनिस्सृतं च शल्यमाहरेत्।
तथा कृमिघ्नं क्रममालेपाभ्यवहारयोः कुर्वीत।
वेदनायां तु पूर्वोक्ताः स्वेदाः।
वचादिपाचनं च।
साल्वलप्रदिग्धं वा व्रणं कदलीमृगलोपाकाजिनकौशेयाविकैरुपनाहयेदिति।
भवति चात्र॥

**अउ33.35**
भगन्दरे बहुच्छिद्रे छेदानालोच्य योजयेत्।
गोतीर्थं सर्वतोमद्रमर्धलाङ्गललाङ्गलौ॥

**अउ33.36**
पार्श्वागतेनशस्त्रेण छेदो गोतीर्थको मतः।
सर्वतः सर्वतोभद्रः पार्श्वच्छेदोर्धलाङ्गलः॥

**अउ33.37**
पार्श्वद्वये लाङ्गलकः समस्तांश्चाग्निना दहेत्।
आस्रावमार्गान् निश्शेषं नैवं विकुरुते पुनः॥

**अउ33.38**
यतेत् कोष्ठशुध्यै च भिषक् तस्यान्तरान्तरा॥

**अउ33.39**
आर्द्रकस्य रसे सिद्धं कल्के वा पाययेत् घृतम्।
भगन्दरे मारुतजे पक्वापक्वे विरेचयेत्॥

**अउ33.40**
ज्योतिष्मतीलाङ्गलिकाश्यामादन्तीत्रिवृत्तिलाः।
कुष्ठं शतह्वा गोलोमी तिल्वको गिरिकर्णिका।
हेमक्षीरी च वर्गोयं लेपाद्यैर्व्रणशोधनः॥

**अउ33.41**
तिलकुम्भवरादन्ती तुत्थसिन्धूत्थमाक्षिकम्।
सकृष्णरोचनाकुष्ठं शोधनं मांसकृत् पुनः॥

**अउ33.42**
मञ्जिष्ठासैन्धवक्षौद्रनागदन्तीत्रिवृत्तिलाः।
रसाञ्जनद्विरजनीतेजोह्वानिम्बपल्लवाः॥

**अउ33.43**
निकुम्भकुम्भरक्ताह्वकल्को नाडीव्रणापहः॥

**अउ33.44**
सुधाशेलुत्रिवृत्पाठामलयूहयमारकैः।
ज्योतिष्मतीलाङ्गलिका स्वर्जिकार्कवचाग्निकैः।
विष्यन्दनाख्यं विपचेत्तैलं शोधनरोपणम्॥

**अउ33.45**
त्रिवृद्दन्तीहरिद्रार्कमूललोहाश्वमारकैः। विडङ्गसारत्रिफलास्नुगर्कक्षीरमाक्षिकैः।
तैलं समदनैः सिद्धं भगन्दरनिर्वहणम्॥

**अउ33.46**
सैन्धवार्कत्रिवृत्पाठासमङ्गपूतिकाग्निकैः।
समातुलुङ्गच्छदनैस्तैलंशोधनरोपणम्॥

**अउ33.47**
मधुतैलयुता विडङ्गसारत्रिफलामागधिकोषणाश्च लीढा कृमिकुष्ठभगन्दरप्रमेहक्षतनाडीव्रणरोपणाभवन्ति॥

**अउ33.48**
अमृतात्रुटिवेल्लवत्सकं कलिपथ्यामलका निगुग्गुलुः।
क्रमवृद्धमिदं मधुप्लुतं पिटकास्थौल्यभगन्दरान् जयेत्॥

**अउ33.49**
गुग्गुलुपञ्चपलं पलिकांशा मागधिका त्रिफला च पृथक् स्यात्।
त्वक्त्रुटिकर्षयुतं मधुलीढं कुष्ठभगन्दरगुल्मगतिघ्नम्॥

**अउ33.50**
शृङ्गवेररजोयुक्तं तदेव च सुभावितम्।
क्वाथेन दशमूलस्य विशेषाद्वातरोगजित्॥

**अउ33.51**
उत्तमा खदिरसारजं रजः शीलयन्नसनवारिभावितम्।
हन्ति तुल्यमहिषाक्षमाक्षिकं कुष्ठमेहपिटकाभगन्दरान्॥

**अउ33.52**
भगन्दरेष्वेष विशेष उक्तः शेषाणि तु व्यञ्जनसाधनानि।
व्रणाधिकारात् परिशीलनाच्च सम्यग्विदित्वौपयिकं विदध्यात्॥

**अउ33.53**
अश्वपृष्ठगमनं चलरोधं मद्यमैथुनमजीर्णमसात्म्यम्।
साहसानि विविधानि च रुढे वत्सरं परिहरेदधिकं वा॥
॥इति त्रयस्त्रिंशोऽध्यायः॥

अथ चतुर्त्रिंशोऽध्यायः।

**अउ34.1**
अथातो ग्रन्थ्यर्बुदश्लीपदापचीनाडीविज्ञानीयं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ34.2**
कफप्रधानाः कुर्वन्ति मेदोमांसास्रगामलाः।
वृत्तोन्नतं यं श्वयथुं स ग्रन्थिर्ग्रथनात् स्मृतः॥

**अउ34.3**
दोषासृङ्मांसमेदोस्थिसिराव्रणभवा नव।
तत्रवातादायामतोदभेदान्वितोऽसितः॥

**अउ34.4**
स्थानात् स्थानान्तरगतिरकस्माद्धानिवृद्धिमान्।
मृदुर्बस्तिरिवानद्धो विभिन्नोच्छं स्रवत्यसृक्॥

**अउ34.5**
पित्तात् सदाहपीताभो रक्तो वा पच्यते द्रुतम्।
भिन्नोऽस्रमुष्णं स्रवति श्लेष्मणा नीरुजो घनः।
शीतः सवर्णः कण्डूमान् पक्वः पूयं स्रवेत् घनम्॥

**अउ34.6**
दोषैर्दुष्टेसृजि ग्रन्थिर्भवेन्मूर्च्छत्सु जन्तुषु।
सिरामांसं च संश्रित्य सस्वापः पैत्तलक्षणः॥

**अउ34.7**
मांसलैर्दूषितं मांसमाहारैर्ग्रन्थिमावहेत्।
स्निग्धं महान्तं कठिनं सिरानद्धं कफाकृतिम्॥

**अउ34.8**
प्रवृद्धं सेदुरैर्मेदो नीतं मांसेऽथ वा त्वचि।
वायुना कुरुते ग्रन्थिं भृशं स्निग्धं मृदुं चलम्॥

**अउ34.9**
श्लेष्मतुल्याकृतिं देहक्षयवृद्धिक्षयोदयम्।
स विभिन्नो घनं मेदस्ताम्रासितसितं स्रवेत्॥

**अउ34.10**
आस्थिभङ्गाभिघाताभ्यामुन्नतावनतं तु यत्।
सोस्थिग्रन्थिः पदातेस्तु सहसाम्भोवगाहनात्॥

**अउ34.11**
व्यायामाद्वा प्रतान्तस्य सिराजालं सशोणितम्।
वायुः सम्पीड्य सङ्कोच्य वक्रीकृत्य विशोष्य च।
निस्फुरं नीरुजं ग्रन्थिं कुरुते स सिराह्वयः॥

**अउ34.12**
अरूढे रूढमात्रे वा व्रणे सर्वरसाशिनः।
सार्द्रे वा बन्धरहिते गात्रेऽश्माभिहतेऽथ वा॥

**अउ34.13**
वातोऽस्रमस्रुतं दुष्टं संशोष्य ग्रथितं व्रणम्।
कुर्यात् सदाहः कण्डूमान् व्रणग्रन्थिरयं स्मृतः॥

**अउ34.14**
साध्या दोषास्रमेदोजा न तु स्थूलखराश्चलाः।
मर्मकण्ठोदरस्थाश्च महत्तुग्रन्थितोर्बुदम्॥

**अउ34.15**
तल्लक्षणं च मेदोन्तैः षोढा दोषादिभिस्तु तत्।
प्रायो मेदःकफाढ्यत्वात् स्थिरत्वाच्च न पच्यते॥

**अउ34.16**
सिरास्थं शोणितं दोषः सङ्कोच्यानुप्रपीड्य च।
पाचयेच्च तदानद्धं सास्रावं मांसपिण्डितम्॥

**अउ34.17**
मांसाङ्क्कुरैश्चितं याति वृद्धिं चाशु स्रवेत्ततः।
अजस्रं दुष्टरुधिरं भूरि तच्छोणितर्बुदम्॥

**अउ34.18**
तेष्वसृङ्मांसजे वर्ज्ये चत्वार्यन्यानि साधयेत्॥

**अउ34.19**
प्रस्थिता वङ्क्षणोर्वादिमधःकायं कफोल्बणाः।
दोषा मांसास्रगाः पादौ कालेनाश्रित्य कुर्वते।
शनैः शनैर्घनं शोफं श्लीपदं तं प्रचक्षते॥

**अउ34.20**
परिपोटयुतं कृष्णमनिमित्तरुजं खरम्।
रूक्षं च वातात् पित्तात्तु पीतं दाहज्वरान्वितम्॥

**अउ34.21**
कफात् गुरुस्निग्धमरुक्चितं मांसाङ्कुरैर्बृहत्॥

**अउ34.22**
तत्यजे द्वत्सरातीतं सुमहत्सपरिस्रुति॥

**अउ34.23**
पाणिनासौष्ठकर्णेषु वदन्त्यन्ये तु पादवत्।
श्लीपदं जायते तच्च देशेऽनूपे भृशं भ्रमात्॥

**अउ34.24**
मेदस्थाः कण्ठमन्याक्षकक्षवङ्क्षणगा मलाः।
सवर्णान् कठिनान् स्निग्धान् वार्ताकामलकाकृतीन्॥

**अउ34.25**
अवगाढान् बहून् गण्डांश्चिरपाकांश्च कुर्वते।
पच्यन्तेल्परुजस्तेन्ये स्रवन्त्यन्येतिकण्डुराः।
नश्यन्त्यन्ये भवन्त्यन्ये दीर्घकालानुबन्धिनः॥

**अउ34.26**
गण्डमालापची चेयं दूर्वेव क्षयवृद्धिभाक्।
तां त्यजेत् सज्वरच्छर्दिपार्श्वरुक्कासपीनसाम्॥

**अउ34.27**
अभेदात् पक्वशोफस्य व्रणे चापथ्यसेविनः।
अनुप्रविश्य मांसादीन् दूरं पूयोभिधावति॥

**अउ34.28**
गतिः सा दूरगमनान्नाडी नाडीव संस्रुतेः।
नाड्येकानृजुरन्येषां सैवानेकगतिर्गतिः॥

**अउ34.29**
सा दोषैःपृथगेकस्थैः शल्यहेतुश्च पञ्चमी॥

**अउ34.30**
वातात् सरुक्सूक्ष्ममुखी विवर्णा फेनिलोद्वमा।
स्रवत्यभ्यधिकं रात्रौ पित्तातृङ्ज्वरदाहकृत्।
पीतोष्णपूतिपूयस्रुग्दिवा चाति निषिञ्चति॥

**अउ34.31**
घनपिच्छिलसंस्रावा कण्डूला कठिना कफात्।
निशि चाभ्यधिकक्लेदा सर्वैः सर्वाकृतिं त्यजेत्॥

**अउ34.32**
अन्तःस्थितं शल्यमनाहृतं तु करोति नाडीं वहते च सास्य।
फेनानुविद्धं तनुमल्पमुष्णं सास्र च पूयं सरुजं च नित्यम्॥
॥इति चतुर्त्रिंशोऽध्यायः॥

अथ पञ्चत्रिंशोऽध्यायः।

**अउ35.1**
अथातो ग्रन्थ्यादिप्रतिषेधं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ35.2**
सर्वेष्वेव पूर्वं ग्रन्थिषु बृहतीद्वयपिप्पलीचित्रकसाधितेन पुराणसर्पिषा स्निग्धं वामयेत्।
विरेचयेच्च।
कृतसंसर्जनस्यचोत्तमाङ्गगतेषु ग्रन्थिषु लाक्षाद्विरजनीविडङ्गशुण्ठीपूतीदारुभिः शिरो विरेचयेत् धूमकवलगण्डूषांश्च स सेवेत॥

**अउ35.3**
अङ्कोलमधुकमातुलुङ्गहिंस्रापूतीदारुबिल्वमूलसरलकुष्ठवचावरुणत्वक्कालातिविषाजगन्धाभिर्लेपः।
श्यामासुरदारु समङ्गाकोशातकीपुनर्नवसर्षपैर्वा॥

**अउ35.4**
सशोफरुक्स्तम्भे चोपनाहो यवसक्तुमधुककुष्ठशतपुष्पोदवदारुभिर्घृतयुक्तैः।
गोजाविखरोष्ट्राश्वहस्तिमूषीकमांसैर्वा वेशवारीकृतैर्वसातैलवद्भिः॥

**अउ35.5**
पलाशवृन्ताग्निमन्थत्वक्कल्केन मांसपिण्डैर्वा।
बहुशः स्विन्नमङ्गुष्ठेन वेणुपर्वणा वा शनैश्शनैः पुनः पुनर्विमर्दयेत्। यथायथं च शोफवत् क्रियां प्रयुञ्जीत॥

**अउ35.6**
अथ वातजे ग्रन्थौ दशमूलसिद्धं महास्नेहं पिबेत्।
अमृतानिम्बबीजभार्ङ्गीस्योनाकबाणतालपत्रीकृष्णगन्धागरुभिः क्षीरपिष्टैः सुखोष्णैर्लेपः।
विविधाश्च वातव्याधिविहिताः स्नेहस्वेदोपनाहाः।
तथानुपशमे सिराव्यधः॥

**अउ35.7**
पक्वं तु विदार्य निरस्तपूयं कृत्वार्कादिवर्गाम्भसा प्रक्षाल्य तिलकल्केन सचित्रकसैन्धवेनालेपयेत्।
तैलं च रोपणं रास्नासरलोशीरविडङ्गमधुकक्षीरसंस्कृतं कुर्यात्॥

**अउ35.8**
पित्तजे रक्तजे च जलौकसो न्यग्रोधादिः प्रदेहपरिषेकयोः पद्मकादिः पाने च द्राक्षेक्षुरसयुक्ता हरीतकी विरेकः।
पक्वे पाटिते च पित्तव्रणोक्तो विधिः॥

**अउ35.9**
कफजमन्तश्शुद्धस्य भृशं स्वेदयेद्विम्लापयेच्च काकादनीविकङ्कतकाकनन्दिकारग्वधेङ्गुदमूलमदनफलभार्ङ्गीकरञ्जैर्लेपयेत्।
नागरविडङ्गैलावालुकचव्यपलाशवृन्तचित्रकैर्वा।
भल्लातसैन्धवाजगन्धासर्षपैर्वा॥

**अउ35.10**
एवमप्यपच्यमानमममर्मस्थं विदार्य स्थितरक्तं निश्शेषमग्निना दहेत्।
सशेषो हि पुनरापूर्यते।
ततो निर्वापितं क्षारक्षौद्रगुडोत्तरैरालेपैस्संशुद्धं रोपयेत्॥

**अउ35.11**
मांसव्रणग्रन्थींश्चैवमेव यापयेत्।
मेदोजेप्ययमेव विधिः अपि च मेदोग्रन्थिं तिलकल्कदिग्धं द्विगुणपटान्तरितं तप्तेन फालेन दर्व्या वा जतुलिप्तया बहुशः प्रमृज्यात्।
शस्त्रं चावचार्य पूर्ववन्मेदो दहेत्।
सुपक्वं वा विपाट्य मूत्रप्रक्षालितं क्षौद्रसैन्धवसुवर्चिकाकाञ्चनक्षीरीहरितालमिश्रैः क्षीरबकप्रगाढैस्तिलैरालेपयेत्॥

**अउ35.12**
गुञ्जाद्विकरञ्जतापसवृक्षवंशावलेखमूत्रसिद्धं तैलमभ्यङ्गः।
सम्यक्शुद्धं चैनं रोपयेत्॥

**अउ35.13**
सिराग्रन्थौ त्वभिनवे तैलं साहचरं पिबेत् उपनाहञ्च वातहरैर्बस्तिकर्म च कुर्यात्।
सिराव्यधञ्च॥

**अउ35.14**
वातार्बुदमैरण्डप्रियालनारिकेलमज्जोर्वारुकार्कोरुबीजोत्कारिकयोपनाहयेत्।
आनूपामिषवेशवारैर्वा।
नाडीस्वेदञ्च कुर्यात् बहुशश्चात्रशृङ्गेण रुधिरमवसेचयेत्।
वातहरवर्गक्काथपयोम्लसिद्धं त्रिवृतं पिबेत्॥

**अउ35.15**
पित्तोत्थे मृदून् स्वेदोपनाहान् कायविरेचनञ्च प्रयोजयेत्।
शाककाकोदुम्बरिकापत्रघृष्टे च प्रियङ्गुपतङ्गसर्जरसार्जुनलोध्रमधुमधुकैर्लेपः।
श्यामाग्रिकर्णिकाञ्जनक्लीतनकनखद्राक्षासप्तलान्यतमरससाधितं सर्पिः पीतं पित्तार्बुदश्लीपदोदरघ्नम्॥

**अउ35.16**
श्लेष्मजे तूर्ध्वमधश्च हृतदोषस्य स्रुतरक्तस्य च वमनविरेचनद्रव्यैः प्रलेपः।
काकादनीशुकबर्हाग्निजिह्वामूलदक्षकपोतगृध्रपुरीषकाशमूलैर्वा पलाशक्षीरपिष्टैः।
पिण्याककुलत्थनिष्पावैर्मांसप्रगाढैर्दधिपिष्टैर्लेपयेत्।
लेपास्वादलोभेन च निलीयमाना मक्षिकाः स मुपेक्षेत।
तद्विमुक्तैः कृमिभिरितरैर्वा भक्ष्यमाणञ्च।
ततः कृमिभक्षितावशेषं शाकादिपत्रैर्विलिख्याग्निनाप्रतिसारयत्।
अल्पमूलं वा त्रपुताम्रायःसीसपट्टकवेष्टितम्।
पुनः पुनश्च क्षारान् कालापेक्षया योजयेत्।
जात्यास्फोतकरवीरपल्लवांश्च व्रणशोधनाय कल्कादौ।
तैलञ्चात्र पाठाविडङ्गभार्ङ्गी त्रिफलाकषायसिद्धमभ्यञ्जनम्॥

**अउ35.17**
मेदोर्बुदं स्विन्नभिन्नं सुशोधितमेदस्कमुपशान्तरक्तस्रावं सद्यःस्सीव्येत्।
ततो गृहधूमलोध्रमनश्शिलाहरिद्रापतङ्गचूर्णैर्मधुमाद्भिः प्रतिसारयेत्।
करञ्जतैलञ्चाभ्यञ्जनार्थे नियुञ्जीत।
सर्वार्बुदानि च यदृच्छया पर्यागतानि सुपरिशोधितानि रोपयेत्।
अपि च॥

**अउ35.18**
सशेषदोषाणि तु योर्बुदानि करोति तस्याशु पुनर्भवन्ति।
तस्मादशेषोद्धरणं प्रशस्तं क्षारेण शस्त्रेण तथाग्निना वा॥

**अउ35.19**
श्लीपदे तु वातात्मके स्नेहस्वेदोपनाहान् प्रयुज्य गुल्फस्योपरिष्टाद्व्यङ्गुले सिरां विध्येत्।
एरण्डतैलञ्च गोमूत्रेण मासं पिबेत्।
जीर्णे नागरक्वथितेन पयसा पुराणधान्यान्यश्नीयात्।

त्रिवृतञ्च पाययेत्।
बस्तिश्च प्रयुञ्जीत।
एवमप्यशाम्यत्याग्निना दहेत्॥

**अउ35.20**
पैत्तिके मृदुरुपनाहो गुल्फस्याधः सिरामोक्षः पित्तार्बुदोक्ताः स्नेहविरेकाः पित्तघ्नाश्च लेपाः॥
श्लैष्मिके त्वङ्गुष्ठे सिरां मुञ्चेत्।
सक्षौद्रांश्च कफघ्नान् कषायानभीक्ष्णं पाययेत्।
यथाबलं वा हरीतकी वर्धमानाः॥

**अउ35.21**
श्लैष्मिके त्वङ्गुष्ठे सिरां मुञ्चेत्।
सक्षौद्रांश्च कफघ्नान् कषायानभीक्ष्णं पाययेत्।
यथाबलं वा हरीतकी वर्धमानाः॥

**अउ35.22**
आदारीकाकजंघाकाकादनीशुकनासाकदम्बपुष्पबृहतीद्वयमन्तर्धूमं दग्ध्वा गोमूत्रेण बहुशः परिस्रावयेत् ततस्तत् क्षारोदकं क्षारकल्पेन विपचेत्।
दद्याच्चात्र परतीवापं फल्गुशुकाख्या मदनफलरसं एष क्षारो मधुराहारेणाभ्यस्तः श्लीपदापचीग्रहणीदोषारोचकान् सर्वविषाणि च नियच्छति॥

**अउ35.23**
तैलं वा पिबेद्विडङ्गार्कमरिचचित्रकशुण्ठीदेवदार्वेलावालुकलवणपञ्चकैस्सिद्धम्।
आलेपयेच्च नागरामृताविडङ्गकटुकाभद्रदारुभिर्मूत्रपिष्टैरूरुस्तम्भोक्तैश्च भेषजैर्यवान्नं च शीलयेत्॥

**अउ35.24**
मण्डमालायां कुम्भनिकुम्भद्रवन्तीजीमूतककोशातकीफलविपक्वं घृतमुभयानुलोमनं पिबेत्।
शार्ङ्गेष्टामूलं वा तक्रपिष्टम्।
वमनार्थं सुखोदकेन वा जातीबर्हिष्ठनिर्गुण्डीजीमूतकोत्तुण्डकीमूलत्वक्चूर्णम्।
सिरा चास्य विध्येत्॥

**अउ35.25**
सशेषदोषं तु कौष्ठिकं नवकं पाययेत्।
रसाञ्जनं गोमूत्रतण्डुलोदकान्यतरेण।
तदेव च नावयेत्।
मधूकसारं वा शिग्रुफलानि वा निम्बकरञ्जकरवीरसिद्धं वा तैलं वैरेचनिकञ्च धूमं पिबेत्॥

**अउ35.26**
अपक्वांश्च गण्डान्नाकुलीसैन्धवनागरैर्लेपयेत्।
गुञ्जाकरवीरार्कश्यामासिद्धार्थकैरजामूत्रयुक्तैर्दशकृत्वा विपक्वं तैलं लवणपञ्चकपिप्पलीमरिचचूर्णोपेतमभ्यङ्गात्सर्वावस्थानपच्यर्शोर्बुदनाडीदुष्टव्रणवल्मीकानपोहति॥

**अउ35.27**
सौवर्चलसैन्धवौद्भिददन्तीभल्लातकचित्रककल्केन सिद्धं तैलमभ्यङ्गोऽपच्याम्।
तण्डूलीयकस्वरसेन वा सनिर्गुण्डीरसं वा तैलं साधितमभ्यङ्गपाननावनैर्गण्डमालानाडीव्रणकुष्ठानिलार्तिहरम्॥

**अउ35.28**
काकादनीनलिकाग्निजिह्वावन्ध्याकर्कोटकीविशालापाठोत्तुण्डकीजीमूतकोशातकीबीजैरर्द्धपलांशैर्विषकर्षयुक्तैर्निर्गुण्डीस्वरसोपेतं करञ्जतैलप्रस्थं विपचेत्तत्पूर्ववदेवप्रयुक्तं परमपचीघ्नम्॥

**अउ35.29**
अमर्मजांश्च गण्डानपक्वानेवोद्धृत्याग्निना क्षारेण वा प्रसाधयेत्।
सर्षपवृक्षादनी क्वाथैर्व्रणक्षालनम्।
तिलकुन्तलक्ष्Aअरपिष्टस्तिलकल्कः सुखोष्णो लेपः।

काककृकलासगोधाहिनिर्मोककूर्माणामन्यतमस्यान्तर्धूमदग्धस्य मषीङ्गुदतैलप्लुताभ्यङ्गः।
मांसीसर्जरसकार्पासीफलसैन्धवैः स्तन्यपिष्टैस्तैलं विपक्वमभ्यङ्गो व्रणकाठिन्यघ्नः सर्पाजगरवसे तैलं च समं त्रयमेतदपचीघ्नम्।
श्लीपदोक्तानि च तैलानि प्रयोजयेत्॥

**अउ35.30**
एवमनुपशमे वामपार्श्वजायां दक्षिणजङ्घापृष्ठमध्यादिन्द्रबस्तेरधः ऊर्ध्वं वा शस्त्रेणाक्षिमात्रं व्रणं कृत्वा मत्स्याण्डजालनिभं मेदोपनीयाग्निना दहेत्।
अनेनेतरपार्श्वजाव्याख्याता।
एवमुभयपार्श्वजायामुभ्भयतः।
यवमुद्गप्रायं च गण्डमालासु भोजनम्॥

**अउ35.31**
नाडीमनिलजामुपनाह्य पूयगतिमस्या निश्शेषमोषित्वावदारयेच्छस्त्रेण।
ततस्तिलापामार्गफलकल्केन ससैन्धवेन पूरयित्वा बध्नीयात्॥

**अउ35.32**
पित्तजां सघृतक्षीरया पद्मकादिकृतयोऽल्कारिकयोऽपनाहिताम्।
विदारितां च तिलनागदन्तीमञ्जिष्ठाकल्केन पूरयेत् श्यामात्रिभण्डीत्रिफलातिल्वकहरिद्राद्वयकल्कक्षीरसंस्कृतं सर्पिरभ्यङ्गः।
परं नाडीनिबर्हणम्॥

**अउ35.33**
श्लेष्मजां सक्तुकुलत्थकिण्वसर्षपैरुपनाह्य विदार्य च निम्बतिलसैन्धवसौराष्ट्रीनिकुम्भैर्लेपयेत्।
दन्तीचित्रकस्वर्जिकासैन्धवतालीसनलदपूतीकापामार्गफलैस्तैलं समूत्रं पाचितमभ्यङ्गः॥

**अउ35.34**
शल्यहेतुकीं पाटयित्वा सर्वशः शल्यं विशोध्य मधुघृततिलकल्कप्रतिच्छन्नां बध्नीयात्।
बिल्वकपित्थकुम्भीखर्जूरवनस्पतिशलाटुक्वाथे प्रियङ्गुमुस्तोरुपूगशकुनसुगन्धिकालोध्रमोचरसधातकीपुष्पगर्भं तैलं प्रसाधितं साधयत्याशु शल्यजां गतिम्॥

**अउ35.35**
अशस्त्रकृत्यां नाड्यां भेदिन्यैषिण्यान्ते समुद्भिद्य क्षाराक्तं सूत्रं प्रवेशयेत्।
तदसन्निधानेत्वितरयैषिण्या च तेनानवदीर्णायां तदनुस्यूतमन्यदन्यत् क्षारसूत्रं सञ्चारयेदा गतिभेदादयमनपायोऽभ्युपायः।
सूक्ष्मानेकगतिषु भगन्दरेषु मूलेषु च छिद्रितेषु ग्रन्थ्यर्बुदेष्विति।
भवति चात्र॥

**अउ35.36**
व्रणेषु दुष्टसूक्ष्मास्यगम्भीरादिषु साधनम्।
या वर्त्यो यानि तैलानि तन्नाडीष्वपि कल्पयेत्॥

**अउ35.37**
विभीतकाम्रास्थिवटप्रवाल हरेणुकाशाल्मलिबीजयुक्ता।
वराहविष्ठा च मषी सुदग्धा तैलप्लुता सर्वगतीर्निहन्ति॥

**अउ35.38**
धत्तूरकं मदनकोद्रवजञ्च बीजं कोशातकी शुकनसा मृगभोजनी च।
अङ्कोलजञ्च कुसुमं परिकल्प्य चूर्णं लाक्षोदकापहृतदोषगतौ प्रयोज्यम्॥

**अउ35.39**
मिश्रितं तेन तैलञ्च परमं गतिरोपणम्।
सौवहेषु च कन्देषु कृतं वज्राह्वयेषु च॥

**अउ35.40**
भल्लातकार्कमरिचैर्लवणोत्तमेन सिद्धं विडङ्गरजनीद्वयचित्रकैश्च।
तैलं समार्कवरसैर्विनिहन्ति कृच्छ्रां नाडीं कफानिलकृतामपचीव्रणांश्च॥

**॥इति पञ्चात्रशोऽध्यायः॥**

# अष्टाङ्गसंग्रहः उत्तरस्थानम् अध्याय ३६-४०

https://sa.wikisource.org/s/a01

**अष्टाङ्गसंग्रहः**

अथ षट्त्रिंशोऽध्यायः।

**अउ36.1**
अथातः क्षुद्ररोगविज्ञानीयं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ36.2**
स्निग्धाः सवर्णा ग्रथिता नीरुजा मुद्रसन्निभाः।
पिटकाः कफवाताभ्यां बालानामजगल्लिका॥

**अउ36.3**
यवप्रख्या यवप्रख्या ताभ्यां मांसाश्रिता घना।
अवक्त्रा त्वलजी वृत्ताः स्तोकपूया घनोन्नताः।
ग्रन्थयः पञ्च वा षड्वा कच्छपी कच्छपोन्नताः॥

**अउ36.4**
कर्णस्योर्ध्वं समन्ताद्वा पिटका कठिनोग्ररुक्।
शालूकाभा पनसिका शोफस्त्वल्परुजः स्थिरः।
हनुसन्धिसमुद्भूतस्ताभ्यां पाषाणगर्दभः॥

**अउ36.5**
शाल्मलीकण्टकाकाराः पिटकाः सरुजो घनाः।
मेदोगर्भा मुखे शूनां ताभ्यां च मुखदूषिका॥

**अउ36.6**
ते पद्मकण्टका ज्ञेया यैः पद्ममिव कण्टकैः।
चीयते नीरुजैः श्वेतैः शरीरं कफवातजैः॥

**अउ36.7**
पित्तेन पिटका वृत्ता पक्वोदुम्बरसन्निभा।
महादाहज्वरकरी विवृता विवृतानना॥

**अउ36.8**
गात्रेष्वन्तश्च वक्त्रस्य दाहज्वररुजान्विताः।
मसूरमात्रास्तद्वर्णास्तत्संज्ञाः पिटका घनाः॥

**अउ36.9**
ततः कष्टतराः स्फोटा विस्फोटाख्या महारुजाः॥

**अउ36.10**
या पद्मकर्णिकाकारा पिटका पिटकाचिता।
सा विद्धा वातपित्ताभ्यां ताभ्यामेव च गर्दभी॥

**अउ36.11**
मण्डला विपुलोत्सन्ना सरागपिटकाचिता॥

**अउ36.12**
कक्ष्येति कक्षासन्नेषु प्रायो देशेषु सानिलात्।
पित्तात् भवन्ति पिटकाः सूक्ष्मा लाजोपमा घनाः।
तादृशी महतीत्वेका गन्धनामेति कीर्तिता॥

**अउ36.13**
घर्मस्वेदपरीतेङ्गे पिटकाः सरुजो घनाः।
राजिकावर्णसंस्थानप्रमाणा राजिकाह्वयाः॥

**अउ36.14**
दोषैः पित्तोल्बणैर्मन्दैर्विसर्पति विसर्पवत्।
शोफोऽपाकस्तनुस्ताम्रो ज्वरकृज्जालगर्दभः॥

**अउ36.15**
मलैः पित्तोल्बणैः स्फोटा ज्वरिणो मांसदारणाः।
कक्ष्याभागेषु जायन्ते येऽग्न्याभाः साग्निरोहिणी।

पञ्चाहात् सप्तरात्राद्वा पक्षाद्वा हन्ति जीवितम्॥

**अउ35.16**
त्रिलिङ्गा पिटका वृत्ता जत्रूर्ध्वमिरिवेल्लिका॥

**अउ36.17**
विदारीकन्दकठिना विदारी कक्षवङ्क्षणे॥

**अउ36.18**
मेदोनिलकफैर्ग्रन्थिः स्नायुमांससिराश्रयैः।
भिन्नो वसाज्यमध्वाभं स्रवेत्तत्रोल्वणोनिलः॥

**अउ36.19**
मांमं विशोष्य ग्रन्थितां शर्करामुपपादयेत्।
दुर्गन्धिं रुधिरं क्लिन्नं नानावर्णं ततो मलाः।
तां स्रावयन्ति निचितां विद्यात्तच्छर्करार्बुदम्॥

**अउ36.20**
पाणिपादतले सन्धौ जत्रूर्ध्वंवोपचीयते।
वल्मीकवच्छनैर्ग्रन्थिस्तद्वत्बह्वणुभिर्मुखैः।
रुग्दाहकण्डूक्लेदाढ्यैर्वल्मीकोसौ समस्तजः॥

**अउ36.21**
शर्करोन्मथिते पादे क्षते वा कण्टकादिभिः।
ग्रन्थिःकीलवदुत्सन्नो जायते कदरं तु तत्॥

**अउ36.22**
वेगसन्धारणाद्वायुरपानोऽपानसंश्रयम्।
अणूकरोति बाह्यान्तर्मार्गमस्य ततः शकृत्।
कृच्छ्रान्निर्गच्छति व्याधिरयं रुद्धगुदो मतः॥

**अउ36.23**
कुर्यात् पित्तानिलं पाकं नखमांसे सरुग्ज्वरम्।
चिप्पमक्षतरोगं च विद्यादुपनखं च तम्॥

**अउ36.24**
कृष्णोभिघाताद्रूक्षश्च खरश्च कुनखो नखः।
दुष्टकर्दमसंस्पर्शात् कण्डूक्लेदान्वितान्तराः।
अङ्गुल्योऽलसमित्याहुः तिलामांस्तिलकालकान्॥

**अउ36.25**
कृष्णानवेदनांस्त्वक्स्थान् मषांस्तानेव चोन्नतान्।
मषेभ्यस्तून्नततरान् चर्मकीलान् सितासितान्।
तथाविधो जतुमणिः सरुजो लोहितस्तु सः॥

**अउ36.26**
कृष्णं सितं वा सहजं मण्डलं लाञ्छनं समम्॥

**अउ36.27**
शोकक्रोधादिकुपिताद्वातपित्तान्मुखे तनु।
श्यामलं मण्डलं व्यङ्गं वक्त्रादन्यत्र नीलिका॥

**अउ36.28**
परुषं परुषस्पर्शं व्यङ्गं श्यावं च मारुतात्।
पित्तात्ताम्रान्तमानीलं श्वेतान्तं कण्डुमत्कफात्।
रक्ताद्रक्तान्तमाताम्रं सेषं चिमिचिमायते॥

**अउ36.29**
वायुनोदीरितः श्लेष्मा त्वचं प्राप्य विशुष्यति।
ततस्त्वग्जायते पाण्डुः क्रमेण च विचेतना।
अल्पकण्डूरविक्लेदा सा प्रसुप्तिः प्रसुप्तितः॥

**अउ36.30**
असम्यग्वमनोदीर्णपित्तश्लेष्मान्ननिग्रहैः।
मण्डलान्यतिकण्डूनि रागवन्ति बहूनि च।
उत्कोठः सोनुबन्धस्तु कोठ इत्यभिधीयते॥

**अउ36.31**
प्रोक्ताः षड्त्रिंशदित्येते क्षुद्ररोगा विभागशः।
यान् विज्ञाय न सम्मुह्येच्चिकित्सायां चिकित्सकः॥
इति षट्त्रिंशोऽध्यायः॥

अथ सप्तत्रिंशोऽध्यायः।

**अउ37.1**
अथातः क्षुद्ररोगप्रतिषेधं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ37.2**
अजगल्लिकामपक्वां जलौकोभिर्ग्राहयेत्।
यवक्षारशुक्तिसौराष्ट्रीकल्कैश्च लेपयेत्॥

**अउ37.3**
यवप्रख्यादीन् पाषाणगर्दभान्तान् स्वेदयित्वा सुरदारुकुष्ठमनश्शिलालैर्लेपयेत्॥

**अउ37.4**
पक्वांस्तु सहाजगल्लिकया व्रणवदुपाचरेत्।

**अउ37.5**
मुखदूषिकां लोध्रतुवरिकाभ्यां वा प्रदिह्यात्।
वटपत्रनारिकेलशुक्तिभ्यां वा सैन्धववचाक्षिभेषजसिद्धार्थकैर्वा।
एवमशान्तौ छर्दयेत्।
ललाटे च सिरां विध्येत्॥

**अउ37.6**
पद्मकण्टकेषु निम्बाम्बुवान्तं निम्बोदकसिद्धं सर्पिः सक्षौद्रं पाययेत्।
निम्बारग्वधकषायेण चोद्वर्तनम्॥

**अउ37.7**
विवृतादीन् जालगर्दभान्तनिरिवेल्लिकां च पित्तविसर्पवच्चिकित्सेत्॥

**अउ37.8**
विशेषतो राजिकामपाकशर्करामूर्वाकण्टकशर्कराभिः क्षीरपिष्टAअभिर्लेपयेत्।
अभीक्ष्णं च मृजाशीलनम्।
जालगर्दभे धात्रीफलान्युपयुञ्जीत॥

**अउ37.9**
अग्निरोहिणीमपि प्रत्याख्याय पित्तविसर्पदुपाचरेत् पक्वां तु मधुरवर्गसिद्धेन सर्पिषां रोपयेत्॥

**अउ37.10**
विदारिकां जलवासिनीभिर्ग्राहयित्वा बिल्वमूलनगवृत्तिकवर्षाभ्वजकर्णपलाशकल्केन प्रलिम्पेत्।
अनुपशाम्यन्तीं त्वभ्यज्य स्वेदयित्वा विम्लापयेत्।
पक्वां शस्त्रेण विदार्य निम्बतिलपटोलकल्केन प्रच्छाद्य बध्नीयात्।
क्षीरिवृक्षकदरखदिरकषायो व्रणप्रक्षालनम्।
शुद्धां मधुरकषायसंस्कृतेन तैलेन रोपयेत्॥

**अउ37.11**
शर्करार्बुदं मेदोर्बुदवदुपाचरेत्॥

**अउ37.12**
बल्मीकं हस्तस्य पादस्य चोपरिष्टान्मर्मणि वा जातं प्रवृद्धमतिबहुच्छिद्रावृतं सशोफं च वर्जयेत्॥

**अउ37.13**
अतोन्यथा तु प्राक् कृतशुद्धेः शोणितमपहरेत्।
सक्तुपललवणगुडूच्यारेवतश्यामादन्तीकुलत्थिकामूलैर्लेपयेत्॥

**अउ37.14**
पक्वे तु सर्वां गतिं दुष्टमांसानि च शस्त्रेण सम्यक्शोधयित्वाग्निना क्षारेण वा दहेत्॥

**अउ37.15**
सुशुद्धे तु व्रणे भल्लातकमनश्शिलालैलाकालानुसार्यगरुचन्दनैर्निम्बतैलं रोपणार्थं श्रपयेत्॥

**अउ37.16**
कदरं शस्त्रेणोत्कृत्य स्नेहेन दहेत्॥

**अउ37.17**
रुद्धगुदे निरुद्धमणिवच्चिकित्सा॥

**अउ37.18**
चिप्पं शोणितावसेकसंशोधनैरुपाचरेत्।
व्यपगतोष्माणञ्चैनमुष्णाम्बुना परिषिच्य यथायोगं शस्त्रेण परिकर्त्यापनयेत्॥

**अउ37.19**
ततो रसाञ्जनरोचनानेपालीतेजोह्वाकल्कैरम्लपिष्टैः शोधयित्वा कालेयकागरुहरिद्रारसाञ्जनसिद्धेनतैलेन रोपयेत्।
मधुरकषायसिद्धेन वा।
अल्पावशिष्टं च सर्जरसचूर्णेन पूरयेत्॥

**अउ37.20**
कुनखमपि प्रदुष्टमेवमेवोपक्रमेत्॥

**अउ37.21**
अलसेत्वम्लकाञ्जिकावसिक्तौ चरणौ निम्बतिलपटोलीकासीसरोचनाकल्केनाकल्केनालेपयेत्।
निदिग्धिकारससिद्धेन सर्षपतैलेनाभ्यज्य रोचनाकासीसमनश्शिलाचूर्णैः प्रतिसारयेत्॥

**अउ37.22**
तिलकालकान् मषांश्च सूर्यकान्तेनाग्निना वा दहेत् क्षारेण वा।
चर्मकलिं जतुमणिं च तद्वच्छस्त्रेणोत्कृत्य॥

**अउ37.23**
लाञ्च्छनव्यङ्गनीलिकासु यथासन्नां सिरां विध्येत्।
क्षीरीवृक्षवल्ककल्कैश्च क्षीरपिष्टैर्लेपयेत्।
बलातिबलामधुकहरिद्राभिर्वा।
मधुकागरुपयस्याकालीयकैर्वा।
तरुणकपित्थतिन्दुकरजनीभिर्वा।
अम्लिकामूलेन वा।
सूकरदंष्ट्रया वा मधुघृतयुक्तया॥

**अउ37.24**
विशेषेण व्यङ्गेष्वसृक्स्रावपूर्वमर्जुनपरिपोटैर्लेपः।
क्षौद्रेण वा पिष्टा मञ्जिष्ठा।
अजाक्षीरेणवार्द्रदाडिमत्वक्।
तेनैव वा बालामलकं गोमूत्रेण सप्ताहं स्थितम्।
दधिमण्डेन वा कालेयकलोध्रोत्पलकिञ्जल्कम्।
नवनीतेन वा श्वेताश्वखुरजमषी॥

**अउ37.25**
तत्रापि वातजेषु देवदारुदुरालभाबृहतीमञ्जिष्ठामूर्वापामार्गत्रायन्तीत्रायमाणाशुकनसाबलाविदारीयवबदरकुलत्थबिल्वोत्पलशतावरीदर्भमूलक्वाथे शृङ्गीविडङ्गगर्भं घृतं विपक्वमधोभक्तं पानमभ्यङ्गं नावनं च सायं योजयेत्॥

**अउ37.26**
प्रलेपं च न्यग्रोधदेवदारुहरीतकीपूतीकरञ्जमदनफलचूर्णैर्घृतयुक्तैः।
बदरमज्जाकोद्रवलाजचूर्णेन वा सघृतेन।
श्वेतचमरास्थितालपत्रीस्तन्यमधुघृतैर्वा॥

**अउ37.27**
पैत्तेषु बलामधुकमागधिकाक्षीरकाकोलीस्वगुप्ताफलकाकमाचीतुगाह्वाभिः सपयः सर्पिः सिद्धं पूर्ववत् प्रयोजयेत्॥

**अउ37.28**
मृद्वीकाश्वेतपाकीखर्जूरपरूषकसौवीरबदरद्विमेदापुनर्नवकशेरुकाप्रवालविद्रुममृणालैर्वा सक्षीरैः॥

**अउ37.29**
उपस्निग्धं चैनमिक्षुरसेनोभयतो विरेचयेत्॥

**अउ37.30**
कृतरुधिरावसेचनानेतांश्च व्यङ्गान् मधुकसारिवाबलाचन्दनलोध्रोत्पलैर्घृतयुक्तैरालेपयेत्।
प्रपौण्डरीकमधुकपद्मकनीलोत्पलसारिवाकदलीमूलप्रवालसुवर्णगैरिकैर्वा।
शीतमधुरमन्नपानं प्रवातमहःस्वप्नं सौमनस्यं च सेवेत॥

**अउ37.31**
कफजेषु दशमूलदेवदारुहरीतकीश्वदंष्ट्रामलकीक्वाथे मुस्तकुष्ठहरिद्रामरतरुकल्कैस्तद्वत् साधितं सर्पिस्तद्वदेवोपयुञ्जीत॥

**अउ37.32**
तुत्थरोचनालोध्रप्रियङ्गुकालेयकैः समधुघृतैर्लेपः।
देवदारुसरलबलाशिग्रुमूलैर्वा।
मनश्शिलातुत्थरसाञ्जनैर्वा।
मृदुना वा क्षारेण दशमात्राः प्रलेपः॥

**अउ37.33**
रक्तजेषु क्षीरसर्पिःस्निग्धस्य सिरां विस्रावयेत्।
वमनविरेचने च पित्तवत् कुर्यात्।
आलेपश्चास्य चन्दनमधुककल्केन घृतवता।
सर्जरसनीलोत्पलशङ्खवेतसकदलीमूलमूर्वामधुककल्केन वा॥

**अउ37.34**
प्रसुप्तौ वातकुष्ठोक्तक्रमोऽन्ते चाग्निना दाहः॥

**अउ37.35**
उत्कोठे पित्तश्लेष्महरो विधिः सक्षारलवणं च तैलमभ्यङ्गः।
कोठे कुष्ठचिकित्सितमीक्षेत॥
॥इति सप्तत्रिंशोऽध्यायः॥

अथ अष्टत्रिंशोऽध्यायः।

अस38.1। अथातो गुह्यरोगविज्ञानीयं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ38.2**
स्त्रीव्यवायनिवृत्तस्य सहसा भजतोथवा।
दोषाध्युषितसङ्कीर्णमलिनाणुरजःपथाम्॥

**अउ38.3**
अन्ययोनिमनिच्छन्तीमगम्यां नवसूतिकाम्।
तृषितं स्पृशतस्तोयं रतान्तेष्वपि नैव वा॥

**अउ38.4**
विवर्धयिषया तीक्ष्णान् प्रलेपादीन् प्रयच्छतः।
मुष्टिदन्तनखोत्पीडाविषवच्छूकपातनैः॥

**अउ38.5**
वेगनिग्रहदीर्घातिखरशष्पविघट्टनैः।
दोषा दुष्टा गता गुह्यं त्रयोविंशतिमामयान्॥

**अउ38.6**
जनयन्त्युपदंशादीन् उपदंशोऽत्र पञ्चधा।
पृथग्दोषैः सरुधिरैः समस्तैश्च अत्र मारुतात्।
मेढ्रशोफो रुजश्चित्राः स्तम्भस्त्वक्परिपोटनम्॥

**अउ38.7**
पक्वोदुम्बरसङ्काशं पित्तेन श्वयथुर्ज्वरः॥

**अउ38.8**
श्लेष्मणा कठिनः स्निग्धः कण्डूमाञ्छीतलो गुरुः॥

**अउ38.9**
शोणितेनासितस्फोटसम्भवोस्रस्रुतिर्ज्वरः॥

**अउ38.10**
तीव्रारुगाशुपचनं दरणं कृमिसम्भवः॥

**अउ38.11**
याप्यो रक्तोद्भवस्तेषां मृत्यवे सन्निपातजः॥

**अउ38.12**
जायन्ते कुपितैर्दोषैर्गुह्यासृक्पिशिताश्रयैः।
अन्तर्बहिर्वा मेढ्रस्य कण्डूला मांसकीलकाः॥

**अउ38.13**
पिच्छिलास्रस्रवा योनौ तद्वच्च छत्रसन्निभाः।
तेर्शांस्युपेक्षया घ्नन्ति मेढ्रपुंस्त्वभगार्तवम्॥

**अउ38.14**
गुह्यस्य बहिरन्तर्वा पिटकाः कफरक्तजाः।
सर्षपामानसंस्थाना घनाः सर्षपिकाः स्मृताः॥

**अउ38.15**
पिटका बहवो दीर्घा दीर्यन्ते मध्यतश्च याः।
सोऽवमन्थः कफासृग्भ्यां वेदनारोमहर्षवान्॥

**अउ38.16**
कुम्भीका रक्तपित्तोत्था जाम्बवास्थिनिभाशुजा॥

**अउ38.17**
अलजीं मेहवद्विद्यात् उत्तमां रक्तपित्तजाम्।
पिटकां माषमुद्गाभाम् पिटका पिटकाचिता।
कर्णिका पुष्करस्येव ज्ञेया पुष्करिकेति सा॥

**अउ38.18**
पाणिभ्यां भृशसंव्यूढे संव्यूढपिटका भवेत्॥

**अउ38.19**
मृदितं मृदितं वस्तु संरब्धं वातकोपतः॥

**अउ38.20**
विषमा कठिना भुग्ना वायुनाष्ठीलिका स्मृता॥

**अउ38.21**
विमर्दनादिदुष्टेन वायुना चर्म मेढ्रजम्।
निवर्तते सरुग्दाहं क्वचित् पाकं च गच्छति॥

**अउ38.22**
पिण्डितं कुथितं चर्म तत्प्रलम्बमधोमणेः।
निवृत्तसंज्ञं सकफं कण्डूकाठिन्यवत्तु तत्॥

**अउ38.23**
दुरूढं स्फुटितं चर्म निर्दिष्टमवपाटिका॥

**अउ38.24**
वातेन दूषितं चर्म मणौ सक्तं रुणद्धि चेत्।
स्रोतो मूत्रं ततोभ्येति मन्दधारमवेदनम्।
मणेर्विकासरोधश्च स निरुद्धमणिर्गदः॥

**अउ38.25**
लिङ्गं शूकैरिवाकीर्णं ग्रथिताख्यं कफोद्भवम्॥

**अउ38.26**
शूकदूषितरक्तोत्था स्पर्शहानिस्तदाह्वया॥

**अउ38.27**
छिद्रैरणुमुखैर्यत्तु मेहनं सर्वतश्चितम्।
वातशोणितकोपेन तं विद्याच्छतपोनकम्॥

**अउ38.28**
पित्तासृग्भ्यां त्वचः पाकस्त्वक्पाको ज्वरदाहवान्॥

**अउ38.29**
मांस्पाकः सर्वजः सर्ववेदनो मांसशातनः॥

**अउ38.30**
सरागैरसितैः स्फोटैर्वेदनाभिश्च पीडितम्।
मेहनं वेदना चोग्रा तं वियादसृगर्बुदम्॥

**अउ38.31**
मांसार्बुदं प्रागुदितं विद्रधिश्च त्रिदोषजः॥

**अउ38.32**
कृष्णानि भूत्वा मांसानि विशीर्यन्ते समन्ततः।
पक्वानि सन्निपातेन तान् विद्यात्तिलकालकान्॥

**अउ38.33**
मांसोत्थमर्बुदं पाकं विद्रधिं तिलकालकान्।
चतुरो वर्जयेदोषां शेषान् शीघ्रमुपाचरेत्॥

**अउ38.34**
विंशतिर्व्यापदो योनेर्जायन्ते दुष्टभोजनात्।
विषमस्थाङ्गशयनभृशमैथुनसेवनैः।
दुष्टार्तवादपद्रव्यैर्बीजदोषेण दैवतः॥

**अउ38.35**
योनौ क्रुद्धोऽनिलः कुर्याद्रुक्तोदायामसुप्तताः।
पिपीलिकासृप्तिमिव स्तम्भं कर्कशतां स्वनम्॥

**अउ38.36**
फेनिलारुणकृष्णाल्पतनुरूक्षार्तवस्रुतिम्।
भ्रंशं वङ्क्षणपार्श्वादौ व्यथां गुल्मं क्रमेण च।
तांस्तांश्च स्वान् गदान् व्यापद्वातिकी नाम सा स्मृता॥

**अउ38.37**
सैवातिचरणा शोफसंयुक्तातिव्यवायतः॥

**अउ38.38**
मैथुनादतिबालायाः पृष्ठजङ्घोरुवङ्क्षणम्।
रुजन् सन्दूषयेद्योनिं वायुः प्राक्चरणेति सः॥

**अउ38.39**
वेगोदावर्तनाद्योनिं प्रपीडयति मारुतः।
सा फेनिलं रजः कृच्छ्रादुदावृत्तं विमुञ्चति॥

**अउ38.40**
इयं व्यापदुदावृत्ता जातघ्नी तु यदानिलः।
जातं जातं सुतं हन्ति रौक्ष्याद्दुष्टार्तवोद्भवम्॥

**अउ38.41**
अत्याशिताया विषमं स्थितायाः सुरते मरुत्।
अन्नेनोत्पीडितो योनेः स्थितः स्रोतसि वक्रयेत्।
सास्थिमांसं मुखं तीव्ररुजमन्तर्मुखीति सा॥

**अउ38.42**
वातलाहारसेविन्यां जनन्यां कुपितोनिलः।
स्त्रिया योनिमणुद्वारां कुर्यात् सूचिमुखीति सा॥

**अउ38.43**
वेगरोधादृतौ वायुर्दुष्टो विण्मूत्रसङ्ग्रहम्।
करोति योनिशोषं च शुष्काख्या सातिवेदना॥

**अउ38.44**
षडहात् सप्तरात्राद्वा शुक्रं गर्भाशयान्मरुत्।
वमेत् सरुङ्नीरुजो वा यस्यां सा वामिनी मता॥

**अउ38.45**
योनौ वातोपतप्तायां स्त्रीगर्भे बीजदोषतः।
नृद्वेषिण्यस्तनी च स्यात् षण्डसंज्ञानुपक्रमा॥

**अउ38.46**
दुष्टो विष्टभ्य योन्यास्यं गर्भकोष्ठं च मारुतः।
कुरुते विवृतां स्रस्तां वातिकीमिव दुःखिताम्।
उत्सन्नमांसां तामाहुर्महायोनिं महारुजम्॥

**अउ38.47**
यथास्वैर्दूषणैर्दुष्टं पित्तं योनिसमाश्रितम्।
करोति दाहपाकोषापूतिगन्धज्वरान्विताम्।
भृशोष्णभूरिकुणपनीलपीतासितार्तवाम्॥

**अउ38.48**
सा व्यापत् पैत्तिकी रक्तयोन्याख्यासृगतिस्रुतेः॥

**अउ38.49**
कफोभिष्यन्दिभिः क्रुद्धः कुर्याद्योनिमवेदनाम्।
शतिलां कण्डुलां पाण्डु पिच्छिलां तद्विधस्रुतिम्।
सा व्यापच्छ्लैष्मिकी #

**अउ38.50**
वातपित्ताभ्यां क्षीयते रजः।
सदाहकार्श्यवैवर्ण्यं यस्यां सा लोहितक्षया॥

**अउ38.51**
पित्तलाया नृसंवासे क्षवथूद्गारधारणात्।
पित्तयुक्तेन मरुता योनिर्भवति दूषिता॥

**अउ38.52**
शूला स्पर्शासहा सर्पिर्नीलपीतास्रवाहिनी।
बस्तिकुक्षिगुरुत्वातिसारारोचककारिणी।
श्रेणिवङ्क्षणरुक्तोदज्वरकृत्सा परिप्लुता॥

**अउ38.53**
वातश्लेष्मामयव्याप्ता श्वेतपिच्छिलवाहिनी॥

**अउ38.54**
उपप्लुता स्मृता योनिः विप्लताख्या त्वधावनात्।
सञ्जातजन्तुः कण्डूला कण्ड्वा चातिरतिप्रिया॥

**अउ38.55**
अकालवाहनाद्वायुः श्लेष्मरक्तविमूर्च्छितः।
कर्णिकां जनयेद्योनौ रजोमार्गनिरोधिनीम्॥

**अउ38.56**
सा कर्णिनी त्रिभिर्दोषैर्योनिगर्भाशयाश्रितैः।
यथास्वोपद्रवकरैर्व्यापत् सा सान्निपातिकी॥

**अउ38.57**
इति योनिगदा नारी यैः शुक्रं न प्रतीच्छति।
ततो गर्भं न नृह्णाति रोगांश्चाप्नोति दारुणान्।
असृग्दरार्शोगुल्मादीनाबाधांश्चानिलादिभिः॥
॥इति अष्टत्रिंशोऽध्यायः॥

अथ एकोनचत्वारिंशोऽध्यायः।

**अउ39.1**
अथातो गुह्यरोगप्रतिषेधं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ39.2**
उपदंशेषूत्पन्नमात्रेषु पाकपरिहारार्थं मेढ्रमध्ये सिरां विध्येत्।
उभयतश्चास्य विधिवद्दोषानपहरेद्विशेषतो विरेचनेन।
तदयोग्यस्य त्वत्युच्छ्रितानास्थापनेन॥

**अउ39.3**
यथादोषं चालेपसेकादीनविरतं विदध्यात्।
एवं सद्य एव रुक्तोदशोफरागसंरम्भा निवर्तन्ते॥

**अउ39.4**
पक्वेषु तु तु शस्त्रमवचारयेत्।
सघृतक्षौद्रशर्करेण तिलकल्केनालेपयेत्।
अपि च॥

**अउ39.5**
जम्ब्वाम्रसुमनोनीपश्वेतकाम्बोजिकाङ्कुरान्।
सल्लकीबदरीबिल्वपलाशतिनिशोद्भवाः॥

**अउ39.6**
त्वचः क्षीरिद्रुमाणां च त्रिफलां च पचेज्जले।
स क्वाथः क्षालनं तेन पक्वं तैलं च रोपणम्।
गोजीविडङ्गमधुकसर्वगन्धैश्च पेषितैः॥

**अउ39.7**
तुत्थगौरिकलोध्रैलामनोह्वालरसाञ्जनैः।
हरेणुपुष्पकासीससौराष्ट्रीलवणोत्तमैः।
लेपः क्षौद्रद्रुतैः सूक्ष्मैरुपदंशव्रणापहः॥

**अउ39.8**
दार्वीत्वक्शङ्खतार्क्ष्योत्थलाक्षागोक्षीरविड्रसैः।
सक्षौद्रतैलसर्पिर्भिर्लेपः श्रेष्ठो व्रणेऽथवा।
लाक्षाद्राक्षातसीक्षौद्रैः क्षौद्रशैलेयतार्क्ष्यजैः॥

**अउ39.9**
कपाले त्रिफलादग्धा सघृता रोपणी परम्॥

**अउ39.10**
सामान्यं साधनमिदं वातिकं तु प्रलेपयेत्।
अपक्वं कुष्ठयष्ट्याह्वसुरदारुपुनर्नवैः॥

**अउ39.11**
स्निग्धोष्णैर्लोहसरलरास्नापुण्ड्राह्वसंयुतैः।
अथवा निचुलैरण्डबीजगोधूमचिक्कसैः॥

**अउ39.12**
गैरिकाञ्जनमञ्जिष्ठामधुकोशीरपद्मकैः।
सचन्दनोत्पलैः शीतैर्घृताढ्यैः पित्तसम्भवम्॥

**अउ39.13**
पद्मोत्पलमृणालैर्वा ससर्जार्जुनवेतसैः।
सेचयेच्च घृतक्षीरशर्करेक्षुमधूदकैः॥

**अउ39.14**
धवसालाश्वकर्णाजकर्णत्वग्भिः कफोत्थितम्।
सुरापिष्टाभिरुष्णाभिः सतैलाभिः प्रलेपयेत्॥

**अउ39.15**
रजन्यतिविषामुस्तसरलामरदारुभिः।
सपत्रपाठापत्तूरैरथवा श्लेष्मसम्भवम्॥

**अउ39.16**
न च याति यथा पाकं प्रयतेत तथा भृशम्।
पक्वैः स्नायुसिरामांसैः प्रायो नश्यति हि ध्वजः॥

**अउ39.17**
उपदंशद्वये शिष्टे प्रत्याख्यायाचरेत् क्रियाम्॥

**अउ39.18**
अर्शांसि यथायोगं शुद्धदेहस्य शस्त्रक्षाराग्निभिः साधयेत्।
उपदंशोक्ता चात्र रसक्रिया लेपः॥

**अउ39.19**
सर्षपिकां विलिख्य कषायैरवचूर्णयेत्।
तैरेव च तैलं व्रणरोपणं कुर्यात्॥

**अउ39.20**
अवमन्थे जलौकसो योजयेत्।
पक्वभिन्नं धवतिन्दुकसल्लकीपतङ्गसर्जकृतेन तैलेन रोपयेत्॥

**अउ39.21**
तद्वत् कुम्भीकामुपचरेत्।
लोध्रतिन्दुकत्रिफलाकृतस्तु लेपस्तैलं च रोपणम्॥

**अउ39.22**
अलजीं स्रुतरक्तां कषायैरवचूर्णयेत्।
तेष्वेव च तैलं व्रणरोपणार्थं कुर्वीत॥

**अउ39.23**
उत्तमां पिटकां शस्त्रेण च्छित्वा कषायचूर्णप्रदेहैर्मधुमाद्भिरुपाचरेत्॥

**अउ39.24**
पुष्करिकासंव्यूढास्पर्शहानित्वक्पाकेषु पित्तविसर्पोक्तो विधिः॥

**अउ39.25**
मृदितं कोष्णेन बलातैलेन परिषेचयेत्।
मधुरद्रव्यकल्कैश्च सुखोष्णैर्घृतस्निग्धैरुपनाहयेत्॥

**अउ39.26**
अष्ठीलिकां जलौकोभिर्ग्राहयेत्।
तथानुपशमे श्लेष्मग्रन्थिमिव शस्त्रेणोद्धरेत्॥

**अउ39.27**
निवृत्तं सर्पिषाभ्यज्य स्वेदयेत्।
स्विन्नमुपनाहयेत्त्रिरात्रं पञ्चरात्रं वा साल्वलेन।
ततो भूयः स्वेदयित्वा घृतेनाभ्यज्य शनैः शनैश्चर्म समानयन् मणिमवपीडयेत्।
पीडयित्वा च पुनरुपनाहयेत्।
स्निग्धोष्णं चान्नपानम्॥

**अउ39.28**
अवपाटिकायामप्ययं विधिः॥

**अउ39.29**
निरुद्धमणौ सुवर्णादिकृतां दारुजां वा जतुसृतां नाडीमुभयतोद्वारां स्नेहाभ्यक्तां स्रोतसि प्रणिधाय सूकरशिंशुमारयोर्वसयामज्ज्ञा वा परिषेचयेत्।
चक्रतैलेन वा।
वातहरसिद्धेन वा त्रिवृतेन।
तृतीये तृतीये चाहनि नाडीं पीनतरां विदध्यात्।
एवमस्य स्रोतोद्वारं विवर्धयेत् स्निग्धं चाहारं भोजयेत्।
एवमनुपशान्तौ शस्त्रेण सेवनीं परिहृत्य दारयित्वा सद्यःक्षतवदुपाचरेत्॥

**अउ39.30**
ग्रथितं नाडीस्वेदेन स्वेदयित्वा स्निग्धोष्णैरुपनाहयेत्।
शतपोनकं लिखित्वा कषायचूर्णैः सक्षौद्रैर्लेपयेत्।
विदार्यादिसिद्धेन च तैलेन रोपयेत् शर्करार्बुदे रक्तविद्रधिवत् साधनम्॥

**अउ39.31**
सर्वेषु च यथास्वमन्तःशुद्धिं कषायलेपघृततैलरसक्रियाचूर्णशोधनरोपणान् विदध्यात्॥

**अउ39.32**
योनिव्यापदि तु वातिक्यां लवणतैलाक्तां योनिं पिण्डनाडीकुम्भीप्रभृप्रभृतिभिः स्वेदयेत्।
ततः सुखोष्णाम्बुपरिषिक्तसर्वगात्रां जाङ्गलरसैर्भोजयेत्॥

**अउ39.33**
बलाद्रोणद्वयनिर्यूहे पयस्यासालपर्णीमागधिकाशतावरीकाकनासाश्रावणीशर्कराजीवनीयगर्भं क्षीरचतुर्गुणं घृततैलाढकं साधयेत् तत्पानात् सर्वान् वातपित्तविकारानपोहति गर्भजननं च॥

**अउ39.34**
शतावरीत्रिफलागुडूचीकाश्मर्यमृद्वीकाकासमर्दकपरूषकहरिद्राद्वयसहचरशुकनासापुनर्नवैः कार्षिकैर्घृतप्रस्थः सिद्धः पीतो वातजान् योनिरोगानपोहति गर्भजननश्च॥

**अउ39.35**
सैन्धववचोपकुञ्चिकापिप्पलीवृषकयवक्षाराजमोदाजाजीसितोपलाचित्रकचूर्णो मदिरालुलितः सर्पिषा संयावीकृत्य भक्षितो योनिपार्श्वबास्तिवेदनार्शोगुल्महृद्रोगहरः॥

**अउ39.36**
शूले वृषकरास्नागोक्षुरकशृतं पयः पिबेत्।
वृषकमातुलुङ्गमूलमदयन्तिकासैन्धवपिप्पलीकृष्णजीरककल्कं वा मद्येन।
तेनैवचार्जकमूलं बिल्वयुक्तं वा पिप्पली युक्तं वा।
सौवर्चलोपकुञ्चिकापिप्पलीर्वा मद्येनावन्तिसोमेन वा॥

**अउ39.37**
दन्तीत्रिफलगुडूचीक्वाथः सुखोष्णो योनेः परिषेकः॥

**अउ39.38**
कुष्ठतगरदेवदारुवार्ताकिनीसैन्धवैः साधितं तैलं पिचुना धारयेत्॥

**अउ39.39**
रास्नामालतीच्छिन्नरुहामधुकबलाव्याघ्रीदेवदारुचित्रकयूथिकामूलैः कर्षांशैस्तैलप्रस्थः समूत्रो द्विगुणपयसा विपक्वः पिचुना प्रणीतोऽनिलार्तिहरः॥

**अउ39.40**
बस्तिकर्म चाभीष्णं स्वेदं च प्रयोजयेद्विशेषतो वातहरैः सुकुमारबलातैलशिरीषतैलैः शतपाकसहस्र पाकैश्चानुवासनमुत्तरबस्तिं च।
एष क्रमो विशेषेण योनेर्वेदनाकार्कश्यस्तम्भस्रंसस्पर्शाहानिघ्नश्च॥

**अउ39.41**
अतिचरणादिषु सर्वास्वनिलजास्वयमेव क्रमः॥

**अउ39.42**
धारयेच्चातिचरणाय यवगोधूमकिण्वकुष्ठशतपुष्पाश्र्याह्वीप्रयङ्गुबलाखुकर्णीकल्ककृतामुत्कारिकाम्॥

**अउ39.43**
प्राक्चरणाशुष्काविप्लुताकर्णिनीषुतैलमुत्तरबस्तिं दद्यात्॥

**अउ39.44**
धारयेच्च विप्लुतायां गोमत्स्यान्यतरपित्तेनैकविंशतिकृत्वो भावितान् क्षौमनक्तकान् किण्वं वा माक्षिकयुक्तमेवमस्याः स्रोतांसि विशुध्यन्ति कण्डूक्लेदशोफाश्च निवर्तन्ते॥

**अउ39.45**
कर्णिन्यां तु कुष्ठार्कपल्लवपिप्पलीसैन्धवैर्बस्तमूत्रपिष्टैर्वर्तिं कृत्वा धारयेत्।
श्लेष्महरं च सर्वं कुर्यात्॥

**अउ39.46**
उदावृत्तायामानूपमांसरसाः क्षीरं स्वेदो दशमूलत्रिवृताक्वाथकल्कासिद्धश्च स्नेहः पानानुवासनोत्तरबस्तिषु।
योनिस्रंसे च महायोनिप्रभृतिष्वेष एव विधिः॥

**अउ39.47**
जातघ्नीरक्तयोनिरक्तक्षयासु कुट्Aजकाश्मर्यक्वाथसिद्धं सर्पिरुत्तरबस्तौ दद्यात्।
अथवा मृगाजाविवराहरुधिराम्लदधिमधुघृतानीति।
भवति चात्र॥

**अउ39.48**
स्नेहन स्वेदबस्त्यादि वातलास्वनिलापहम्।
कारयेद्रक्तपित्तघ्नं शीतं पित्तकृतासु च॥

**अउ39.49**
श्लेष्मलासु च रूक्षोष्णं कर्म कुर्याद्यथायथम्।
सन्निपाते विमिश्रं तु संसृष्टासु च कारयेत्॥

**अउ39.50**
स्निग्धस्विन्नां तथा योनिं दुःस्थितां स्थापयेत् समाम्।
पाणिना नमयेत् जिह्मां संवृतां प्रथयेत् पुनः॥

**अउ39.51**
प्रवेशयेन्निस्सृतां च विवृतां परिवर्तयेत्।
स्थानापवृत्ता योनिर्हि शल्यभूता स्त्रिया मता॥

**अउ39.52**
सर्वां व्यापन्नयोनिं च कर्मभिर्वमनादिभिः।
मृदुभिः पञ्चभिर्नारीं स्निग्धस्विन्नामुपाचरेत्॥

**अउ39.53**
सर्वतः सुविशुद्धायाः शेषं कर्म विधीयते।
बस्त्यभ्यङ्गपरीषेकप्रलेपपिचुधारणम्॥

**अउ39.54**
हिंस्राकल्कं समीरार्तौ कोष्णमभ्यज्य धारयेत्।
पञ्चवल्कस्य पित्तार्तौ श्यामादीनां कफातुरा॥

**अउ39.55**
वामिन्याप्लुतयोश्चैव स्वेदयित्वा प्रयोजयेत्।
तर्पणं स्नेहपिचुभिर्भोजनं चानिलापहम्॥

**अउ39.56**
सल्लकीजिङ्गिणीजम्बूधवत्वक्पञ्चवल्कलैः।
कषायैः साधितात् स्नेहात् पर्युपप्लुतयोः पिचुम्॥

**अउ39.57**
कुलीरसूकरवसा सर्पिर्भिर्मधुरैः शृतैः।
पूरयित्वा महायोनिं बध्नीयात् क्षौमनक्तकैः॥

**अउ39.58**
प्रस्रस्तां सर्पिषाभ्यज्य क्षीरस्विन्नां प्रवेशयेत्।
बध्नीयाद्वेशवारस्य पिण्डेनामूत्रकालतः॥

**अउ39.59**
यच्च वातविकाराणां कर्मोक्तं तच्च कारयेत्।
सर्वव्यापत्सु मतिमान्महायोन्यां विशेषतः॥

**अउ39.60**
नहि वाताद्दते योनिर्वनितानां प्रदुष्यति।
अतो जित्वा तमन्यस्य कुर्याद्दोषस्य भेषजम्॥

**अउ39.61**
पित्तलानां तु योनीनां सेकाभ्यङ्गपिचुक्रियाः।
शीताः पित्तजितः कार्याः स्नेहनार्थं घृतानि च॥

**अउ39.62**
शतावरीमूलतुलाचतुष्कात् क्षुण्णपीडितात्।
रसेन क्षीरतुल्येन पाचयेत घृताढकम्॥

**अउ39.63**
जीवनीयैः शतावर्या मृद्वीकाभिः परूषकैः।
पिष्टैः प्रियालैश्चाक्षांशैर्मधुकार्द्धपलान्वितैः॥

**अउ39.64**
सिद्धशीते तु मधुनः पिप्पल्याश्च पलाष्टकम्।
शर्करराया दशपलं क्षिपेल्लिह्यात् पिचुं ततः॥

**अउ39.65**
योन्यसृक्शुक्रदोषघ्नं वृष्यं पुंसवनं परम्।
क्षतं क्षयमसृक्पित्तं कासं श्वासं हलीमकम्॥

**अउ39.66**
कामिलां वातरुधिरं विसर्पं हृच्छिरोग्रहम्।
अपस्मारार्दितायाममदोन्मादांश्च नाशयेत्॥

**अउ39.67**
एवमेव पयस्सर्पिर्जीवनीयोपसाधितम्।
गर्भदं पित्तजानां च रोगाणां परमं हितम्॥

**अउ39.68**
रक्तयोन्यामसृग्वर्णैरनुबन्धमवेक्ष्य च।
यथादोषोदयं युञ्ज्याद्रक्तस्थापनमौषधम्॥

**अउ39.69**
तिलचूर्णं दधि घृतं फाणितं सौकरी वसा।
क्षौद्रयुक्तं जयेत् पीतं वातोत्तरमसृग्दरम्॥

**अउ39.70**
वराहस्य रसो मेध्यः सकौलत्थश्च तद्गुणः।
पत्रकल्को घृते भृष्टो राजादनकपित्थयोः।
शर्कराक्षौद्रयष्ट्याह्वनागरैश्च युतं दधि॥

**अउ39.71**
पयस्योत्पलशालूकबिसकालीयवारिजम्।
सपयश्शर्कराक्षौद्रं रक्ते पित्तोत्तरे पिबेत्॥

**अउ39.72**
तण्डुलीयकमूलं वा सक्षौद्रं तण्डुलाम्भसा।
सताक्ष्यर्शैलं लाक्षां वा छागेन पयसा पिबेत्।
वासाघृतं महातिक्तं रक्तपित्तहितञ्च यत्॥

**अउ39.73**
मधुकं त्रिफलां लोध्रं मुस्तं सौराष्ट्रिकां मधु।
मद्यैर्निमगुडूच्यौ च कफजेऽसृग्दरे पिबेत्॥

**अउ39.74**
पाठां जम्ब्वाम्रयोरस्थि शिलोद्भेदं रसाञ्जनम्।
अम्बष्ठां शाल्मलीपिच्छां समङ्गां वत्सकत्वचम्॥

**अउ39.75**
बाल्हीकबिल्वातिविषालोध्रतोयदगैरिकम्।
शुण्ठीमधूकमाचीकरक्तचन्दनकट्फलम्॥

**अउ39.76**
कट्वङ्गवत्सकानन्ताधातकीमधुकार्जुनम्।
पुष्ये गृहीत्वा सञ्चूर्ण्य सक्षौद्रं तण्डुलाम्बुना॥

**अउ39.77**
पिबेदर्शस्वतीसारे रक्तं यच्चोपवेश्यते।
दोषा जन्तुकृता ये च बालानां तांश्च नाशयेत्॥

**अउ39.78**
योनिदोषं रजोदोषं श्यावश्वेतारुणासितम्।
चूर्णं पुष्यानुगं नाम हितमात्रेयपूजितम्॥

**अउ39.79**
सर्वेषु गर्भस्रावोक्तं प्रदरेषु प्रशस्यते॥

**अउ39.80**
रक्तक्षयायां क्षीरं च जीवनीयशृतं पिबेत्॥

**अउ39.81**
योन्यां बलासदुष्टायां वर्तिः संशोधने हिता।
वाराहे बहुशः पित्ते भावितैर्नक्तकैः कृता॥

**अउ39.82**
भावितं पयसार्कस्य माषचूर्णं ससैन्धवम्।
वर्तिः कृता क्षणं धार्या सेक्तव्यानुसुखाम्बुना॥

**अउ39.83**
पिप्पलीमाषमरिचशताह्वाकुष्ठसैन्धवैः।
प्रदेशिन्यङ्गुलीतुल्या वर्तिर्योनिविशोधनी॥

**अउ39.84**
उदुम्बरशलाटूनां द्रोणं द्रोणेम्भसः पचेत्।
सपञ्चवल्कतिलकमालतीनिम्बपल्लवे॥

**अउ39.85**
निशास्थिते जले तस्मिंस्तैलप्रस्थं विपाचयेत्।
पलाशशाल्मलीलाक्षाधवनिर्यासवल्कलैः॥

**अउ39.86**
पिष्टैर्युक्तं ततःस्नेहपिचुं योनौ निधापयेत्।
सशर्करैः कषायैश्च शीतैः कुर्वीत सेचनम्॥

**अउ39.87**
पिच्छिला विवृता योनिश्चिरदुष्टा तु दारुणा।
सप्ताहाच्छुध्यति क्षिप्रमपत्यं च समश्नुते॥

**अउ39.88**
उदुम्बरस्य दुग्धेन षट्कृत्वो भावितात्तिलात्।
तैलं क्वाथेन तस्यैव कार्यं धार्यं च पूर्ववत्॥

**अउ39.89**
धातक्यामलकीपत्रस्रोतोजमधुकोत्पलैः।
जम्ब्वाम्रसारकासीसलोध्रकट्फलतिन्दुकैः॥

**अउ39.90**
सौराष्ट्रिकादाडिमत्वगुदुम्बरशलाटुभिः।
अक्षमात्रैरजामूत्रे क्षीरे च द्विगुणे पचेत्॥

**अउ39.91**
तैलप्रस्थं तदभ्यङ्गपिचुबस्तिषु योजयेत्।
शूनोत्तानोन्नता स्तब्धा पिच्छिला स्राविणी तथा।
विप्लुतोपप्लुता योनिः सिध्येत् सस्फोटशूलिनी॥

**अउ39.92**
अर्कनिम्बाम्रकोशाम्रबिल्वबूकधवोद्भवैः। करीरजिङ्गिणीनम्बूकरञ्जार्जुनशिग्रुजैः॥

**अउ39.93**
पलाशसिध्रकोत्थैश्च कषायैर्धावनं परम्।
शुक्तसीधुमधून्मिश्रैर्योनेः स्रावनिवारणम्॥

**अउ39.94**
कुर्यात् सतक्रगोमूत्रशुक्तैर्वा त्रिफलारसैः॥

**अउ39.95**
यवान्नमभयारिष्टं सीधु तैलं च शीलयेत्।
पिप्पल्ययोरजःपथ्याप्रयोगांश्चसमाक्षिकान्॥

**अउ39.96**
रोहीतकजटाकल्कं पाण्डुरेऽसृग्दरे पिबेत्।
धात्रीमज्जोथवा कल्कं सितामाक्षिकसंयुतम्॥

**अउ39.97**
मधुनामलकीचूर्णं रसं वा प्राशयेत् सिते।
सलोध्रवल्केन वटत्वक्कषायेण धावयेत्॥

**अउ39.98**
आस्रावे क्षौमपट्टान् वा भावितांस्तेन धारयेत्।
प्लक्षत्वक्चूर्णपिण्डं वा धारयेन्मधुना कृतम्॥

**अउ39.99**
योन्या स्नेहाक्तया लोध्रप्रियङ्गुमधुकस्य वा।
धार्या मधुकृता वर्तिः कषायाणां च भूरिशः॥

**अउ39.100**
स्रावच्छेदार्थमभ्यक्तां धूपयेद्वा धृताप्लुतैः।
सरलागुग्गुलुयवैः सतैलैः कटुमत्स्यकैः॥

**अउ39.101**
कासीसं त्रिफला काङ्क्षी साम्रजम्ब्वस्थि घातकी।
पैच्छिल्ये क्षौद्रसंयुक्तश्चूर्णो वैशद्यकारकः॥

**अउ39.102**
पलाशधातकीजम्बूसमङ्गामोचसर्जजः।
दुर्गन्धे पिच्छिले क्लेदे स्तम्भनश्चूर्ण इष्यते।
आरग्वधादिवर्गस्य कषायः परिषेचनम्॥

**अउ39.103**
स्तब्धानां कर्कशानां च कार्यं मादर्वकारकम्।
धारणं वेशवारस्य कृसरा पायसस्य वा॥

**अउ39.104**
दुर्गन्धानां कषायः स्यात्तैलं वा कल्क एव वा।
चूर्णो वा सर्वगन्धानां पूतिगन्धापकर्षणः॥

**अउ39.105**
श्लेष्मलानां कटुप्रायाः समूत्रा बस्तयो हिताः।
पित्ते समधुकक्षीरा वाते तैलाम्लसंयुताः।
सन्निपातसमुत्थायाः कर्म साधारणं हितम्॥

**अउ39.106**
एवं योनिषु शुद्धासु गर्भं विन्दन्ति योषितः।
अदुष्टे प्राकृते बीजे बीजोपक्रमणे सति॥

**अउ39.107**
पञ्चकर्मविशुद्धस्य पुरुषस्यापि चेन्द्रियम्।
परीक्ष्य वर्णैर्दोषाणां दुष्टं तद्घ्नैरुपाचरेत्॥

**अउ39.108**
मञ्जिष्ठाकुष्ठतगरत्रिफलाशर्करावचाः।
द्वे निशे मधुकं मेदा दीप्यकः कटुरोहिणी॥

**अउ39.109**
पयस्या हिङ्गुकाकोली वाजिगन्धा शतावरी।
पिष्ट्वाक्षांशं घृतप्रस्थं पचेत् क्षीरचतुर्गुणम्॥

**अउ39.110**
योनिशुक्रप्रदोषेषु तत्सर्वेषु प्रशस्यते।
आयुष्यं पौष्टिकं मेध्यं धन्यं पुंसवनं परम्॥

**अउ39.111**
फलसर्पिरिति ख्यातं पुष्पे पीतं फलाय यत्।
म्रियमाणप्रजानां च गर्भिणीनां च पूजितम्।
एतत्परं च बालानां ग्रहघ्नं देहवर्द्धनम्॥
एकोनचत्वारिंशोऽध्यायः।
॥इति शल्यतन्त्रं नाम पञ्चममङ्गं समाप्तम्॥

अथ चत्वारिंशोऽध्यायः।

**अउ40.1**
अथातो विषप्रतिषेधं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ40.2**
पुरा खल्वमृतार्थं सुरासुरैः सलिलनिधेर्विमथ्यमानात् क्रोध इव रूपवान् सत्वं समुद्बभूव कृष्णमनलनयनमूर्ध्वप्रदीप्तकेशं दंष्ट्राकरालं भैरवारावरूपम्।
तद्दर्शनादेव यतो देवदानवाश्च विषण्णास्तस्मात्तद्विषसंज्ञामवाप॥

**अउ40.3**
तत् सहसैव सर्वभूतानि निर्दग्धुकाममुपयोगविशेषैर्विषममृततां विनयमानो ब्रह्मानुनीयौषधिषु न्यस्तवान्॥

**अउ40.4**
ततस्तत् स्थावरासु मूर्तिष्वधिवसनात् स्थावरमित्युच्यते॥

**अउ40.5**
जङ्गमं पुनः पृथिव्या भारावतारार्थमुरगादिरूपेण विष्णुर्निर्ममे॥

**अउ40.6**
तयोः स्थावरं मूलपत्रपुष्पफलत्वक्सारनिर्यासक्षीरधातुकन्दभेदाद्दशाधिष्ठानम्॥

**अउ40.7**
तत्र मूलविषाणि क्लीतनकाश्वमारकगुञ्जासुगन्धकगर्गककर्करकरघाटकादीनि।
पत्रविषं कालपत्रिका लम्बा वरदकरम्भार्कादीनाम्।
पुष्पविषं वल्लीरेणुककरम्भ महाकरम्भादीनाम्।
फलं कुमुद्वतीरेणुकाकरम्भमहाकरम्भमदनकतुवरकादीनाम्।
त्वक्सारनिर्यासाः करककरघाटककरम्भमहाकरम्भनाराचकादीनाम्।
क्षीरं कुमुद्वती दन्ती स्नुह्यर्कजालिनी व्यालादीनाम्।
धातवो हरितालफेनाश्मभस्मरक्तप्रभृतयः।
कन्दजानि तु
हालाहलकालकूटवत्सनाभशृङ्गीसाषर्पजालककर्दमकवैराटकमुस्तकमुष्ककसाकुकक्रौञ्चकवालकमहाविषपुण्डरीकगालवमूलकमर्कटकर्कटककरवीरकेन्द्रायुधसङ्कोचकलाङ्गलकतैलपेय कुशपुष्पके तु पुष्पकरोहिषाञ्जनाभकादीनि॥

**अउ40.8**
तत्र मूलविषैरुपयुक्तैरुद्वेष्टनप्रलापमोहाः प्रजायन्ते।
पत्रविषैर्जृम्भोद्वेष्टनश्वासाः।
पुष्पविषैश्छर्द्याध्मानमोहाः।
फलविषैर्दाहमुष्कशोफौ।
त्वक्सारनिर्यासविषैः प्रसेकास्यदौर्गन्ध्यपारुष्यशिरोवेदनाः।
क्षीरविषैर्जिह्वागौरवं शकृत्भेदश्च।
धातुविषैस्तालुदाहमूर्च्छाहृदयपीडाः।
सर्वमेव च स्थावरं ज्वरहिध्मादन्तहर्षहनुस्तम्भगलग्रहफेनवमनारुचिश्वासमूर्च्छाः करोति विशेषेण कन्दजम्।
तदध्यतितीक्ष्णत्वादाशुकारितरम्।
इतरत्तु प्रायः कालान्तरप्राणहरम्॥

**अउ40.9**
सर्वमपि चैतन्मौलमित्युच्यते मूलाश्रयत्वात् पत्रादीनाम्॥

**अउ40.10**
जङ्गमस्य त्वाश्रयाः षोदश।
दृष्टिनिश्वासस्पर्शदंष्ट्रामुखनखास्थिमूत्रपुरीषशुक्रार्तवलालाशूकपित्तशोणितशवानि।
तानि पुनः सर्पकीटकणभाद्याश्रितानि।
तत्कृतान्यथास्वमामयान् साधनं चोत्तरत्र वक्ष्यति॥

**अउ40.11**
सर्वं च प्रायशो जङ्गमं निद्रातन्द्राक्लमदाहरोमहर्षशोफपाकातिसारान् करोति॥

**अउ40.12**
द्विविधमपिचैतद्विषं तीक्ष्णोष्णरूक्षविशदसूक्ष्मव्यवाय्याशुकारिविकाशिलघ्वव्यक्तरसत्वैर्दशभिर्गुणैर्युक्तमपाकि च॥

**अउ40.13**
तत्र तैक्ष्ण्यौष्ण्यात् पित्तं रक्तं च प्रकोपयति।
रौक्ष्याद्वायुम्।
वैशद्यादसक्तवेगं प्रसरति।
सौक्ष्म्याद्व्यवायित्वाच्च दोषधातुमलादीन् समस्तान् शरीरावयवाननुप्रविशति।
आशुकारित्वादाशु व्यापादयति।
विकाशित्वान्मर्मच्छेदेन मतिं व्यामोहयति।
लाघवाद्दुर्निर्हरमव्यक्तरसत्वाच्छ्लेष्मप्रकोपणमन्नरसांश्च सर्वाननुवर्तते।

अत एव च प्रयत्नेनान्नानि विषतो रक्षेदित्युक्तम्।
अपाकित्वाज्जरां नो याति।
तेनाभ्यवहृतमवश्यं मारयति।
मन्त्रौषधबलेन चोपशमितमपि प्रत्ययमासाद्य पुनः प्रकृप्यतीति।
भवति चात्र॥

**अउ40.14**
स्थावरं जङ्गमं चेति विषं प्रोक्तमकृत्रिमम्॥

**अउ40.15**
कृत्रिमं गरसंज्ञं तु क्रियते विविधौषधैः।
हन्ति योगवशेनाशु चिराच्चिरतराच्च तत्।
शोफपाण्डूदरोन्माददुर्नामादीन्करोति वा॥

**अउ40.16**
अपि चैतद्विषं सर्वं तीक्ष्णाद्यैरन्वितं गुणैः।
वातपित्तोत्तरं नृणां सद्यो हरति जीवितम्॥

**अउ40.17**
विषं हि देहं सम्प्राप्य प्राग्दूषयति शोणितम्।
कफपित्तानिलांश्चानु समदोषं सहाशयान्।
ततो हृदयमास्थाय देहोच्छेदाय कल्पते॥

**अउ40.18**
शरीरं दूषिते रक्ते सर्वं चिमिचिमायते।
कोठः समण्डलः स्वेदो रोमहर्षश्च जायते॥

**अउ40.19**
क्षुद्रकीटा इवाङ्गेषु विसर्पन्तीति मन्यते।
विनामयति गात्राणि जृम्भते शिशिरप्रियः॥

**अउ40.20**
व्यापिनस्तस्य दुष्टस्य द्रुतस्य विषतेजसा।
वातादयो वशं यान्ति बलिनोप्यबला इव॥

**अउ40.21**
विषं यद्दोषभूयिष्ठं तं दोषं प्राक् प्रपद्यते।
आशये यस्य यस्यैव ततस्तदवतिष्ठते।
तज्जान् विकारान् कुरुते यान् सर्वेषूपदेक्ष्यति॥

**अउ40.22**
वाताशयस्थं कुरुते तथा श्लेष्मामयानपि।
पित्तश्लेष्माशयगतं तद्वत् पित्तकफोद्भवान्॥

**अउ40.23**
तत्रापि चोत्तमाङ्गस्थे सकोठं शूयते शिरः।
विशेषादक्षिकूटौष्ठनासास्यं हृष्टदन्तता।
ताल्शोषो रुजा मूर्ध्नि वक्त्रे चिमिचिमायनम्॥

**अउ40.24**
अर्थेषु चक्षुरादीनामप्रवृत्तिर्हनुग्रहः।
इत्यन्यापि च विषं स्थितमङ्गेऽभिलक्षयेत्॥

**अउ40.25**
व्याप्यैवं सकलं देहमुपरुध्य च वाहिनीः।
विषं विषमिव क्षिप्रं प्राणानस्य निरस्यति॥

**अउ40.26**
पीतं मृतस्य हृदये जग्धदिग्धाभिविद्धयोः।
दंशे तिष्ठति भूयिष्ठं सर्वतः पिण्डितं विषम्।
नाद्यादतो विशेषेण तेषां मांसं तदाश्रयम्॥

**अउ40.27**
यथास्वं भक्षिते पीडा यथास्वं च क्रियाक्रमः॥

**अउ40.28**
सप्त वेगान् विषस्याहुरष्टाविति पुनर्वसुः॥(चृ.ष्ष् 5.4.39,Cष् 6.23.7)

**अउ40.29**
दुष्यति प्रथमे वेगे रसश्छर्दिप्रसेककृत्।
द्वितीयेऽस्रं चिमिचिमाजृम्भावेपथुकारि तत्॥

**अउ40.30**
तृतीये पिशितं कण्डूकोठमण्डलशोफदम्।
दोषाश्चाश्चतुर्थे तेषु स्युर्यथायथमुपद्रवाः॥

**अउ40.31**
पञ्चमे दर्शनभ्रान्तिः षष्ठे हिध्मासमुद्भवः।
सप्तमे स्कन्धभङ्गोऽस्य जायते मृत्युरष्टमे॥

**अउ40.32**
दुष्यति प्रथमे रक्तं द्वितीये श्वयथूद्भवः।
तृतीयेऽङ्गे चिमिचिमा चतुर्थे ज्वरमूर्च्छना॥

**अउ40.33**
पञ्चमे पाण्डुजिह्वास्य शोषः षष्ठे हृदि व्यथा।
सप्तमे मरणं वेग इति गग्नजितो मतम्॥

**अउ40.34**
मूर्च्छा हृदि परं पीडा शिरोरुगपतन्त्रकः।
हिध्मा च दारुणो मर्मच्छेदो जीवितसंशयः।
सप्तेति वेगा मूर्च्छाद्या विदेहपतिना स्मृताः॥

**अउ40.35**
रक्तमांसवसास्नायु तथास्थ्याद्यास्त्रयः क्रमात्।
आश्रयाः सप्त सप्तानामित्यालम्बायनोऽब्रवीत्॥

**अउ40.36**
वेगान् धन्वन्तरिस्तद्वत् सर्पदष्टस्य मन्यते।
स्नाववर्जं तु तत्स्थाने दोषानिच्छति कोष्ठगान्॥

**अउ40.37**
धात्वन्तरेषु याः सप्त कलाः पूर्वं प्रकीर्त्तिताः।
अतीत्य तासामेकैकां वेगं प्रकुरुते विषम्॥

**अउ40.38**
तत्कालकल्पं कालेन कलामभ्येति यावता।
ऊह्यमानं समीरेण तावद्वेगान्तरं स्मृतम्॥

**अउ40.39**
मुनिना येन यत्प्रोक्तं तत्सर्वमिह दर्शितम्॥

**अउ40.40**
जीर्णं विषघ्नौषधिभिर्हतं वा दवाग्निवातातपशोषितं वा।
स्वभावतो वा न गुणैः सुयुक्तं दूषीविषाख्यां विषमभ्युपैति॥

**अउ40.41**
वीर्याल्पभावादविभाव्यमेतत्।
कफावृतं वर्षगणानुबन्धि॥

**अउ40.42**
तेनार्दितो भिन्नपुरीषवर्णो दुष्टास्रसरोगी तृडरोचकार्तः।
मूर्च्छन् वमन् गद्गदवाग्विमुह्यन् भवेच्च दूष्योदरलिङ्गजुष्टः॥

**अउ40.43**
आमाशयस्थे कफवातरोगी पित्ताशयस्थेऽनिलपित्तरोगी।
भवेन्नरो ध्वस्थीशरोरुहाङ्गो विलूनपक्षः स यथा विहङ्गः।
स्थितं रसादिष्वथवा विचित्रान्।
करोति धातुप्रभवान्विकारान्॥

**अउ40.44**
प्राग्वाताजीर्णशीताभ्रदिवास्वप्नाहिताशनैः।
दुष्टं दूषयते धातूनतो दूषीविषं स्मृतम्॥

**अउ40.45**
स्थावरस्योपयुक्तस्य पूर्वे वेगेऽथ जायते।
जिह्वायाः श्यावता स्तम्भो मूर्च्छा त्रासः क्लमो वमिः॥

**अउ40.46**
द्वितीये वेपथुः स्वेदो कण्ठे च वेदनाः।
विषं चामाशयं प्राप्तं कुरुते हृदि वेदनाम्॥

**अउ40.47**
तालुशोषस्तृतीये तु शूलं चामाशये भृशम्।
दुर्बले हरिते शूने जायेते चास्य लोचने॥

**अउ40.48**
पक्वाशयगते तोदहिध्माकासान्त्रकूजनम्।
चतुर्थे जायते वेगे शिरसश्चातिगौरवम्॥

**अउ40.49**
कफप्रसेको वैवर्ण्यं पर्वभेदश्च पञ्चमे।
सर्वदोषप्रकोपश्च पक्वाधाने च वेदना॥

**अउ40.50**
षष्ठे संज्ञाप्रणाशश्च सुभृशं चातिसार्यते।
स्कन्धपृष्ठकटीभङ्गो भवेन्मृत्युश्च सप्तमे॥

**अउ40.51**
प्रथमे विषवेगेथ वान्तं शीताम्बुसेचितम्।
सर्पिर्मधुभ्यां संयुक्तमगदं पाययेद्द्रुतम्॥

**अउ40.52**
द्वितीये पूर्ववद्वान्तं विरिक्तं चानु पाययेत्।
तृतीयेऽगदपानं च हितं नस्यं तथाञ्जनम्॥

**अउ40.53**
चतुर्थे स्नेहसंयुक्तमगदं प्रतिभोजयेत्।
पञ्चमे मधुकक्वाथमाक्षिकाभ्यां युतं हितम्॥

**अउ40.54**
षष्ठेऽतिसारवत् सिद्धिरवपीडस्तु सप्तमे।
मूर्ध्नि काकपदं कृत्वा सासृग्वा पिशितं क्षिपेत्॥

**अउ40.55**
कोशातक्यग्निकः पाठा सूर्यवल्यमृताभयाः।
शेलुः शिरीषः किणिही हरिद्रे क्षुद्रसाह्वया।
पुनर्नवे त्रिकटुकं बृहत्यौ सारिवे बले॥

**अउ40.56**
एषां यवागूं निर्यूहे शीतां सघृतमाक्षिकाम्।
युञ्ज्याद्वेगान्तरे सर्वविषघ्नीं कृतकर्मणः॥

**अउ40.57**
तद्वन्मधूकमधुकपद्मकेसरचन्दनैः॥

**अउ40.58**
अगदान् वक्ष्यते चातः सिद्धान् पूर्वर्षिनिर्मितान्।
सर्वेषु सर्वावस्थेषु ये विषेषु परं हिताः॥

**अउ40.59**
चन्दनं कुङ्कुमं कुष्ठं काङ्क्षी लाक्षा प्रियङ्गवः।
मुस्तस्थौणेयशैलेयरोचनामदनप्लवम्॥

**अउ40.60**
श्रीवेष्टकीवडैङ्गलाविशालालमनश्शिलाः।
सुरसप्रसवस्पृक्कारजनीद्वयवालकम्॥

**अउ40.61**
हिङ्गुसिद्धार्थकाः पद्मचारिणी पद्मकेसरम्।
जात्याःपुष्पं प्रवालश्च पुष्पमर्कशिरीषयोः॥

**अउ40.62**
द्विरोध्रबृहती कौन्ती मधुकं गन्धनाकुली।
मुद्गपर्णीकणाश्यामा ध्यामकं नलदं नतम्॥

**अउ40.63**
सिन्दुवारकशम्याकदेवदारुमयूरकम्।
पुष्ये समाहृतैः पिष्टैर्योज्यस्तैरगदोत्तमः॥

**अउ40.64**
सञ्जीवनःप्रागमृताद्विहितोऽयं स्वयम्भुवा।
पाननस्याञ्जनाघ्राणधूमालेपनधारणैः॥

**अउ40.65**
जीवनो विषसुप्तानां राजद्वारे जयावहः।
धन्यो धान्यधनायुःश्रीक्षेमपुष्टिसुखप्रदः॥

**अउ40.66**
गृहे स्थितो विषालक्ष्मीमन्त्रज्वरगरग्रहान्।
कृत्याकार्मणकाखोर्दव्यालजन्तुसरीसृपान्॥

**अउ40.67**
स्वप्नोपघातदुःस्वप्नतोयाग्निरिपुतस्करान्।
निहन्त्यकालमरणमरकाशनिविग्रहान्॥

**अउ40.68**
चन्दनं वालकं मुस्तं ध्यामकं कटुका नतम्।
दाडिमं कुङ्कुमं शुण्ठी कपित्थं वत्सकात्फलम्॥

**अउ40.69**
करञ्जबीजं मरिचमुत्पलं कमलं दलम्।
नलमूलमपामार्गं करवीरकमञ्जनम्॥

**अउ40.70**
लाक्षामालत्यहिच्छत्रनागपुष्पाम्लवेतसम्।
विशालारोचनाश्यामा शङ्खपुष्पीप्रियङ्गुका॥

**अउ40.71**
अजाजी सारिवाकुष्ठमजमोजः कुरण्डकः।
वयस्था सिन्दुवारैला कायस्था चारटी वचा॥

**अउ40.72**
कर्कटी पूतना केशी श्वेता च गिरिकर्णिका।
गोलोमी सिंहलोमी च वर्षाभूर्गजपिप्पली।
अगदो यापनाख्योयं पूर्वेण सदृशो गुणैः॥

**अउ40.73**
श्रीवेष्टकं हरिद्रे द्वे कोविदारं मनःशिलाम्।
पिप्पलीं पाटलीं पद्मां श्वेतां च गिरिकर्णिकाम्।
मञ्जिष्ठां बृहतीं वक्रं यष्टी मरिचकेसरम्॥

**अउ40.74**
फलीनीं किणिहीं चेति गवां पित्तेन भावयेत्।
सूर्योदयो हन्ति विषं तमः सूर्योदयो यथा॥

**अउ40.75**
निम्बपत्रं गृहाद्धूमं फाणितं बृहतीफलम्।
गोपित्तयुक्तमगदः परमं मृतजीवनः॥

**अउ40.76**
गोपित्तकुष्ठसुरसं मधुकद्विनिशं तथा।
विशालारजनीकुष्ठश्वपित्तव्योषतुम्बुरु॥

**अउ40.77**
वचाशिरीषपञ्चाङ्गी मृतसञ्जीवनो गदः।
पञ्चाङ्गानि शिरीषस्य श्वपित्तं च वरोऽगदः॥

**अउ40.78**
प्रियङ्गु तगरं लाक्षा मञ्जिष्ठा मधुकं मधु।
हरिद्राचेत्ययं श्रेष्ठः कौटिल्यदयितोऽगदः॥

**अउ40.79**
विसंज्ञानां विषैर्घोरैः प्रहाअरैर्नष्टचेतसाम्।
उद्बन्धानां जलौघे च मृतानां चेतनावहः॥

**अ३40.80**
शिरीषफलकाकाण्डसुरसाग्रपुनर्नवैः।
कक्ष्यावायसिसंयुक्तैरगदः पूर्ववत् गुणैः॥

**अ३40.81**
कटुकालाबुमूलानि गवां पित्तेन कल्कयेत्।
ब्राह्मो धार्योयमगदः सर्वकर्मसु पूजितः॥

**अ३40.82**
अगारधूमस्त्रिवृता गोपित्तं त्र्यूषणं वचा।
प्राजापत्योयमगदः सर्वरक्षोविषापहः॥

**अ३40.83**
श्वेतापुष्करतुल्यांशैर्जीवन्त्याः कुसुमैः कृतः।
रुक्मपिष्टो मणिर्धार्यश्चाणक्येष्टो विषापहः॥

**अ३40.84**
मांसीत्वक्पत्रसुरसमनोह्वाशीतकुङ्कुमम्।
निशाव्याघ्रन्नखं शुण्ठी दशाङ्गोऽयं विषापहः।
उत्पातगण्डपिटकादिग्धविद्धविषापहः॥

**अ३40.85**
उदुम्बरत्वग्जम्ब्वस्थिमधुकोत्पलगैरिकैः।
चन्दनोशीरनलद नागकेसरपद्मकैः।
विशेषाद्विषविस्फोटविसर्पज्वरदाहहा॥

**अ३40.86**
शिरीषोदुम्बरप्लक्षन्यग्रोधाश्वत्थवल्कलैः।
सघृतो दाहतृष्णास्रविषवीसर्पपित्तहा॥

**अ३40.87**
गजपिप्पलिकासीसक्षारयष्टीमयूरकम्।
रक्ता नतं वचा दन्ती शिवः शिवकृतोऽगदः॥

**अ३40.88**
सुराला पावकी सोमा भोगवत्यमृता नतम्।
आढकी किणिही सोमराजी चौशनसोऽगदः॥

**अ३40.89**
श्लेष्मातकार्ककुसुमं तण्डुलीयो मयूरकः।
सुरसा मञ्जरी काकमाची पानेऽगदो वरः॥

**अ३40.90**
दध्याज्यक्षौद्रलवणं पीतं मूलविषापहम्।
हरिद्रासैन्धवक्षौद्रघृतं संसृज्य पाययेत्।
आर्तान् मूलविषैर्घोरैर्दिग्धविद्धान् विशेषतः॥

**अ३40.91**
हरिद्रान्तर्बहिःशस्ता विषदोषातुरे परम्॥

**अ३40.92**
निशाश्वमारसुरसकरञ्जत्र्योषदारुभिः।
अञ्जनं बस्तमूत्रेण पिष्टैर्नेत्रोपरोधजित्॥

**अ३40.93**
कर्णाक्षिनासिकाकण्ठजिह्वारोगेषु नावनम्।
बीजपूरार्यबृहतीफलज्योतिष्मतीकृतम्॥

**अ३40.94**
श्वेता वचा हिङ्ग्वमृता सुगन्धा कुष्ठसैन्धवम्।
शिरीषपुष्पद्विनिशाव्योषटुण्टुकसर्षपाः॥

**अ३40.95**
कपित्थमध्यं लशुनं करञ्जो वंशलेखनम्।
पिष्ट्वा गोबस्तमूत्रेण तत्पित्तेनैव भावयेत्॥

**अ३40.96**
दिनानि सप्त व्यत्यासाद्विनिहन्ति ततोञ्जनात्।
विषं शिरस्थं मूर्द्धार्तिज्वरजीर्णविषूचिकाः॥

**अउ40.97**
अपस्मारग्रहोन्मादपाण्डुमेहमदात्ययान्।
शुष्कनेत्रामयशिरोरोगपैल्लगलार्बुदान्॥

**अउ40.98**
काचान्धकारपटलकण्डूदौर्बल्ययक्ष्मणः।
लेपात् पीतक्षतालीढदष्टदिग्धविषं जयेत्॥

**अउ40.99**
श्वित्रं कृच्छ्राणि कुष्ठानि दुष्टनाडी महाव्रणान्।
आनाहार्शो गुदे लेपाल्ललाटे दुष्टपीनसम्॥

**अउ40.100**
योनिलेपेन नारीणां मूढगर्भानुलोमनः।
उन्मूलयत्येष विषं गन्धहस्तीव काननम्॥

**अउ40.101**
विडङ्गपाठा त्रिफलाजमोदा हिङ्ग्वग्निवक्रं लवणस्यवर्गः।
व्योषान्वितं स्थावरजङ्गमानां जेता विषाणामगदोऽजिताख्यः॥

**अउ40.102**
मनोह्वा रोचना चण्डा त्वगेलासितसर्षपैः।
स्पृक्काहिंगुलकाश्मीरकान्ताभिःकल्कितोऽगदः।
विषघ्नो बालसूर्योयं श्रीरक्षाविजयर्द्धिदः॥

**अउ40.103**
अजगन्धा सगोमूत्रा गृहधूमः सुगुग्गुलुः।
एष माहेश्वरो योगो न क्वचित् प्रतिहन्यते॥

**अउ40.104**
विषदिग्धेन विद्धस्तु प्रताम्यति मुहुर्मुहुः।
विवर्णभावं भजते विषादं चाशु गच्छति॥

**अउ40.105**
कीटैरिवावृतं चास्य गात्रं चिमिचिमायते।
श्रोणिपृष्ठशिरःस्कन्धसन्धयः स्युः सवेदनाः॥

**अउ40.106**
कृष्णदुष्टास्रविस्रावी तृण्मूर्च्छाज्वरदाहवान्।
दृष्टिकालुष्यवमथुश्वासकासकरः क्षणात्॥

**अउ40.107**
शूयते पच्यते सद्यो गत्वा मांसं च कृष्णताम्।
प्रक्लिन्नं शीर्यतेऽभीक्ष्णं सपिच्छिलपरिस्रवम्॥

**अउ40.108**
कुर्यादमर्मविद्धस्य हृदयावरणं द्रुतम्।
शल्यमाकृष्य तप्तेन लोहेनानु दहेद्व्रणम्॥

**अउ40.109**
अथवा मुष्ककश्वेतासोमत्वक्ताम्रवल्लितः।
शिरीषात् गृध्रनख्याश्च क्षारेण प्रतिसारयेत्।
शुकनासाप्रतिविषाव्याघ्रीमूलैश्च लेपयेत्॥

**अउ40.110**
पीतदष्टचिकित्सां च कुर्यात्तस्य यथार्हतः।
व्रणे तु पूतिपिशिते क्रिया पित्तविसर्पवत्॥

**अउ40.111**
सौभाग्यार्थं स्त्रियो भर्त्रे राज्ञे वारातिचोदिताः।
गरमाहारसम्पृक्तं यच्छन्त्यासन्नवर्तिनः॥

**अउ40.112**
नानाप्राण्यङ्गशमलविरुद्धौषधिभस्मनाम्।
विषाणां चाल्पवीर्याणां योगो गर इति स्मृतः॥

**अउ40.113**
तेन पाण्डुः कृशोल्पाग्निः कासश्वासज्वरार्दितः।
वायुना प्रतिलोमेन स्वप्नचिन्तापरायणः॥

**अउ40.114**
महोदरयकृत्प्लीहो दीनवाग्दुर्बलोऽलसः।
शोफवान् सतताध्मातः शुष्कपादकरः क्षयी॥

**अउ40.115**
स्वप्ने गोमायुमार्जारनकुलव्यालवानरान्।
प्रायः पश्यति शुष्कांश्च वनस्पतिजलाशयान्॥

**अउ40.116**
मन्यते कृष्णमात्मानं गौरो गौरं च कालकः।
विकर्णनासानयनं पश्येत्तद्विहतेन्द्रियः॥

**अउ40.117**
एतैरन्यैश्च बहुभिः क्लिष्टो घोरैरुद्रवैः।
गरार्तो नाशमाप्नोति कश्चित्सद्योऽचिकित्सितः॥

**अउ40.118**
गरार्तो वान्तवान् भुक्त्वा तत्पथ्यं पानभोजनम्।
शुद्धहृच्छीलयेद्धेम सूत्रस्थानविधेः स्मरन्॥

असं40.119। शर्कराक्षौद्रसंयुक्तश्चूर्णस्ताप्यसुवर्णयोः।
लेहः प्रशमयत्युग्रं सर्वं योगकृतं विषम्॥

**अउ40.120**
मूर्वामृतानतकणापटोलीचव्यचित्रकान्।
वचामुस्तविडङ्गानि तक्रकोष्णाम्बुमस्तुभिः।
पिबेद्रसेन चाम्लेन गरोपहतपावकः॥

**अउ40.121**
पारावतामिषशठीपुष्कराह्वशृतं हिमम्।
गरतृष्णारुजाकासश्वासहिध्माज्वरापहम्॥

**अउ40.122**
वायसी श्वासकासघ्नी भृष्टाज्यत्रिफलारसे।
भार्ङ्गीनागरनिर्यूहः शिशिरश्च समाक्षिकः॥

**अउ40.123**
हरेणुचन्दनश्यामानलदं श्लक्ष्णपेषितम्।
विलेपनं प्रयोक्तव्यं गरेणोपहतत्वचः॥

**अउ40.124**
मञ्जिष्ठा किणिहीनिम्बरजन्यश्वत्थचन्दनैः।
प्रघर्षणं कृशानां तु गरेण क्षपितौजसाम्॥

**अउ40.125**
पथ्यं परममुद्दिष्टं शीलनं क्षीरसर्पिषोः॥

**अउ40.126**
वृषनिम्बपटोलीनां क्वाथेन् विपचेत् घृतम्।
अभयागार्भिणं श्रेष्ठं तत् गरस्य निबर्हणम्॥

**अउ40.127**
हरिद्रां नाकुलीं जातीं पृथक्पिष्ट्वा विपाचयेत्।
घृतत्रयं विषार्तानामेतदारोग्यदं परम्॥

**अउ40.128**
तण्डुलीयकमूलेन गृहधूमेन चैकतः।
क्षीरेण च घृतं सिद्धं समस्तविषरोगजित्॥

**अउ40.129**
नागदन्ती त्रिवृद्दन्ती द्रवन्ती स्नुक्पयः पलैः।
साधितं माहिषं सर्पिः सगोमूत्राढकं हितम्।
सर्पकीटविषार्तानां गरार्तानां च शान्तये॥

**अउ40.130**
मधुकं तगरं कुष्ठभद्रदारुहरेणवः।
मञ्जिष्ठैलैलवालूनि नागपुष्पोत्पलं प्लवम्॥

**अउ40.131**
विडङ्गं चन्दनं पत्रं प्रियङ्गुर्ध्यामकं बला।
अंशुमत्यौ हरिद्रे द्वे बृहत्यौ सारिवाद्वयम्॥

**अउ40.132**
एषां कल्कैर्घृतं सिद्धमजेयं नाम विश्रुतम्।
विषाणि हन्ति सर्वाणि शीघ्रमेव प्रयोजितम्॥

**अउ40.133**
श्वेते कपोते बीजानि प्रत्यक्पुषीशिरीषयोः।
गोमूत्रपिष्टैस्तैः सर्पिः सिद्धं बिषहरं परम्।
अमृतं नाम विख्यातमपि सञ्जीवयेन्मृतम्॥

**अउ40.134**
शिरीषत्वक् त्रिकटुकं विदारी चन्दनोत्पलम्।
द्वे बले सारिवास्फोतबृहतीनिम्बपल्लवाः॥

**अउ40.135**
बन्धुजीवाढकीमूर्वावासासुरसवत्सकाः।
पाठाङ्कोलाश्वगन्धार्कमूलयष्ट्याह्वपद्मकम्॥

**अउ40.136**
विशाला बृहती लाक्षा कोविदारशतावरीः।
कटभीदन्त्यपामार्ग पृश्निपर्णी रसाञ्जनम्॥

**अउ40.137**
श्वेतौ बाणाश्वखुरकौ कुष्ठदारुप्रियङ्गुकाः।
सारं मधूकात्रिफलां करञ्जस्यफलं वचाम्॥

**अउ40.138**
रजन्यौ लोध्रमक्षांशं पिष्ट्वा साध्यं घृताढकम्।
तुल्याम्बुछागगोमूत्रत्र्याढके तद्विषापहम्॥

**अउ40.139**
अपस्मारक्षयोन्मादभूतग्रहगरोदरान्।
पाण्डुरोगकृमिप्लीहगुल्मोरुस्तम्भकार्मलाः॥

**अउ40.140**
हनुस्तम्भग्रहादींश्च पानाभ्यञ्जननावनैः।
हन्ति सञ्जीवयति च विषोद्बन्धमृतान् नरान्॥

**अउ40.141**
भक्षिते हरिताले तु हृदि दाहोरसाग्रहः।
आनाहोम्लस्य वमनं पीतहारिद्रविट्स्रुतिः।
तथा मण्डलिसर्पोक्ता विकारास्तच्च भेषजम्॥

**अउ40.142**
विभज्य योजयेत् ऊर्ध्वमधः संशोधितं च तम्।
अङ्कोलजालिनीबीजशुकनासाप्रियङ्गुकाः।
लोध्रध्यामकतालीसनतयष्ट्याह्वगुग्गुलुः॥

**अउ40.143**
ह्रीबेरं भद्रकाष्ठं च लेहयेन्मधुसर्पिषा।
दद्यान्नकुलगोपित्तयुक्तं नस्येञ्जने च तत्॥

**अउ40.144**
धुर्धूरकोपयोगेन सर्वं पश्यति पीतकम्।
कम्पलालामदच्छर्दिस्मृतिभ्रंशभ्रमान्वितः।
तं वामयेत मधुरैः पाययेद्वा सितापयः॥

**अउ40.145**
कोरदूषैर्मदनकैः प्रायो धुर्धूरवत् गदाः।
उन्मादोक्षिविनाशश्च तत्रापि वमनं हितम्।
कूष्माण्डकं च सगुडं बहुशस्तत्र भक्षयेत्॥

**अउ40.146**
नानाप्रकारैः संयोगैः कोद्रवा मदहेतवः।
तान्विभज्य यथादोषं चिकित्सेदविरोधिभिः॥

**अउ40.147**
दूंषीविषार्तं सुस्विन्नमूर्ध्वं चाधश्च शोधितम्।
दूषीविषारिमगदं लेहयेन्मधुनाप्लुतम्॥

**अउ40.148**
पिप्पल्योध्यामकं मांसी लोध्रमेला सुवर्चिका।
कुटन्नटं नतं कुष्ठं यष्टी चन्दनगैरिकम्।
दूषीविषारिर्नाम्नायं नचान्यत्रापि वार्यते॥

**अउ40.149**
हरीतकी सलवणा मागधी मरिचानि च।
एतद्दूषीविषार्तानां काश्यपोक्तं विरेचनम्॥

**अउ40.150**
युञ्ज्याद्वा विषरोगेषु रेके व्योषादिकं भिषक्॥

**अउ40.151**
तरुणस्य पलाशस्य स्रुतं क्षारोदकं पचेत्।
क्वाथे तत्र प्रतीवापं प्रक्षिपेच्छ्लक्ष्णचूर्णितम्॥

**अउ40.152**
व्योषं शिरीषकुसुमं मधुकं सारिवे मिसिम्।
कुष्ठं वेल्लनिशे लाक्षां शुक्लां सुरसमञ्जरीम्॥

**अउ40.153**
सिन्धूत्थं रक्तमृन्मांसीं रेणुकां हिङ्गुबाल्हिकम्।
दर्वीप्रलेपि तज्जातं गोविषाणे निधापयेत्॥

**अउ40.154**
क्षयगुल्मोदरार्शांसि मेहं मन्दाग्नितां ज्वरम्।
त्वग्दोषकासापस्मारग्रहोन्मादभगन्दरान्॥

**अउ40.155**
पाण्डुं कण्ठस्वरगदान् प्लीहानं श्वयथुं कृमीन्।
कोलमात्रमतः खादन् जयेत् सर्वविषाणि च॥

**अउ40.156**
विषं तेजोमयं मन्त्रैः सत्यब्रह्मतपोमयैः।
यथा निवार्यते शीघ्रं प्रयुक्तैर्न तथौषधैः॥

**अउ40.157**
न तु सर्वमनुष्याणां सन्ति भेषजसम्पदः।
अज्ञातरोगसद्भावे योग्यता चातिदुर्लभा॥

**अउ40.158**
प्रकुप्यति विषं भूयः केवलैश्चौषधैर्जितम्।
अवाप्तौ सिद्धमन्त्राणां यतेतातश्चिकित्सकः॥

**अउ40.159**
तेऽपि च व्रतहीनस्य हीना वा स्वरवर्णतः।
यस्मान्न सिद्धिमायान्ति तस्माद्योज्योऽगदक्रमः॥

**अउ40.160**
विषप्रकृतिकालान्नदोषदूष्यादिसङ्गमे।
विषसङ्कटमुद्दिष्टं शतस्यैकोत्र जीवति॥

**अउ40.161**
क्षुतृष्णाघर्म्मदौर्बल्यक्रोधशोकभयश्रमैः।
अजीर्णवर्चोद्रवता पित्तमारुतवृद्धिभिः॥

**अउ40.162**
तिलपुष्पफलाघ्राणभूबाष्पघनगर्जितैः।
हस्तिमूषिकवादित्रनिस्वनैर्विषसङ्कटैः।
पुरोवातोत्पलामोदमदनैर्बर्धते विषम्॥

**अउ40.163**
वर्षासु चाम्बुयोनित्वात् सङ्क्लेदं गुडवद्गतम्।
विसर्पति घनापाये तदगस्त्यो हिनास्ति च।
प्रयाति मन्दवीर्यत्वं विषं तस्मात् घनात्यये॥

**अउ40.164**
इति प्रकृतिसात्म्यर्तुस्थानवेगबलाबलम्।
आलोच्य निपुणं बुध्या कर्मानन्तरमाचरेत्॥

**अउ40.165**
श्लैष्मिकं वमनैरुष्णरूक्षतीक्ष्णैः प्रलेपनैः।
कषायकटुतिक्तैश्च भोजनैः शमयेद्विषम्॥

**अउ40.166**
पैत्तिकं स्रंसनैः सेकप्रदेहैर्भृशशीतलैः।
कषायतिक्तमधुरैर्घृतयुक्तैश्च भोजनैः॥

**अउ40.167**
वातात्मकंजयेत्स्वादुस्निग्धाम्ललवणान्वितैः।
सघृतैर्भोजनालेपैस्तथैव पिशिताशनैः॥

**अउ40.168**
नाघृतं स्रंसनं शस्तं प्रलेपो भोज्यमौषधम्।
सर्वेषु सर्वावस्थासु विषेषु न घृतोपमम्।
विद्यते भेषजं किञ्चिद्विशेषात् प्रबलानिले॥

**अउ40.169**
रक्तगे स्रावयेद्रक्तं पित्तवच्च क्रियाक्रमः।
दूषीविषे पुनस्तत्स्थे पञ्चकर्माणि चाचरेत्॥

**अउ40.170**
गण्डूषैः कवलैः प्राशैस्तीक्ष्णैः प्रधमनाञ्जनैः।
शिरोगतं प्रशमयेद्विषसङ्क्रमणैस्तथा॥

**अउ40.171**
विषदुष्टकफस्रोतोरुद्धवायुर्मृतोपमः।
यःस्यादसाध्यलिङ्गैश्च रहितस्तस्य योजयेत्॥

**अउ40.172**
मूर्ध्नि काकपदं कृत्वा कल्कं चर्मकसोद्भवम्।
ध्मापनं चास्य कटभीजालिनी कटुकैर्हितम्॥

**अउ40.173**
आशये यस्य दोषस्य विषं तिष्ठति तं पुनः।
आश्रयाश्रयिणोर्विद्वानविरोधेन साधयेत्॥

**अउ40.174**
क्षारागदः कफस्थानस्थिते स्वेदः सिराव्यधः।
पित्ते क्षौद्रपयोम्लाज्यपानसेकावगाहनम्।
स्वेदो वाताशये दध्ना पानं च नतकुष्ठयोः॥

**अउ40.175**
क्षीरेणागदगर्मेण मदनस्य फलेन च।
आस्थापनं प्रयुञ्जीत वाताशयगते विषे॥

**अउ40.176**
पचेद्यष्टीमधुक्वाथे तैलं क्षीरचतुर्गुणम्।
त्रिफला सर्पवेताली शतपुष्पेन्दुराजिभिः॥

**अउ40.177**
अनन्तया च तत्पाननावनाभ्यङ्गबस्तिषु।
भोजने च प्रणिहितं हन्ति वाताशयाद्विषम्॥

**अउ40.178**
वलया सोमराज्या वा पचेत् पाटलयाथवा।
घृतमण्डसमं तैलमानुवासनिकं परम्॥

**अउ40.179**
विषोपद्रवपथ्यं च वीक्ष्य युञ्ज्याद्यथामयम्॥

**अउ40.180**
अयत्नाच्छलेष्मगं साध्यं यत्नात्पित्ताशयाश्रितम्।
सुदुस्साधमसाध्यं वा वाताशयगतं विषम्॥

# अष्टाङ्गसंग्रहः उत्तरस्थानम् अध्याय ४१-४५

https://sa.wikisource.org/s/a02

**अष्टाङ्गसंग्रहः**

अथ एकचत्वारिंशोऽध्यायः।

**अउ41.1**
अथातः सर्पविषविज्ञानीयं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ41.2**
दिव्यभौमविभागेन द्विविधाः पन्नगाः स्मृताः।
वासुकिस्तक्षकोनन्तः सगरः सागरालयः॥

**अउ41.3**
तथा नन्दोपनन्दाद्याः समिद्धाग्निसमप्रभाः।
दिव्या गर्जन्ति वर्षन्ति द्योतन्ते द्योतयन्ति ते॥

**अउ41.4**
धारयन्ति जगत्कृत्स्नं कुर्युःक्रुद्धाश्च भस्मसात्।
दृङ्निश्वासैर्नमस्तेभ्यो नतेष्वस्ति चिकित्सितम्॥

**अउ41.5**
दर्वीकरा मण्डलिनो राजीमन्तश्च पन्नगाः।
त्रिधा समासतो भौमा भिद्यन्ते तेत्वनेकधा।
व्यासतो योनिभेदेन नोच्यन्तेऽनुपयोगतः॥

**अउ41.6**
विशेषाद्रूक्षकटुकमम्लोष्णं स्वादु शीतलम्।
विषं दर्वीकरादीनां क्रमाद्वातादिकोपनम्॥

**अउ41.7**
तारुण्यमध्यवृद्धत्वे वृष्टिशीतातपेषु च।
विषोल्बणा भवन्त्येते व्यन्तरा ऋतुसन्धिषु॥

**अउ41.8**
रथाङ्गलाङ्गलच्छत्रस्वस्तिकाङ्कुशधारिणः।
फणिनः शीघ्रगतयः सर्पा दर्वीकराः स्मृताः॥

**अउ41.9**
ज्ञेया मण्डलिनोऽभोगा मण्डलैर्विविधैश्चिताः।
प्रांशवो मन्दगमनाः राजीमन्तस्तु राजिभिः।
स्निग्धा विचित्रवर्णाभिस्तिर्यगूर्ध्वं च चित्रिताः॥

**अउ41.10**
गोधासुतस्तु गौधेरो विषे दर्वीकरैः समः॥

**अउ41.11**
चतुष्पात् व्यन्तरान् विद्योदतेषामेव सङ्करात्।
व्यामिश्रलक्षणास्ते हि सन्निपातप्रकोपणाः॥

**अउ41.12**
दिव्यकोजगरः सर्पः पताको वृक्षशायिकः।
शकली पुष्पकः क्षीरी लासिनी सारसाहिकः॥

**अउ41.13**
वर्षाहिको ज्योतिरथः शुकवक्त्रो बलाहकः।
गजभक्षःप्लवोद्वाही निर्विषाः षोडशाहयः॥

**अउ41.14**
प्रायेणर्तुमती मासं ज्येष्ठं तिष्ठति पन्नगी।
आषाढे सर्पसंयोगादण्डानां मासि कार्तिके॥

**अउ41.15**
द्वेशते विंशती द्वे च सा सूते तत्र जायते।
कर्केतनसवर्णेऽण्डे समुद्भिन्ने भुजङ्गमः॥

**अउ41.16**
दीर्घलोहितराजीभिश्चित्रे योषिन्नपुंसकम्।
शिरीषपुष्पसदृशे दंष्ट्राः सर्पस्य सप्तमे।
चतस्रः सम्भवन्त्यह्नि विषं तासु चतुर्दशे॥

**अउ41.17**
वामाधरासिता पीता तदूर्ध्वा दक्षिणात्वधः।
रक्ता श्यावोत्तरैकद्वित्रिचतुर्विषबिन्दुकाः॥

**अउ41.18**
ताः क्रमान्मुद्गमात्रोत्रबिन्दुः एष हि भोगिनाम्।
विषे विकल्पो नान्येषां विद्यांद्दंष्ट्रास्तथापराः।
चत्वारिंशद् भुजङ्गस्य विर्विषाश्चतुरुत्तराः॥

**अउ41.19**
आयुर्वर्षशतं विंशं पञ्चवर्षशतायुषः।
गोनसा घर्मतप्तानां गवां नासासमुद्भवाः॥

**अउ41.20**
तत्रोर्ध्वदृङ्महाकायनेत्रजिह्वाशिरःस्वरः।
व्यक्तभोगः पुनान्धीरः स्त्री स्यात्तस्माद्विपर्यये॥

**अउ41.21**
आयता चपला क्लीबः सुकुमारो जडाकृतिः।
मन्दवेगस्वनक्रोधः सिताभस्तिर्यशीर्षकः॥

**अउ41.22**
दिनत्रियामासन्ध्यासु प्रबलास्ते यथाक्रमम्।
तदैव चापराध्यन्ति सर्वदैव तु पन्नगी॥

**अउ41.23**
ब्राह्मणाः क्रोधना नीलकपिलाः श्वेतलोहिताः।
रक्तास्याः पिङ्गनयना मेध्यदेशविचारिणः॥

**अउ41.24**
भोगे यज्ञोपवीतादिद्विजचिह्नोपचिह्निताः।
बिल्वपुष्पहिमोशीरपद्मगुग्गुलुगन्धयः॥

**अउ41.25**
क्षत्रिया मानिनो धीरा रक्ताक्षा भृशकोपनाः।
पक्वजाम्बवखर्जूरद्राक्षाभिन्नाञ्जनप्रभाः॥

**अउ41.26**
भोगेर्द्ध चन्द्रश्रीवत्सशङ्खचक्रहलाङ्किताः।
जातीचम्पकपुन्नागपत्रजोङ्गकगन्धयः॥

**अउ41.27**
वैश्याः पारावताभासा वज्रगोमेदकप्रभाः।
बिन्दुमण्डलचित्राङ्गा धूम्रपाटललोहिताः।
बस्तकुष्ठविकक्षीरसर्पिषां गन्धतः समाः॥

**अउ41.28**
शूद्राः सवर्णा गोधूममहिषद्विपकर्दमैः।
बिन्दुरेखाचिता रूक्षाः सुराशोणितगन्धयः॥

**अउ41.29**
पूर्वमध्यापराह्णेषु चरन्ति ब्राह्मणादयः।
अस्तंगते रवौ शूद्राः दशन्ति ब्राह्मणाः पुरः।
संस्थिता दक्षिणे पार्श्वे क्षत्रिया वामतो विशः॥

**अउ41.30**
शूद्रास्तु पृष्ठतो विप्रास्त्रीनप्यनिलपूर्वकान्।
कोपयन्ति क्रमाद्दोषांस्त्रींस्त्रयः क्षत्रियादयः॥

**अउ41.31**
दंशगन्धोङ्गगन्धेन ज्ञेयस्तेषां यथायथम्॥

**अउ41.32**
वायुमूषिकमण्डूकसर्वभक्षाः क्रमेण ते॥

**अउ41.33**
आहारार्थं भयात् पादस्पर्शादतिविषात् क्रुधः।
पापवृत्ततया वैराद्देवर्षियमचोदनात्।
दशन्ति सर्पास्तेषूक्तं विषाधिक्यं यथोत्तरम्॥

**अउ41.34**
आविष्टात् कारणं ज्ञात्वा प्रतिकुर्याद्यथायथम्॥

**अउ41.35**
व्यन्तरः पापशीलत्वान्मार्गमावृत्य तिष्ठति॥

**अउ41.36**
यत्र लालापरिक्लेदमात्रं गात्रे प्रदृश्यते।
न तु दंष्ट्राकृतं दंशं तत्तुण्डाहतमादिशेत्॥

**अउ41.37**
एकं दंष्ट्रापदं द्वे वा व्यालीढाख्यमशोणितम्।
दंष्ट्रापदे सरक्ते द्वे व्यालुप्तं त्रीणि तानि तु॥

**अउ41.38**
मांसच्छेदादविच्छिन्नरक्तवाहीनि दष्टकम्।
दंष्ट्रापदानि चत्वारि तद्वद्दष्टनिपीडितम्॥

**अउ41.39**
निर्विषं द्वयमत्राद्यमसाध्यं पश्चिमं वदेत्॥

**अउ41.40**
विषं नाहेयमप्राप्य रक्तं दूषयते वपुः।
रक्तमण्वपि तु प्राप्तं वर्धते तैलबिन्दुवत्॥

**अउ41.41**
भीरोः सर्पाङ्गसंस्पर्शाद् भयेन कुपितोनिलः।
कदाचित् कुरुते शोफं सर्पाङ्गाभिहतं तु तत्॥

**अउ41.42**
दुर्गान्धकारे विद्धस्य केनचिद्दष्टशङ्कया।
विषोद्वेगो ज्वरश्छर्दिर्मूर्च्छा दाहोपि वा भवेत्।
ग्लानिर्मोहोतिसारो वा तच्छङ्काविषमुच्यते॥

**अउ41.43**
दंआस्तु सविषः सर्वः सशोफो वेदनान्वितः।
तुद्यते ग्रथितः किञ्चित् कण्डूमान् दह्यते भृशम्।
निर्विषो विपरीतोस्मात् #॥

**अउ41.44**
तत्र दंशः फणावताम्।
कूर्मपृष्ठोन्नतो रूक्षः सूक्ष्मदंष्ट्रापदान्वितः॥

**अउ41.45**
विकाराः श्यावता वक्त्रनखमूत्राक्षिविट्त्वचाम्।
शीतज्वरः सन्धिरुजा निद्रानाशो विजृम्भिका॥

**अउ41.46**
मन्यास्तभ्भःसिराध्मानं पृष्ठकट्यस्थिवाग्ग्रहाः।
शिरोगुरुत्वमरुचिः कासश्वासौ हनुग्रहः॥

**अउ41.47**
शूलमुद्वेष्टनं कोष्ठे शोषरोधौ मलाश्रयौ।
सन्दिग्धवाक्त्वं नैश्चेष्ट्यं मृतस्येव विसंज्ञता॥

**अउ41.48**
फेनलालोद्गमौ हिध्मा कण्ठे घुरुघुरायणम्।
शुष्कोद्गारो मुहुस्ते ते वातजाश्चापरे गदाः॥

**अउ41.49**
दंशो मण्डलिनां सोष्मा सशोषः पीतलोहितः।
पृथुर्विसर्पदाहोषाक्लेदकोथैर्विशीर्यते॥

**अउ41.50**
विकारा वक्त्रदन्तादिपीतता तृट्श्रमो भ्रमः।
दाहो मूर्च्छा ज्वरस्तिक्तवक्त्रत्वं पीतदर्शनम्॥

**अउ41.51**
रक्तागमनमूर्ध्वाधःशीतेच्छा धूमको मदः।
आशुसर्वाङ्गविसृतिर्गदास्ते ते च पित्तजाः॥

**अउ41.52**
दंशो राजीमतां स्निग्धःस्थिरपिच्छिलशोफकृत्।
सान्द्रास्रःशिशिरः पाण्डुस्तद्विकाराःशिरोव्यथा॥

**अउ41.53**
अरुचिश्छर्दिरालस्यं हृल्लासो मधुरास्यता।
कण्ठे घुरुघुरः पाको कण्डूरक्ष्णोर्हिमो ज्वरः॥

**अउ41.54**
कृच्छ्रादुच्छ्रवसनं निद्रा कासः श्वेतनखादिता।
स्तम्भो गुरुत्वं चाङ्गानां नासिकाक्षिमुखस्रुतिः।
रोमहर्षस्तमश्वासो रोगाश्चान्ये कफोद्भवाः॥

**अउ41.55**
व्यन्तरे मिश्रलिङ्गत्वं दष्टः पुंसोर्ध्वमीक्षते।
प्रक्षिपेद्दक्षिणं पादं पूर्वकायसमुद्यतः॥

**अउ41.56**
धीरोल्पवेगः शर्वर्यां विपरीतस्तु योषिता।
हीनस्वरोतिसारार्तः कम्पते त्रस्यते ज्वरी॥

**अउ41.57**
नपुंसकेन तिर्यग्दृग्धीरः प्रियमैथुनः।
बहुवादी च वृद्धेन चिरान्मन्दाश्च वेदनाः॥

**अउ41.58**
बालेन शीघ्रं तीक्ष्णाश्च कुमारेणाक्ष्णि दक्षिणे।
रोगी कुमार्या वामे तु गर्भिण्या कृष्णजिह्वदृक्॥

**अउ41.59**
जृम्भा क्रोधोपजिह्वार्तः स शूनोष्ठः सिताननः।
गुरूदरः शिरोरोगी सूतादष्टस्तु मेहति।
शोणितं कृच्छ्रशूलार्तः सूचीभिरिव भिद्यते॥

**अउ41.60**
वेगानां रक्तमांसाद्याः सप्तोक्ताः पूर्वमाश्रयाः॥

**अउ41.61**
दर्वीकृताथ दष्टस्य दुष्टं श्यावीभवत्यसृक्।
श्यावता तेन वक्त्रादौ सर्पन्तीव च कीटकाः॥

**अउ41.62**
द्वितीये ग्रन्थयो वेगे तृतीये मूर्द्धगौरवम्।
दृग्रोधो दंशविक्लेदश्चतुर्थे ष्ठीवनं वमिः॥

**अउ41.63**
सन्धिविश्लेषणं तन्द्रा पञ्चमे पर्वभेदनम्।
दाहो हिध्मा च षष्ठे तु हृत्पीडा गात्रगौरवम्॥

**अउ41.64**
मूर्च्छाविपाकोऽतीसारः प्राप्य शुक्रन्तु सप्तमे।
स्कन्धपृष्ठकटीभङ्गः सर्वचेष्टानिवर्तनम्॥

**अउ41.65**
अथ मण्डलिदष्टस्य दुष्टं पीतीभवत्यसृक्।
तेन पीताङ्गता दाहो द्वितीये श्वयथूद्भवः॥

**अउ41.66**
तृतीये दंशविक्लेदः स्वेदस्तृष्णा च जायेते।
चतुर्थे ज्वर्यते दाहः पञ्चमे सर्वगात्रगः॥

**अउ41.67**
दज्टस्य राजिलैर्दुष्टं पाण्डुतां याति शोणितम्।
पाण्डुता तेन गात्राणां द्वितीये गुरुताति च॥

**अउ41.68**
तृतीये दंशविक्लेदनासिकाक्षिमुखस्रवाः।
चतुर्थे गरिमा मूर्ध्नो मन्यास्तम्भश्च पञ्चमे।
वाक्यसङ्गो ज्वरः शीतः शेषयोः पूर्ववद्वदेत्॥

**अउ41.69**
कुर्यात् पञ्चसु वेगेषु चिकित्सां न ततः परम्॥

**अउ41.70**
जलप्लुता रतिक्षीणा भीता नकुलनिर्जिताः।
शीतवातातपव्याधिक्षुत्तृष्णाश्रमपीडिताः॥

**अउ41.71**
तूर्णं देशान्तरायातां विमुक्तविषकञ्चुकाः।
कुशौषधीकण्टकवद्ये चरन्ति च काननम्।
देशं च विद्याध्युषितं सर्पास्तेल्पविषा मताः॥

**अउ41.72**
श्मशानचैत्यवल्मीकयज्ञाश्रयसुरालये।
चतुष्पथे जलस्थाने जीर्णोद्यानेषु कोटरे॥

**अउ41.73**
क्षीरिद्रुमे निम्बतरौ निर्झरे गिरिगह्वरे।
चक्रवज्रगदाकुन्तत्रिशूलाङ्कजटाधराः॥

**अउ41.74**
रक्तास्यनयना ये च ते स्युराशीविषोपमाः।
न तेषां कालनियमो न च वेगेष्वनुक्रमः॥

**अउ41.75**
मन्त्रतन्त्रबलान्नापि प्रसह्य विनिवर्तनम्।
उपहारनमस्कारजपशान्तिपरायणः।
कश्चिज्जीवति तैर्दष्टो विरूपो विकलोऽपि वा॥

**अउ41.76**
श्मशानचितिचैत्यादौ पञ्चमीपक्षसन्धिषु।
अष्टमीनवमीसन्ध्यामध्यरात्रिदिनेषु च॥

**अउ41.77**
याम्याग्नेयमघाश्लेषाविशाखापूर्वनैरृते।
नैरृताख्ये मुहूर्ते च दष्टं मर्मसु च त्यजेत्॥

**अउ41.78**
दष्टमात्रे सितास्याक्षः शीर्यमाणशिरोरुहः।
स्तब्धजिह्वो मुहुर्मूर्च्छन् शीतोच्छ्वासो न जीवति॥

**अउ41.79**
हिध्मा श्वासो वमिः कासो दष्टमात्रस्य देहिनः।
जायते युगपद्यस्य स हृच्छूली न जीवति॥

**अउ41.80**
वेपथुर्वेदनास्तीव्रा ग्रीवाभङ्गोक्षिरक्तता।
मूर्च्छा गलग्रहश्छर्दिः प्रेतराजस्यकिङ्कराः॥

**अउ41.81**
जाम्बवप्रतिमो दंशः कूर्मपृष्ठवदुन्नतः।
रक्तं खेभ्यः समस्तेभ्यो वर्तते न तु दंशतः॥

**अउ41.82**
रोम्णां न शीतलैर्हर्षः श्वयथुर्लोहितासितः।
हृष्टमेहनता वक्रवक्त्रत्वं यस्य तं त्यजेत्॥

**अउ41.83**
फेनं वमति निस्संज्ञः श्यावपादकराननः।
नासावसादो भङ्गोङ्गे विड्भेदः श्लथसन्धिता॥

**अउ41.84**
विषपीतस्य दष्टस्य दिग्धेनाभिहतस्य च।
भवन्त्येतानि रूपाणि सम्प्राप्ते जीवितक्षये॥

**अउ41.85**
न नस्यैश्चेतना तीक्ष्णैर्न क्षतात् क्षतजागमः।
दण्डाहतस्य नो राजिः प्रयातस्य यमान्तिकम्॥

**अउ41.86**
अतोन्यथा तु त्वरया प्रदीप्तागारवद् भिषक्।
रक्षन् कण्ठगतान् प्राणान् विषमाशु शमं नयेत्॥
।इति एकचत्वारिंशोऽध्यायः।

द्विचत्वारिंशोऽध्यायः।

**अउ42.1**
अथातः सर्पविषप्रतिषेधं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयोमहर्षयः॥

**अउ42.2**
मात्राशतं विषं स्थित्वा दंशे दष्टस्य देहिनः।
देहं प्रक्रमते धातून् रुधिरादीन् प्रदूषयत्॥

**अउ42.3**
एतस्मिन्नन्तरे कर्म दंशस्योत्कर्तनादिकम्।
कुर्याच्छीघ्रं यथा देहे विषवल्ली न रोहति॥

**अउ42.4**
दष्टमात्रो दशेदाशु तमेव पवनाशिनम्।
लोष्टं महीं वा दशनैश्छित्वा वानु ससम्भ्रमम्॥

**अउ42.5**
निष्ठीवेन समालिम्पेद्दंशं कर्णमलेन वा।
दंशस्योपरि बध्नीयादरिष्टां चतुरङ्गुले।
क्षौमादिभिर्वेणिकया सिद्धैर्मन्त्रैश्च मन्त्रवित्॥

**अउ42.6**
बन्धो देशानुसारेण नातिगाढश्लथो हितः।
दंशपूतित्वशोफादीन् कुरुते ह्यतिपीडितः।
अशक्तः शिथिलो रोध्दुं विषं देशान्तरं व्रजत्॥

**अउ42.7**
अम्बुवत् सेतुबन्धेन बन्धेन स्तभ्यते विषम्।
न वहन्ति सिराश्चास्य विषं बन्धाभिपीडिताः॥

**अउ42.8**
निष्पीड्य चोद्धरेद्दंशं मर्मसन्ध्यगतं तथा।
न जायते विषावेगो बीजनाशादिवाङ्कुरः।
मर्मगे प्राप्नुयान्मृत्युं सन्धिस्थे विकलाङ्गताम्॥

**अउ42.9**
दंशं मण्डलिनां मुक्त्वा पित्तलत्वादथापरम्।
प्रतप्तैर्हेमलोहाद्यैर्दहेदाशूल्मुकेन वा।
करोति भस्मसात् सद्यो वह्निः कि नाम न क्षणात्॥

**अउ42.10**
आचूषेत् पूर्णवक्त्रो वा मृद्भस्मागदगोमयैः।
प्रच्छायान्तररिष्टायां मांसलं तु विशेषतः॥

**अउ42.11**
अङ्गं सहैव दंशेन लेपयेदगदैर्मुहुः।
चन्दनोशीरयुक्तेन सलिलेन च सेचयेत्॥

**अउ42.12**
विषे प्रविसृते विध्येत् सिरां सा परमा क्रिया॥

**अउ42.13**
रक्ते निर्द्ह्रियमाणे हि कृत्स्नं निर्द्ह्रियते विषम्।
दुष्टे हि व्याप्नुयादङ्गं ध्रुवं मृत्युर्भवत्यतः॥

**अउ42.14**
सिराव्यधोदितैरस्रमप्रवृत्तं प्रवर्तयेत्।
स्तम्भयेदतिवृत्तं च तैरेव प्राणरक्षया॥

**अउ42.15**
दुर्गन्धं सविषं रक्तमग्नौ चटचटायते।
यथादोषं विशुद्धं च पूर्ववल्लक्षयेदसृक्॥

**अउ42.16**
सिरास्वदृश्यमानासु योज्याः शृङ्गजलौकसः॥

**अउ42.17**
शोणितं स्रुतशेषं च प्रविलीनं विषोष्मणा।
लेपसेकैः सुबहुशः स्तम्भयेद् भृशशीतलैः॥

**अउ42.18**
अस्कन्ने विषवेगाद्धि मूर्च्छायमदहृद्द्रवाः।
भवन्ति तान् जयेच्छीतैर्वीजेच्चारोमहर्षतः॥

**अउ42.19**
विषं कर्षति तीक्ष्णत्वाद्धृदयं तस्य गुप्तये।
पिबेद् घृतं घृतक्षौद्रमगदं वा घृताप्लुतम्॥

**अउ42.20**
मज्जानं गोमयरसं भस्माम्भः कृष्णमृज्जलम्।
ऐकध्यं पञ्चगव्यं वा दधि गैरिकवारि वा॥

**अउ42.21**
खादेद्वा कोविदारार्कशिरीषकटभीच्छदान्।
छागमेषवराहासृक्शिशुस्थविरयोषितः॥

**अउ42.22**
पिबेयुर्गर्भिणी शीतमधुरान् पयसा गदान्।
तथा मूर्च्छादयो न स्युर्विषं चाश्वेतिनानिलम्॥

**अउ42.23**
हृदयावरणेनास्य श्लेष्मा हृद्युपचीयते।
प्रवृत्तगौरवोत्क्लेशहृल्लासं वामयेत्ततः॥

**अउ42.24**
द्रवैः काञ्जिककौलत्थतैलमद्यादिवर्जितैः।
वमनैर्विषहृद्भिश्च नैवं व्याप्नोति तद्वपुः॥

**अउ42.25**
भुजङ्गदोषप्रकृतिस्थानवेगविशेषतः।
सुसूक्ष्मं सम्यगालोच्य विशिष्टां चाचरेत्क्रियाम्॥

**अउ42.26**
सिन्दुवारकमूलानि रसेन स्वेन पेषयेत्।
मधुयुक्तोयमगदः पानं दर्वीकृतां विषे॥

**अउ42.27**
सिन्दुवारकमूलानि श्वेता च गिरिकर्णिका।
पानं दर्वीकरैर्दष्टे नस्यं मधु सपाकलम्॥

**अउ42.28**
कृष्णसर्पेण दष्टस्य लिम्पेद्दंशं हृतेऽसृजि।
चारटीनाकुलीभ्यां वा तीक्ष्णमूलविषेण वा॥

**अउ42.29**
पानं च क्षौद्रमञ्जिष्ठागृहधूमयुतं घृतम्॥

**अउ42.30**
तण्डुलीयककाश्मर्यकिणिहीगिरिकर्णिकाः।
मातुलुङ्गी सिता शेलुः पाननस्याञ्जने हितः।
अगदः फणिनां घोरे विषे राजीमतामपि॥

**अउ42.31**
समाः सुगन्धामृद्वीकाश्वेताख्यागजकर्णिकाः।
अर्द्धांशं सौरसं पत्रं कपित्थं बिल्वदाडिमम्।
सक्षौद्रो मण्डलिविषे विशेषादगदो हितः॥

**अउ42.32**
पञ्चवल्कवरायष्टी नागपुष्पैलवालुकम्।
जीवकर्षभकौ शीतं सिता पद्मकमुत्पलम्॥

**अउ42.33**
सक्षौद्रो हिमवान् नाम हन्ति मण्डलिनां विषम्।
लेपाच्छ्वयथुवीसर्पविस्फोटज्वरदाहहा॥

**अउ42.34**
काश्मर्यं वटशृङ्गाणि जीवकर्षभकौ सिताम्।
मञ्जिष्ठां मधुकं चेति दष्टो मण्डलिना पिबेत्॥

**अउ42.35**
वंशत्वग्बीजकटुका पाटलीबीजनागरम्।
शिरीषबीजातिविषे मूलं गावेधुकं वचाम्।
पिष्टो गोवारिणाष्टाङ्गो हन्ति गोनसजं विषम्॥

**अउ42.36**
कटुकातिविषाकुष्ठगृहधूमहरेणुकाः।
सक्षौद्रव्योष्Aतगरा घ्नन्ति राजमितां विषम्॥

**अउ42.37**
निखनेत्काण्डचित्राया दंशं यामद्वयं भुवि।
उद्धृत्य प्रच्छितं सर्पिर्द्धान्यमृद्भ्यां प्रलेपयेत्॥

**अउ42.38**
पिबेत् पुराणं च घृतं वराचूर्णावचूर्णितम्।
जीर्णे विरिक्तो भुञ्जीत यवान्नं सूपसंस्कृतम्॥

**अउ42.39**
करवीरार्ककुसुममूललाङ्गलिका कणाः।
कल्कयेदारनालेन पाठामरिचसंयुताः।
एष व्यन्तरदष्टानामगदः सार्वकार्मिकः॥

**अउ42.40**
शिरीषपुष्पस्वरसे सप्ताहं मरिचं सितम्।
भावितं सर्पदष्टानां पाननस्याञ्जने हितम्॥

**अउ42.41**
द्विपलं वक्रकुष्ठाभ्यां घृतक्षौद्रं चतुष्पलम्।
अपि तक्षकदष्टानां पानमेतत् सुखप्रदम्॥

**अउ42.42**
गृहधूमं हरिद्रे द्वे समूलं तण्डुलीयकम्।
अपि वासुकिना दष्टः पिबेन्मधुघृताप्लुतम्॥

**अउ42.43**
रक्तं मांसं च गोधायाः शुष्कं चूर्णीकृतं हितम्।
विषे रसगते पानं कपित्थरससंयुतम्॥

**अउ42.44**
शेलुमूलत्वगग्राणि बादरोदुम्बराणि च।
कटभ्याश्च पिबेद्रक्तगते मांसगते पुनः॥

**अउ42.45**
सक्षौद्रं खादिरारिष्टकौटजं मूलमम्भसा।
सर्वेष्वपि बलायुग्मं मधुकं मदनं नतम्॥

**अउ42.46**
शिरोगते विषे मूलं नस्यकर्मणि योजयेत्।
बन्धुजीवस्य भार्ङ्ग्याश्च सुरसस्यासितस्य च॥

**अउ42.47**
अथवा पिप्पलीहिङ्गुवृश्चिकालीमनश्शिलाः।
शिरीषबीजापामार्गलवणं चेतनाकरम्।
कल्कश्चूर्णोथवा कृष्णाक्षवकातिविषोषणात्॥

**अउ42.48**
पिप्पली मरिचक्षारवचासैन्धवशिग्रुकाः।
पिष्टा रोहितपित्तेन घ्नन्त्यक्षिगतमञ्जनात्॥

**अउ42.49**
चन्दनं मधुकं मांसी पिप्पलीमरिचोत्पलम्।
सैन्धवं चाञ्जनं श्रेष्ठं गवां पित्तेन कल्कितम्॥

**अउ42.50**
नक्तमालफलं व्योषं बिल्बमूलं निशाद्वयम्।
पुष्पं च सौरासं पिष्टमञ्जनं बस्तवारिणा।
भोजवैतरणोद्दिष्टं विषसुप्तप्रबोधनम्॥

**अउ42.51**
वारिगुञ्जाफलोशीरं नेत्रयोर्विषदुष्टयोः।
अञ्जनं वारिणा पिष्टं गारुडं गरुडोपमम्॥

**अउ42.52**
समुद्रफेनं मरिचं कणासौवीरकाञ्जम्।
चूर्णाञ्जनं ससिन्धूत्थं विषोपहतचक्षुषाम्॥

**अउ42.53**
कपित्थमांसं ससिताक्षौद्रं कण्ठगते विषे।
लिह्यादामाशयगते ताभ्यां चूर्णपलं नतात्॥

**अउ42.54**
विषे पक्वाशयगते मञ्जिष्ठारजनीद्वयम्।
पिप्पलीं च समं पिष्ट्वा गव्यपित्तेन पाययेत्॥

**अउ42.55**
पिप्पलीनागरक्षारं नवनीतेन मूर्च्छितम्।
प्रवृद्धे कण्ठगे दद्याच्छ्लेष्मणि प्रतिसारणम्॥

**अउ42.56**
जयेत् सङ्क्रामणैराशु विषं शिरसि संश्रितम्।
दद्यादधस्ताद्दष्टस्य मूर्ध्नि काकपदे कृते॥

**अउ42.57**
काकदक्षशिखिच्छागगव्यमाहिषकौक्कुटम्।
बिल्वप्रमाणं मांसास्नमूर्ध्वदष्टस्य पादयोः।
विषं सङ्क्रमते तत्र निहन्याच्छीघ्रमन्यथा॥

**अउ42.58**
तीक्ष्णनस्याञ्जनान्ते च भूरिमात्रं पिबेत् घृतम्।
विषं हि नेत्रं रूक्षस्य तीक्ष्णैर्हन्ति समीरितम्॥

**अउ42.59**
वामयेत ततश्चैनं विषशेषोपशान्तये।
श्लेष्मलं श्लेष्मलैर्दष्टं नाभेरूर्ध्वं विशेषतः॥

**अउ42.60**
धामार्गवः शक्रयवाः सर्षपा मदनं मधु।
सैन्धवं वमनं कोष्णं विषे श्लेष्माश्रयश्रिते॥

**अउ42.61**
सुरसं सर्पवेतालीमीश्वरां गौरसर्षपम्।
पटोलनिम्बपत्रं च पिबेत् सक्षौद्रसैन्धवम्॥

**अउ42.62**
शुकाह्वाजालिनीदन्तीमदनेक्ष्वाकुकौटजम्।
काला लाङ्गलिका तिक्ता वमनं तण्डुलांबुना॥

**अउ42.63**
पैत्तिकं पैत्तिकैर्दष्टमधो नाभेर्विशेषतः।
विषे पित्ताशयगते पाययेत विरेचनम्॥

**अउ42.64**
सनीलीफलदां दन्तीं पयसा मस्तुनाथवा।
श्लक्ष्णचूर्णीकृतं कुम्भं क्वाथेन त्रैफलेन वा।
क्षीरेण वा त्रिवृच्छ्यामासुरसानीलिनीरजः॥

**अउ42.65**
पिण्डीतकफलं व्योषं त्रिवृद्वेल्लं हरीतकी।
विरेचनं कफप्राये लवणं मूत्रसम्प्लुतम्॥

**अउ42.66**
घृताप्लुतं सलवणं मारुते नीलिनीफलम्॥

**अउ42.67**
शयानः शयने छिद्रे विरेच्यो विषपीडितः।
मुहुरुत्तिष्ठतो ह्यस्य विषं दूषयतेनिलम्।
पिबेद्वान्तो विरिक्तो वा यवागूं विषनाशिनीम्॥

**अउ42.68**
विषे वाताशयगते सर्पिषः पानमिष्यते।
आद्यपश्चिमयोर्यच्च प्रोक्तं विषनिषेधयोः॥

**अउ42.69**
अथ दर्वीकृतां वेगे पूर्वे विस्राव्य शोणितम्।
अगदं मधुसर्पिर्भ्यां संयुक्तं त्वरितं पिबेत्॥

**अउ42.70**
द्वितीये वमनं कृत्वा तद्वदेवागदं पिबेत्।
विषापहे प्रयुञ्जीत तृतीयेञ्जननावने॥

**अउ42.71**
पिबेच्चतुर्थे पूर्वोक्तां यवागूं वमने कृते।
षष्ठपञ्चमयोः शीतैर्दिग्धसिक्तमभीक्ष्णशः॥

**अउ42.72**
पाययेद्वमनं तीक्ष्णं यगागूं यथोदिताम्।
अगदं सप्तमे तीक्ष्णं युञ्ज्यादञ्जननस्ययोः॥

**अउ42.73**
कृत्वावगाढं शस्त्रेण मूर्ध्नि काकपदं ततः।
मांसं सरुधिरं तस्य चर्म वा तत्र निक्षिपेत्॥

**अउ42.74**
तृतीये वामितः पेयां वेगे मण्डलिनां पिबेत्।
अतीक्ष्णमगदं षष्ठे गणं वा पद्मकादिकम्॥

**अउ42.75**
आद्येवगाढं प्रच्छाय वेगे दष्टस्य राजिलैः।
अलाबुना हरेद्रक्तं पूर्ववच्चाअगदं पिबेत्॥

**अउ42.76**
षष्ठे वेगेञ्जनं तीक्ष्णमवपीडं च योजयेत्।
अनुक्तेषु च वेगेषु क्रियां दर्वीकरोदिताम्॥

**अउ42.77**
गर्भिणीबालवृद्धेषु मृदु विध्येत् सिराञ्च न॥

**अउ42.78**
त्वङ्मनोह्वा निशे वक्रं रसः शार्दूलजो नखः।
तमालः केसरं शीतं पीतं तण्डुलवारिणा।
हन्ति सर्वविषाण्येतद्वज्रं वज्रमिवासुरान्॥

**अउ42.79**
प्रपौण्डरीकं कटुका देवदारुसुवर्चिका।
कालानुसारी स्थौणेयशैलेयघनपद्मकम्॥

**अउ42.80**
कुटन्नेटलापुन्नागनतकुष्ठीप्रयङ्गुकम्।
लोध्रगुग्गुलुतालीसपिप्पलीस्वर्णगैरिकम्॥

**अउ42.81**
सिन्दुवारः सितः शुण्ठी ध्यामकं लवणोत्तमम्।
श्लक्ष्णचूर्णीकृतं शृङ्गे निदध्यान्माक्षिकद्रुतम्॥

**अउ42.82**
तार्क्ष्यस्ताक्ष्योपमः पाननावनाभ्यञ्जनाञ्जनैः।
अगदस्तक्षकस्यापि विषवेगं निवर्तयेत्॥

**अउ42.83**
लोध्रं शिरीषषुष्पाणि समङ्गा हिङ्गु रेणुकाः।
कणोषणैलानेपाली वचा यष्टी मधूत्पलम्॥

**अउ42.84**
सिन्दुवारकमन्दारमूलं बीजं करञ्जजम्।
ज्योतिष्मती नतं कुष्ठं श्वेता च गिरिकर्णिका॥

**अउ42.85**
चूर्णितः कन्यया क्षौद्रगोपित्ताभ्यां च वर्तितः।
अगदो हन्ति सर्पाखुकणभं च सृगालजम्॥

**अउ42.86**
बिडालकाण्डचित्रोत्थं विषं भूतग्रहं ज्वरम्।
अपस्मारग्रहोन्मादगुल्माजीर्णं विषूचिकाम्॥

**अउ42.87**
बिल्वस्य मूलं सुरसस्य पुष्पं फलं करञ्जस्य नतं सुराह्वम्।
फलत्रयं व्योषनिशाद्वयं च बस्तस्य मूत्रेण सुसूक्ष्मपिष्टम्॥

**अउ42.88**
भुजङ्गलूतोन्दुरुवृश्चिकाद्यैर्विषूचिकाजीर्णगाज्वरैश्च।
आर्त्तान् नरान् भूतविधर्षितांश्च स्वस्थीकरोत्यञ्जनपाननस्यैः॥

**अउ42.89**
त्रिवृद्विशल्या मधुकं निशे लवणपञ्चकम्।
मंजिष्ठा त्र्यूषणं तद्वत् कल्कयेत् स महागदः॥

**अउ42.90**
मांसीहरेणुत्रिफला मुरुङ्गी मधुयष्टिका।
मंजिष्टा पद्मकाशोककुष्ठतालीसचन्दनम्॥

**अउ42.91**
सुगन्धिकैला किणिही त्वक्पटोली मृगादिनी।
भार्ङ्गी विडङ्गं पालिन्दी पाठा क्रोष्टुकमेखला॥

**अउ42.92**
पुष्पमारुष्करं पत्रं सौरसं क्रमुकं पुरम्।
पित्तं नकुलमार्जारगोधाशल्यकसूकरात्॥

**अउ42.93**
पृषताच्चित्रपत्राच्च गोशृङ्गे पूर्ववत् स्थितः।
यत्र गेहे न तत्राहिकीटादिभ्यो भयोद्भवः॥

**अउ42.94**
एतेन भेरीपटहाः पताकाश्च प्रलेपिताः।
आर्षभेण विषं घ्नन्ति स्पर्शश्रवणदर्शनैः॥

**अउ42.95**
प्रलेपाद्यैश्च निश्शेषं दंशादप्युद्धरेद्विषम्।
भूयो वेगाय जायेत शेषं दूषीविषाय वा॥

**अउ42.96**
विषापायेनिलं क्रुद्धं स्नेहादिभिरुपाचरेत्।
तैलमद्यकुलत्थाम्लवर्ज्यैः पवननाशनैः॥

**अउ42.97**
पित्तं पित्तज्वरहरैः कषायस्नेहबस्तिभिः॥

**अउ42.98**
समाक्षिकेण वर्गेण कफमारग्वधादिना॥

**अउ42.99**
सिता वैगन्धिको द्राक्षा पयस्या मधुकं मधु।
पानं समन्त्रपूताम्बुप्रोक्षणं सान्त्वहर्षणम्।
सर्पाङ्गाभिहते युञ्ज्यात्तथा शङ्काविषार्दिते॥

**अउ42.100**
पूतनोप्रतकूष्माण्डपिशाचाद्या नरद्विषः।
हन्युरौषधवीर्याणि रक्षाकर्मण्यवारिताः।
तस्माद्रक्षां प्रयुञ्जीत रक्षोगणनिवारिणीम्॥

**अउ42.101**
गोमयेन सुसम्मृष्टे धूपागरुसुधूपिते।
गन्धमाल्योपहाराद्यैर्गृहे पूजितदैवते॥

**अउ42.102**
सूत्रकारान् समभ्यर्च्य शङ्करास्तिककाश्यपान्।
सन्तर्प्य हव्यकव्याभ्यां समिद्धानलद्विजान्॥

**अउ42.103**
प्राङ्मुखायोपविष्टाय विषार्ताय चिकित्सकः।
उत्तराभिमुखो युञ्ज्याद्विद्यां मन्त्राणि भेषजम्॥

**अउ42.104**
समप्रमाणैर्हरितैर्दर्भैः प्रागभिमन्त्रितैः।
अच्छिन्नाग्रैः समूलैश्च कुर्यात्तस्यापमार्जनम्॥

**अउ42.105**
ब्राह्माद्यै रगदैरेनं नित्यमेवानुलेपयेत्।
सञ्जीवनादीन् पानादौ दंशलेपे च योजयेत्॥

**अउ42.106**
पूर्णकुम्भं सकुसुमं सर्षपान् छागलं पयः।
शस्त्रं दूर्वां मधु घृतं कुर्याद्दष्टस्य मूर्द्धतः।
एवं शाम्यति सप्ताहाद्विषमात्मवतः सतः॥

**अउ42.107**
कर्केतनं मरकतं वज्रं वारणमौक्तिकम्।
वैडूर्यं गर्दभमणिं पिचुकां विषमुष्टिकाम्॥

**अउ42.108**
हिमवद्गिरिसम्भूतां सोमराजीं पुनर्नवाम्।
तथा द्रोणं महाद्रोणं मानसीं सर्पजं मणिम्।
विषाणि विषशान्त्यर्थं वीर्यवन्ति च धारयेत्॥

**अउ42.109**
छत्री झर्झरपाणिश्च चरेद्रात्रौ विशेषतः।
तच्छायाशब्दवित्रस्ताः प्रणश्यन्तिभुजङ्गमाः॥
।इति द्विचत्वारिंशोऽध्यायः।

अथ त्रिचत्वारिंशोऽध्यायः।

**अउ43.1**
अथातः कीटविषप्रतिषेधं नामाध्यायं व्याख्यास्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ43.2**
सर्पाणामेव विण्मूत्रशुक्राण्डशवकोथजाः।
दोषैर्व्यस्तैः समस्तैश्च युक्ताः कीटाश्चतुर्विधाः॥

**अउ43.3**
कुम्भीनसस्तुण्डिकेरी शृङ्गी शतकुलीरकः।
उच्चिटिङ्गोग्निनामा च चिच्चिटाङ्गो मयूरकः।
अहिजोरभ्रकाबर्तशारिकामुखवैदलाः॥

**अउ43.4**
शरावकुर्दौ परुषश्चित्रशीर्षो हि जारकः।
अष्टादशेति वायव्याः कीटा वातप्रकोपनाः॥

**अउ43.5**
कौण्डिन्यकः कणभको वरटी पत्रवृश्चिकः।
विनासिका ब्राह्मणिका विन्दुलो भ्रमरस्तथा॥

**अउ43.6**
बाह्यकी पिच्चिटः कुम्भी वर्चःकीटोरिमेदकः।
दुन्दुभिः पद्मकीटश्च मकरः शतपादकः॥

**अउ43.7**
पञ्चालः पाकमत्स्यश्च सूक्ष्मतुण्डोथ गर्दभिः।
क्लीतः कृमिशरारी च यश्चाप्युत्क्लेशकः स्मृतः।
चतुर्विंशतिराग्नेयाः कीटाः पित्तविकारदाः॥

**अउ43.8**
विश्वम्भरः पञ्चशुष्कः पञ्चकृष्णोथ कोकिलः।
स्थैर्यकः प्रचलाकश्च वटभः किटिभो जटी॥

**अउ43.9**
सूचीमुखः कृष्णगोधा दभ्रः काषायवासिकः।
त्रयोदशैते निर्दिष्टाः सौम्याः श्लेष्मप्रकोपणाः॥

**अउ43.10**
तुङ्गनासश्चिपिलकस्तालको वाहकस्तथा।
कोष्ठागारी कृमिकरो यश्च मण्डलपुच्छकः॥

**अउ43.11**
तुण्डनाभः सर्षपको मद्गुलिः शम्बुकस्तथा।
अग्निकीटश्च सङ्कीर्णा द्वादश प्राणनाशनाः॥

**अउ43.12**
दष्टस्यकीटैर्वायव्यैर्दंशस्तोदरुजोल्बणः।
आग्नेयैरल्पसंस्रावो दाहरागविसर्पवान्।
पक्वपीलुफलप्रख्यः खर्जूरसदृशोथ वा॥

**अउ43.13**
कफाधिकैर्मन्दरुजः पक्वोदुम्बरसन्निभः।
स्रावाढ्यःसर्वलिङ्गस्तुदंशः स्यात्सान्निपातिकैः॥

**अउ43.14**
वेगाश्च सर्पवच्छोफो वर्द्धिष्णुर्विस्ररक्तता।
शिरोक्षिगौरवं मूर्च्छा भ्रमः श्वासोतिवेदना॥

**अउ43.15**
सर्वेषां कर्णिका शोफो ज्वरः कण्डूररोचकः॥

**अउ43.16**
वातिकः पक्षवातेन स्पर्शाद्दशति पैत्तिकः।
मुखेन श्लैष्मिकः कीटः सर्वथा सान्निपातिकः॥

**अउ43.17**
दष्टस्य कणभैः शोफो विसर्पो वमथुर्ज्वरः।
दंशश्च कर्णिकाकारः श्यावरक्तो विशीर्यते॥

**अउ43.18**
त्रिकण्टकैस्तु दष्टस्य नानावर्णोथ वा सितः।
दंशो भवेच्छ्वयथुमान् मोहो भेदश्च वर्चसः॥

**अउ43.19**
कृकलासेर्द्धचन्द्राभः स्राववात् भृशलोहितः।
दंशो रक्तैश्चितः स्फोटैः सशूलैर्दम्भवोद्भवः॥

**अउ43.20**
एकदंष्ट्रार्पितः पीतः कण्डूमान् दार्दुरः सरुक्।
दंशो दष्टः सतृण्निद्रो मूर्च्छावान् हरितं वमेत्॥

**अउ43.21**
मात्स्यो दंशः सरुग्दाहः प्रागेवोक्तो जलौकसाम्।
विश्वम्भरकृतो दंशः शोफकण्डूरुजान्वितः।
कफोद्वममतीसारं कुरुते कोठजन्म च॥

**अउ43.22**
पीतः शतपदीदंशः स्वेदरुग्रागशोफवान्।
अतसीपुष्पवर्णो वा पिटकावान् भ्रमग्रदः॥

**अउ43.23**
गृहगोधिकया स्घेदतोदश्वयथुदाहवान्।
क्लेदी च दंशो दष्टस्य हृत्पीडा ग्रन्थिसम्भवः॥

**अउ43.24**
कण्डूमान् मशकैरीषच्छ्वयथुर्मन्दवेदनः।
असाध्यकीटसदृशमसाध्यमशकक्षतम्॥

**अउ43.25**
प्रायेण मक्षिका नेत्रे दशन्ति श्वयथूल्वणः।
तद्दंशो दाहकण्डूमांस्तासां तु स्थालिकां त्यजेत्।
तद्दष्टे पिटका श्यावा स्राविणी भूर्युपद्रवा॥

**अउ43.26**
रुग्वान् पिपीलिकादंशो वह्निनेव च दह्यते॥

**अउ43.27**
जलबिन्दुनिभैः स्फोटैर्दाहकण्डूरुजान्वितैः।
यत् गात्रमाचितं सोष्म तद्विद्यादवमूत्रितम्॥

**अउ43.28**
वृश्चिकस्य विषं तीक्ष्णमादौ दहति वह्निवत्।
ऊर्ध्वमारोहति क्षिप्रं दंशे पश्चात्तु तिष्ठति।
दंशः सद्योतिरुक् श्यावस्तुद्यते स्फुटतीव च॥

**अउ43.29**
ते गवादिशकृत्कोथद्दिग्धदष्टादिकोथतः।
सर्पकोथाच्च सम्भूता मन्दमध्यमहाविषाः॥

**अउ43.30**
मन्दाः पीताः सिताः श्यावा रुक्षाः कर्बुरमेचकाः।
रोमशा बहुपर्वाणो लोहिताः पाण्डुरोदराः॥

**अउ43.31**
धूम्रोदरास्त्रिपर्वाणो मध्यास्तु कपिलारुणाः॥

**अउ43.32**
पिशङ्गाः शबलाश्चित्राः शोणिताभा महाविषाः॥

**अउ43.33**
अग्न्याभा द्व्येकपर्याणो रक्तासितसितोदराः॥

**अउ43.34**
तैर्दष्टः शूनरसनः स्तब्धगात्रो रुजार्दितः।
खर्वमन् शोणितं कृष्णमिन्द्रियार्थनसंविदन्॥

**अउ43.35**
स्विद्यन् मूर्च्छन् विशुष्कास्यो विह्वलो वेदनातुरः।
विशीर्यमाणमांसश्च प्रायशो विजहात्यसून्॥

**अउ43.36**
उच्चिटिङ्गस्तु वक्त्रेण दशत्यभ्यधिकव्यथः॥

**अउ43.37**
साध्यतो वृश्चिकात् स्तम्भं शेफसो हृष्टरोमताम्।
करोति सेकमङ्गानां दंशः शीताम्बुनेव च॥

**अउ43.38**
उष्ट्रवर्णतया प्रोक्तः स एव ह्युष्ट्रधूमकः।
रात्रिको रात्रिचाराच्च पृथक् तु कणभादिषु।
विकारसाधनाभेदात् भेदाः सन्तोपि नोदिताः॥

**अउ43.39**
वातपित्तोत्तराः कीटा श्लैष्मिकाः कणभोन्दुराः।
प्रायो वातोल्बणविषा वश्चिकाः सोष्ट्रधूमकाः॥

**अउ43.40**
यत्र यस्यैव दोषस्य लिङ्गाधिक्यं प्रतर्कयेत्।
तत्र तस्यौषधैः कुर्याद्विपरीतगुणैः क्रियाम्॥

**अउ43.41**
हृत्पीडोर्ध्वानिलः स्तम्भाः सिरायामोऽस्थि पर्वरुक्।
घूर्णनोद्वेष्टनं गात्रश्यावता वातिके विषे॥

**अउ43.42**
संज्ञानाशोष्णनिश्वासौ हृदाहः कटुकास्यता।
मांसावदरणं शोफो रक्तपित्तं च पैत्तिके॥

**अउ43.43**
छर्द्यरोचकहृल्लासप्रसेकोत्क्लेशपीनसैः।
सशैत्यमुखमाधुर्यैर्विद्याच्छ्लेष्माधिकंविषम्॥

**अउ43.44**
पिण्याकेन व्रणालेपस्तैलाभ्यङ्गश्च वातिके।
स्वेदो नाडीपुलाकाद्यैर्बृंहणश्च विधिर्हितः॥

**अउ43.45**
पैत्तिकं स्तम्भयेत् सेकैः प्रदेहैश्चातिशीतलैः॥

**अउ43.46**
लेखनच्छेदनस्वेदवमनैः श्लैष्मिकं जयेत्॥

**अउ43.47**
कीटानां त्रिप्रकाराणां त्रैविध्येन क्रिया हिता॥

**अउ43.48**
स्स्वेदालेपनसेकांस्तु कोष्णान् प्रायोवचारयेत्।
अन्यत्र मूर्च्छिताद्दंशपाकतः कोथतोपि वा॥

**अउ43.49**
नृकेशाः सर्षपाः पीता गुडो जीर्णश्च धूपनम्।
विषदंशस्य सर्वस्य काश्यपः परमब्रवीत्॥

**अउ43.50**
विषघ्नं च विधिं सर्वं कुर्यात् संशोधनानि च॥

**अउ43.51**
साधयेत् सर्पवद्दष्टान् विषोग्रैः कीटवृश्चिकैः॥

अस43.52। तण्डुलीयकतुल्यांशां त्रिवृतां सर्पिषा पिबेन्।
याति कीटविषैः कम्पं न कैलास इवानिलैः॥

**अउ43.53**
क्षीरिवृक्षत्वगालेपः शुद्धे कीटविषापहः।
मुक्तालेपो वरः शोफतोददाहज्वरप्रणुत्॥

**अउ43.54**
वचा हिङ्गुविडङ्गानि सैन्धवं गजपिप्पली।
पाठाप्रतिविषाव्योषं काश्ययेन विनिर्मितम्।
दशाङ्गमगदं पीत्वा सर्वकीटविषं जयेत्॥

**अउ43.55**
ऐकध्यं कीटविषजिन्महास्नेहं पयो मधु।
शिखिकुक्कुटजैः पिच्छैः सतैललवणोत्तमैः।
धूपो हन्ति कृतः शीघ्रं कीटवृश्चिकजं विषम्॥

**अउ43.56**
विषे कणभजे कुर्यादुन्दुरोक्तमुपक्रमम्।
शिरीषबीजं मण्डूके लेपः स्नुक्क्षीरकल्कितम्।
मधु त्रिकटुकं श्वेतपिण्डामूलं च मत्स्यजे॥

**अउ43.57**
वचां वंशत्वचं पाठां नतं सुरसमञ्जरीम्।
द्वे बले नाकुलीं कुष्ठं शिरीषं रजनीद्वयम्॥

**अउ43.58**
गुहामतिगुहां श्वेतामजगन्धां शिलाजतु।
कत्तृणं कटभीक्षारं गृहधूमं भनश्शिलाम्॥

**अउ43.59**
रोहीतकं च पित्तेन कल्कयेत् स वरोऽगदः।
विश्वम्भरादिष्वालेपनावनाञ्जनपानतः॥

**अउ43.60**
स्वर्जिकाजशकृत्क्षारः सुरसः साक्षिपीडकः।
मदिरामण्डसंयुक्तो हितः शतपदीविषे॥

**अउ43.61**
कपित्थमक्षिपीडोर्कबीजं त्रिकटुकान्वितम्।
करञ्जो द्वे हरिद्रे च गृहगोधीविषापहः॥

**अउ43.62**
काकाण्डयुक्तः सर्वेषां विषाणां तण्डुलीयकः।
प्रशस्तो बर्हिणोण्डेन तद्वद्वायसपीलुकः॥

**अउ43.63**
तगरं नागरं नागकेसरं मरिचानि च।
प्रयुक्तं पानलेपाभ्यां मक्षिकाविषनाशनम्॥

**अउ43.64**
सितासिते च लवणे मरिचं च सनागरम्।
फणिज्जकरसोपेतं वरटीनां विषापहम्॥

**अउ43.65**
सद्यो वृश्चिकजं दंशं चक्रतैलेन सेचयेत्।
विदारिगन्धासिद्धेन कवोष्णेनेतरेण वा॥

**अउ43.66**
लवणोत्तमयुक्तेन सर्पिषा वा पुनः पुनः।
सिञ्चेत्कोष्णारनालेन सक्षीरलवणेन वा।

उपनाहो घृते भृष्टः कल्कोजाज्याः ससैन्धवः॥

**अउ43.67**
आदंशं स्वेदितं चूर्णैः प्रच्छाय प्रतिसारयेत्।
रजनीसैन्धवव्योषशिरीषफलपुष्पजैः॥

**अउ43.68**
मातुलुङ्गाम्लगोमूत्रपिष्टं च सुरसाग्रजम्।
लेपः सुखोष्णश्च हितः पिण्याको गोमयोपि वा॥

**अउ43.69**
पाने सर्पिर्मधुयुतं क्षीरं वा भूरिशर्करम्।
गुडोदकं वा सुहिमं चातुर्जातकवासितम्॥

**अउ43.70**
पलाशबीजं शूलघ्नो लेपोर्कक्षीरभावितम्।
पारावतशकृत्पथ्या तगरं विश्वभेषजम्।
बीज पूररसोन्मिश्रं वरोऽयं वृश्चिकागदः॥

**अउ43.71**
मनोह्वा सैन्धवं हिङ्गु मालतीपल्लवानि च।
गोशकृद्रसपिष्टेयं गुटिका वृश्चिकार्दिते॥

**अउ43.72**
लशुनो मरिचं हिङ्गु सुरसं विश्वभेषजम्।
अर्कक्षीरेण गुटिका वृश्चिकार्दितशङ्करी॥

**अउ43.73**
सशैवलोष्ट्रदंष्ट्रा च हन्ति वृश्चिकजं विषम्॥

**अउ43.74**
हिङ्गुना हरितालेन मातुलुङ्गरसेन च।
लेपाञ्जनाभ्यां गुटिका परमं वृश्चिकापहा॥

**अउ43.75**
करञ्जार्जुनशेलूनां कटभ्याः कुटजस्य च।
शिरीषस्य च पुष्पाणि मस्तुना दंशलेपनम्॥

**अउ43.76**
पिप्पलीं मरिचं यष्टिं श्वेतां सुरसमञ्जरीम्।
सहदेवामपामार्गं तण्डुलीयं च कल्कयेत्।
कुतलक्षारतोयेन लेपोऽलिविषनाशनः॥

**अउ43.77**
यो मुह्यति प्रश्वसिति प्रलपत्युग्रवेदनः।
तस्य पथ्यानिशाकृष्णामञ्जिष्ठातिविषोषणम्।
सालाबुवृन्तं वार्ताकरसपिष्टं प्रलेपनम्॥

**अउ43.78**
आदंशे यस्य कण्डूःस्यात् कोथः कोठं च दारुणम्।
तस्य लेपस्त्रिकटुकं यवक्षारोक्षिपीडकः॥

**अ३43.79**
पारावतशकृत्कान्तास्वर्ज्जिकाग्निहरेणवः।
रसेन मातुलुङ्गस्य क्षीरेणार्कस्यवा द्रुताः॥

**अ३43.80**
हृदयं पीड्यते यस्य मूर्च्छा चिमिचिमायनम्।
दन्तौष्ठदंशो रोम्णां च हर्षस्तस्य निवर्तते।
वेगो विषस्य पञ्चाहान्नैव वा क्रियया विना॥

**अ३43.81**
तत्र कुर्वीत दंशस्य लेपनं मस्तुकल्कितैः।
श्वेतपाटल्यतिविषाहरिद्राहरिणीनतैः।
बिल्वमूलयवक्षारसूक्ष्ममागधिकायुतैः॥

**अ३43.82**
उत्कृत्यत इवादंशः शूनः क्लिन्नो हतच्छविः।
जम्बूफलनिभं रक्तं कूजन् वमति वेष्टते॥

**अ३43.83**
इन्द्रियार्थं न जानाति प्रस्विद्यति च यो मुहुः।
स्वर्जिकाकुष्ठतगरनाकुलीपीलुपिप्पलीः।
बृहतीं चाच्छसुरया तस्य पिष्ट्वा विलेपनम्॥

**अ३43.84**
सर्वत्र चोग्रालिविषे पाययेन्मधुसर्पिषी।
विध्येत् सिरां विदध्याच्च वमनाञ्जननावनम्।
उष्णस्निग्धाम्लमधुरं भोजनं चानिलापहम्॥

**अ३43.85**
नागरं गृहकपोतपुरीषं बीजपूरकरसो हरितालम्।
सैन्धवं च विनिहन्त्यगदोऽयं लेपतोऽलिकुलजं विषमाशु॥

**अ३43.86**
अन्ते वृश्चिकदष्टानां समुदीर्णे भृशं विषे।
विषेणालेपयेद्दंशं स्थावरेण यथोचितम्॥

**अ३43.87**
क्रियेयमुच्चिटिङ्गेपि प्रतिलोमं च पांसुभिः।
उद्वर्तनं सुखाम्लोष्णैस्तथा प्रच्छादनं घनैः॥

**अ३43.88**
कुटजस्य फलं कुष्ठं मालती फलिनी नतम्।
तिक्तेक्ष्वाकुश्च पिष्टानि पानप्नध्य्मनादिभिः॥

**अ३43.89**
वृश्चिकोन्दुरुलूतानां सर्पाणां च विषापहम्।
समानममृतेनेदं गरशेषं च नाशयेत्॥

**अ३43.90**
अर्कस्य दुग्धेन शिरीषबीजं त्रिर्भावितं पिप्पलिचूर्णमिश्रम्।
एषोऽगदो हन्ति विषाणि कीटभुजङ्गलूतोन्दुरुवृश्चिकानाम्॥
।इति त्रिचत्वारिंशोऽध्यायः।

अथ चतुश्चत्वारिंशोऽध्यायः।

**अउ44.1**
अथातो लूताप्रतिषेधं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ44.2**
विश्वामित्राय रुष्टस्य वसिष्ठस्य ललाटजाः।
स्वेदलेशाः स्मृता लूता लूने ये पतितास्तृणे॥

**अउ44.3**
खाण्डवे दह्यमानानामसुराणां शरीरतः।
ये स्फुलिङ्गा विनिश्चेरुस्ते लूता इति केचन॥

**अउ44.4**
अन्ये वदन्ति भुक्तस्य दुष्टस्यान्नस्य मूर्च्छनात्।
सम्भवन्ति विषस्फोटा ये लूताः कीटलक्षणम्।
यथास्वं धारयन्तस्ते लूताः कीटाश्च संज्ञिताः॥

**अउ44.5**
तत्र घोरतमा लूता भिद्यन्ते ता अपि त्रिधा।
तक्ष्णिमध्यावरत्वेन घ्नन्ति वाश्वचिकित्सिताः।
सप्ताहेन दशाहेन पक्षेण च परं क्रमात्॥

**अउ44.6**
कपिलाग्निमुखी पीता पद्मा मूत्रा सितासिता।
आग्नेय्यः स्वेदजाः सप्त लूताः पित्तविकारदाः॥

**अउ44.7**
पाण्डुरा रक्तपदिका भृङ्गा पिङ्गा त्रिमण्डला।
पूतिर्वीराण्डजाःसप्त सौम्याः श्लेष्मविकारदाः॥

**अउ44.8**
कुमुदालविषा रक्ता श्वित्रा सन्ता निमेचका।
कसना चोद्भिदाः सप्त वायव्या वायुरोगदाः॥

**अउ44.9**
काकाण्ड्येणपदी लाजा वैदेही जालिनी तथा।
मालागुणा सुवर्णा च मिश्राः सप्तोपपादिकाः॥

अस44.10। व्याप्नुवन्त्याशु गात्राणि ज्वलत्पावकसन्निभाः।
सन्निपातकृतोऽसाध्याः साध्याः कृच्छ्रेणचेतराः॥

**अउ44.11**
ता दशन्ति सिते पक्षेऽसिते सन्धौ सदैव च॥

**अउ44.12**
दंशः सामान्यतस्तासां दद्रुमण्डलसन्निभः।
सितोऽसितोऽरुणःपीतःश्यावो वा मृदुरुन्नतः॥

**अउ44.13**
मध्ये कृष्णोऽथवा श्यावः पर्यन्ते जालकावृतः।
विसर्पवाञ्छोफयुतस्तप्यते बहुवेदनः॥

**अउ44.14**
ज्वराशुपाकविक्लेदकोथावदरणान्वितः।
क्लेदेन यत्स्पृशत्यङ्गं तत्रापि कुरुते व्रणम्॥

**अउ44.15**
श्वासदंष्ट्राशकृन्मूत्रशुक्रलालानखार्तवैः।
अष्टाभिरुद्वमन्त्येता विषं वक्त्राद्विशेषतः॥

**अउ44.16**
श्वासेन दंशः सहसा शूयते ज्वरदाहवान्।
दंष्ट्राकृतस्तूग्रतरो विवर्णः कठितः स्थिरः॥

**अउ44.17**
गम्भीरशोफवस्तोदवेदनादाहसंयुतः।
दुर्गन्धी शकृता दाहकण्डूचिमिचिमान्वितः॥

**अउ44.18**
पच्यते चाशु पक्वश्च पाण्डुः पीलुफलोपमः।
मूत्रेण रक्तपर्यन्तो मध्ये कृष्णो विशीर्यते॥

**अउ44.19**
आवर्तसदृशः शूनः पूतिः सर्पति दह्यते।
शुक्रेण ग्रन्थिसंस्थानः कठिनस्तीव्रवेदनः॥

**अउ44.20**
अल्पमूलोल्परुक्वोठो लालया कण्डुरो मृदुः।
नखेन चोषपिटकाकण्डूधूमायनान्वितः।
किंशुकोदरवर्णस्तु रजसा चञ्चुमालवान्॥

**अउ44.21**
लूता नाभेर्दशन्त्यूर्ध्वमूर्ध्वं चाधश्च कीटकाः।
तद्दूषितं च वस्त्रादि देहे पृक्तं विकारकृत्॥

**अउ44.22**
दिनार्धं लक्ष्यते नैव दंशो लूताविषोद्भवः॥

**अउ44.23**
सूचीव्यधवदाभाति ततोसौ प्रथमेऽहनि।
अव्यक्तवर्णः प्रचलः किञ्चित् कण्डूरुजान्वितः॥

**अउ44.24**
द्वितीयेऽत्युन्नतोन्तेषु पिटकैरिव चाचितः।
व्यक्तवर्णो नतो मध्ये कण्डूमान् ग्रन्थिसन्निभः॥

**अउ44.25**
तृतीये सज्वरो रोमहर्षकृद्रक्तमण्डलः।
शरावरूपस्तोदाढ्यो रोमकूपेषु सास्रवः॥

**अउ44.26**
महांश्चतुर्थे श्वयथुस्तापश्वासभ्रमप्रदः॥

**अउ44.27**
विकारान् कुरुते तांस्तान् पञ्चमे विषकोपजान्।
षष्ठे व्याप्नोति मर्माणि सप्तमे हन्ति जीवित॥

**अउ44.28**
विषमित्यतितीक्ष्णानामितरे विभजेदतः॥

**अउ44.29**
विषं शाम्यति सर्वासामेकविंशतिरात्रतः॥

**अउ44.30**
दंशः पित्तात्मको दाहतृट्स्फोटज्वरदाहवान्।
सशोफः कठिनः पाण्डुः कण्डूमान् श्लैष्मिकोल्परुक्।
वातिकः परुषः श्यावः पर्वभेदादिरुक्करः॥

**अउ44.31**
सर्पज्ञानोदितैर्लिङ्गैर्द्दोषोद्रेकं च लक्षयेत्॥

**अउ44.32**
त्रिदोषाः प्रायशः सर्वा लूताः पित्तकफाधिकाः॥

**अउ44.33**
प्राणान्तिकीषु हृन्मोहश्वासहिध्माशिरोग्रहाः।
श्वेतासिताः पीतरक्ताः पिटकाः श्वयथूद्भवः॥

**अउ44.34**
वेपुथुर्वमथुर्दाहस्तृडान्ध्यं वक्रनासता।
श्यावोष्ठवक्त्रदन्तत्वं पृष्ठग्रीवावभञ्जनम्।
पक्वजम्बूसवर्णं च दंशात् स्रवति शोणितम्॥

**अउ44.35**
अथाशु लूतादष्टस्य शस्त्रेणादंशमुद्धरेत्।
दहेत् जांबवोष्ठाद्यैर्न तु पित्तोत्तरं दहेत्॥

**अउ44.36**
कर्कशं भिन्नरोमाणं मर्मसन्ध्यादिसांश्रितम्।
प्रसृतं सर्वतो दंशं न छिन्दीत दहेत् वा॥

**अउ44.37**
लेपयेद्दग्धमगदैर्मधुसैन्धवसंयुतैः।
सुशीतैः सेचयेच्चानु कषायैः क्षीरिवृक्षजैः॥

**अउ44.38**
सर्वतोपहरेद्रक्तं शृङ्गाद्यैः सिरयापि वा।
स्रुते रक्ते परीषेको घृतक्षीरादिभिर्हितः॥

**अउ44.39**
प्रपौण्डरीकदद्रीबेरसारिवोशीरजीवकाः।
लोध्रचन्दनजीवन्तीमञ्जिष्ठासर्जवञ्जुलाः॥

**अउ44.40**
मृणालबिसशैवालकुमुदोत्पलगैरिकाः।
न्यग्रोधोदुम्बराश्वत्थनिचुलप्लक्षवेतसाः॥

**अउ44.41**
समङ्गापाटलीगुन्द्राकाकोलीशतपर्विकाः।
शिरीषधातकीमूर्वाविदारीपद्मकिंशुकाः॥

**अउ44.42**
शृङ्गाटकं कोशवतीवायसीसोमराजयः।
मधुकांशुमतीमूर्वा यथालाभं समाहृताः।
शस्तः पर्युषितो लेपः सघृतः पैत्तिके वर्णे॥

**अउ44.43**
श्यामाद्वयनिशामुस्तानखरास्नामहासहाः।
वासापत्तङ्गसुवहानाकुलीगिरिकर्णिकाः॥

**अउ44.44**
सर्पगन्धायवफलानिर्गुण्ड्यश्मन्तकस्थिराः।
शुकाख्या महिषक्रान्ता कुष्ठेन्द्रयवकुङ्कुमम्॥

**अउ44.45**
करवीरागरुनतं सुगन्धा सिन्दुवारकम्।
आस्फोटगुन्द्रा च हिता प्रलेपः श्लैष्मिके विषे॥

**अउ44.46**
बिम्बीविदुलबन्धूककोविदारपलाशकाः।
सुवहारिष्टकब्राह्मीगुडूचीविश्वसैर्यकाः॥

**अउ44.47**
सिद्धार्थका देवदारु विडङ्गानीन्द्रवारुणी।
शतावरीलाङ्गलिकीराजवृक्षपुनर्नवाः॥

**अउ44.48**
जीवन्ती वायसी भार्ङ्गी कतकेन्द्रयवार्जुनाः।
मिसिव्याघ्रपदीसिंहपुच्छीमण्डलपर्णिकाः॥

**अउ44.49**
श्वदंष्ट्रा कोलबृहती रेवती श्वेतपुष्पिका।
प्रपुन्नाटः कुरवकः प्रलेपो वातिके विषे॥

**अउ44.50**
सर्वत्रैव च शस्यन्ते बोधिश्लेष्मातकाक्षकाः॥

**अउ44.51**
उदीर्णदोषान् बलिनो विषे महति वाभयेन्।
काकण्डकीकोशवती लोध्रेन्द्रयवसैन्धवैः॥

**अउ44.52**
पटोलपत्रमरिचकरघाटप्रियङ्गुभिः।
कृष्णाशुकनसानीपनिम्बसप्ताह्वयष्टिभिः॥

**अउ44.53**
विरेचयेच्च त्रिफलात्रिवृत्त्रिकटुसैन्धवैः।
सदन्तीपूगमृद्वीका विडङ्गैरथवा पचेत्।
एभिः पलार्धिकैः प्रस्थं समब्राह्मीरसं घृतात्॥

**अउ44.54**
पञ्चमूलशृतं क्षीरं तोयं वा शोधनौषधैः।
यथास्वं कल्कितैर्युक्तं पृथग्दद्याद्विरेचनम्॥

**अउ44.55**
पिप्पलीपिप्पलीमूलशुण्ठीन्द्रयवसैन्धवैः।
पाठाजमोदायष्ट्याह्वमुस्तासर्षपदारुभिः॥

**अउ44.56**
लघुना पञ्चमूलेन सरलेन च साधिता।
पेया संसर्जने योज्या सघृता विषनाशिनी॥

**अउ44.57**
आध्मानहिध्माश्वासेषु पृष्ठग्रीवावभञ्जने।
सङ्कोचस्तम्भकम्पेषु शूलेष्वर्धावभेदके॥

**अउ44.58**
वातरोगेषु चान्येषु पर्वभेदार्दितादिषु।
एरण्डविल्वसरलचिरिविल्वार्कपाटलीः॥

**अउ44.59**
शिग्रुपाठा कुशवृषं विदुलं च जले पचेत्।
कनीयः पञ्चमूलं च तस्मिन् मण्डं पचेत् घृतात्॥

**अउ44.60**
द्विगुणे तुल्यगोक्षीरे पिष्टैर्यष्टीनिशानतैः।
सुराह्ववेल्लसरलशताह्वालोध्रगैरिकैः॥

**अउ44.61**
पयस्याकुष्ठागाङ्गेयीकृष्णामदनसैन्धवैः।
बस्तौ प्रत्यागतेऽश्नीयात् पञ्चमूलान्वितैः रसैः॥

**अउ44.62**
नावनं गौरवे शोफे लालास्रावे हनुग्रहे।
गिरिकर्णी फलसरो बन्धूकं किणिही सिता॥

**अउ44.63**
षड्ग्रन्थालशुनव्योषबृहतीवेल्लसैन्धवम्।
अपामार्गफलं भार्ङ्गी नाकुली सर्पगन्धिका॥

**अउ44.64**
श्यामा यवफला बीजं फणिज्जकशिरीषयोः।
वार्ताकरसपिष्टानि नस्यं विषहरं परम्॥

**अउ44.65**
विरिक्तशिरसश्चास्य सर्पिर्मण्डोनु नावनम्॥

**अउ44.66**
नेत्रोपरोधश्वयथुकण्डूनिद्रासमागमे।
वचामनोह्वात्रिकटुत्रिफलालोध्रगैरिकाः॥

**अउ44.67**
शङ्खो नीलोत्पलं ताम्रं हेम प्रवालकम्।
जीवन्ती लशुनं कुष्ठं कतकं मार्कवं नतम्॥

**अउ44.68**
प्रपैण्डरीकं मधुकं करञ्जफलसैन्धवम्।
निशे फणिज्जकं तुत्थं स्रोतोञ्जनरसाञ्जने।

मेषशृङ्गयाश्च कुसुमं पिष्टं गोवारिणाञ्जनम्॥

**अउ44.69**
सुरसप्रसवव्योषविल्वमूलसुराह्वयम्।
हरिद्रा छागलीमूत्रं लूताकीटघ्नमञ्जनम्॥

**अउ44.70**
शिरीषपद्मकोशीरपाटलीसिन्दुवारकम्।
क्षीरिशुङ्गनतोदीच्यसारिवाकुष्ठचन्दनम्॥

**अउ44.71**
शेलुस्वरसपिष्टोयमगदो नावनेञ्जने।
पाने प्रलेपे सेके च लूतासु परमं हितः॥

**अउ44.72**
पयस्या मधुमृद्वीकाश्वदंष्ट्राक्षीरमोरटाः।
गोजीविदारीयष्ट्याह्वमधुकानि च तद्गुणः॥

**अउ44.73**
तथा शिरीषकुसुमं चन्द्रलेखोद्भवं फलम्।
सुराला कटभी जातिः श्वेता च गिरिकर्णिका॥

**अउ44.74**
तद्वच्च युञ्ज्यात्तगरकुष्ठनागबलाबलाः॥

**अउ44.75**
हरिद्रायुगलं नागदन्ती लोध्रं च शाबरम्।
शिरीषपुष्पं तगरं सहदेवा शतावरी॥

**अउ44.76**
पुनर्नवा नागबला सर्पगन्धा कुटन्नटम्।
गवादनी दन्तशठसोमवल्केन्दुराजयः।
विषेषु सर्वेष्वगदः सक्षौद्रः सर्वकर्मकृत्॥

**अउ44.77**
सर्पाक्षी चन्दनं वक्रं मृगाक्षी गन्धनाकुली।
एला महासुगन्धा च बस्तमूत्रेण कल्कितः।
लेपे पाने च लूतासु नानेन सदृशोगदः॥

**अउ44.78**
कटभीमूलतगरसमङ्गोदवदारुभिः।
बृहतीद्वयगाङ्गेयीरोचनाचन्दनैर्घृतम्॥

**अउ44.79**
सिद्धं चतुर्गुणक्षीरं पानाभ्यञ्जनयोर्हितम्।
लूताकणभकीटानां विषे परमदारुणे॥

**अउ44.80**
निवृत्ते दाहशोफादौ कर्णिकां पातयेद्व्रणात्॥

**अउ44.81**
कुसुम्भपुष्पं गोदन्तः स्वर्णक्षीरी कपोतविट्।
त्रिवृता सैन्धवं दन्ती कर्णिकापातनं तथा॥

**अ उ 44.82**
हरिद्रा गुग्गुलुः किण्वं वंशलेखः कपोतविड्।
तद्वच्च सैन्धवं कुष्ठं दन्तीकटुकदौग्धिकम्।
राजक्रोशातकीमूलं किण्वो वा मथितोद्भवः॥

**अ उ 44.83**
कर्णिकापातसमये बृंहयेत विषापहैः॥

**अ उ 44.84**
ऋतुकाले च लूतानां यावन्तः शुक्रविन्दवः।
देहे पतन्ति तावत्यो जायन्ते कर्णिकाः समम्॥

**अ उ 44.85**
गोदन्तदन्ती त्रिवृता हरिद्रे सैन्धवं तिलाः।
मधुकं निम्बपत्राणि घृतं च व्रणशोधनम्॥

**अ उ 44.86**
कान्ताविडङ्गखदिरनिम्बकम्पिल्लकाम्बुदैः।
सर्जैलाधातकीलोहैः सिद्धं सर्पिर्व्रणापहम्॥

**अ उ 44.87**
शिरीषकटभीशेलुक्षीरिवृक्षार्जुनत्वचः।
कल्कचूर्णपरीषेकैः कीटलूताव्रणापहाः॥

**अ उ 44.88**
शताह्वालोध्रकासीसदार्वीजम्ब्वस्थिरोचनाः।
हरीतकी पूगफलं चूर्णोयं व्रणरोपणः॥

**अ उ 44.89**
लाक्षा रजन्यौ मञ्जिष्ठा हरितालं मनश्शिला।
सर्पिर्मधु च लेपोयं त्वग्विशुद्धिकरः परम्॥

**अ उ 44.90**
रोमसञ्जननं कुर्याद्यदुक्तं व्रणसाधने॥

**अ उ 44.91**
स्नेहकार्यमशेषं च सर्पिषैव समाचरेत्।
विषस्य वृद्धये तैलमग्नेरिव तृणोलपम्॥
॥इति चतुश्चत्वारिंशोऽध्यायः॥

अथ पञ्चचत्वारिंशोऽध्यायः।

**अ उ 45.1**
अथातः प्रत्येकलूताप्रतिषेधं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अ उ 45.2**
आदंशे पिटका ताम्रा भवेत् कपिलया स्थिरा।
लसीका रोमकूपेषु दाहोऽक्ष्णो मूर्ध्नि गौरवम्॥

**अ उ 45.3**
पाननस्याञ्जनालेपसेकेष्वत्र प्रयोजयेत्।
निशापद्मककुष्ठैलाकरञ्जककुभत्वचः॥

**अउ45.4**
स्थिरार्कपर्ण्यपामार्गब्राह्मीज्वलननाकुलीः।
अथवा कुष्ठपत्तङ्गनखजोङ्गककुङ्कुमम्॥

**अउ45.5**
अग्निमुख्यातिरुक्स्फोटः सम्भवत्यग्निदग्धवत्।
अग्निज्वालासमानेन प्रस्विद्यति विषोष्मणा॥

**अउ45.6**
तृड्दाहकम्पमूर्च्छावान् पित्तास्रमतिसार्यते।
योजयेत् पूर्ववत्तत्र प्रत्याख्याय त्वरान्वितः॥

**अउ45.7**
कुष्ठलामज्जकोशीरमधूकं मधुकं मधु।
लाभतः शीतवीर्याणि तालीसं गोपकन्यकाम्॥

**अउ45.8**
पीतया पीतविण्मूत्रदंशक्लेदाक्षिदर्शनम्।
मूर्च्छाच्छर्दिशिरोदुःखज्वरारोचकशूलवान्॥

**अउ45.9**
तत्रेष्टाः कटभोशीरमुञ्जावञ्जुलपद्मकाः।
वंशकाशार्जुनकुशाः शिरीषकिणिहीत्वचः।
अथवा वन्यबाल्हीककुष्ठकेसरजोङ्गफम्॥

**अउ45.10**
पद्माभः पद्मया स्फोटो भिन्नोऽभिन्नः पुनर्भवेत्।
क्लिद्यत्याशु स्रवत्युष्णं क्लेदं स्पर्शेऽतिरुक्करः॥

**अउ45.11**
तत्र पद्मोत्पलान्नालो हिमवेतसवञ्जुलाः।
समृणालाः सकुमुदाः सक्षौद्रघृतशर्कराः॥

**अउ45.12**
पूतिर्मूत्रविषादंशो विसर्पी कृष्णशोणितः।
श्वासकासज्वरच्छर्दिमूर्छादाहभ्रमान्वितः॥

**अउ45.13**
मनश्शिलालमधुकमधूकोत्पलचन्दनम्।
कुष्ठालामज्जकोशीरपद्मकं तत्र भेषजम्॥

**अउ45.14**
आदंशे श्वेतया श्वेता पिटका भृशकण्डुला।
दाहमूर्छाज्वररुजाविसर्पक्लेदकारिणी॥

**अउ45.15**
तत्रेष्टाः शीतरास्नैलाहरेणुनलवञ्जुलाः।
कुष्ठमांसीनतोशीरकान्ताध्यामकपद्मकाः॥

**अउ45.16**
आदंशः कृष्णया कृष्णो विङ्गन्धिः क्लेदशोफवान्।
उत्थाप्यते कृष्णमसृग्दुष्टं तत्र च भेषजम्।
महासुगन्धा सर्पक्षी वक्रैला गन्धनाकुली॥

**अउ45.17**
शूनः पाण्डूरया दंशः शोफो वक्त्रस्य गौरवम्।
ज्वरो विघूर्णनं जृम्भा शिरोरुक् तत्र भेषजम्।
मूलं वारुणपुष्पाया रोचना गोशकृद्रसः॥

**अउ45.18**
आपाण्डुपिटको दंशः शोफवान् रक्तपादया।
अस्रस्रुत्तत्र नलदसेव्योदीच्यहिमं मधु॥

**अउ45.19**
भृङ्गाभो भृङ्गया दंशः पिटका दाहरुक्करी।
कोठैश्च चीयते गात्रं तत्र शस्तं भिषग्जितम्।
अङ्कोलसारः फलिनी गवां पित्तं मिसिर्गदः॥

**अउ45.20**
पिङ्गया वह्निदग्धाभो दंशः स्फोटो बहुस्रुतिः।
तीव्रशोफज्वररुजाहृत्पीडादाहतृड्युतः॥

**अउ45.21**
तत्रागदः सिता गुन्द्रा मल्लिका मधुकोत्पलम्।
जीवंकः क्षीरिणां शुङ्गा द्विहिमं नागकेसरम्॥

**अउ45.22**
त्रिमण्डलाया बहलो दंशः कृष्णं स्रवत्यसृक्।
अरुचिर्नेत्रयोर्दाहः कलुषस्रुतिदृष्टिता॥

**अउ45.23**
विविधैर्मण्डलैश्चास्य शरीरमुपचीयते।
तत्रार्कमूलद्विनिशासुरालापृश्निपर्णिकाः।
दधित्थनाकुलीब्राह्मीज्योतिष्मत्यो हितोऽगदः॥

**अउ45.24**
आदंशः पूतिगन्धाया विसर्पक्लेददाहवान्।
अलजीसन्निभो रुग्वान् विबद्धपिटकाचितः॥

**अउ45.25**
भार्ङ्गीनिदिग्धिकानिम्बपाटलीसिन्दुवारकम्।
दूर्वा हरिद्रे वासा च पूतिगन्धाविषापहम्॥

**अउ45.26**
चित्रमण्डलवान् दंशः पिटकाजालकावृतः।
वीराया मूर्धरुक् शीतज्वरान्नद्वेषसंयुतः॥

**अउ45.27**
हरिद्रे नलदं कुष्ठमेला सुरसमञ्जरी।
तगरं च श्वपित्तेन पिष्टं वीराविषापहम्॥

**अउ45.28**
दंशः कुमुदया दाहस्फोटस्फुरणतोदवान्।
पिच्छिलक्लेदविस्रावी सश्वासस्सगलग्रहः।
प्रत्याख्यायात्र कुर्वीत सामान्योक्तं क्रियाक्रमम्॥

**अउ45.29**
भवन्त्यलविषादंशे पीतलोहितमण्डलाः।
पिटकाः सर्षपप्रख्यास्तालुशोषो रुजा ज्वरः॥

**अउ45.30**
छर्दिर्दाहः शिरःकम्पस्तत्र सेव्यः समाक्षिकः।
सकासीसकह्रीबेरः सपिप्पलिवटाङ्कुरः॥

**अउ45.31**
रक्तान्तो रक्तया दंशः सपाण्डुपिटकाज्वरः।
श्वेतोतिसारः श्वसनं दाहः क्लेदः सशोणितः।
शस्तं शेल्वर्जुनाम्रातात्वङ्मूलं सिन्दुवारतः॥

**अउ45.32**
आदंशे चित्रया रक्ता पिटका विसृता स्थिरा।
पर्वभेदशिरस्तापज्वरशोफा विसर्पिणी॥

**अउ45.33**
भिन्ना कृष्णत्वमभ्येति पीतास्रावा महाव्रणा।
तत्रेष्टाः कुष्ठनलदशिरीषनलरेणुकाः॥

**अउ45.34**
दंशे च सन्तानिकया शूलमाकुलताश्रुणः।
प्रदराक्षेपकौ तत्र केसरं क्षीरिणां त्वचः।
आम्रस्य सिन्दुवारस्य मूलमश्मन्तकस्य च॥

**अउ45.35**
पिटका मेचका दंशमध्ये जतुकणोपमा।
ज्वरः शोफोत्र वारुण्यां रोचना रजनीद्वयम्॥

**अउ45.36**
राजीमान् कसनादंशः शिरोरुक् श्वासकासवान्।
शीतपिच्छिलरक्तस्रुद्रक्तोकं तत्र मेषजम्॥

**अउ45.37**
पाण्डुरक्तोऽतिरुग्दंशः काकाण्ड्याः स्मृतिमोषकृत्।
हिध्मा श्वसनतृण्मूर्च्छा निद्राक्षेपकहृद्द्रवाः॥

**अउ45.38**
रक्तान्तस्त्र्वेणपादाया दंशः कृष्णतिलाकृतिः।
दाहमोहाग्निवीसर्पतृड्वमिश्वासकासवान्॥

**अउ45.39**
पूतिः श्यावोतिरुक् सासृगादंशो लाजवर्णया।
शीतज्वरसमुत्थानो दाहमूर्छातिसारवान्॥

**अउ45.40**
अग्निदग्धनिभो दंशो वैदेह्या भृशवेदनः।
गम्भीरः सज्वरस्तीक्ष्णमोहो हृदयपीडनम्॥

**अउ45.41**
ऊर्ध्वराजीचितो दंशो जालिन्यास्तीव्रशोफरुक्।
उदीर्णतृड्भ्रमश्वासस्तम्भमोहविदीर्यते॥

**अउ45.42**
रक्तो मालागुणादंशो धूमगन्धिः सपीव्ररुक्।
दीर्यते पार्श्वतस्तैस्तैः संरब्धैर्मण्डलैर्युतः॥

**अउ45.43**
अन्तर्दाहो बहिः शैत्यमाध्मानं मूत्रकृच्छ्रता।
मूर्च्छाप्रलापातीसारज्वराः प्राणान्तकारिणः॥

**अउ45.44**
ध्मातः सौवर्णिकादंशः स्यन्दते मत्स्यगन्धिकः।
शिरोक्षिरुग्ज्वरः कासस्तृणा शोफो वमिर्भ्रमः॥

**अउ45.45**
आसाध्यानामपि हितं प्रत्याख्यायाशु योजयेत्।
दोषोच्छ्रायविशेषेण छेददाहादिवर्जितम्॥

**अउ45.46**
कपिला तत्र नासायामग्निर्दशति जत्रुणि।
पीता तु गण्डयोः पद्मा दक्षिणांसेथ कक्षयोः॥

**अउ45.47**
लूता मूत्रविषा श्वेता चिबुके कालिकाक्षिणि।
पाण्डुरा दक्षिणस्कन्धे करयो रक्तपादिका॥

**अउ45.48**
वामपार्श्वे दशेत् भृङ्गा वामांसे पिङ्गला दशेत्।
त्रिमण्डलोदरे पूतिः पृष्ठे वीरा तु दक्षिणे॥

**अउ45.49**
बाहौ नाभ्यां कुमुदिका वामस्कन्धेऽलसंज्ञिता।
कण्ठे रक्ता ललाटे तु चित्रा सन्तानिकौष्ठयोः॥

**अउ45.50**
मेचका मूर्ध्नि कसनाद्धस्तयोः कक्षमूलयोः।
काकाण्ड्येणी तु हृदये लाजवर्णा स्तनान्तरे॥

**अउ45.51**
बाहुसन्धिषु वैदेही लूतापाङ्गे तु जालिनी।
मालागुणाख्या ग्रीवायां सौवर्णी कर्णमूलयोः॥

**अउ45.52**
इति क्षेत्राणि नियतान्यत्युदीर्णविषाः पुनः।
परक्षेत्रेपि वर्तन्ते राजानोतिबला इव॥

**॥इति पञ्चचत्वारिंशोऽध्यायः॥**

# अष्टाङ्गसंग्रहः उत्तरस्थानम् अध्याय ४६-५०

https://sa.wikisource.org/s/a03

**अष्टाङ्गसंग्रहः**

अथ षट्चत्वारिंशोऽध्यायः।

**अउ46.1**
अथातो मूषिकालर्कप्रतिषेधं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ46.2**
लालनश्चपलः पुत्रो हसिरश्चिकिरोऽजिनः।
कषायदन्तः कुलकः कोकिलः कपिलोऽसितः॥

**अउ46.3**
अरुणः शबलः श्वेतः कपोतः पलितोन्दुरुः।
चुच्छुन्दारो रसालाख्यो दशाष्टौ चेति मूषिकाः॥

**अउ46.4**
यस्मिन्नङ्गे पतत्येषां शुक्रमङ्गैः स्पृशन्ति वा।
यच्छुक्रदिग्धैस्तत्रास्रे दूषिते पाण्डुतां गते॥

**अउ46.5**
ग्रन्थयः श्वयथुः कोठो मण्डलानि भ्रमोरुचिः।
शीतज्वररोतिरुक्सादो वेपथुः पर्वभेदनम्॥

**अउ46.6**
रोमहर्षः स्नुतिर्मूर्च्छा दीर्घकालानुबन्धनम्।
श्लेष्मानुविद्धबह्वाखुपोतकच्छर्दनं सकृत्॥

**अउ46.7**
व्यवाय्याखुविषं कृच्छ्रं भूयो भूयश्च कुप्यति॥

**अउ46.8**
मूर्च्छाङ्गशोफवैवर्ण्यक्लेदशब्दाश्रुतिज्वराः।
शिरोगुरुत्वं लालासृक्छर्दिश्चासाध्यलक्षणम्॥

**अउ46.9**
शूनबस्तिं विवर्णौष्ठमाखवाभैर्ग्रन्थिभिश्चितम्।
चुच्छुन्दुरुसगन्धं च वर्जयेदाखुदूषितम्॥

**अउ46.10**
शुनः श्लेष्मोल्बणा दोषाः संज्ञां संज्ञावहाश्रिताः।
मुष्णन्तः कुर्वते क्षोभं धातूनामतिदारुणम्॥

**अउ46.11**
लालावानन्धबधिरः सर्वतः सोभिधावति।
स्रस्तपुच्छहनुस्कन्धः शिरोदुःखी नताननः॥

**अउ46.12**
दंशस्तेन विदष्टस्य सुप्तः कृष्णं क्षरत्यसृक्।
हृच्छिरोरुग्ज्वरस्तम्भतृष्णामूर्छोद्भवोऽनु च॥

**अउ46.13**
अनेनान्येपि बोद्धव्या व्याला दंष्ट्राप्रहारिणः।
सृगालाश्वतराश्वर्क्षद्वीपिव्याघ्रवृकादयः॥

**अउ46.14**
कण्डूनिस्तोदवैवर्ण्यसुप्तिक्लेदज्वरभ्रमाः।
विदाहरागरुक्पाकशोफग्रन्थि विकुञ्चनम्॥

**अउ46.15**
दंशावदरणं स्फोटाः कर्णिका मण्डलानि च।
सर्वत्र सविषे लिङ्गं विपरीतं तु निर्विषे॥

**अउ46.16**
दष्टो येन तु तच्चेष्टारुतं कुर्वन् विनश्यति।
पश्यंस्तमेव चाकस्मादादर्शसलिलादिषु॥

**अउ46.17**
जलदर्शनसंस्पर्शशब्देभ्यो यश्च सन्त्रसेत्।
अदष्टमपि तं जह्याज्जलसन्त्रासरोगिणम्॥

**अउ46.18**
आखुना दष्टमात्रस्य दंशं काण्डेन दाहयेत्।
दर्पणेनाथवा तीव्ररुजा स्यात् कर्णिकान्यथा॥

**अउ46.19**
दग्धं विस्रावयेद्दंशं प्रच्छितं च प्रलेपयेत्।
शिरीषरजनीवक्रकुङ्कुमामृतवल्लिभिः॥

**अउ46.20**
अगारधूममञ्जिष्ठा रजनी लवणोत्तमैः।
लेपो जयत्याखुविषं कर्णिकायाश्च पातनः॥

**अउ46.21**
ततोम्लैः क्षालयित्वा तु तोयैरनु च लेपयेत्।
पालिन्दी श्वेतकटभी बिल्वमूलगुडूचिभिः।
अन्यैश्च विषशोफघ्नैः सिरां वा मोक्षयेत् द्रुतम्॥

**अउ46.22**
छर्दनं जालिनीकाथैः शुकाख्याङ्कोलयोरपि।
कोशवत्याः शुकाख्यायाः फलं जीमूतकस्य च।
मदनस्य च सञ्चूर्ण्य दध्ना पीत्वा विषं वमेत्॥

**अउ46.23**
वचामदनजीमूतकुष्ठं वा मूत्रपेषितम्।
पूर्वकल्पेन पातव्यं सर्वोन्दुरुविषापहम्॥

**अउ46.24**
निष्पावाः कदलीमूलं बन्धुजीवफलानि च।
सुवर्चलारामठकं स्वर्जिकातिविषाद्वयम्। श्यामाद्रिकर्णिकामूलमूर्धचैवमनत्रयम्॥

**अउ46.25**
वान्तस्य शुद्धे हृदये शूलं हिध्मारुचिर्वमिः।
उष्णोद्गारानुबन्धो वा स्याच्चेत्तत्रैतदौषधम्॥

**अउ46.26**
जीरकं त्र्यूषणं कुष्ठं तुङ्गाख्यं नागकेसरम्।
रजन्यौ सैन्धवं सेव्यं यष्टीमधुसुवर्चलाम्॥

**अउ46.27**
मधुरं च गणं पिष्ट्वा बीजपूरकपित्थयोः।
रसेन षाडवं कुर्यान्मधुमत्स्यण्डिकान्वितम्।
गन्धवर्णरसोपेतः स पीतो विषदोषजित्॥

**अउ46.28**
द्विपिप्पलीद्व्यंशुमतीक्वाथे पेया च तद्गुणा॥

**अउ46.29**
विरेचने त्रिवृन्नीलीत्रिफलाकल्क इष्यते।
शिरोविरेचने सारः शिरीषस्य फलानि च॥

**अउ46.30**
अञ्जने गोमयरसो व्योषसूक्ष्मरजोन्वितः।
कपित्थगोमयरसो मधुमानवलेहने॥

**अउ46.31**
तण्डुलीयकमूलेन सिद्धं पाने हितं घृतम्।
द्विनिशा कटभी रक्ता यष्ट्याह्वैर्वामृतान्वितैः।
आस्फोतमूलसिद्धं वा पञ्चकापित्थमेव वा॥

**अउ46.32**
अधोभागे विशुद्धस्य शूलं नाभ्यां भवेद्यदि।
पुरीषं वा विबध्येत गुदे स्याद्वा विकर्तिका॥

**अउ46.33**
तत्र पेयां पिबेच्छीतां शर्करामधुसंयुताम्।
पिप्पली पिप्पलीमूलसारिवा कटुकाह्वयैः।
शृतैः सिद्धां सह बलासमङ्गाविश्वभेषजैः॥

**अउ46.34**
नलदध्यामकव्योषलोध्रचित्रकदीप्यकम्।
कुतलक्षारतोयेन पिष्टं माक्षिकसर्पिषा॥

**अउ46.35**
दध्ना वा प्राशयेत् क्षौद्रं यवक्षारपयोदधि।
फणितं तैलमाज्यं च विषघ्नं पीतमेकतः॥

**अउ46.36**
सिन्दुवारं नतं शिग्रु बिल्वमूलं पुनर्नवम्।
वचा श्वदंष्ट्रा जीमूतमेषां क्वाथं समाक्षिकम्।
पिबेच्छाल्योदनं दध्ना भुञ्जानो मूषिकार्दितः॥

**अउ46.37**
तक्रेण शरपुङ्खाया बीजं सञ्चूर्ण्य वा पिबेत्।
अङ्कोलमूलवल्को वा बस्तमूत्रेण कल्कितः।
पानलेपनयोर्युक्तः सर्वोन्दुरुविषापहः॥

**अउ46.38**
पयः पयस्यया युक्तं सितया मधुकेन च॥

**अउ46.39**
किराततिक्तममृतां समङ्गां ककुभत्वचम्।
बाणं पलाशं काश्मर्यं पयस्यां तण्डुलीयकम्॥

**अउ46.40**
आखुविन्नां महानिम्बं सप्तपर्णं मधूलिकाम्।
कपित्थं राजवृक्षं वा पिबेदन्यतमं ज्वरी॥

**अउ46.41**
स्थिरां मन्दरुजां प्रच्छेत् कर्णिकां पातयेत वा।
श्यामा लाङ्गलिका दन्ती किणिही गिरिकर्णिका॥

**अउ46.42**
आखुवृक्षो महावृक्षस्त्रिवृदञ्जनकी स्नुही।
कर्णिकापातनं कल्कमेकैकं तिलकल्कवत्॥

**अउ46.43**
क्षीरिप्रवालमञ्जिष्ठाबलादार्वीहयाह्वयाः।
रोपण्यः कल्कितास्तैलं घृतं वा साधितं तथा।
द्विनिशा तिलयष्ट्याह्वतगरोशीरपद्मकैः॥

**अउ46.44**
सामान्येनेति निर्दिष्टा क्रियाखूनां विशेषतः॥

**अउ46.45**
लालनेन वमिर्मूर्च्छा लालास्रावश्च जायते।
लिह्यात् समाक्षिकं तत्र चूर्णितं तण्डुलीयकम्॥

**अउ46.46**
चपलेन वमिर्मूर्च्छा तृड्वा तत्रावलेहयेत्।
सदारुमुस्तां त्रिफलां पुत्रकेण तु पाण्डुता॥

**अउ46.47**
सादोङ्गे सर्वतश्चाखुसदृशग्रन्थिसम्भवः।
शिरीषबीजं कुष्ठं च मधुना तत्र लेहयेत्॥

**अउ46.48**
हसिरेणान्नविद्वेषो जृम्भणं रोमहर्षणम्।
आरग्वधदिनिर्यूहं सुवान्तं तत्र पाययेत्॥

**अउ46.49**
चिकिरेण शिरोदुःखं शोफो हिध्मा वमिर्भ्रमः।
वान्तोत्र जालिनीक्वाथैः सारमङ्कोलजं पिबेत्॥

**अउ46.50**
अजिनेनाङ्गकृष्णत्वं मूर्च्छा छर्दिश्च हृद्ग्रहः।
मधुना तत्र मञ्जिष्ठां लिह्यात् स्नुक्क्षीरकल्किताम्॥

**अउ46.51**
निद्रा कषायदन्तेन हृच्छोषः कृशताति च।
शिरीषसारत्वग्बीजं तत्र क्षौद्रेण लेहयेत्॥

**अउ46.52**
कुलकेन रुजास्रावौ राजयो दंशमण्डले।
स सिन्दुवारकौ तत्र सहौ लिह्यान्मधुप्लुतौ॥

**अउ46.53**
ग्रन्थयः कोकिलेनोग्रा ज्वरो दाहश्च दारुणः।
नीलीपुनर्नवाक्वाथे सिद्धं तत्र पिबेत् घृतम्॥

**अउ46.54**
कपिलेन व्रणे कोथो ज्वरो ग्रन्थिर्भ्रमः सतृट्।
लेहयेन्मधुना श्वेतां श्वेतां चात्र पुनर्नवाम्॥

**अउ46.55**
रक्तं कृष्णेन वमति विशेषाद् दुर्दिने पिबेत्।
तत्र किंशुकभस्माम्बु शिरीषफलवालकम्॥

**अउ46.56**
अरुणाद्याः पृथग्दोषसन्निपातास्रसम्भवान्।
जनयन्ति क्रमाद्रोगान् सर्वे च ग्रन्थिकर्णिकाः॥

**अउ46.57**
करञ्जारग्वधव्योषबृहत्यंशुमतीद्वयात्।
क्वाथे दधिपयः सर्पिः पृथक्प्रस्थोन्मितं पचेत्॥

**अउ46.58**
कपित्थदाडिमवरी विशालात्रिसुगन्धिकाः।
त्रिवृतामृत्तिका वक्रगुडूचीश्चात्रकल्किताः॥

**अउ46.59**
क्षिपेत्तदरुणादीनां पञ्चानां विषनाशनम्।
काकादनी काकमाची स्वरसेन शृतं घृतम्॥

**अउ46.60**
क्लमश्चुच्छुन्दरेणोग्रो ग्रीवास्तम्भो विषूचिका।
यवनालर्षभक्षारं बृहत्यौ वात्र पाययेत्॥

**अउ46.61**
ग्रीवास्तम्भो रसालेन वेदना दंशमण्डले।
लिह्यान्महागदं तत्र घृतमाक्षिकसंयुतम्॥

**अउ46.62**
सशेषं मूषिकविषं प्रकुप्यत्यभ्रदर्शने।
यथायथं वा लाकेषु दोषाणां वृद्धिहेतुषु॥

**अउ46.63**
तत्र सर्वे यथावस्थं प्रयोज्याः स्युरुपक्रमाः।
यथास्वं ये च निर्दिष्टास्तथा दूषीविषापहाः॥

**अउ46.64**
दंशत्वलर्कदष्टस्य दग्धमुष्णेन सर्पिषा।
प्रदिह्यादगदैस्तैस्तैः पुराणं च घृतं पिबेत्।
व्रणस्योपरि निष्पीड्यः प्रत्यक्पुष्पीरसोथवा॥

**अउ46.65**
तिलगुग्गुलुदूर्वाणां दाडिमस्य गुडस्य च।
कल्को मुहुर्मुहुर्लेपः श्वदंशविषजित्परम्॥

**अउ46.66**
नलमूलं जले पिष्टं पानलेपनयोर्हितम्।
मातुलुङ्गच्छदैर्दशं बध्नीयाद्दन्तचर्वितैः॥

**अउ46.67**
अर्कक्षीरयुतं चास्य योज्यमाशु विरेचनम्॥

**अउ46.68**
पिबेत् पुनर्नवां श्वेतां धुर्धूरकफलान्विताम्॥

**अउ46.69**
फलं धुर्धूरकान्मूलं काकोदुम्बरिकोद्भवम्।
शीधुना श्वविषं हन्ति पीतं वा तण्डुलाम्बुना॥

**अउ46.70**
ऐकध्यं पललं तैलं रूपिकायाः पयो गुडः।
भिनत्ति विषमालर्कं घनवृन्दमिवानिलः॥

**अउ46.71**
लशुनोषणवैदेही वरा गोपित्तकल्किताः।
पाननस्याञ्जनालेपैः श्वदष्टस्यौषधं परम्॥

**अउ46.72**
जलवेतसपत्रत्वङ्मूलं क्षुण्णं पचेज्जले।
स क्वाथः शीतलः पीतः परं श्वविषभेषजम्॥

**अउ46.73**
तत्सिद्धं च घृतं पाननस्याभ्यञ्जनलेपनम्।
जलत्रासे समस्ते च विषे तत् गरुडोपमम्॥

**अउ46.74**
यवमाषकुलत्थानां पञ्चमूलस्य चाम्भसि।
क्षीरद्विगुणिते सर्पिः साधयेच्छलक्ष्णकल्कितैः॥

**अउ46.75**
अश्वगन्धासहाकुष्ठबृहतीरजनीद्वयैः।
विदारीनतकट्वङ्ग पयस्यासिन्दुवारकैः॥

**अउ46.76**
सर्पगन्धानखाभीरुशर्करारक्तचन्दनैः।
श्वसंष्ट्रोपद्रवान् सर्वान् पानाभ्यङ्गैर्निहन्तितत्॥

अस46.77। हृद्विदाहे प्रसेके च विरेकवमने भृशम्।
विषदोषहरे योज्ये शुद्धे संसर्जनक्रमः॥

**अउ46.78**
दद्यात् संशोधनं तीक्ष्णमवश्यं विषनाशनम्।
अशुद्धस्य निरूढेपि व्रणे कुप्यति तद्विषम्॥

**अउ46.79**
सरत्रबीजौषधिभिः कुम्भैः शीताम्बुपूरितैः।
अष्टोत्तरशतं वारान् सिद्धमन्त्राभिमन्त्रितै॥

**अउ46.80**
अष्टोत्तरशतोन्मानैः पुष्पमालावगुण्ठितैः।
गोचर्ममात्रके लिप्ते ज्वलिताग्नौ कुशास्तृते।
स्थण्डिले सरितस्तीरे स्नानं वास्य चतुष्पथे॥

**अउ46.81**
अलर्काधिपते यक्ष सारमेयगणाधिप।
अलर्कजुष्टमेतं मे निर्विषं कुरु मा चिरात्।
स्वाहेतिमन्त्रोलर्कार्ते सर्वकर्मसु शस्यते॥

**अउ46.82**
चतुष्पाद्भिर्द्विपाद्भिर्वा नखदन्तपरिक्षतम्।
शूयते पच्यते रागज्वरस्रावरुजान्वितम्॥

**अउ46.83**
सोमवल्कोश्वकर्णश्च गोजिह्वा हंसपादिका।
रजन्यौ गैरिकं लेपो नखदन्तविषापहः॥
॥इति षट्चत्वारिंशोऽध्यायः॥

अथ सप्तचत्वारिंशोऽध्यायः

**अउ47.1**
अथातो विषोपद्रवप्रतिषेधं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

**अउ47.2**
ज्वरकासवमिश्वासहिध्मा तृष्णातिमूर्च्छनम्।
विशोभेदोऽतिकाठिन्यमानाहो बस्तिमूर्द्धरुक्॥

**अउ47.3**
श्वयथुः पूतिदंशत्वं रक्तस्रावो विषानिलः।
इति षोडश निर्दिष्टा विषार्तानामुपद्रवाः।
गच्छन्त्युपोक्षिता नाशं यैर्जुष्टा विषरोगिणः॥

**अउ47.4**
राजवृक्षफलोशीरकाश्मर्यघनपद्मकात्।
क्वाथः सशर्कराक्षौद्रो विषज्वरहरः परम्॥

**अउ47.5**
पीता तण्डुलतोयेन कटुका ससितोपला।
विषज्वरहराजाजी जीवकर्षभकोत्पलम्॥

**अउ47.6**
कोलमज्जसिताधान्यभार्ङ्गीयष्ट्याह्वकेसरम्।
विषज्वरवमिश्वासकासतृष्णानिबर्हणम्॥

**अउ47.7**
त्रिफलारग्वधव्याघ्रीक्वाथो ज्वरविबन्धजित्।
बालबिल्ववचामुस्ता कषायः सपुनर्नवः।
ज्वराग्निसादश्वयथून्निहन्ति विषसम्भवान्॥

**अउ47.8**
वैदेहिकारामठकं कपित्थरससैन्धवम्।
ससितामाक्षिकं लीढं श्वासकासज्वरापहम्॥

**अउ47.9**
सद्राक्षानागरां कृष्णामथवा सवराघनाम्।
लीढ्वाज्यमधुना कासान्मुच्यते विषसम्भवात्॥

**अउ47.10**
सपाठाञ्जनमञ्जिष्ठाद्विनिशामधुकां तथा।
यष्ट्याह्वमम्भसा पीत्वा मरिचैरवचूर्णितम्॥

**अउ47.11**
विषवम्यां पिबेत् क्वाथं विल्बमूलाद्रजोऽथवा।
धात्रीषरूपकद्राक्षा मधुकं पयसा द्रुतम्॥

**अउ47.12**
वेल्लाग्र्याञ्जनसोशीरयष्ट्यैलाकणकेसरम्।
लिह्यान्मरिचकुम्भीं वा घृतपुष्परसद्रुताम्॥

**अउ47.13**
क्षीरिवृक्षाङ्कुरक्षौद्रसितास्तृड्वमथुच्छिदः॥

**अउ47.14**
जीर्णशाल्योदनं क्षौद्रं क्षीरं चन्दनसाधितम्।
शीतान्भोनुपिबेत् भुक्त्वा विषच्छर्दिमपोहति॥

**अउ47.15**
तैलगोविड्सक्षौद्रैर्लिह्यात् कृष्णाप्रियङ्गुके॥

**अउ47.16**
श्वासी क्षौद्रेण वा द्राक्षाशृङ्गीमागधिकासिताः।
गुडनागरवैदेहीविजयामलकानि वा॥

**अउ47.17**
हिध्मायां शङ्खकनककटुकास्वर्णगैरिकम्।
वेल्लशुण्ठीकणोशीररजनीद्वितयानि वा॥

**अउ47.18**
लिह्याद्वा व्योषमृद्वीकां बीजपूररसेन वा।
सक्षौद्रं वालकरजः क्वाथं वा सगुडं पिबेत्॥

**अउ47.19**
विश्वभेषजगायत्रीहरिद्रामरदारुजम्।
दन्तीन्द्रवारुणीद्वीपीकल्कं सौवीरकेण वा॥

**अउ47.20**
तृण्मूर्च्छयोरशिरसो लेपसेका हिमा हिताः।
अम्भोजनालकुसुमचन्दनोशरीमौक्तिकैः।
वैहायससितातोयक्षीराज्येक्षुरसाप्लुतैः॥

**अउ47.21**
वीजनं तालवृन्तेन शीते सिकतिले स्थितिः॥

**अउ47.22**
कमलोत्पलकिञ्जल्कपटलावृतवारिषु।
विषतृड्दाहमूर्च्छाघ्नं सरसीष्ववगाहनम्॥

**अउ47.23**
विषवेगसमुत्थायां तृष्णायां लाजतर्पणम्।
शर्करादाडिमक्षौद्रसलिलाप्लावितं पिबेत्।
वटवेतसजम्ब्वाम्रसेव्यतोयं च शीतलम्॥

**अउ47.24**
भूनिम्बमुस्तकटुकात्रायन्तीन्द्रयवान् समान्।
द्वौ भागौ चित्रकादष्टौ कुटजाद्वारिणा पिबेत्।
विषातिसारोदावर्तकासश्वासज्वरापहम्॥

**अउ47.25**
लोध्रमोचरसाम्बष्ठाधातकीस्तण्डुलाम्बुना।
समाक्षिकाः पिबेत्तद्वन्नागरातिविषाभयाः॥

**अउ47.26**
सधातकीः सकुटजाः साञ्जनाः श्लक्ष्णचूर्णिताः।
पाठानागरचूर्णं वा दध्ना युक्तं समाक्षिकम्॥

**अउ47.27**
बस्तिरुग्वर्तनाहेषु फलवर्तिं प्रयोजयेत्।
सारग्वधां सत्रिवृतां सोपकुल्यां हरीतकीम्।
पिबेत् घृतेन सक्षौद्रां बस्तिशूलादिनाशिनीम्॥

**अउ47.28**
गृहधूमनतश्यामा नीलिनी तण्डुलीयकैः।
सिद्धं वाज्यं तथासिद्धं वरा क्वाथत्रिवृद्युतम्॥

**अउ47.29**
काकोली क्षीरिवृक्षत्वग्द्राक्षायष्ट्याह्वशर्कराः।
नस्यं विषशिरोरुघ्नं संयोज्यं शीतवारिणा॥

**अउ47.30**
श्वयथौ शुद्धकोष्ठस्य पयः पाने हितं शृतम्।
विश्वभेषजवैदेहीकटुकादेवदारुभिः।
सुरसाम्लकल्कैर्वा छागं वा पिप्पलीशृतम्॥

**अउ47.31**
त्रिफलायाः कषायेण त्रिवृता भाविता त्र्यहम्।
आलोड्य सर्पिषा पीता विषश्वयथुनाशिनी॥

**अउ47.32**
मधुवेल्लवराव्योषसुराह्वोशीरपद्मकैः।
विषश्वयथुजिल्लेपस्तथा स्वादुकषायकैः॥

**अउ47.33**
शिरीषपुष्पाहिशिरोनतकुष्ठैर्घृतान्वितः।
धूपोऽगदः श्वयथुजित् समस्तविषनाशनः॥

**अउ47.34**
अल्पेनाप्यपचारेण दंशः पूतित्वमश्नुते।
प्रायो न सहते तीक्ष्णमुष्णं वा भेषजं विषम्॥

**अउ47.35**
मधुरस्निग्धशीतानि युञ्ज्यात्तस्माद्विषव्रणे।
सेकालेपांश्च सक्षीरैः कषायैः क्षीरिवृक्षजैः॥

**अउ47.36**
न्यग्रोधशुङ्गमधुकतिलसर्षपसैन्धवम्।
साभया निम्बपत्राज्यं दंशपूतित्वनाशनम्।
कर्णिकापातनं श्रेष्ठं विषव्रणविनाशनम्॥

**अउ47.37**
रक्ते स्रवत्यतिभृशं घृतं समरिचं पिबेत्।
तण्डुलीयकमूलेन सितया वा समन्वितम्॥

**अउ47.38**
दंशं प्रलेपयेच्चास्य दार्व्या सुश्लक्ष्णपिष्टया।
सितोपलाक्षौद्रघृतच्छागदुग्धानि नावनम्॥

**अउ47.39**
शमीकल्कं पिबेच्छलक्ष्णमङ्गं लिम्पोद्विशालया।
नावने हेमं शुक्ला च ततः शाम्यति शोणितम्॥

**अउ47.40**
क्दशस्यातिस्रुते रक्ते रूक्षैरत्यर्थसेवितैः।
विषस्य च स्वभावेन मातरिश्वा प्रकुप्यति॥

**अउ47.41**
उन्मादाक्षेपकमनोभ्रंशापस्मृतयस्ततः।
तत्रेष्टं स्नेहनं बस्तिनस्यप्रधमानाञ्जनम्॥

**अउ47.42**
नागदन्त्यभयाकुष्ठपिप्पलीवृषकट्फलम्।
भल्लातकास्थिकटुकाबिल्वप्रतिविषाग्निकाः।
सक्षीरं तैर्घृतं सिद्धं विषवातविकारजित्॥

**अउ47.43**
पिबेदेरण्डतैलं वा छागमांसरसान्वितम्।
ऐकध्यं घृततैलं वा मेध्यमांसरसाशनः॥

**अउ47.44**
कार्पासमूलं मरिचं हरिद्रे नलदं नलम्।
पिप्पलीं स्वर्जिकां कुष्ठं जलेनालोड्य पाययेत्।
उन्मत्तं विषवातेन तथापस्मारिणं नरम्॥

**अउ47.45**
वचाहंसपदीव्योषदधित्थं हस्तिपिप्पलीम्।
देवदारुबलाबिल्वकृमिजित् कुष्ठटुण्टुकम्॥

**अउ47.46**
लोध्राखुकर्ण्यतिविषाः क्षीरं सर्पिश्च पाययेत्।
निहन्ति पानाभ्यङ्गाभ्यां घृतं सर्वविषाणि तत्॥

**अउ47.47**
प्रतिकुर्याद्यथास्वं च रोगेष्वेवं परेषु च।
दोषानुबन्धमालोच्य विषतन्त्राविरोधतः॥

**अउ47.48**
दृश्यशब्दागदैरस्य विषशेषं निवर्तयेत्।
अल्पमप्यवशिष्टं हि व्याधये मरणाय वा॥

**अउ47.49**
धवाश्वकर्णतिनिशकरघाटकपीतनान्।
पलाशाम्रातककुभपारिभद्रकतिल्वकान्॥

**अउ47.50**
कपित्थकुटजाङ्कोलप्रग्रहामलकीभुजान्।
शमीश्लेष्मातकाश्मन्तगोजीयमलकण्टकान्॥

**अउ47.51**
चिरिविल्वार्ककट्वङ्गसमङ्गामधुशिग्रुकान्।
गोपघोण्टाहिमारौ च भस्मीकृत्याम्भसा गवाम्॥

**अउ47.52**
क्षारकल्पेनविस्राव्य पचेत् क्षिस्वावचूर्णितान्।
पिप्पलीद्वयकोशास्रसप्तपर्णैलवालुकान्॥

**अउ47.53**
वराङ्गचोचमञ्जिष्ठाकुष्ठवञ्जुलटुण्टुकान्।
विडङ्गातिविषानन्तासर्षपतण्डुलीयकान्॥

**अउ47.54**
सुराह्वसरलप्लक्षगृहधूमकरञ्जकान्।
नागदन्ती सुतश्रेणी निचुलं वरुणं वचाम्॥

**अउ47.55**
वर्द्धमानमयो बिल्वं क्षारवत्पाकमागतम्।
तत् लोहकुम्भे निहितं कार्यं सन्निहितं सदा॥

**अउ47.56**
तेन दुन्दुभिमालिम्बेत् पताकास्तरणानि च।
दर्शनश्रवणस्पर्शैर्निर्विषं तानि कुर्वते॥

**अउ47.57**
पानात् क्षारागदश्चैष विषं स्थावरजङ्गमम्।
शूलगुल्मोदराजर्णिश्वासकासाश्मशर्कराः॥

**अउ47.58**
शोफार्शोग्रहणीदोषानरुचिं च नियच्छति।
अपि तक्षकतुल्यानां सर्पाणां दर्पनाशनः॥

**अउ47.59**
श्रीवेष्टकमनोह्वालं ससर्जरसवालकम्।
कर्षांशं नागपुष्पस्य प्रकुञ्चं त्रुटिविंशकम्॥

**अउ47.60**
हरेणवश्चतुःषष्टिः कुटन्नटचतुष्टयम्।
शताह्वां षोडशैतानि पुष्ये सम्भृत्य पेषयेत्॥

**अउ47.61**
आश्लेषासु गवां मध्ये शस्त्रमन्त्राभिरक्षितम्।
कुमार्या स्नातया तत्र मन्त्रोयं विष्णुनिर्मितः॥

**अउ47.62**
माता मे विजयानाम जयो नाम पिता मम।
अजय्यस्य च पुत्रोसौ विजये च जयामि वः॥

**अउ47.63**
सुगन्धाख्योयमगदो नित्यं देहविलेपनात्।
अभङ्गकरणो युद्धे विवादे च जयावहः॥

**अउ47.64**
अमुना लेपिताश्छत्रदुन्दुभिध्वजतोरणाः।
दृष्टस्पृष्टश्रुता घ्नन्ति विषं स्थावरजङ्गमम्।
भूतबालग्रहोन्मादान् गेहस्थोपि निवारयेत्॥

**अउ47.65**
प्रपौण्डरीकसरलदेवदारुकुटन्नटम्।
जटाशताह्वातिविषातिलपर्णीसुगन्धिका॥

**अउ47.66**
नीलीयिवफलाभार्ङ्गीमधुयष्ट्यैलवालुकम्।
तोयतोयदकालीयतगरध्यामकत्वचः॥

**अउ47.67**
नखपद्मकपुन्नागपत्रकालानुसारिवाः।
तालीसपत्रं मरिचं जोङ्गकं चन्दनद्वयम्॥

**अउ47.68**
द्व्येलाद्विसेव्यद्विता द्विनिशा नलदद्वयम्।
लाक्षाशीतशिवव्योषफलिनीधान्यगैरिकम्॥

**अउ47.69**
शैलेयकशिलापुष्पग्रन्थिला चोरकाभयाः।
अर्कस्थौणेयपृथ्वीका कटुका चन्द्रराजयः॥

**अउ47.70**
कलिङ्गकः सर्जरसः कुष्ठं लवणपञ्चकम्।
श्रीपर्णिकाश्मरीशेलुशिंशपा सिन्दुवारजः॥

**अउ47.71**
चम्पकाशोकसुरससुमनस्तिल्वकोद्भवाः।
पाटल्यास्तृणशूल्याश्च प्रसवाः कुमुदोत्पलम्॥

**अउ47.72**
तिनिशार्जुनशम्याकधवपुष्पं सपङ्कजम्।
पञ्चाशीतेरिदं चूर्णं समूत्रघृतमाक्षिकम्॥

**अउ47.73**
निधापयेत् गवां शृङ्गे मनुष्यं पुनराहरेत्।(मनुष्यं तेन जीवयेत्) भग्नस्कन्धं विवृत्ताक्षं मृत्योर्दंष्ट्रान्तरं गतम्॥

**अउ47.74**
महासुगन्धो नाम्नायमतिवीर्योतितेजसा।
वारयत्यतिदुर्वारं विषाग्निं वासुकेरपि॥

**अउ47.75**
नृपोनेनानुलिप्ताङ्गो भवेत् सर्वजनप्रियः।
तेजस्वितां च लभते राजकस्यापि मध्यगः॥

**अउ47.76**
शीतमेव च कुर्वीत विधानं विषरोगिणाम्।
मुक्त्वा कीटविषं तद्धि शीतेनातिप्रबर्द्धते॥

**अउ47.77**
शालयः षष्टिका जीर्णाः कोरदूषाः प्रियङ्गवः।
मुद्गो हरेणुस्तुवरी पटोलं वेत्रपल्लवाः॥

**अउ47.78**
तण्डुलीयकजीवन्ती वार्ताकं सुनिषण्णकः।
जाङ्गलं दाडिमं धात्री कपित्थं सैन्धवं सिता॥

**अउ47.79**
अविदाहियदन्यच्च विज्ञायान्नस्वरूपतः।
ततद्द्याद्विषार्तेभ्यः कार्या व्यञ्जनसंस्कृतिः।
कषायैर्विषहन्तृणां घृतैः कल्याणकादिभिः॥

**अउ47.80**
दिव्यसारसकूपोत्थमन्यद्वा शृतशीतलम्।
मध्वामलकयुक्तं वा विषार्तः सलिलं पिबेत्।

नदीतटाकजं त्याज्यं विशेषेण घनागमे॥

**अउ47.81**
शुक्लवस्त्रोदरायातैः सुकृताः सक्तवो यवैः।
तक्रेण सघृताः पीताः परमं विषनाशनाः॥

**अउ47.82**
तिलमद्यकुलत्थक्षुत्क्रुद्धयायासमैथुनम्।
वर्जयेद्विषमुक्तोपि दिवास्वप्नं विशेषतः॥

**अउ47.83**
प्रशान्तदोषं प्रकृतिस्थधातु माहारकामं सममूत्रविट्कम्।
प्रसन्नवर्णेन्द्रियचित्तचेष्टं वैद्योवगच्छेदविषं मनुष्यम्॥
॥इति सप्तचत्वारिंशोऽध्यायः॥

अथ अष्टचत्वारिंशोऽध्यायः।

**अउ48.1**
अथातो विषोपयोगीयं नामाध्यायं व्याख्यास्यामः इति ह स्माहुरात्रेयादयो महर्षयः।
विषे प्रतिविषं योज्यं मन्त्रतन्त्रैरसिध्यति।
अतीते पञ्चमे वेगे सप्तमस्यानतिक्रमे।
प्रभोनिर्वये प्रयतो नैव वाख्याय कस्यचित्॥

**अउ48.2**
सिद्धमन्त्रधरः कृत्वा धरणीबन्धमादितः।
नहि मन्त्रसहायस्य विषं यात्यविधेयताम्॥

**अउ48.3**
श्लेष्मतुल्यगुणं प्रायः स्थिरमूर्ध्वगमं विषम्।
प्रायः पित्तगुणैर्युक्तमधोगामि च जङ्गमम्॥

**अउ48.4**
गुणैरिति विपर्यस्तैर्निहतस्ते परस्परम्।
युञ्ज्यान्मूलविषं तस्माद्दष्टानां पानलेपयोः॥

**अउ48.5**
विषपीतं च कुशलो दंशयेत् पवनाशिभिः।
न विषप्रतिमं किञ्चिन्निर्विषीकरणं विषे॥

**अउ48.6**
चतुर्भिः षड्भिरष्टाभिर्हीनमध्योत्तमां यवैः।
मात्रां विषस्य मौलस्य प्रयुञ्जीत यथायथम्॥

**अउ48.7**
दष्टस्य द्वौ यवौ कीटैस्तिलमात्रं तु वृश्चिकैः।
नैव स्वसृक्स्थे पाने तु लूतादष्टस्य नेष्यते॥

**अउ48.8**
सविषे युक्तममृतं विषमेवाविषे विषम्।
अबले चातिबलवद्व्यापन्नं च प्रयोगतः॥

**अउ48.9**
सविषाविषशङ्कायामगदानुपयोजयेत्।
अविरुद्धान् प्रयुक्तो हि निर्विषस्यागदो गदः॥

**अउ48.10**
तद्वच्च सविषत्यापि क्रियाकालातिपाततः।
जानीयाद्विषसद्भावं भिषक्तस्मात् प्रयत्नतः॥

**अउ48.11**
साक्तुकं मुस्तकं शृङ्गी वालकं सर्षपाह्वयम्।
वत्सनाभं च कर्मण्यं विषं स्निग्धं घनं गुरु। नजात्वन्यत् प्रयोक्तव्यं कालकूटं विशेषतः॥

**अउ48.12**
विषेऽवचारिते तीक्ष्णे पेयं घृतमनन्तरम्।
सभार्ङ्गीदधिधूमोत्थसारिवातण्डुलीयकम्॥

**अउ48.13**
अगारधूममञ्जिष्ठायष्ट्याह्वैर्वा समन्वितम्।
लिह्याद्वा मधुसर्पिर्भ्यां चूर्णितामर्जुनत्वचम्॥

**अउ48.14**
क्षीरक्षौद्रघृतैर्युक्तं पीतं हन्ति विषं विषम्।

**अउ48.15**
ससिन्दुवारतगरं मृतसञ्जीवनं विषम्॥

**अउ48.16**
शिरीषकुसुमं वक्रं विषमाखुविषापहम्॥
देवदारुनतंमांसी द्रामिलीबाकुचीविषम्।
कुष्टं च पानलेपाभ्यां समस्तविषशाशनम्॥

**अउ48.17**
मनश्शिलाञ्जनालैला सिन्दुवारामराह्वयम्।
सरक्ताकुंकुमविषं ध्मानं निस्संज्ञबोधनम्॥

**अउ48.18**
दाहे विषोद्भवे लेपः सक्तुक्षीरघृतैर्हितः॥

**अउ48.19**
यस्तु संरोषितो भोगी धूमं वक्त्राद्विमुञ्चति।
दण्डाग्रे पिशितं बध्वा बहुशस्तेन दंशयेत्॥

**अउ48.20**
अशक्यमगदैरन्यैर्विषपीतं चिकित्सकः।
पाययेन्मांसचूर्णं तं ज्ञात्वा विषबलाबलम्॥

**अउ48.21**
अन्येष्वपि च रोगेषु शेषोपायपरिक्षये।
विषं युञ्जीत नित्यं च रसायनगवेषिणः॥

**अउ48.22**
घृतोपस्कृतदेहस्य विशुद्धस्य हिताशिनः।
सात्विकस्योदिते भानौ योज्यं शीतवसन्तयोः॥

**अउ48.23**
ग्रीष्मेप्यात्ययिके व्याधौ न च वर्षासु दुर्दिने॥

**अउ48.24**
न क्रोधने न पित्तार्ते न क्लीबे राजनि द्विजे।
क्षुतृष्णाश्रमघर्माध्वव्याध्यन्तरनिपीडिते।
गर्भिणीबालवृद्धेषु न रूक्षेषु न मर्मसु॥

**अउ48.25**
अभ्यस्तेपि विषे यत्नाद्वर्जनीयान् विवर्जयेत्।
कट्वम्लतैललवणदिवास्वप्नातपानलान्।
रूक्षमन्नं विशेषेण भयं वाजीर्णतः सदा॥

**अउ48.26**
दृग्विभ्रमं कर्णरुजामन्यांश्चानिलजान् गदान्।
विषं रूक्षाशिनः कुर्यान्मृत्युमेव त्वजीर्णतः॥

**अउ48.27**
अलं गोमूत्रसंयुक्तमातपे शोषयेत् त्र्यहम्।
विषं बृंहणमेतद्धि विषस्यादौ प्रशस्यते॥

**अउ48.28**
तत् पिबेन्मस्तुना वातज्वरे क्षीरेण पैत्तिके।
युक्तं मूत्रेण कफजे सर्वजे त्रिफलाम्भसा॥

**अउ48.29**
लोध्रचन्दनषड्ग्रन्थाशर्कराघृतमाक्षिकैः।
क्षीरेण च विषं युक्तं जीर्णज्वरहरं परम्॥

**अ उ48.30**
निकुम्भकुम्भत्रिफलासर्पिर्मधुविषैः कृतः।
निहन्ति मोदको जीर्णज्वरमेहत्वगामयान्।
शिखिकर्किरसोपेतं विषमज्वरजिद्विषम्॥

**अ उ48.31**
विषं यष्ट्याह्वयं रास्नासेव्यमुत्पलकन्दकम्।
तण्डुलोदकपीतानि रक्तपित्तस्य भेषजम्॥

**अ उ48.32**
विषं रसाञ्जनं भार्ङ्गी वृश्चिकाली महासहा।
सवेदने सपाके च व्रणे दुष्टे प्रलेपनम्॥

**अ उ48.33**
सिताविषक्षीरतरुप्रवाला मधुना द्रुताः।
श्वासहिध्मापहा लीढाश्छर्दिध्न्यस्तु विषान्विताः।
क्षौद्रोशीरमधुक्षाररजनीकुटजत्वचः॥

**अ उ48.34**
विजयापिप्पलीमूलपिप्पलीद्वयचित्रकैः।
पुष्कराह्वशठीद्राक्षायवानीक्षारदीप्यकैः॥

**अ उ48.35**
सितायष्टीद्विबृहतीसैन्धवैः पालिकैः पचेत्।
सविषार्द्धपलैः प्रस्थं घृतात्तज्जीर्णभुक्पिबेत्॥

**अ उ48.36**
दुर्नाममेहगुल्मार्मतिमिरक्रिमिपाण्डुताः।
गलग्रहग्रहोन्मादकुष्ठानि च नियच्छति॥

**अ उ48.37**
कृच्छ्रघ्ना विषपथ्याग्निदन्तीद्राक्षानिशाविषाः।
शिलाजतु विषं मूत्रमुदावर्ताश्मरीहरम्॥

**अ उ48.38**
गोमूत्रक्षारसिन्धूत्थं विषं पाषाणभेदकम्।
वज्रवद्दारयत्येतदेकतः पीतमश्मरीम्॥

**अ उ48.39**
समूला पिप्पली मूत्रं विषं शूलहरं तथा।
विषद्रवन्तीमधुकद्राक्षारास्नाशठी कणाः॥

**अ उ48.40**
एरण्डतैलं त्रिफला गोमूत्रं चित्रको विषम्।
सर्पिषा सहितं पीतं वाताण्डत्वमपोहति॥

**अ उ48.41**
त्रिफला स्वर्जिकाक्षारो विषं गुल्मप्रभेदनम्।
विषवेल्लमिसिक्षीरं गुल्मप्लीहनिबर्हणम्॥

**अ उ48.42**
प्लीहोदरघ्नं पयसा शताह्वा क्रिमिजिद्विषम्॥

**अ उ48.43**
वायसीमूलनिष्क्काथपीतं कुष्ठहरं विषम्॥

**अ उ48.44**
वायस्याराजवृक्षत्वक्त्रायन्तीबाकुचीफलात्।
प्लीहघ्नेभकणाभ्यां च विषं क्वाथेन कुष्ठजित्॥

**अ उ48.45**
अवल्गुजैडगजयोर्बीजं क्षारद्वयं विषम्।
लेपः ससैन्धवः पिष्टो वारिणा कुष्ठनाशनः॥

**अ उ48.46**
चित्रकार्कजटाहस्तिपिप्पलीबाकुचीविषैः।
गोमूत्रपिष्टैरन्योन्योमनोह्वास्नुक्पयोविषैः॥

**अउ48.47**
सचन्द्रलेखैडगजकरञ्जफलसैन्धवैः।
सव्योषस्वर्जिकाक्षारयवक्षारनिशाद्वयैः।
अगारधूमसहितैर्बस्तमूत्रेण कल्कितैः।
भल्लातकाग्निशम्याकविषैर्गोमूत्रपेषितैः।
लेपो विचर्चिकाददुशतारुःकिटिभापहः।
शम्याकपत्रत्वङ्मूलं विषं तक्रं च तद्गुणम्॥

**अउ48.48**
विषभल्लातकद्वीपिगुञ्जानिम्बफलैर्जयेत्।
लेपोम्लपिष्टैः श्वित्राणि पुण्डरीकं च दारुणम्॥

**अउ48.49**
वक्रकुष्ठरसद्वीपिस्पृक्कापत्रैलवालुकम्।
पिष्टं खदिरतोयेन त्रिरात्रमुषितं पिबेत्॥

**अउ48.50**
श्वित्री विषेण संसृष्टं ततः स्फोटान् किलासजान्।
कण्टकेन विभिद्यानु लेपैर्लिम्पेत कौष्ठिकैः॥

**अउ48.51**
अथवा करवीरार्कमूलबाकुचिकाविषैः।
बताम्बुपिष्टैः सद्वीपिद्विपपिप्पल्यरुष्करैः॥

**अउ48.52**
लाक्षासुराह्वामञ्जिष्ठाकुष्ठपद्मकसारिवाः।
गुञ्जाफलं कुरबको लाङ्गली वज्रकन्दकः॥

**अउ48.53**
वाराहीकन्दकास्फोता सप्ताह्वगिरिकर्णिकाः।
अर्काश्वमारयोर्मूलं नागपुष्पं नतं निशे॥

**अउ48.54**
दन्ती विषं सातिविषं पिप्पली मरिचानि च।
तैस्तैलं कटुतैलं वा श्वित्रस्याभ्यञ्जनं पचेत्।
सवर्णीकरणं श्रेष्ठमास्तिकस्य वचो यथा॥

**अउ48.55**
वीरा लाङ्गलिकी दन्ती विषपाषाणभेदकैः।
प्रयोज्यो मूढगर्भाणां प्रलेपो गर्भमोचनः॥

**अउ48.56**
स्वरसं बीजपूरस्य वचां ब्राह्मीरसं घृतम्।
बन्ध्या पिबन्ती सविषं सुपुत्रैः परिवार्यते॥

**अउ48.57**
नष्टशुक्रः पयो द्राक्षाकपिकच्छु वचा विषम्॥

**अउ48.58**
विषं सर्पिः सिता क्षौद्रं तिमिरापहमञ्जनम्।
विषं चैकमजाक्षीरकल्कितं घृतधूपितम्॥

**अउ48.59**
विषं धात्रीफलरसैरसकृत् परिभावितम्।
अञ्जनं शङ्खसहितं प्रगाढतिमिरप्रणुत्॥

**अउ48.60**
विषमिन्द्रायुधं स्तन्ये घृष्टं काचजिदञ्जनम्।
बीजपूररसे घृष्टं विषं तद्वत्सितायुतम्।
विषं मागधिका द्वे च निशे काचघ्नमञ्जनम्॥

**अउ48.61**
शुक्लार्मजिद्विषं कृष्णायुक्तं गोमूत्रभावितम्॥

**अउ48.62**
समुद्रफेनस्फटिककुरुविन्दसुधाञ्जनम्।
कूर्मपृष्ठं च तुल्यानि तेभ्योर्द्धांशा मनश्शिला॥

**अउ48.63**
अर्द्धहीनानि मरिचसैन्धवायोरजांसि च।
अतो यथोत्तरं दद्यादयसा च समं विषम्।
रसक्रियेयं मधुना शुक्लपिल्लार्मकाचहृत्॥

**अउ48.64**
अभीक्ष्णं शीततोयेन सिञ्चेन्नेत्रे विषाञ्जिते॥

**अउ48.65**
रसोनकन्दमरिचविषसर्षपसैन्धवैः।
पिल्लेक्षि लिखितं पूर्वं सुरसारसपेषितैः॥

**अउ48.66**
पूरयेत् सर्पिषा चानु सर्पिरेव च पाययेत्।
मधूकसारमधुकविषक्षीरजलैर्घृतम्।
पक्वं सन्तर्पणं श्रेष्ठं रात्र्यन्धत्वे चिरोत्थिते॥

**अउ48.67**
नस्यं शिरोरुक्शमनं प्रत्यक्पुष्पी सिता विषम्।
अथवा घृतयष्ट्याह्वशर्करा विषसंयुताः॥

**अउ48.68**
शुण्ठी पथ्या विषं पाठा द्रवन्ती पूतिनासजित्॥

**अउ48.69**
कटुतैलं विषं नस्यं पलितारूंषिकापहम्॥

**अउ48.70**
स्वर्जिकाक्षारसिन्धूत्थशुक्तयुक्तं विषं परम्।
कर्णयोः पूरणं तीव्रकर्णशूलनिबर्हणम्॥

**अउ48.71**
प्रपौण्डरीकमञ्जिष्ठाविषसिन्धुसमुद्भवैः।
निहन्ति साधितं तैलं गण्डूषेण मुखामयान्॥

**अउ48.72**
देवदारु विषं सर्पिर्गोमूत्रं कण्टकारिका।
वाचःस्खलनतां हन्ति पीतमित्याह काश्यपः॥

**अउ48.73**
शत्रुप्रयुक्ताद्विषतो गराद्वा।
लूताभुजङ्गाखुगणाज्जरायाः।
अकालमृत्योर्ग्रहपाप्मतो वा।
विषाशिनो नास्ति भयं नरस्य॥
।इति अष्टचत्वारिंशोऽध्यायः।
॥इति विषतन्त्रंनाम षष्ठमङ्गं सम्पूर्णम्॥

अथ एकोनपञ्चाशोऽध्यायः।

**अउ49.1**
अथातो रसायनविधिं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः।
दीर्घमायुः स्मृतिं मेधामारोग्यंअ तरुणं वयः।
प्रभा वर्णस्वरौदार्यं देहेन्द्रियबलोदयम्॥

**अउ49.2**
वाक्सिद्धिं वृषतां कान्तिमवाप्नोति रसायनात्।
लाभोपायो हि शस्यानां रसादीनां रसायनम्॥

**अउ49.3**
पूर्वे वयसि मध्ये वा तत्प्रयोज्यं जितात्मनः।
स्निग्धस्य सृतरक्तस्य विशुद्धस्य च सर्वथा॥

**अउ49.4**
अविशुद्धे शरीरे हि युक्तो रासायनो विधिः।
न भाति मलसंसृष्टे वस्त्रे राग इवार्पितः॥

**अ३49.5**
युक्तं संस्कारहीनस्य सम्यगप्यप्रमादिनः।
यथैव पौरुषं तद्वन्नसिध्यति रसायनम्॥

**अ३49.6**
सर्वे च दोषा भवन्ति ग्राम्यादाहारादम्ललवणकटुकक्षारविरुद्धासात्म्यरूक्षाभिष्यन्दिक्लिन्नगुरुपूतिपुर्युषितनवधान्यशुष्कशाकाममांसतिलकुलत्थदधिशुक्तकाञ्जिकपिष्टान्नविरूढकनिषेविणां दिवास्वप्नस्त्रीमद्यनित्यानां विषमातिमात्रव्यायामायामसङ्क्षोभितवपुषां क्रोधलोभभयशोकायासबहुलाना पापकर्मणामसमञ्जसाहारविहारनिर्हारनिरतानाम्॥

**अ३49.7**
अतो निमित्तं ह्यविशुद्धः सञ्जायते रसो विदह्यते रक्तं शिथिलीभवन्ति मांसानि विष्यन्दते मेदो दूष्यन्ते दोषा विमुच्यन्ते सन्धयो न सन्धीयन्तेऽस्थिषु मज्जानो नाप्यायते शुक्रं नौजो न बलं न वीर्यम्॥

**अ३49.8**
ततः स एवंभूतो ग्लायति सीदति निद्रातन्द्रालस्यसमन्वितः खिद्यते निर्विद्यते निरुत्साहोऽसमर्थः शारीरमानसानां विशिष्टानां चेष्टानां भ्रष्टच्छायो नष्टस्मृतिरल्पबुद्धिरसम्पाद्यमानाभिलषितार्थोऽहर्निशमनिशमनिशं निश्वसन्नधिष्ठानभूतो रोगाणां नोपात्तमपि सर्वमायुरवाप्नोति॥

**अ३49.9**
तस्मात् बुद्धिमानपास्य यथोक्तानाहारादिदोषान् निर्वाह्य च पूर्वोपचितान् रसायनं विधिविहितमुपसेवेत॥

**अ३49.10**
तत्तु द्विविधं कुटीप्रावेशिकं वातातपिकं च।
तत्र वीर्यप्रभावप्रयोगपरिहारगुरुत्वात् कुटीप्रावेशिकं महाफलतरम्॥

**अ३49.11**
तस्य विधिः क्षेमसुभिक्षधार्मिकशद्धानजननृपवैद्यविप्रे सुलभमहौषधिघृतक्षीरपथ्यभोजनोपकरणे ग्रमे नगरे वा पूर्वोत्तरस्यांदिशि प्रागुदक्प्रवणे सुविभक्तविहारोद्देशे देशे दृढघनसुमृष्टभित्तिमुत्सेधविस्तारसम्पन्नां सूक्ष्मलोचनां त्रिगर्भामृतुसुखां निर्वातां प्रवातैकदेशां प्राग्द्वारामुदग्द्वारां वा शमीविल्वक्षीरिवृक्षपरिगृहीतामनिष्टेन्द्रियार्थवातातपरजोधूमस्वेदक्लेददंशमशकसरीसृपव्यालबालस्त्रीदासान्तावसायिनामगम्यां सन्निहितसद्वैद्यपरिचारकोपकरणां कुटीं कारयेत्॥

**अ३49.12**
तस्यां रसायनार्थी शरदि वसन्ते वा शुक्लपक्षे प्रशस्ते अहनि पूजयित्वा यथार्हं देवगुरुविप्रान् प्रणम्य ब्रह्मदक्षाश्विप्रभृतीन् परिमृश्य सुवर्णघृतमधुसिद्धार्थकप्रियङ्गुरोचनाः प्रदक्षिणीकृत्य गोब्राह्मणाननु प्रविशेत्॥

**अ३49.13**
तत्र संशोधनैः शुद्धः सुखी जातबलः पुनः।
ब्रह्मचारी धृतियुतः श्रद्दधानो जितेन्द्रियः॥

**अ३49.14**
दानशीलदयासत्यव्रतधर्मपरायणः।
देवतानुस्मृतौ युक्तो युक्तस्वप्नप्रजागरः।
प्रियौषधः पेशलबागारभेत रसायनम्॥

**अ३49.15**
हरीतकीमामलकं सैन्धवं नागरं वचाम्।
हरिद्रां पिप्पलीं वेल्लं गुडं चोष्णाम्बुना पिबेत्।
स्निग्धस्विन्नो नरः पूर्वं तेन साधु विरिच्यते॥

**अ३49.16**
ततः शुद्धशरीराय कृतसंसर्जनाय च।
त्रिरात्रं पञ्चरात्रं वा सप्ताहं वा घृतान्वितम्।
दद्याद्यावकमाशुद्धेः पुराणशकृतोऽथवा॥

**अ३49.17**
इत्थं संस्कृतकोष्ठस्य रसायनमुपाहरेत्।
यस्य यद्यौगिकं पश्येत् सर्वमालोच्य सात्म्यवित्॥

**अ३49.18**
हरणात् सर्वरोगाणां यासावुक्ता हरीतकी।
पथ्यत्वात् सर्वधातूनां पथ्या शिवतया शिवा॥

**अ३49.19**
यस्माद्विजयते व्याधीन् समग्रान्विजया ततः।
अभयं सर्वरोगेभ्यो भवत्यायुश्च शाश्वतम्।
यतः शीलयतामेनां तेनेयमभया स्मृता॥

**अउ49.20**
नवा वृत्ता घना स्निग्धा गुर्वी मज्जति चाप्सु या।
बालस्य सा प्रयोक्तव्या नवनीतसमन्विता॥

**अउ49.21**
वाते ससर्पिर्लवणा पित्ते सगुडशर्करा।
कफे सपिप्पलीक्षौद्रा सर्वदा सा प्रशस्यते॥

**अउ49.22**
अथ हरीतकीनां हिमवच्छैलसम्भवानां कालजातानामापूर्णरसवीर्याणामनामयानां द्विशस्त्रिशो वा शकलितानामनस्थ्नामाढकं चतुर्गुणेन पयसा संस्वेद्य मृदुभूतमवतार्य शीतं सर्पिर्मध्वाढकाभ्यां संसृज्य सुगुप्तं स्थापयेत्।
ततस्त्रिरात्रादूर्ध्वमाहारानुपरोधिनीं मात्रां प्रत्यहमुपयोजयेत् जीएणे शालिषष्टिकं पयसा भुञ्जीत।
प्रयोगान्ते च तावन्तमेव कालम्।
अस्य प्रयोगाद्वर्षशतमजरो निर्वलीखलतिपलितामयः श्रुतिस्मृतिसम्पन्नः समिद्धानलश्च पुरुषो भवति॥

**अउ49.23**
बृहच्छरीरं गिरिसारसारं स्वरो घनौघस्तनितानुकारी।
भवत्यपत्यं विपुलं स्थिरं च समश्नतो योगमिमं प्रयत्नात्॥

**अउ49.24**
पथ्यासहस्त्रं त्रिगुणधात्रीफलसमन्वितम्।
पञ्चानां पञ्चमूलानां सार्द्धं पलशतद्वयम्॥

**अउ49.25**
जले दशगुणे पक्त्वा दशभागस्थिते रसे।
आपोथ्य कृत्वा व्यस्थीनि विजयामलकान्यथा॥

**अउ49.26**
विनीय तस्मिन् निर्यूहे योजयेत् कुडवांशकम्।
त्वगेलामुस्तरजनीपिप्पल्यगरुचन्दनम्॥

**अउ49.27**
मण्डूकपर्णीकनकशङ्खपुष्पीवचाप्लवम्।
यष्ट्याह्वयं विडङ्गं च चूर्णितं तुलयाधिकम्॥

**अउ49.28**
सितोपलार्द्धभारं च प्रात्राणि त्रीणि सर्पिषः।
द्वे च तैलात् पचेत् सर्वं तदग्नौ लेहतां गतम्॥

**अउ49.29**
अवतीर्णं हिमं युञ्ज्याद्विंशैः क्षौद्रशतैस्त्रिभिः।
ततः खजेन मथितं निदध्यात् घृतभाजने॥

**अउ49.30**
एतद्रसायनं ब्राह्मं समं पूर्वेण सर्वथा।
वैखानसा बालखिल्याः प्राश्य प्राप्ता नवं वयः।
आरोग्यममितंचायुर्वीततन्द्राश्रमक्लमाः॥

**अउ49.31**
अभयामलकविभीतकपञ्चात्मकपञ्चमूलनिर्यूहे।
वल्लीपलाशकरसे द्विगुणे क्षीरेष्टगुणे च विपचेत्॥

**अउ49.32**
घृतस्यकुम्भं मधुकं मधूकं काकोलियुग्मं च बलां स्वगुप्ताम्।
सक्षीरशुक्लामृषभं सजीवं सुखाम्बुपस्तच्चपिबेत् गुणाढ्यम्॥

**अउ49.33**
आमलकसहस्त्रं पिष्टस्वेदनविधानेन क्षीरोष्मणा सुस्विन्नमनातपशुष्कमनस्थि चूर्णयेत्।
तदामलकसहस्रस्वरसपरिपीतं
स्थिराजीवन्तीपुनर्नवानागबलामण्डूकपर्णीब्रह्मसुवर्चलाभीरुशङ्खपुष्पीवचापिप्पलीविडङ्गस्वगुप्तामृतागरुचन्दनमधुकमधूकपुष्पपद्मोत्पलनवमालिकायुवतियूथिकाचूर्णाष्टभागसम्पृक्तं पुनर्नागबलापलसहस्रस्वरसपरिपीतं छायोपशोषितं द्विगुणितसर्पिषा क्षौद्रेण क्षुद्रगुडाकृति कृत्वा घृतभाजनस्थं भस्मराशेरधः स्थापयेदन्तर्भूमेः पक्षमथर्ववेदवित्कृतरक्षं पक्षात्यये चोद्धृत्य कनकरजतताम्रप्रवालकालायश्चूर्णाष्टभागसंयुक्तमर्द्धकर्षाभिवृद्ध्या यथाग्नि प्रातः प्रयोजयेदिति समानं पूर्वेण॥

**अउ49.34**
आमलकसहस्रमार्द्रपलाशद्रोण्यां सापिधानायां बाष्पमनुद्वमन्त्यामारण्यगोमयाग्निभिरुपस्वेदयेत्।
तानि सुस्विन्नशीतान्युद्धृत्य निष्कुलीकृतान्यापोथ्य पिप्पली विडङ्गतण्डुलानां पृथगाढकेनाध्यर्द्धेन शर्करायाः षड्भिर्मधुघृततैलानां संयोज्य घृतकुम्भे स्थापयेद्विंशतिरात्रं परं चोपयोजयेदिति समानं पूर्वेण॥

**अउ49.35**
अभयामलकसहस्रं पिप्पलीसहस्रयुक्तं तरुणपलाशक्षारोदकेनाप्लाव्य शुचौ भाण्डे स्थापयेत्।
ततोनुगतक्षारमनातपशुष्कमास्थिरहितं चूर्णयित्वा सितोपलापादेन चतुर्गुणाभ्यां च मधुघृताभ्यां संयोज्य घृतभाजने षण्मासानन्तर्भूमेः स्थापयित्वा परतो यथाग्निबलमुपयुञ्जीतेति समानं पूर्वेण॥

**अउ49.36**
आमलकचूर्णाढकमेकविंशतिरात्रमामलकस्वरसभावितं मधुघृताढकाभ्यां पिप्पलीचूर्णाष्टभागेन शर्कराचतुर्भागेन च संसृष्टं घृतभाजनस्थं प्रावृषि भस्मराशौ निदध्यात्।
तच्छरदि चोपयोजयेदिति समानं पूर्वेण॥

**अउ49.37**
विडङ्गतण्डुलानामाढकमाढकं पिप्पलीतण्डुलानामध्यर्द्धं सितोपलानां मधुघृततैलाढकैः षड्भिरेकीकृतं घृतभाजनस्थं प्रावृषि भस्मराशावितिसमानं पूर्वेण॥

**अउ49.38**
अभयामलकबिभीतकानां द्विशस्त्रिशो वा संयोजितानां पलाशत्वगवनद्धानां मृदावलिप्तानां कुकूलस्विन्नानां निरस्थीकृतानां पलसहस्त्रमुलूखले सङ्क्षुद्य दधिभधुघृततैलपललशर्करासम्पृक्तं भक्षयेदनन्नभुग्यथोक्तेन विधिना प्रयोगान्ते ततो द्विगुणं कालं यवागूयूषक्षीरघृतषष्टिकान्नमाहारोभ्यञ्जनं सर्पिरुद्वर्तनं यवचूर्णमिति समानं पूर्वेणाभ्यधिकफलं वा॥

**अउ49.39**
दशमूलबलामुस्तजीवकर्षभकोत्पलम्।
पर्णिन्यौ पिप्पली शृङ्गी मेदा तामलकी त्रुटिः॥

**अउ49.40**
जीवन्ती जोङ्गकं द्राक्षा पौष्करं चन्दनं शठी।
पुनर्नवद्विकाकोली काकनासामृताद्वयम्॥

**अउ49.41**
विदारी वृषमूलं च तदैकध्यं पलेन्मितम्।
जलद्रोणे पचेत् पञ्च धात्रीफलशतानि च॥

**अउ49.42**
पादशेषं रसं तस्माद्व्यस्थीन्यामलकानि च।
गृहीत्वा भर्जयेत्तैलघृताद्वादशभिःपलैः॥

**अउ49.43**
मत्स्यण्डिकातुलार्धेन युक्तं तल्लेहवत् पचेत्।
स्नेहार्द्धं मधुनः शीते तुगाक्षीर्याश्चतुष्पलम्॥

**अउ49.44**
पिप्पल्या द्वे पले दद्याचतुर्जातं कणार्धिकम्।
अतोवलेहयेन्मात्रां कुटीस्थं पथ्यभोजिनम्॥

**अउ49.45**
इत्येष च्यवनप्राशो यं प्राश्य चय्वनो मुनिः।
जराजर्जरितोप्यासीन्नारीनयननन्दनः॥

**अउ49.46**
कासं श्वासं ज्वरं शोषं हृद्रोगं वातशोणितम्।
मूत्रशुक्राश्रयान्तोषान् वैस्वर्यं च व्यपोहति।
बालवृद्धक्षतक्षीणकृशानामङ्गवर्द्धनः॥

**अउ49.47**
मेधां स्मृतिं कान्तिमनामयत्वमायुःप्रकर्षं पवनानुलोम्यम्।
स्त्रीषु प्रहर्पं बलमिन्द्रियाणामग्नेश्च कुर्याद्विधिनोपयुक्तः॥

**अउ49.48**
मधुकेन तवक्षीर्या पिपल्या सिन्धुजन्मना।
पृथग्लोहैः सुवर्णेन वचया मधुसर्पिषा॥

**अउ49.49**
सितया वा समायुक्ता समायुक्ता रसायनम्।
त्रिफला सर्वरोगघ्नी मेधायुःस्मृतिबुद्धिदा॥

**अउ49.50**
त्रैफलेनायसीं पात्रीं कल्केनालेपयेन्नवाम्।
तमहोरात्रिकं लेपं पिबेत् क्षौद्रोदकाप्लुतम्॥

**अउ49.51**
प्रभूतस्नेहशमनं जीर्णे तत्र प्रशस्यते।
जीवत्यरुग्जरस्तस्य समाभ्यासात्समाः शतम्॥

**अउ49.52**
वर्षं खादेत् प्राणदां प्रातरेकामश्नन्नन्नात् पूर्वमक्षद्वयं च।
साज्यक्षौद्रं भोजनान्ते चतुष्कं धात्रीकानां तद्वयःस्थापनेऽलम्॥

**अउ49.53**
अथायसानि चतुरङ्गुलदीर्घविस्तृतानि तिलोत्सेधानि पत्राणि कारयेत्।
तन्न्यग्निवर्णानि कृत्वामलकस्वरसे निर्वापयेदेकविंशतिकृत्वः।
तेषां तादृशानां पलशतमायस्यां स्थाल्यां प्रक्षिप्यामलकस्वरसोत्तरं कृत्वा सुपिहितं भस्महितं भस्मराशौ निखनेत्।
मासि मासि चोद्धृत्यायसेन दण्डेन घट्टयेत्।
शुष्यत्यामलकस्वरसं पूर्ववदावपेत्।
एवं तानि लोहपत्राणि संवत्सरात् द्रवीभवन्ति।
ततश्चोत्तरकालं कृत्वा वमनविरेचनं स्निग्धतनुरेव केवलं समन्ततोऽङ्गुष्ठपर्वमात्रमुखेनायसेन स्रुवेणायस एव भाजने तस्मात् कल्कीकृतात् स्रुवमेकं गृहीत्वा मधुधृताभ्यां पृथक् स्रुवेण संयोज्य प्राश्नीयात्।
जीर्णे क्षीररसयूषाणामन्यतमेन सर्पिर्मिश्रं नवं षष्टिकौदनमश्नीयात्।
अनेन विधिना वर्षमुपयुज्य वर्षमेव चान्यदप्युद्दिष्टाहारो यन्त्रितात्मा कुटीं समधिवसेत्।
ततः सर्वोपतापान् जित्वा व्याधिजरामरणशस्त्राग्नितोयविषाणामगम्यः सर्वभावेष्वतीन्द्रियो वर्षसहस्रद्वयं जीवति॥

**अउ49.54**
वाजिवेगो गजप्राणो भवेच्च स्मृतिबुद्धिमान्।
वाग्मी वृषः श्रुतधरो महाभोगो महाधनः॥

**अउ49.55**
ताम्ररूप्यसुवर्णानामयमेव पृथग्विधिः।
द्विगुणं तद्गुणोत्कर्षं जानीयादुत्तरोत्तरम्॥

**अउ49.56**
हेमधात्रीफलक्षौद्रं गायत्रीपरिमन्त्रितम्।
लिहन्ननुपिबन् क्षीरं दृप्टरिष्टोपि जीवति॥

**अउ49.57**
सुवर्णं पद्मबीजानि मधु लाजाः प्रियङ्गवः।
क्षीरेण पीतं परममलक्ष्मीविनिवारणम्॥

**अउ49.58**
सपद्मबीजामलकाभयाक्षं सर्पिर्मधुभ्यां कनकं लिहन्तः।
दीर्घायुषो मन्दजरोपतापाः सरीसृपाणां च भवन्त्यगम्याः॥

**अउ49.59**
मधुमागधिकाविडङ्गसारत्रिफला हेम घृतं सितां च खादन्।
जरसानवलीढदेहकान्तिः समधातुश्च समाः शतं च जीवेत्॥

**अउ49.60**
हेमबिल्ववचासीपरैकध्यमुपयोजितम्।
मेध्यमायुष्यमारोग्यकान्तिसौभाग्यपुष्टिदम्॥

**अउ49.61**
शतावरीघृतं लीढं ससुवर्णं समाक्षिकम्।
करोति चिरजीवित्वं राजानं च वशानुगम्॥

**अउ49.62**
आयुष्कामः शङ्खपुष्प्यासमेतं मेधाकामः काञ्चनं सोग्रगन्धम्।
लक्ष्मीकामः पद्मकिञ्जल्कयुक्तं युक्तं खादेत् कामकामो विदार्या॥

**अउ49.63**
मण्डूकपर्ण्याः स्वरसं यथाग्नि क्षीरेण यष्टीमधुकस्यचूर्णम्।
रसं गुडूच्याः सहमूलपुष्प्याः कल्कं प्रयुञ्जीत च शङ्खपुष्प्याः॥

**अउ49.64**
आयुःप्रदान्यामयनाशनानि बलाग्निवर्णस्वरवर्द्धनानि।
मेध्यानि चैतानि रसायनानि मेध्या विशेषेण तु शङ्खपुष्पी॥

**अउ49.65**
नलदं कटुरोहिणी पयस्या मधुकं चन्दनसारिवोग्रगन्धाः।
त्रिफला कटुकत्रयं हरिद्रे सपटोलं लवणं च तैः सुपिष्टैः॥

**अउ49.66**
त्रिगुणेन रसेन शङ्खपुष्प्याः सपयस्कं घृतनल्वणं विपक्वम्।
उपयुज्य भवेज्जडोपि वाग्मी श्रुतधारी प्रतिभानवानरोगः॥

**अउ49.67**
पेष्यैर्मृणालविसकेसरपत्रबीजैः सिद्धं सहेमशकलं पयसा च सर्पिः।
पञ्चारविन्दमिति तत्प्रथितं पृथिव्यां प्रभ्रष्टपौरुषबलप्रतिभैर्निषेव्यम्॥

**अउ49.68**
यन्नालकन्ददलकेसरवद्विपकं नीलोत्पलस्यतदपि प्रथितं पृथिव्याम्।
सर्पिश्चतुष्कुवलयं सहिरण्यपत्रं मेध्यं गवामपि भवेत् किमुमानुषाणाम्॥

**अउ49.69**
ब्राह्मीवचासैन्धवशङ्खपुष्पी मत्स्याक्षकब्रह्मसुवर्चलैन्द्रयः।
वैदेहिका च त्रियवाः पृथक्स्युर्यवौ सुवर्णस्य तिलो विषस्य॥

**अउ49.70**
सर्पिषश्च पलमेकत एत द्योजयेत् परिणते च घृताढ्याम्।
भोजनं समधु वत्सरमेवं शीलयन्नधिकधीस्मृतिमेधाः॥

**अउ49.71**
अतिक्रान्तजराव्याधितन्द्रालस्यश्रमक्लमः।
जीवत्यब्दशतं पूर्णं श्रीतेजःकान्तिदीप्तिमान्॥

**अउ49.72**
विशेषतः कुष्ठकिलासगुल्म विषज्वरोन्मादगरोदराणि।
अथर्वमन्त्रादिकृताश्च कृत्याः शाम्यन्त्यनेनातिबलाश्च वाताः॥

**अउ49.73**
यथोक्तगुणायां भूमौ जातामबालामजीर्णां शीर्णपुराणपर्णामसञ्जातान्यपर्णां तपे तपस्ये वा मासे यथोक्तेन विधिना पुष्ययुक्ते चन्द्रमसि सुमुहुर्ते नागबलां समूलामुद्धरेत्।
तस्या मूलानां त्वक्पिण्डमाम्रमात्रमक्षमात्रं वा श्लक्ष्णपिष्टमवचूर्णितं वा पयसा पिबेन्मधुघृताभ्यां वा लिह्यात्।
जीर्णे क्षीरवृत्तिरेव स्यात्।
क्षीरेणैव वा ससर्षिष्कं शालिषष्टिकमश्नीयात्।
एवं संवत्सरप्रयोगाद्वर्षशतमजर इत्यादि समानं पूर्वेण॥

**अउ49.74**
बलातिबलाचन्दनागरुधवतिनिशखदिरकदरशाकशिंशपासनसुरसापुनर्नवानन्ताश्च वयःस्थापनोक्ता दशौषधयः सविदारीश्वदंष्ट्राश्वगन्धावाराहीशतावर्यो नागबलया व्याख्याताः॥

**अउ49.75**
तत्र सारवृक्षाणां सर्वेषां स्वरसार्थी कुष्ठचिकित्सिते खदिरकल्पमीक्षेत।
आर्द्रवृक्षासम्भवे तु सारशकलानिद्व्यङ्गुलत्र्यङ्गुलानि तनूनि चतुर्गुणेम्भस्या प्लाव्यातपे त्रिरात्रं स्थापयेत्।
ततस्तान्युद्धृत्यान्यानि तत्र क्षिपेत्।
त्रिरात्राच्च पुनरन्यान्येवं नवरात्रेण त्रिःप्रक्षेपणोद्धारेण च स्वरसः परिकल्पितो भवति॥

**अउ49.76**
फलानां पुनर्वीरुदौषधीनां च यन्त्रेणोलूखलेन वा सङ्क्षुद्य निष्पीड्य स्वरसं गृह्णीयात्॥

**अउ49.77**
परिशुष्काणां तु चूर्णिकृतानामाढकमाढकमुदकस्याहोरात्रस्थितं विमृदितपूतं स्वरसवत् प्रयोज्यम्।
तुवरकभल्लातकादीनां पुनः पृथगेवोपदेशः॥

**अउ49.78**
वृक्षास्तुवरका नाम पश्चिमार्णवतीरजाः।
वीचीतरङ्गविक्षोभमारुतोद्धूतपल्लवाः॥

**अउ49.79**
तेभ्यः फलान्याददीत सुपक्वान्यम्बुदागमे।
मज्ज्ञः फलेम्यश्चादाय शोषयित्वावचूर्ण्य च॥

**अउ49.80**
तिलवत्पीडयेद्रोण्यां क्वाथयेद्वा कुसुम्भवत्।
तत्तैलं सम्भृतं भूयः पचेदासलिलक्षयात्॥

**अउ49.81**
अवतार्य करीषे च पक्षमात्रं निधापयेत्।
स्निग्धस्वैन्नो हृतमलः पक्षादुद्धृत्य यत्नवान्॥

**अउ49.82**
चतुर्थभक्तान्तरितः प्रातः पाणितलं पिबेत्।
मन्त्रेणानेन एतस्य तैलस्य दिवसे शुभे॥

**अउ49.83**
मज्जसार महावीर्य सर्वान् धातून् विशोधय।
शङ्खचक्रगदापाणिस्त्वामाज्ञापयतेऽच्युतः॥

**अउ49.84**
तेनास्योर्ध्वमधस्ताच्च दोषा यान्त्यसकृत्ततः।
सायमस्नेहलवणां यवागूं शीतलां पिबेत्॥

**अउ49.85**
पञ्चाहानि पिबेत्तैलमित्थं वर्ज्यानि वर्जयेत्।
पक्षं मुद्गरसान्नाशी सर्वकुष्ठैर्विमुच्यते॥

**अउ49.86**
तदेवखदिरक्वाथे त्रिगुणे साधु साधितम्।
निहितं पूर्ववत् पक्षं पिबेन्मासं सुयन्त्रितः॥

**अउ49.87**
तेनाभ्यक्तशरीरश्च कुर्वन्नाहारमीरितम्।
भिन्नस्वरं रक्तनेत्रं शीर्णाङ्गं कृमिभक्षितम्।
अनेनाशु प्रयोगेण साधयेत् कुष्ठिनं नरम्॥

**अउ49.88**
सर्पिर्मधुयुतं पीतं तदेव खदिराद्विना।
पक्षं मांसरसाहारं करोति द्विशतायुषम्॥

**अउ49.89**
तदेव नस्ये पञ्चाशद्दिवसानुपयोजितम्।
वलीपलितनिर्मुक्तस्थिरस्मृतिकचद्विजम्॥

**अउ49.90**
वपुष्मन्तं श्रुतधरं करोति त्रिशतायुषम्।
अन्त्रधूमं तस्य मज्जा सुदग्धः क्षिप्तस्तैले सैन्धवं चाग्निवर्णम्।
तुल्यं हन्यादर्मनक्तान्ध्यकाचान् नीलीरोगं तैमिरं चाञ्जनेन॥

**अउ49.91**
एकान्तरं तौवरकञ्च तैलं पिबेद्धिताशी नियमेन मासम्।
प्रभिन्नकोष्ठो गलिताङ्गदेशस्त्वचं त्यजेत् सर्पैवाशु जीर्णम्॥

**अउ49.92**
साधयेत् षोडशगुणे सलिले तुवराढकम्।
अष्टांशशेषे विस्राव्य सङ्क्षुद्योलूखले ततः॥

**अउ49.93**
शुष्कारग्वधवल्कपादरजसा व्यामिश्रित कल्कितं।
तस्य क्वाथजलैरुदुम्बरसमान् छायाविशुष्कान् गुडान्॥

**अउ49.94**
कुर्यादेकतमं च सार्द्धमथवा गोवारिणालोडितं।
कुष्ठी तद्दिवसास्थितो निरशनः सूर्ये गतेऽस्तं पिबेत्॥

**अउ49.95**
तावदेव च तथैव च भूयः पाययेत्तमरुणोदयकाले।
अप्यजीर्णमविचिन्त्य वमिं वा भेषजं पुरुषदोषबलज्ञः॥

**अउ49.96**
मध्याह्नेऽद्यात् भूरिनिष्पावतैलं कङ्गूकूरं शिग्रुकन्दोपदंशम्।
दध्नायुक्तं स्वल्पसिन्धूत्थचूर्णं गव्येनानु स्तोकतक्राम्बुपायी॥

**अउ49.97**
तैलाक्तगात्रो दिवसान्तरं च कङ्ग्विष्टिकाचूर्णकृतप्रघर्षः।
स्नायात् सुखाम्भोभिरमद्यमांस स्त्रीसङ्गतिः स्यात्त्रिगुणं च योगात्॥

**अउ49.98**
उपयुज्य योगमखिलं प्रतिदिनमेव द्विकालमभियुक्तः।
कुष्ठी कुष्ठमपोहति विशीर्णकर्णौष्ठनासमपि॥

**अउ49.99**
अथ भल्लातकान्यनुपहतान्यनामयान्यापूर्णरसप्रमाणवीर्याणि पक्वजाम्बवप्रकाशानि शुचौ शुक्रे वा मासे सङ्गृह्य यवपल्ले माषपल्ले वा निधापयेत्।
तानि चतुर्मासस्थितानि सहे सहस्ये वा मासे प्रयोक्तुमारभेत।
शीतस्निग्धमधुरोपस्कृतशरीरः पूर्वं दशभल्लातकान्यापोथ्याष्टगुणेनाम्भसा साधु साधयेत्।
तेषां रसमष्टभागावशिष्टमनुष्णं सपयस्कं सर्पिर्गण्डूषाभ्यक्तोष्ठतालुजिह्वः प्रातः पिबेत्।
एवमेतानी दशभल्लातकान्येकैकोत्कर्षापकर्षेण त्रिंशत्प्रयोज्यानि।
विधिनानेन सहस्रप्रयोगस्त्रिगुणश्च कालो घृतक्षीराभ्यां शालिषष्टिकमशनमेवं विशेषाद्विगतकुष्ठदुर्नामकृमिप्रमेहमेदोदोषो वर्षशतमजर इत्यादि समानं पूर्वेण॥

**अउ49.100**
पूर्वमेकैकभल्लातकक्वाथं सपयस्कं पिबेदेकैकं च भल्लातकमभिवर्द्धयेद्यावत् पञ्च।
ततः पञ्च पञ्चवर्धयेद्यावत् सप्ततिः।
प्राप्य च सप्ततिमपकर्षयेत् भूयः पञ्च पञ्च यावत् पञ्च।
पञ्चभ्यश्चैकैकं यावदेकम्।
विधिनानेनसहस्रं प्रयोग इत्यादि समानं पूर्वेण॥

**अउ49.101**
सप्ततिवच्च शतमुपयुञ्जीत।
तथा च सहस्रद्वयन्।
प्रयोग इत्यादि समानं पूर्वेण।
द्विगुणस्त्वायुषः कालः॥

**अउ49.102**
भल्लातकानां जर्जरीकृतानां पिष्टस्वेदनं पूरयित्वा भूमावाकाण्ठनिखातस्य स्नेहभावितस्य दृढस्योपरिकुम्भस्यारोप्योडुपेनापिधायकृष्णमृदावलिप्तं गोमयाग्निनोपस्वेदयेत्।
तेषां यः स्वरसः कुम्भं प्रपद्यते तमष्टभागमधुसंयुक्तं द्विगुणितघृतमद्यात्।
त्रिगुणश्च कालो घृतक्षीराभ्यामित्यादि समानं पूर्वेण॥

**अउ49.103**
अनेनैव विधिना भल्लातकस्य रसं गृहीत्वा केवलमेव मासमेकं प्रयुञ्जीत।
त्रिगुणश्च काल इत्यादि समानं पूर्वेण।
मासि मासि वर्षशतमायुषोभिवृद्धिः।
एवं दशमासानुपयुज्य वर्षसहस्रमायुर्भवति॥

**अउ49.104**
भल्लातकतैलपात्रं सपयस्कं मधुकाक्षमात्रेण शतपाकमुपयुञ्जीत।
त्रिगुणश्चकाल इत्यादि समानं पूर्वेण॥

**अउ49.105**
भल्लातकतैलं कृष्णतिलतैलं सर्पिरामलकरसोऽसनादिसारकषाय इत्येषां द्रोणं द्रोणं त्रिफलात्रिकटुकविडङ्गसारचित्रकहरिद्राद्वयत्रिवृद्दन्तीन्द्रयवयष्टीमधुकविषातिविषारसाञ्जनप्रियङ्गूनां पालिकाभागास्तदैकध्यं स्नेहपाकविधिना विपाच्यावतार्य परिपूयचानुगुप्तं निदध्यात्।
तत उपस्कृतशरीरः प्रातः प्रातः पाणिशुक्तिमात्रं क्षौद्रेण प्रतिसंसृज्योपयुञ्जीत।
जीर्णे मुद्गामलकयूषेणालवणेन सर्पिष्मता खदिरोदकसिद्धं मृदुमोदनमश्नीयात्।
खदिरोदकेनोदककार्याणीत्येवमतो द्रोणमुपयुज्य विगतकुष्ठदुर्नामेत्यादि समानं पूर्वेण॥

**अउ49.106**
पुष्टानि पाकेनपरिच्युतानि भल्लातकान्याढकसम्मितानि।
घृष्टवेष्टिकाचूर्णकणैर्जलेन प्रक्षाल्य संशोष्य च मारुतेन॥

**अउ49.107**
जर्जराणि विपचेज्जलकुम्भे पादशेषधृतगालितशीतम्।
तद्रसं पुनरपि श्रपयेत क्षीरकुम्भसहितं चरणस्थे॥

**अउ49.108**
सर्पिः पक्वं तेन तुल्यप्रमाणं युञ्ज्यात् स्वेच्छं शर्कराया रजोभिः।
एकीभूतं तत्खजक्षोभणेन स्थाप्यं धान्ये सप्तरात्रं सुगुप्तम्॥

**अउ49.109**
तममृतरसपाकं यः प्रगे प्राशमश्नन्ननु पिबति यथेष्टं वारि दुग्धं रसं वा।
स्मृतिमतिबलमेधासत्वसारैरुपेतः कनककनिकषगौरः सोश्नुते दीर्घमायुः॥

**अउ49.110**
द्रोणेऽम्भसो व्रणकृतां त्रिशताद्विपक्वात् क्वाथाढके पलसमैस्तिलतैलपात्रम्।
तिक्ताविषाद्वयवरा गिरिजन्मताक्ष्यैः सिद्धं परं निखिलकुष्ठनिषूदनाय॥

**अउ49.111**
सहामलकशुक्तिभिर्दधिसरेण तैलेन वा।
गुडेन पयसा घृतेन यवसक्तुभिर्वा सह।
तिलेन सह माक्षिकेण पललेन सूपेन वा।
वपुष्करमरुष्करं परममेध्यमायुष्करम्॥

**अउ49.112**
भल्लातकानि तीक्ष्णानि पाकीन्यग्निसमानि च।
भवन्त्यमृतकल्पानि प्रयुक्तानि यथाविधि॥

**अउ49.113**
कफजो न स रोगास्ति न विबन्धोस्तिकश्चन।
यं न भल्लातकं हन्याच्छीघ्रमग्निबलप्रदम्॥

**अउ49.114**
वातातपविधानेपि विशेषेण विवर्जयेत्।
कुलत्थदधिशुक्तानि तैलाभ्यङ्गाग्निसेवनम्॥

**अउ49.115**
पञ्चाष्टौ सप्त दश वा पिप्पलीर्मधुसर्पिषा।
रसायनगुणान्वेषी समामेकां प्रयोजयेत्॥

**अउ49.116**
तिस्रस्तिस्रस्तु पूर्वाह्ने भुक्त्वाग्रे भोजनस्य च।
पिप्पल्यः किंशुकक्षारभाविता घृतभर्जिताः।
प्रयोज्या मधुसम्मिश्रा रसायनगुणौषिणा॥

**अउ49.117**
क्रमवृध्या दशाहानि दशपैप्पलिकं दिनम्।
वर्धयेत् पयसा सार्द्धं तथैवापनयेत् पुनः॥

**अउ49.118**
जीर्णौषधश्च भुञ्जीत षष्टिकं क्षीरसर्पिषा।
पिप्पलीनां सहस्रस्य प्रयोगोयं रसायनम्॥

**अउ49.119**
पिष्टास्ता बलिभिः पेयाः शृता मध्यबलैर्नरैः।
शीतीकृता ह्रस्वबलैर्योज्या दोषामयान् प्रति॥

**अउ49.120**
तद्वच छागदुग्धेन द्वे सहस्रे प्रयोजयेत्॥

**अउ49.121**
एभिः प्रयोगैः पिप्पल्यः कासश्वासगलग्रहान्।
यक्ष्ममेहग्रहण्यर्शः पाण्डुत्वविषमज्वरान्।
घ्नन्ति शोफं वमिं हिध्मां प्लीहानं वातशोणितम्॥

**अउ49.122**
विडङ्गचूर्णं यष्टीमधुकचूर्णयुक्तं शीततोयेन समाशमुपयुञ्जीत।
जीर्णे मुद्गयूषेणालवणेन सघृतमोदनमश्नीयात्।
तेन विशेषाद्विगतकृमिदुर्नामकुष्ठप्रमेहमेदोदोषो वर्षशतमजर इत्यादि समानं पूर्वेण।
विडङ्गचूर्णं क्षौद्रभल्लातकक्वाथाभ्यां मध्वामलकरसाभ्यां गुडूचीक्वाथेन च एतांश्चतुरो योगान् मासमुपयुञ्जीतेति समानं पूर्वेण।
सर्वेषु च मासिमासि वर्षशतमायुषोऽभिवृद्धिः॥

**अउ49.123**
अलम्बुषां स्वेन रसेन भावितां पृथग्घृतक्षीरमधूष्णवारिभिः।
पिबेत्तथा काञ्जिकतक्रमस्तुभिर्भगन्दरोरुग्रहगुल्मकासवान्॥

**अउ49.124**
उष्णा विपाके कटुका कषायमधुरा रसे।
अत्यन्तदीपनी मेध्या वातश्लेष्महरा च सा॥

**अउ49.125**
वर्षोपयोगात् कुरुते नरं वर्षशतायुषम्।
दृढेन्द्रियानलबलं निर्वलीपलितामयम्॥

**अउ49.126**
श्वेतावल्गुजफलान्यातपशुष्काणी चूर्णयित्वा तत्तुल्यगुडेन सङ्क्षुद्य घृतकुम्भे धान्यराशौ सप्तरात्रं निदध्यात्।
ततोऽनुदिते भास्वति यथाबलं मात्रां सुखोदकानुपानामुपयोजयेत्।
जीर्णे सुखाम्बुपरिषितः शालिषष्टिकौदनं सशर्करेण पयसाश्नीयात्।
तस्य मासप्रयोगाद्विशेषेण विगतकुष्ठो ग्रहणधारणवान् वर्षशतमजर इत्यादि समानं पूर्वेण।
प्रयोगतश्चोर्ध्वं द्विगुणं परिहारः॥

**अउ49.127**
वाकुचिकाकर्षचूर्णं सुखाम्बुना पिबेत्।
पीत्वा चातपे निर्वातोष्णे वा गर्भगृहे तिष्ठेदपराह्णे तद्वदेव स्नानमशनं च।
यूषरसाभ्यां वा।
तस्य त्रिसप्तरात्रप्रयोगाद्विगतकुष्ठ इत्यादि समानं पूर्वेण॥

**अउ49.128**
त्वग्रोमकेशदशनान् नखांश्चमुक्त्वा पुनर्नवान् लभते।
स्वरवर्णबलोत्साहं नवं वयो नष्टपलितं च॥

**अउ49.129**
पलानि दश बाकुच्या दशैव च फलत्रयात्।
सप्त क्रिमिघ्नादयसस्त्रीणि द्वे गिरिसम्भवात्॥

**अउ49.130**
पुरपुष्करमूलाभ्यामाहरेत पलं पलम्।
सूक्ष्मैलार्धपलं व्योषघनकेसरकुङ्कुमम्॥

**अउ49.131**
लोध्रत्वक्पत्रयष्ट्याह्वचित्रकं कार्षिकं पृथक्।
शतंभल्लातकानां च सर्वं खण्डसमांसकम्॥

**अउ49.132**
चूर्णयेदथ तन्मात्रां भक्षयेत् पालिकीं पराम्।
यथेष्टचेष्टो लभते वर्षाद्रासायनान् गुणान्॥

**अउ49.133**
सर्वरोगान् विजयते त्वग्विकारान् विशेषतः।
अर्शोभगन्दरश्वासकासपाण्ड्वामयक्रिमीन्॥

**अउ49.134**
गुल्मप्लीहाश्मरीवर्ध्मप्रमेहारुचिपीनसान्।
मन्दानलत्वं कृशतां शोफग्रन्थ्यर्बुदानपि॥

**अउ49.135**
वाकुचिकाफलानि गोमूत्रे सप्तरात्रं वासयेत्।
ततो निस्तुषीकृत्य छायायां विशोषयित्वा सुसूक्ष्मं च सञ्चूर्ण्य त्र्यहं त्र्यहं क्रमशो भावयेत्त्रिफलाक्वथेन कारवल्लीवासाब्राह्मीगुडूचीभृङ्गराजस्वरसैः पृथक्पृथक् खदिरासनराजवृक्षपिचुमन्दक्वाथैः॥

**अउ49.136**
तस्य पीतः प्रतिदिनं धात्रीफलरसाप्लुतः।
कर्षः सर्वामयान् हन्ति त्वग्विकारान्विशेषतः॥

**अउ49.137**
असनखदिरयूषैर्भाविता सोमराजीं।
मधुघृतशिखिपथ्यालोहचूर्णैरुपेताम्।
शरदमवलिहानः पारिणामान् विकारां।
स्त्यजति मितहिताशी तद्वदाहारजातान्॥

**अउ49.138**
तीव्रेण कुष्ठेन परीतमूर्तिर्यःसोमराजीं नियमेन खादेत्।
संवत्सरं कृष्णतिलद्वितीयां ससोमराजीं वपुषातिशेते॥

**अउ49.139**
ये सोमराज्या वितुषीकृतायाश्चूर्णैरुपेतात् पयसः सुजातात्।
उद्धृत्य सारं मधुना लिहन्ति तक्रं तदेवानु पिबन्ति चान्ते॥

**अउ49.140**
ते कुष्ठिनः पक्ष्मदरिद्रनेत्रा।
विशीर्णकर्णाङ्गुलिनासिका वा।
विहायवैरूप्यमपास्य रूपं।
पुनः प्ररूढा इव भान्ति वृक्षाः॥

**अउ49.141**
खदिराम्भसा पिबेद्वा रविसेवी तां तया यवागूं वा।
गायत्रीजलसिद्धां कुष्ठी तत्तोयकार्यकरः॥

**अउ49.142**
गजलिण्डक्षारयुता तत्क्षारपायिनो विलेपिभुजः।
श्वित्राणि सोमराजी प्रसह्य हन्यात् प्रलेपाच्च॥

**अउ49.143**
गोमूत्रे सप्तरात्रं शशिशकलफलं वासितं लोलयित्वा।
कुर्याच्छायाविशुष्कं पृथगिति च फलं प्रापुनाटं च शुष्कम्॥

**अउ49.144**
अंशस्ताभ्यां तथांशः कृमिरिपुदहन स्फोटकृद्भ्यः स चूर्णो गोमूत्रेणोपयुक्तः प्रमितहितभुजः श्वित्रमाश्वेव हन्ति॥

**अउ49.145**
इक्षुरगोक्षुरसिंही व्याघ्री पञ्चांगुलाम्बुना पीता।
उपलमघनं घनं वा रसाशिनां हन्ति बाकुचिका॥

**अउ49.146**
उष्णोदकेन पिष्टा पीता च घृतान्विता जयेत् गुल्मम् लघुपञ्चमूलसिद्धां पेयामुपयोजयेज्जीर्णे॥

**अउ49.147**
कट्वङ्गकुटजयूषैरर्शांसि भगन्दरं च नाशयति।
मेहान् मयैर्निगदैर्निषेविता बाकुची प्रबलान्॥

**अउ49.148**
विष्किररसेन पीता दशमूलरसेन वा गुडूच्या वा।
अपतन्त्रकं निहन्यादायामं वा रसान्नभुजः॥

**अउ49.149**
जठरेषु पिबेन्मूत्रैर्जलोदरे त्रैवृतेन यूषेण।
शोफे पाण्डुव्याधाववल्गुजं शीघ्वरिष्टाभ्याम्॥

**अउ49.150**
इक्षुरकादिक्वाथैर्वर्ध्मनि मूत्रेण वा गवां शस्तः।
धारोष्णेन तु पयसा युक्तः शोफज्वरौ हन्ति॥

**अउ49.151**
उष्णाम्बुना प्रयोज्यो लूताकीटाखुसर्पदष्टेषु।
कृमिहरचतुरङ्गुलयोः क्वाथः कोष्णः कृमिणकोष्ठेषु॥

**अउ49.152**
लेखामिन्दोः सघृतां सुखाम्बुना पुत्रिणी भवति पीत्वा पुष्पोदयेश्वगन्धाशृतेन पयसा च भुञ्जाना॥

**अउ49.153**
वन्ध्यापि सप्ताहमिमंप्रयोगं करोति या हर्षयती सुगन्धिः।
प्रियंवदा सद्व्रतशौचयुक्ता सूते सुतान् सा नियमात् गुणाढ्यान्॥

**अउ49.154**
स्निग्धैरुष्णैर्मधुरैर्हरति गदान्वातजान् युता पैत्तान्।
तिक्तकमधुरकषायैः कफजांस्त्रिफलारसमधुभ्यां च॥

**अउ49.155**
इति शमनी धन्येयं विषगरभूतोपसर्गपाप्मघ्नी।
गेहे स्थितापि रेखा चान्द्रमसी किमुत कोष्ठस्था॥

**अउ49.156**
मनुष्यमप्यागतमृत्युशासनं प्रणष्टबुद्धीन्द्रियमल्पचेतसम्।
अवल्गुजो मोक्षयते महाभयाच्छ्रियं च मेधां च ददाति पुष्कलाम्॥

**अउ49.157**
हैमवत्या वचायाः पिण्डमामलकमात्रं पयसालोड्य पिबेज्जीर्णे पयस्सर्पिरोदन इत्याहारः।
एवं सप्तरात्रेण मेधावी भवति।
सप्तभिः सप्तरात्रैः श्रुतधरो वर्षशतमजर इत्यादि समानं पूर्वेण॥

**अउ49.158**
इतरस्या अपि वचाया द्विपलक्वाथं पिबेत् जीर्णे पयः सर्पिरित्यादि समानं पूर्वेण।
तच्चूर्णं वा क्षौद्रसर्पिर्भ्यां यथाबलमवलिह्यात्।
जीर्णे पयः सर्पिरित्यादि समानं पूर्वेण॥

**अउ49.159**
वचाकल्कशतपाकं घृतद्रोणमुपयुज्य विशेषात् ग्रहोन्मादापस्मारगलगण्डगण्डमालाश्लीपदस्वरभेदविमुक्तः सर्वार्थेषु सिद्धिमान् वर्षशतायुर्भवति॥

**अउ49.160**
शीतवातहिमदग्धतनूनां स्तब्धभग्नकुटिलव्यधितास्थ्नाम्।
भेषजस्य पवनोपहतानां वक्ष्यते विधिरतो लशुनस्य॥

**अउ49.161**
राहोरमृतचौर्येण लूनाये पतिता गलात्।
अमृतस्य कणा भूमौ ते रसोनत्वमागताः॥

**अउ49.162**
द्विजानाश्नन्ति तमतो दैत्यदेहसुमुद्भवम्।
साक्षादमृतसम्भूतेर्ग्रामणीः स रसायनम्॥

**अउ49.163**
शीलयेल्लशुनं शीते वसन्ते च कफोल्बणः।
घनोदयेपि वातार्तः सदा वा ग्रीष्मलीलया।
रक्तपित्तभवारोगा जायन्ते रक्तपित्तिनः॥

**अउ49.164**
मासः परोस्य रसकल्कनिषेवणाय स्वच्छन्दमप्युपदिशन्ति विमर्दकैस्तु।
षण्मासमन्यविधिना न तु शस्तमाहुः पक्षप्रयोगमपि हीनतरं रसोने॥

**अउ49.165**
स्निग्धशुद्धतनु शीतमधुरोपस्कृताशयः।
तदुत्तंसावतंसाभ्यां चर्चितानुचराजिरः॥

**अउ49.166**
तस्य कन्दान् वसन्तान्ते हिमवच्छकदेशजान्।
अपनीतत्वचो रात्रौ निमयेन्मदिरादिभिः॥

**अउ49.167**
तत्कल्कस्वरसं प्रातः शुचितान्तवपीडितम्।
मदिरायाः सुरूढायास्त्रिभागेन समन्वितम्॥

**अउ49.168**
मद्यस्यान्यस्य तक्रस्य मस्तुनः कञ्जिकस्य वा।
तत्काल एव वा युक्तं युक्तमालोच्य मात्रया॥

**अउ49.169**
तैलसर्पिर्वसामज्जक्षीरमासरसैः पृथक्।
क्वाथेन वा यथाव्याधि रसं केवलमेव वा॥

**अउ49.170**
पिबेत् गण्डूषमात्र प्राक्कण्ठनाडीविशुद्धये।
प्रततं स्वेदनंचानु वेदनायां प्रशस्यते॥

**अउ49.171**
शीताम्बुसेकः सहसा वमिमूर्च्छाययोर्मुखे।
शेषं पिबेत् क्लमापाये स्थिरतां गत ओजसि॥

**अउ49.172**
विदाहपरिहाराय परं शीतानुलेपनः।
धारयेत्साम्बुकणिका मुक्ताकर्पूरमालिकाः॥

**अउ49.173**
सहिमसलिलगर्भाश्चन्द्रशुभ्रामृणालीः कुवलयदलमाला हारयष्टीश्च लोलाः।
स्तनतटविनिविष्टाश्चारुगात्र्यो दधानास्तनुसरसविलिता गाढमेनं स्वजेरन्॥

**अउ49.174**
नलिनीदलतालवृन्तवातैः प्रगलद्वारिलवैर्जलार्द्रया च।
दयिताकरपल्लवैश्च शीतैर् शुनस्वेदकृतं क्लमं हरेयुः॥

**अउ49.175**
कुडवोस्यपरा मात्रा तदर्द्धं केवलस्य तु।
पलं पिष्टस्य तन्मज्ज्ञः सभक्तं प्राक्च शीलयेत्॥

**अउ49.176**
रसोग्निकल्पो मृदुनौजसा हि।
संयुज्यमानः सहसैव तस्य।
दाहातिसारारतिचित्तनाशान्।
कुर्यादतस्तं त्वरितो न युञ्ज्यात्॥

**अउ49.177**
जीर्णशाल्योद्दनं जीर्णे शङ्खकृन्देन्दुपाण्डुरम्।
भुञ्जीत यूषैः पयसा रसैर्वा धन्वचारिणाम्॥

**अउ49.178**
दीप्ताग्निर्मण्डकान् खादेत् सर्पिप्र्मण्डोपसेचनान्।
अखण्डमण्डलेन्द्वाभानिण्डरीखण्डमण्डितान्॥

**अउ49.179**
राजिकाशुक्तसम्पर्कविनिवर्तितगौरवैः।
पिष्टकाचूर्णधवलैर्वध्रैः सौकरकैर्युतान्॥

**अउ49.180**
मद्यमेकं पिबेत्तु तृट्प्रबन्धे जलान्वितम्।
गन्धमत्तक्वणदलि प्रियावक्त्रेन्दुबोधितम्॥

**अउ49.181**
अमद्यपो यस्तु फलाम्बुतुक्रमवन्तिसोमं च सुगन्धि शीतम्।
सौवीरकं जाङ्गलजं रसं वा तुषोदक्वं वा परिसिक्थिकां वा॥

**अउ49.182**
तत्कल्कं वा समघृतं घृतपात्रे खजाहतम्।
स्थितं दशाहादश्नीयात्तद्वद्वा वसया समम्॥

**अउ49.183**
सद्यः पिष्टं सर्पिषा संयुतं वा निर्यासेन स्वेन युक्तं च कामम्।
युञ्जीतैनं पूर्वकैरेव पानैः कोष्णाम्भोभिर्वैष कल्पोतिवीर्यः॥

**अउ49.184**
रसोनकल्कः सद्दशाजसर्पिः षण्मासमुर्व्यामुषितो निहन्ति।
अभ्यङ्गपानाञ्जननस्ययुक्तो मनोविकारान् विषमज्वरं च॥

**अउ49.185**
समतैलं सशुक्तं वा यवराशौ समास्थितम्।
वातरोगान् जयेत् खादन् घृतमांसोत्तराशनः॥

**अउ49.186**
तैलसर्पिर्गुडसिताः पृथक्कुर्यात्तुलान्मिताः।
द्वे तुले लशुनाच्छुद्धात् त्र्यूषणात् कुडयत्रयम्॥

**अउ49.187**
पलं त्वचश्च तच्श्लक्ष्णं निहितं घृतभाजने।
द्वे समे यवमध्यस्थं पूर्वस्मादधिकं गुणैः॥

**अउ49.188**
क्षुण्णां क्षिपेत् कन्दतुलां तक्रस्य पलविंशतौ।
गते च सप्तरात्रे तु तुलार्द्धमसितात्तिलात्॥

**अउ49.189**
धौतक्षुण्णात् पृथक्क्षौद्रघृतशुण्ठीचतुष्पलम्।
अजाजीचव्यधान्याग्निद्विकृष्णाग्रन्थिदीप्यकान्॥

**अउ49.190**
पलोन्मितांश्चतुर्जातात् पलमेकं सुचूर्णितम्।
पृथक्पलाष्टकं तैलात्घृतात्क्षुण्णाच्चसर्षपात्॥

**अउ49.191**
पटूनि पञ्च क्षारौ द्वौ दद्यात्तत्राक्षमानतः।
एकादशाहं तद्धान्ये स्थितमश्नन् प्रगे प्रगे।
गुणान्रासायनान्सर्वान् स प्राप्नोति निरामयः॥

**अउ49.192**
द्विपञ्चमूलनिष्क्वाथे नल्वणे लशुनाढकम्।
पिष्टं पर्युषितं वर्षं हन्ति वातकफामयान्॥

**अउ49.193**
तत्कन्दकल्कस्वरसे घृततैलं पृथक्पचेत्।
शीलयेच्च यथासात्म्यं दारुणानलपीडितः॥

**अउ49.194**
नवनीतसमांशं वा खोदत्तत्कल्कमर्दिती॥

**अउ49.195**
विकञ्चुकप्राज्यरसोनगर्भान् सशूल्यमांसान् विविधोपदंशान्।
निमर्दकान् वा घृतशुक्तयुक्तान् प्रकाममद्याल्लघुतुच्छमश्नन्॥

**अउ49.196**
कुस्तुम्बरी जीरकभृष्टमुद्गसौवर्चलश्लक्ष्णरजोवकीर्णैः।
रसोनकन्दाङ्कुरपत्रचित्रैः सव्यञ्जनैर्नैकरसानुयातैः॥

**अउ49.197**
तत्कन्दसिद्धान् क्रमशो यूषक्षीररसान् पिबेत्।
कफपित्तानिलाशङ्की यथास्वौषधसंस्कृतान्॥

**अउ49.198**
कृशोश्वगन्धोद्भवचूर्णकीर्णं सन्नस्वरो यष्टिमधूपधानम्।
तैलेन गुल्मी खदिरेण कुष्ठी खादेत् कृमिघ्नैः कृमिमान् रसोनम्॥

**अउ49.199**
मांसादमांसैर्यक्ष्माणमर्शांसि कुटजत्वचा।
हन्ति स श्रेष्ठया मेहकासश्वासविलम्बिकाः॥

**अउ49.200**
अन्नस्वरूपविज्ञानात् स्वरूपमुपलभ्य च।
यथायथं प्रयोगोस्य कार्यस्तं तं गदं प्रति॥

**अउ49.201**
लशुनस्वरसात् प्रस्थान्द्वात्रिंशत्तिलतैलतः।
द्वावपेतमलात् किण्वादष्टौपिष्टाच्चषड्यवात्॥

**अउ49.202**
मेषशृङ्गीभवात् क्वाथाद्द्रोणं पूताच्च शीतलात्।
स्नेहपात्रे तदैकध्यं निदध्याच्च शुचौ दृढे॥

**अउ49.203**
क्रमात्तत्र पुनर्दद्यात् पिष्टं प्रस्थचतुष्टयम्।
पक्षात्परमियं पेया सुरा वातविकारिभिः॥

**अउ49.204**
त्रिरात्रमुषितां धेनुं लशुनं खादयेत्ततः।
क्षीरदध्याज्यमथितं ब्राह्मणस्यापि शस्यते॥

**अउ49.205**
पित्तरक्तविनिर्मुक्तसमस्तावरणावृते।
शुद्धे वा विद्यते वायौ न द्रव्यं लशुनात्परम्॥

**अउ49.206**
सुखात्मनां विशेषेण प्रयोज्यो लशुनासवः।
नारदेनोद्धवस्यैष वातभग्नस्य कल्पितः॥

**अउ49.207**
आमाम्बुपानेक्षुविकारमत्स्ययानाध्ववातातपभाष्यचिन्ताः।
स्वप्नं दिवा जागरणं निशासु पिष्टं व्यवायं दधि चात्र नेच्छेत्॥

**अउ49.208**
स्नेहकल्पविधानेन स्नेहयुक्तं प्रयोजयेत्।
लशुनं स्नेहसंयोगात् गरीयान् जायते हि सः॥

**अउ49.209**
पित्तकोपभयादन्ते युञ्ज्यान्मृदुविएचनम्।
रसायनगुणानेवं परिपूर्णान् समश्नुते॥

**अउ49.210**
प्रियाम्बुगुडदुग्धस्य मांसमद्याम्लविद्विषः।
अतितिक्षोरजीर्णे च रसोनो व्यापदे ध्रुवम्॥

**अउ49.211**
पाण्डूदरोरक्षतशोफतृष्णापानात्ययच्छर्दिविषव्रणेषु।
पैत्ते विकारेक्षिगदेतिसारे क्षामे शरीरे च स वर्जनीयः॥

**अउ49.212**
शीलित एष करोति दुरापं वह्निशरीरबलं सममेव।
वञ्चतिरूपगुणाढ्यसुतेप्सोः स्त्रीपुरुषस्य च बीजविशुद्धिम्॥

**अउ49.213**
अमृतकणसमुत्थं यो रसोनं रसोनं विधियुतमितिखादेच्छीतकाले सदैव।
स नयति शतजीवी स्त्रीसहायो जरान्तं कनकरुचिरवर्णो नीरुजस्तुष्टिजुष्टः॥

**अउ49.214**
रसोनानन्तरं वायोः पलाण्डुः परमौषधम्।
साक्षादिवस्थितं यत्र शकाधिपतिजीवितम्॥

**अउ49.215**
यस्योपयोगेन शकाङ्गनानां लावण्यसारादिविनिर्मितानाम्।
कपोलकान्त्या विजितः शशाङ्को रसातलं गच्छति निर्विदेव॥

**अउ49.216**
स्निग्धाङ्गत्वं गौरता कान्तिमत्ता वनेर्दीप्तिर्वर्ष्मपुष्टिर्वृषत्वम्।
सम्प्राप्यन्ते यन्त्रणोद्वेगमुक्तैः र्यस्याभ्यासाद्धारि दीर्घं सुखं च॥

**अउ49.217**
अप्याहारे शीलितो दीर्घारात्रं बल्यश्चक्षुष्यस्तर्पणः स्थैर्यकारी।
तैस्तैर्योगैर्योजितोयं पलाण्डुस्तांस्तानातङ्कान् मेहिनामुच्छिनत्ति॥

**अउ49.218**
रसं रसोनवत्तस्य पीत्वाश्नीयात्तथैव च।
सबीजपूरस्वरसमदिरामधुशीधुपः॥

**अउ49.219**
मरकतमणिनीलं नालमस्यातिबालं परिणतशशिगौरं यच्च बीजं सुपिष्टम्।
ससुरससुमुखाभ्यां प्राज्यमांसं सशुक्तं मृदुधवलसुवृत्तैर्मण्डकैरातमूर्तिम्॥

**अउ49.220**
वहुशःशोभितं शुभ्रैः शशाङ्कशकलोपमैः।
घारिकेण्डरिकावल्लैः क्षीरोदावयवैरिव॥

**अउ49.221**
यवमुद्गमाषगोधूम बहुविध विकारकल्पितान् भक्ष्यान्।
काम्बलिकरागषाडवसट्टकखलकान् सफलसारान्॥

**अउ49.222**
पटुसुरभिमधुरगन्धान् धवलाक्षकधवलबहुलरसान्।
खर्जूरदाडिमसिताद्राक्षापानानुपोभ्यस्येत्॥

**अउ49.223**
लभते बलवर्णौजोवीर्यस्वरसौमनस्यतेजांसि।
क्षीणशकृद्रुधिरोपि च रसोनवत्तद्रसं पीत्वा॥

**अउ49.224**
सुरासुरैःक्षीरसमुद्रमन्थे गतास्तटान् येऽमृतविप्रुषः पुरा।
बबूव तेभ्यः किल कुक्कुटी यया व्रजन्ति देवत्वमिवाद्य मानुषाः॥

**अउ49.225**
कुक्कुटाण्डनिभैः कन्दैः किञ्चित् कटुकपिच्छिलैः।
स्निग्धैर्मरकतच्छायैः खर्जूरसदृशैच्छदैः॥

**अउ49.226**
निस्विलरोगहरापि विशेषतो जयति दारुणमप्यनिलामयम्।
गुदजगुल्मतमोविषनाशिनी जनयति स्थिरतां वपुषः पराम्॥

**अउ49.227**
कुटीं प्रविश्यतत्कन्दान् भक्षयेत्घृतभर्जितान्।
पयोनुपानं धारोष्णं तत्रेष्टमसनाम्बु वा॥

**अउ49.228**
तन्मात्रवृत्तिस्तुभवेद्दशाहं विंशत्यहं स्वादुभुगप्रमादी।
जत्रूर्ध्वकोष्ठत्रिकसन्धिवातपाण्डवामयार्शस्तिमिराणि जित्वा॥

**अउ49.229**
वलीपलितनिर्मुक्तः स्थिरकेशद्विजश्रुतिः।
मेधामतिस्मृतियुतो जीवेद्वर्षशतद्वयम्॥

**अउ49.230**
आपूर्यमाणचन्द्रप्रतिपदमारभ्यवर्धयेत्कन्दम्।
एकैकं घृतभृष्टं प्राग्भक्तं पथ्यभुक्खादेत्॥

**अउ49.231**
भुञ्जीताल्पतरं दिनार्दितमृषिः पक्षक्षये भक्षयन् क्षीरं बीजकवारि तक्रमथवा पीत्वा स्थितिं कल्पयेत्।
मांसं प्राश्य तथा नखद्विजकचः शीर्णोत्थितैः कान्तिमान् जीवत्यब्दशतत्रयं धृतिमतिस्मृत्यादिभिर्भूषितः॥

**अउ49.232**
क्षीरेण कन्दचूर्णं पिबन्यवागूं च परिणते मासम्।
लवणस्नेहविनां दृढदृग्जीवेच्छरद्द्विशतम्॥

**अउ49.233**
तिमिरं क्षौद्रघृताभ्यां पथ्यभुजस्तद्रजो जयेन्मासात्।
कन्दत्रयं च भृष्टं घृतेश्नतो भक्षितं वातान्॥

**अउ49.234**
तत्कन्दसूक्ष्मरजसा त्रिभागगोधूमचूर्णमिश्रेण।
पयसा पक्त्वा खादेत् घृतपूरानान्त्रवृद्धिहरान्॥

**अउ49.235**
त्रीन् कन्दकांश्च निशि भक्षयताज्यभृष्टान् धात्रीफलाम्बु ससितं चहगलीपयो वा।
पेयं दृगामयजयाय निषेवितव्या कामं च रोगशममात्रफलार्थिभिः सा॥

**अउ49.236**
क्षीरान्विता मूलकतुल्यकन्दा सप्ताष्टपत्रासितरक्तकाण्डा।
विभर्ति या पल्लवमब्दशब्दात् सा कञ्चुकी श्वेतवपुर्वरेण्या॥

**अउ49.237**
आषाढे कार्तिके वात्तं तत्कन्दं शीतलं स्थितम्।
अङ्गुष्ठपर्वद्वयसं पिष्टं क्षीरपलाष्टके॥

**अउ49.238**
कुटीप्रवेशस्तं पीत्वा क्षीरमेव पिबेदनु।
क्षीरमेव च जीर्णेपि पेयां वा स्नेहभर्जिताम्॥

**अउ49.239**
किञ्चिदुष्णामलवणां स्पृशेदुष्णाम्बु नो हिमम्।
एकेन सप्तरात्रेण कुष्ठान्येवं नियच्छति॥

**अउ49.240**
सर्वव्याधीन् द्वितीयेन तृतीयेन तु सर्पवत्।
त्यक्त्वा त्वचं ततो जीर्णा केशदन्तनखानपि।
धीमेधारूपवान् जीवेत् पञ्चवर्षशतानि च॥

**अउ49.241**
कञ्चुकीकन्दचूर्णं वा स्वेन क्षीरेण भावितम्।
गोक्षीरकुडवे न्यतं कर्षं खण्डपलान्वितम्।
पीतं सर्वाभयान् हन्ति नखकेशस्थितानपि॥

**अउ49.242**
पीततत्स्वरसं चूर्णं तस्या मधुघृतान्वितम्।
खादन्हिताशी सप्ताहं त्वग्दोषांस्तिमिरं जयेत्॥

**अउ49.243**
विडङ्गताप्यत्रिफलालोहकञ्चुकिजं रजः।
सप्तरात्रत्रयं लिह्यान्मधुना संयतेन्द्रियः॥

**अउ49.244**
क्षीरेण भोजनं जीर्णे शालेर्लाबरसेन वा।
तथास्य काचत्यिमिरे सुकृच्छ्राः शिरसो गदाः॥

**अउ49.245**
मेधाविनः प्रणश्यन्ति गात्रं सुप्तं च बुध्यते।
एष सप्तामृतश्चूर्णः सर्वव्याधिषु पूजितः॥

**अउ49.246**
पलं चूर्णस्य कञ्चुक्याः क्षीरप्रस्थे समावपेत्।
स्नेहं दध्नस्ततो लिह्याज्जितात्मा ससितामधु॥

**अउ49.247**
शालेरन्नं पयः पानं मासमेवं प्रयोजयेत्।
चतुर्गुणः परीहारः शोषशाब्दसमद्युतिः।
शतानि पञ्च वर्षाणां जीवेद्देव इवोर्जितः॥

**अउ49.248**
पचेत् पलानि द्रोणेपां कञ्चुक्याः पञ्चविंशतिः।
अष्टांशशिष्टे तु घृतात् प्रस्थं क्षीरसमं पचेत्॥

**अउ49.249**
शङ्खपुष्पीवचाकुष्ठत्रिवृतामरदारुभिः।
वरायष्टीसिताद्राक्षामहिषाक्षैः पलांशिकैः॥

**अउ49.250**
युक्तैः कमलकिञ्जल्कत्रिपलेन हिमेऽत्र च।
क्षौद्राच्चतुष्पलं दद्यादेतन्मर्त्यामृताह्वयम्।
चक्षुष्यं बृंहणं मेध्यं वर्ण्यं वर्षशतप्रदम्॥

**अउ49.251**
पचेत्पलानि कञ्चुक्यास्त्रीणि लोहात्सुचूर्णितात्।
पलाशबीजाच्चत्वारि दश द्वे च फलत्रयात्॥

**अउ49.252**
अष्टादश शतावर्या बीजकस्यैकाविंशतिः।
जीवन्त्याः षोडशैकध्यं पौर्णमास्यां विपाचयेत्॥

**अउ49.253**
वहेऽपां पादशेषे च पृथगर्द्धाढकेन च।
पचेत् काञ्जिकमस्तुभ्यां घृतप्रस्थं पिचून्मितैः॥

**अउ49.254**
शताह्वारुष्करवचाकुष्ठैलाबिडहिङ्गुभिः।
सौवर्चलान्वितैः पद्मकेसराच्च त्रिभिः पलैः॥

**अउ49.255**
पञ्चभिः पद्मबीजानां पद्मद्वादशकेन च।
एतत् सोमामृतं पीत्वा यस्सोमोऽद्यापि राजते॥

**अउ49.256**
इदमुपयुज्य सर्पिरतिवीर्यमुदारगुणं भवति सुवाक्सुधीः सुदृढसुबलः सुभगः।
ग्रहमरकोपसर्गविषभीतिभिरधृष्यवपुर्विजितजराज्वरो नयति वर्षशतद्वितयम्॥

**अउ49.257**
दानवेन्द्र विजितान् पुरा सुरान् भ्रष्टकान्तिधृतिधैर्यतेजसः।
वीक्ष्य विष्णुरमृतं किलासृजत् गुग्गुलुं बलवपुर्जयप्रदम्॥

**अउ49.258**
अद्याप्यतः सुरगणाः किल धूपमुख्यान् हित्वा वरागरुतुरुष्कहिमेन्दुदर्पान्।
निर्दह्यमानवपुषोऽपि शिखां पिबन्तो गन्धेन यस्य मुदिता दधति प्रसादम्॥

**अउ49.259**
स योगवाही स शिवः स सार्वः सर्वर्तुसेव्यः सुखशीलनीयः।
हन्ता जरापाप्ममलामयानां कर्ताग्निमेधास्मृतिपाटवानाम्॥

**अउ49.260**
गन्धोत्कटः स दाहे स्निग्धद्रवपिच्छिलो विगतशल्यः।
महिषाक्षः पुष्पराग स्फटिकासितनीरदच्छायः॥

**अउ49.261**
यः पद्मरागरागो यः कनकच्छेदपाटलो यो वा।
जयतीन्द्रनीलममलं भग्नोप्यन्तिकान्तिमत्वेन॥

**अउ49.262**
आत्रेयमुनिगीतश्च मन्त्रोयं कर्मसिद्धिकृत्।
भगवान् पुण्डरीकाक्षो देवाश्च सपुरन्दराः॥

**अउ49.263**
जरामरणदुःखेभ्यो यथा तेग्युत्थिताः सुराः।
उपयोक्तुस्तथैवास्य भव त्वं हि महाबल॥

**अउ49.264**
पञ्चमूलस्य महतः क्वाथेन हितभोजिना।
गुग्गुलुः शीलितो हन्ति सर्वान् वातकफामयान्॥

**अउ49.265**
लघीयसोपि तद्वच्च सुखोष्णेन जलेन वा।
मस्तुधान्याम्लमद्यैर्वा वचादेः सलिलेन वा॥

**अउ49.266**
वरणादेस्तु बाधिर्यदन्तकर्णशिरोरुजः।
स्वरभेदोदरश्वासवर्ध्मान्तर्गुल्मविद्रधीन्॥

**अउ49.267**
वातपित्तास्रोरोगेषु बृंहणार्थिनि चेष्यते।
क्वाथेन वाजिगन्धाया जीवनीयगणस्य वा॥

**अउ49.268**
क्वाथेनोत्पलमृद्वीकारक्तचन्दनजन्मना।
वातपित्तं निहन्त्येष पद्मकादिगणस्य वा॥

**अउ49.269**
चव्यकुष्ठविडङ्गानां यान्या नागरस्य वा।
प्रसारिण्याश्च तोयेन गुग्गुलुः कफवातजित्॥

**अउ49.270**
त्र्यूषणाग्निघनवेल्लवराभिर्भक्षयन् समघृतं महिषाक्षम्।
आशु हन्ति कफमारुतमेदोदोषजान् बलवतोपि विकारान्॥

**अउ49.271**
पटोलनिम्बत्रिफलागुडूची गायत्रिरात्रिद्वयबीजकानाम्।
क्वाथैः पृथक्पथ्यपरस्य हन्ति मासेन घोरान् कफपित्तरोगान्॥

**अउ49.272**
विशेषाच्छोफवीसर्पदुष्टव्रणभगन्दरान्।
शुक्रार्तवमनोदोषप्रमेहश्वित्रपाण्डुताः॥

**अउ49.273**
पटोलारिष्टैर्निर्यूहपिष्टस्तुल्यरसाञ्जनः।
गलगोगापचीव्यङ्गग्रन्थिस्थौल्यकृमिप्रणुत्॥

**अउ49.274**
शिलाजतुसमःपीतः पयसा वातशोणितम्।
निवर्तयत्यतिबलं क्षीरमांसघृताशिनः॥

**अउ49.275**
रसेन पयसा मूत्रैर्वातपित्तकफापहः।
ब्राह्मीमण्डूकशङ्खानां पृथङ्मेधादिकृद्रसैः॥

**अउ49.276**
मागधिकाग्निकलिङ्गबिडगैर्बिल्वधृतैः सवरापलषट्कैः।
गुग्गुलुना सदृशेन समेतैः क्षौद्रयुतैः सकलामयनाशः॥

**अउ49.277**
पिबेत् पलशतं योस्य विधिना नियतो यतिः।
नाकालमृत्योर्न व्याधेर्न तस्य जरसो भयम्॥

**अउ49.278**
कल्पयेदौषधैः स्वै स्वैर्व्याधिषु व्याधिनाशनैः॥

**अउ49.279**
शिलाजतुविधानं च गुग्गुलोः सर्वमिष्यते॥

**अउ49.280**
गुणनिधिरपिकुर्यात् सोतिमात्रोपयुक्तस्तिमिरवदनशोषक्लबिताकार्श्यमोहान्।
शमलशिथिलभावं देहरौक्ष्यं च तस्माद्रजनिचरनिषेवीस्य्यान्न रोगेष्वमीषु॥

**अउ49.281**
ग्रीष्मेर्कतप्ता गिरयो जतुतुल्यं वमन्ति यत्।
हेमादिषट्धातुरसं प्रोच्यते तच्छिलाजतु॥

**अउ49.282**
सर्वदोषप्रशमनं सर्वरोगविनाशनम्।
शिलाभ्यो यस्य यज्जातं धातोस्तत्तद्गुणं वदेत्॥

**अउ49.283**
सर्वं च तिक्तकटुकं नात्युष्णं कटु पाकतः।
छेदनं च विशेषेण लौहं तत्र प्रशस्यते॥

**अउ49.284**
गोमूत्रगन्धि कृष्णं गुग्गुल्वाभं विशर्करं मृत्स्नम्।
स्निग्धमनम्लकषायं म्दृउ गुरु च शिलाजतु श्रेष्ठम्॥

**अउ49.285**
रास्नादशमूलबला पुनर्नवैरण्डशुण्ठिमधुकानाम्।
क्वाथेन भावितं तद्विशेषतो वातरोगघ्नम्॥

**अउ49.286**
द्राक्षाभीरुपटोलत्रायन्तिगुडूचिजीवनीयानाम्।
निर्यूहेण सुभिन्नं शस्तं पित्तामये सुतराम्॥

**अउ49.287**
क्रिमिजिद्वचाफलत्रय करञ्जघनमुख्यपञ्चमूलानाम्।
सहपञ्चकोलकानां क्वाथेन कफामये भाव्यम्॥

**अउ49.288**
लघुपञ्चमूलशुण्ठी द्राक्षाकाश्मर्यवाजिगन्धानाम्।
सगुडूचिशरबलानां रसेन पित्तानिलगदेषु॥

**अ३49.289**
घनकुष्ठवचात्रिफला सुरदारुविडङ्गपञ्चकोलानाम्।
रजनीमरिचातिविषा युक्तानां वातकफजेषु॥

**अ३49.290**
पाठापटोलनिम्बत्रिफलाघनकुटजसप्तपर्णानाम्।
त्रायन्त्यमृतातिविषासहितानां पित्तकफजेषु॥

**अ३49.291**
निचयेऽपिदोषबलतो योगानेतान् विकल्प्य युञ्जीत।
विविधगणसङ्ग्रहोक्तैस्तैस्तैश्च गणैर्गिरेस्सारम्॥

**अ३49.292**
व्याधिव्याधितसात्म्यं समनुसरन् भावयेदयः पात्रे।
प्राक्केवलजलधौतं शुष्कं क्वाथैस्ततो भाव्यम्॥

**अ३49.293**
समगिरिजमष्टगुणिते निष्क्काथ्यं भावनौषधं तोये।
तन्निर्यूहेऽष्टांशे पूतोष्णे प्रक्षिपेत् गिरिजम्॥

**अ३49.294**
तत् समरसतां यातं संशुष्कं प्रक्षिपेद्रसे भूयः।
स्वैस्वैरेवं क्वाथैर्भाव्यं वारान् भवेत् सप्त॥

**अ३49.295**
अथ स्निग्धस्य शुद्धस्य घृतं तिक्तकसाधितम्।
त्र्यहं युञ्जीत गिरिजमेकैकेन तथा त्र्यहम्॥

**अ३49.296**
फलत्रयस्य यूषेण पटोल्या मधुकस्य च।
योगयोग्यं ततस्तस्य कालापेक्षं प्रयोजयेत्॥

**अ३49.297**
शिलाजमेवं देहस्य भवत्यत्युपकारकम्।
गुणान् समग्रान् कुरुते सहसा व्यापदश्च न॥

**अ३49.298**
एकत्रिसप्तसप्ताहं कर्षमर्द्धपलं पलम्।
हीनमध्योत्तमो योगः शिलाजस्य क्रमान्मतः॥

**अ३49.299**
संस्कृतं संस्कृते देहे प्रयुक्तं गिरिजाह्वयम्।
युक्तं व्यस्तैः समस्तैर्वा ताम्रायोरूप्यहेमभिः॥

**अ३49.300**
क्षीरेणालोडितं कुर्याच्छीघ्रं रासायनं फलम्।
हन्याद्रोगानशेषांश्च जीर्णे हितमिताशिनः॥

**अ३49.301**
व्यायामातपमारुतचेतःसन्तापगुरुविदाह्यादि।
उपयोगादपि परतो द्विगुणं परिवर्जयेत् कालम्॥

**अ३49.302**
कुलत्थान् काकमाचीं च कपोतांश्च सदा त्यजेत्।
पिबेन्माहेन्द्रमुदकं कौपं प्रास्रवणाम्बु वा॥

**अ३49.303**
ज्वरी ज्वरघ्नाम्बुदपर्पटादेः क्वाथेन रक्ती मधुयष्टिकायाः।
शोषी सरैः क्रव्यभुगामिषोत्थैर्मायुरमांसैः पयसा च कार्श्ये॥

**अ३49.304**
मध्वम्बुना मेदसि सम्प्रवृद्धे क्षीरेण पयाकुलबुद्धिसत्वः।
पाण्ड्वामयार्त्तावुदरे सशोफे पिबेच्छिलाजं महिषीजलेन॥

**अ३49.305**
अश्म वीरतराद्येन कुष्ठं खदिरवारिणा।
विषं विषघ्नैरगदैर्हन्त्येवं तद्यथामयम्॥

**अउ49.306**
शैलजत्रिकटुक्षौद्रक्षौद्रधातून् निषेवते।
क्षीरौदनाशी यो जीर्णे यक्ष्मणा न स बाध्यते॥

अस49.307। सुभावितात्सारगणैस्तुलां पीत्वा शिलोद्भवात्।
सारांबुनैव भुञ्जानः शालिं जाङ्गलजै रसैः॥

**अउ49.308**
व्यपोह्य मधुमेहाख्यमन्तकं रोगसङ्करम्।
वपुर्वर्णबलोपेतः शतं जीवत्यनामयः॥

**अउ49.309**
शिलाह्वात् षोडशपलं त्रिस्त्रिरेकत्र भावयेत्।
वराया दशमूलस्य गुडूच्याः कर्कशस्य च॥

**अउ49.310**
बलाया मधुयष्ट्याश्च रसे गव्ये च वारिणि।
क्षीरे सकृत्क्रमेणैवं सप्तकृत्वस्तथा पुनः॥

**अउ49.311**
काकोलियुग्मघनपुष्करवह्निरास्ना मेदायुगर्द्धिचविकागजपिप्पलीनाम्।
पाठाद्विजीवकनिकुम्भविदारियुग्म वीरावरीमधुफलांशुमतीद्वयानाम्॥

**अउ49.312**
पलिकानामब्द्रोणे सिद्धानां पादशेषिते क्वाथे।
भावितमित्थं गिरिजं द्विपलैश्चूर्णीकृतैर्युञ्ज्यात्॥

**अउ49.313**
कर्कटशृङ्गीधात्रीव्योषैस्तालीसपत्रकुडबेन।
चूर्णपलेन विदार्यास्त्वक्षीर्याः कर्षयुग्मेन॥

**अउ49.314**
द्विपलेन चतुर्जातात्तैल घृतक्षौद्रशर्कराभिश्च।
द्विपलाद्द्विगुणाभिः कार्या गुटिकास्ततोक्षसमाः॥

**अउ49.315**
ताः शुष्का नवकुम्भे जातीपुष्पाधिवासिते स्थाप्याः।
तासामेकां खादेत् प्रतिदिनमनुपानमत्रेष्टम्॥

**अउ49.316**
क्षीररसदाडिमाम्भो मार्द्वीकसुरासवान्यतमम्।
जीर्णेन्नं लघु भोज्यं यूषपयःपिशितनिर्यूहैः॥

**अउ49.317**
सप्ताहमात्रमेवं सर्वान्नीनः क्रमात् भवेत् परतः।
भक्तस्यान्ते प्राग्वा गुटिका न विरुध्यते सैषा॥

**अउ49.318**
निरपाया भूरिफला परिहारसुखोपयोजिता जयति।
प्रबलमपि वातशोणितमूरुस्तम्भं ज्वरं दीर्घम्॥

**अउ49.319**
भगमूत्रशुक्रदोषप्लीहयकृद्रक्तपाण्डुहृद्रोगान्।
वर्ध्मवमिगुल्मपीनसहिध्माकासारुचिश्वासान्॥

**अउ49.320**
विद्रधिमुदरं कुष्ठं श्वित्रं जाड्यं क्षयं मदं मूर्च्छाम्।
उन्मादमपस्मारं मुखनेत्रशिरोगदांस्तांतान्॥

**अउ49.321**
आनाहमतीसारं हलीमकं कामलाग्रहणिरोगान्।
ग्रन्थ्यर्बुदान् सपिटकान् भगन्दरं गण्डमालां च॥

**अउ49.322**
अतिकार्श्यमतिस्थौल्यं स्वेदमथश्लीपदं गुदे कीलान्।
दंष्ट्राविषं समूलं गरप्रयोगान् सुघोरांश्च॥

**अउ49.323**
अभिचारमरातिकृतं दुःस्वप्नं भौतिकीं तथा बाधाम्।
पाप्मालक्ष्मीं चेयं गुटिका शमयेच्छिवा नाम्ना॥

**अउ49.324**
वृष्यायुष्या धन्या कान्तियशःश्रीविबोधिनी मेध्या।
कुरुते नृपवल्लभतां जयं विवादे च वक्त्रस्था॥

**अउ49.325**
जितखलतिवलीपलिता जीवयति सुखं शतद्वयं शरदाम्।
वर्षद्वयप्रयोगाद्वर्षशतचतुष्टयं जीवेत्॥

**अउ49.326**
न सोस्तिरोगो भुवि साध्यरूपो जत्वश्मजं यं न जयेत् प्रसह्य।
तत्कालयोगैर्विधिवत्प्रयुक्तैः स्वस्थस्य चोर्जां विपुलां दधाति॥

**अउ49.327**
अमरमन्दिरमन्दरसम्भवाच्छतपलं गिरिजादुपयोजय।
यदि जरामयदुःखविवर्जितां सुचिरमिच्छसि जीवितसन्ततिम्॥

**अउ49.328**
दशगुणमुपयुङ्क्ते यः शतं शैलजाताल्लघुहितमितभोजी वर्जयन् वर्जनीयान्।
सततसमनुषक्तान् वर्जितान् वैद्यवृन्दैर्विधमति सगदौघान् नेक्षते चायुषोन्तम्॥

**अउ49.329**
समुद्बभूवामृतमन्थनोत्थः स्वेदः शिलाभ्योऽमृतवान् गिरेः प्राक्।
यो मन्दरस्यात्मभुवा हिताय न्यस्तः स शैलेषु शिलाजरूपी॥

**अउ49.330**
सुवर्णशैलप्रभवो विष्णुना काञ्चनो रसः।
तापी किरातचीनेषु यवनेषु च निर्मितः॥

**अउ49.331**
ताप्यां सूर्यांशुसन्तप्तो माधवे मासि दृश्यते।
मधुरः काञ्चनाभासः साम्लो रजतसन्निभः॥

**अउ49.332**
किंचित् कषाय उभयः शीतः पाके कटुर्लघुः।
शिलानिर्यासवच्चात्र कुलत्थादीन् परित्यजेत्॥

**अउ49.333**
न तन्निषेवी जरसाभिभूयते न पन्नगैर्नापि गरैर्न वृश्चिकैः।
न पाण्डुमेहज्वरशोफयक्ष्मभिर्न कण्ठनेत्रश्रवणत्वगामयैः॥

**अउ49.334**
सोदश्वित्को माक्षिकधातुः सघृतो वा सक्षौद्रो वा क्षौद्रघृताभ्यां सहितो वा।
साम्भस्को वा तैलयुतो वा विनिहन्ता त्वग्दोषाणां सर्वविषाणां सगराणाम्॥

**अउ49.335**
अक्षद्राक्षायोमलमुस्तामलकानां सव्योषाणां पर्वतनिर्यासयुतानाम्।
दत्वा तुल्यं माक्षिकधातुं मधुमिश्रं लिह्यात्पाण्डुव्याध्यभिभूतः शिवमिच्छन्॥

**अउ49.336**
अंशः शुण्ठ्या लोहमलांशो बदरांशः पिप्पल्यंशो माक्षिकधातुर्द्विगुणांशः।
क्षौद्रं कामं कृष्णतिलानामपि चांशः श्रेष्ठा पिण्डी पाण्डुविकारश्वयथुघ्नी॥

**अउ49.337**
सायश्चूर्णं माक्षिकधातुं मधुमिश्रं व्योषोपेतं पर्वतनिर्याससमेतम्।
क्षीराहारो योऽवलिहानः प्रयतात्मा कृत्युद्वारं शोषमपोहत्यचिरेण॥

**अउ49.338**
लोहं सर्पिर्माक्षिकधातुर्मधुमात्रा धात्रीचूर्णं केसरमम्बुप्रभवानाम्।
योगः कुर्यादेष सिताभागविमिश्रश्चक्षुर्घ्राणश्रोत्ररसज्ञानविबोधम्॥

**अउ49.339**
कृत्यैकस्थं माक्षिकधातुं त्रिफलां च भ्राष्ट्रे पक्त्वा ये सहविष्कं विलिहन्ति।
पथ्यादास्तान् वार्धकदोषा न भजन्ते मातुर्दोषाः स्तन्यनिवृत्तानिव वालान्॥

**अउ49.340**
समश्नतो माक्षिकधातुचूर्णं सर्पिर्मधुभ्यां त्रिफलारजश्च।
शनैः शनैर्याति जरा विनाशं प्रत्यन्तवासादिव लोकयात्रा॥

**अउ49.341**
त्रिकोणकाण्डा सुबहुप्रताना फलेषु पीता कुसुमेषु रक्ता।
पत्रैःसदुग्धैर्मृदुरोमवद्भिस्ताम्बूलतुल्यैर्घनकन्दमूला॥

**अउ49.342**
पवनविवस्वदंशुवनितादिषुकामचरा विविधमनःशरीरगदवृन्दनिवृत्तिकरी।
भुवि परमौषधिर्महिषवल्लरीति प्रथिता क्वचिदपि वृद्धदारक इयत्वपि वेल्लरिका॥

**अउ49.343**
वसन्ते सङ्गृहीतानां शोषितानामनातपे।
वृद्धदारकमूलानां तुलां संचूर्ण्य सर्पिषा॥

**अउ49.344**
आप्लाव्य घृतपात्रस्थां धान्ये पक्षमुपेक्षिताम्।
लिह्यादनु पिवेत्क्षीरं जीर्णे क्षीरघृताशनः॥

**अउ49.345**
तत्प्रयोगाज्जराजीणा वृद्धा दारकतामियात्।
भग्नास्थिर्गद्गदः पङ्गुः कृशो ह्रस्वोन्यरूपताम्॥

**अउ49.346**
निरस्ताशेषदोषोत्थनखभेदाद्युपद्रवः।
अपस्मारग्रहोन्मादपाप्मालक्ष्मीविवर्जितः।
दीप्ताग्निर्बलवान् वाग्मी जीवेद्वर्षशतानि षट्॥

**अउ49.347**
चूर्णितैरश्वगन्धायाः संयुतं त्रिंशता पलैः।
तत्तुल्यं दारकं प्राश्य पयसा सर्पिषाथवा॥

**अउ49.348**
जीर्णो पूर्ववदश्नीयाद्यो जीवेत् स समाः शतम्।
वाजिवेगो गजप्राणः सुरूपो भास्करद्युतिः॥

**अउ49.349**
अश्वगन्धेन संयोज्यौ वरीगोक्षुरकौ पृथक्॥

**अउ49.350**
यो लिह्यात् सर्पिषा चूर्णं वृद्धदारकमूलजम्।
सप्ताहं यूषभक्ताशी स्यात् स किन्नरतुल्यवाक्॥

**अउ49.351**
स्वरसेन शतावर्या सप्ताहं भावितं च तत्।
लिहानः पूर्ववन्मासं शतं जीवेन्महामतिः॥

**अउ49.352**
लिह्याद्वा मधुसर्पिर्भ्यां धात्रीस्वरसभावितम्।
क्षीरेण वा पिबन्मासं शतं जीवेदरुक्सुधीः॥

**अउ49.353**
वृद्धदारकमूलानां रसं क्षीरेण यः पिबेत्।
तत्कल्कसिद्धं सर्पिर्वा सजीवेन्नीरुजः शतम्॥

**अउ49.354**
पीतं वेल्लरिकामूलं गोमूत्रेण सहोषितम्।
कुष्ठगुल्मोदरगरश्लीपदार्शोपचीर्जयेत्॥

**अउ49.355**
पिप्पली त्रिफला दार्वी महौषधपुनर्नवाः।
पृथग्दशपलाः सर्वैस्तुल्यांशो वृद्धदारकः॥

**अउ49.356**
धान्याम्लपीतस्तच्चूर्णो जीर्णे स्वच्छन्दभोजनः।
श्लीपदाममरुद्वर्ध्मगुल्मोदरगरान् हरेत्॥

**अउ49.357**
शौण्डी विश्वदराद्वीपिवेल्लमुस्ताः समांशकाः।
तुल्यवेल्लरिकामूलाः साज्यक्षौद्रास्तथागुणाः॥

**अउ49.358**
तत्फलात् स्वरसं कर्षं लिहंस्तुल्याज्यमाक्षिकम्।
गव्यं पिबेदनु पयो माहिषं वा यथेष्टभुक्॥

**अउ49.359**
पञ्चाहेन जयेत् कासान् सप्ताहेन त्वगामयान्।
महाकुष्ठानि मासेन भवेन्मासद्वयेन तु।
पञ्चवर्षशतायुष्को धीमेधाबलरूपवान्॥

**अउ49.360**
वेल्लरीफलमूलानां पिप्पल्याश्च समं रजः।
वेल्लरीफलमूलोत्थस्वरसेनैव भावयेत्॥

**अउ49.361**
अमृताया रसेनानु ततः शुष्कं घृताप्लुतम्।
निखनेत् घृतकुम्भस्थं करीषे बहुसञ्चये॥

**अउ49.362**
मासादुद्धृत्य तं लेहं यो वर्षमुपयोजयेत्।
सहस्रायुः स जरसा सहसा नाभिभूयते॥

**अउ49.363**
कुष्ठचूर्णतुलां क्षौद्रघृतस्य द्वितुलान्विताम्।
धान्यराशौ दिनशतं निहितामुपयोजयेत्॥

**अउ49.364**
सुगन्धिकायो दृक्श्रोत्रस्वरवर्णेष्वतीन्द्रियः।
गतव्याधिजरो जीवेत् सप्तवर्षशतानि ना॥

**अउ49.365**
कुटीप्रवेशः क्षणिनां परिच्छदवतां हितः।
अतोन्यथा तु ये तेषां सौर्यमारुतिको विधिः॥

**अउ49.366**
वातातपसहा योगा वक्ष्यन्तेऽतो विशेषतः।
सुखोपचारा भ्रंशेऽपि ये न देहस्य बाधकाः॥

**अउ49.367**
शीतोदकं पयः क्षौद्रं घृतमेकैकशो द्विशः।
त्रिशः समस्तमथवा प्राक्पीतं स्थापयेद्वयः॥

**अउ49.368**
हरीतकीमागधिकाक्षधात्रीश्चूर्णीकृता लोहरजोविमिश्राः।
सर्पिर्मधुभ्यामदतः शरीरं कालाग्रदूती न जरा दुनोति॥

**अउ49.369**
हरीतकीमागधिकाविडङ्गशशाङ्कलेखामलकच्छवीनाम्।
सितोपलौतपघृतान्वितानां रोगा न लेढारमभिद्रवन्ति॥

**अउ49.370**
त्रिफलामसनोदकेन पिष्टां रजनीं पर्युषितामयः कपाले।
मधुना मधुरां लिहन् हिनस्ति स्थविमानं जरसं गदांश्च सर्वान्॥

**अउ49.371**
खदिरासनयूषभावितायास्त्रिफलाया घृतमाक्षिकप्लुतायाः।
नियमेन नरा निषेवितारो यदि जीवन्त्यजराः किमत्र चित्रम्॥

**अउ49.372**
असनस्वरसेन भावितानामभयानां सविडङ्गतण्डुलानाम्।
मधुलोहरजोघृताप्लुतानां न हि लेढारमभिद्रवन्ति रोगाः॥

**अउ49.373**
बीजकम्य रसमङ्गुलिहार्यं शर्करामधुघृतं त्रिफलां च।
शीलयत्सु पुरुषेषु जरतास्वागतापि विनिवर्तत एव॥

**अउ49.374**
दर्वीप्रलेपास्त्रिफलाकषायः सितोपला तैलमधुप्रगाढः।
सपिप्पलीनागरलोहरेणुस्तनोः सपत्नीं जरसं निहन्ति॥

**अउ49.375**
फलत्रयत्र्यूषणचूर्णयुक्तां द्राक्षां ससर्पिर्मधुशर्करां च।
क्षीरानुपानं पुरुषा लिहन्तो जीवन्ति निर्धूतजराविकाराः॥

**अउ49.376**
हरीतकीं सर्पिषि सम्प्रताप्य समश्नतस्तत् पिबतो घृतं च।
भवेच्चिरस्थायि बलं शरीरे सकृद्कृतं साधु यथा कृतज्ञे॥

**अउ49.377**
आराच्चितानां कलशं पुराणं धात्रीफलानां मधुनश्च पूर्णम्।
संवत्सरार्द्धं निहितं यवेषु निषेवमाणो जरसं निहन्ति॥

**अउ49.378**
धात्रीकृमिघ्नासनसारचूर्णं सतैलसर्पिर्मधुलोहरेणु।
निषेवमाणस्य भवेन्नरस्य तारुण्यलावण्यमपि प्रणष्टम्॥

**अउ49.379**
नवामलकशुक्तयो मधु घृतं रजश्चायसं चतुष्टयमयोघटस्थमिति चूर्णितं वत्सरम्॥

**अउ49.380**
क्रमेण लिहतः पयोनुपिबतश्च पथ्याशिनश्चिरं भवति जीवितं क्षयमुपैति पृथवीजरा॥

**अउ49.381**
चूर्णं श्वदंष्ट्रामलकामृतानां लिहन् ससर्पिर्मधुभागयुक्तम्।
वृषस्थिरःशान्तविकारदुःखः समाः शतं जीवति कृष्णकेशः॥

**अउ49.382**
विडङ्गसारं मधुकं च पिष्टं भल्लातकक्वाथमधुप्रगाढम्।
अर्शांसि जन्तूंश्च जयत्युदीर्णान् वह्निं च सन्धुक्षयति क्षणेन॥

**अउ49.383**
विडङ्गभल्लातकचित्रकाणां गुडोत्तराणामभयान्वितानाम्।
तैलेन चूर्णानि निषेवमाणान् शरीरिणो नोपतपन्ति रोगाः॥

**अउ49.384**
विडङ्गभल्लातकनागराणि येऽश्नन्ति सर्पिर्मधुसंयुतानि।
जरानदीं रोगतरङ्गिणीं ते लावण्ययुक्ताः पुरुषास्तरन्ति॥

**अउ49.385**
विडङ्गकल्कं स्वरसेन धात्र्याः क्षौद्रेण युक्तं च पिबेन्नरो यः।
द्राक्षारसक्षौद्रपरिप्लुतं वा विजित्य रोगान् स भवेच्छतायुः॥

**अउ49.386**
चूर्णं समं मागधिकाकणानां विडङ्गचूर्णेन सचित्रकेण।
निषेवमाणो मधुतैलमिश्रं वयःपरीणामजले न मज्जेत्॥

**अउ49.387**
पुनर्नवस्यार्द्धपलं पलं वा पिष्टं पिबेद्यः पयसार्द्धमासम्।
मासद्वयं तत्त्रिगुणं समां वा जीर्णोपि भूयः सपुनर्नवः स्यात्॥

**अउ49.388**
मूर्वाबृहत्यंशुमतीबलानामुशीरपाठासनसारिवाणाम्।
कालानुसार्यागरुचन्दनानां वदन्ति पौनर्नवमेव कल्पम्॥

**अउ49.389**
शतवरीकल्ककषायसिद्धं ये सर्पिरश्नन्ति सिताद्वितीयम्।
तान् जीविताध्वानमभिप्रपन्नान् न विप्रलुम्पन्ति विकारचोराः॥

**अउ49.390**
पीताश्वगन्धा पयसार्द्धमासं घृतेन तैलेन सुखाम्बुना वा।
कृशस्य पुष्टिं वपुषो विधत्ते बालस्य सस्यस्य यथा सुवृष्टिः॥

**अउ49.391**
दिने दिने कृष्णतिलप्रकुञ्चं समश्नतः शीतजलानुपानम्।
पोषः शरीरस्य भवत्यनल्पो दृढीभवन्त्यामरणाच्च दन्ताः॥

**अउ49.392**
शिलाजतुक्षौद्रविडङ्गसर्पिर्लोहाभयापारदताप्यभक्षः।
आपूर्यते दुर्बलदेहधातुस्त्रिपञ्चरात्रेण यथा शशाङ्कः॥

**अउ49.393**
मधु मधुरसा लाजा भार्ङ्गी मधूकशतावरी।
कमलकुसुमत्वक्षीरीभिः समं जतु पार्वतम्।
प्रचुरहविषा लेहं लीढ्वा समृद्धसितोपलं।
शिथिलजरसो मन्दातका भवन्ति चिरायुषः॥

**अउ49.394**
गायत्रीशिखिशिंशपासनशिवा वेल्लाक्षकारुष्करान् पिष्ट्वाष्टौ दशषट्गुणेम्भसि दृतान् खण्डैः सहायोमयैः।
पात्रे लोहकृते त्र्यहं रविकरैरालोडयन् पाचयेदग्नौ चानु मृदौ सलोहशकलं पादस्थितं तत् पचेत्॥

**अउ49.395**
पूतस्यांशः क्षीरतोंशस्तथांशौ भार्ङ्गान्निर्यासात् पिबर्यास्त्रयोंशाः।
अंशाश्चत्वारस्तत्र हय्यङ्गवीनादेकीकृत्यैतत् साधयेत् कृष्णलौहे॥

**अउ49.396**
विमलया सितया मधुनाथवा युतमयुक्तमिदं यदि वा घृतम्।
स्वरुचिभोजनपानविचेष्टितो भवति ना पलशः परिशीलयन्॥

**अउ49.397**
श्रीमान् निर्धूतपाप्मा वनमहिषबलो वाजिवेगः स्थिराङ्गो केशैर्भृङ्गाङ्गनीलैर्मधुसुरभिमुखो नैकयोषिन्निषेवी।
वाङ्मेधाधीसमृद्धः सुपटुहुतवहो मासमात्रोपयोगाद्धत्तेसौ नारसिंहं वपुरनलशिखातप्तचामीकराभम्॥

**अउ49.398**
हविरिदमतिप्रभावं स्वमिव वपुर्निर्मितं नृसिंहेन।
नश्यन्ति यतो भीता व्याध्याधिजरासुरा दूरात्॥

**अउ49.399**
भृङ्गप्रवालानमुनैवभृष्टान् घृतेन यः खादति यन्त्रितात्मा।
विशुद्धकोष्ठोऽसनसारासिद्धदुग्धानुपस्तत्कृतभोजनार्थः॥

**अउ49.400**
मासोपयोगात् स सुखी जीवत्यब्दशत त्रयम्।
गृह्णाति सकृदप्युक्तमविलुप्तस्मृतीन्दिर्यः॥

**अउ49.401**
अनेनैव च कल्पेन यस्तैलमुपयोजयेत्।
तानेवाप्नोति स गुणान् कृष्णकेशश्च जायते॥

**अउ49.402**
काश्मर्याणां तुलां मासं स्थितां मधुघृतोक्षिताम्।
उपयुज्य पयोन्नाशी चिरं जीवति कान्तिमान्॥

**अउ49.403**
उक्तानि शक्यानि फलान्वितानि युगानुरूपाणि रसायनानि।
महानुशंसान्यपि चापराणि प्राप्त्यादिकष्टानि न कीर्त्तितानि॥

**अउ49.404**
अमानुषाणामतिविस्मयानां सत्कर्मणां यद्यपि तानि हेतुः।
समूलकाषं तु कषन्ति देहं भ्रंशाद्विधेस्तेन विवर्जितानि॥

**अउ49.405**
युगस्वभावाद्यदि चौषधीनां क्रियासु शक्तिः परिकल्प्यतेऽल्पा।
आयुर्बलादिष्वपि सा तथैति यत्नान्निषेव्याणि रसायनानि॥

**अउ49.406**
न चौषधीनामपि सर्वथैव प्रभावहानिः परिकल्पनीया।
फलं प्रयात्यूर्ध्वमधस्त्रिवृत्तु प्रत्यक्षतः कस्य न सिद्धमेतत्॥

**अउ49.407**
अदेशकालोपहितान्यसात्म्यान्यत्युष्णतीक्ष्णानि यथौषधानि।
नाशं नयन्ते सहसैव देहं सम्यक्प्रयुक्तानि तथैव वृद्धिम्॥

**अउ49.408**
जित्वा तस्मादिन्द्रियादीन् सुदुष्टान् कालोपेतः श्रद्दधानो यथावत्।
आयुःप्रज्ञातेजसां यद्विवृध्यै वीर्योपेतं शीलयेदौषधं तत्॥

**अउ49.409**
उत्साहवीरैरपि सर्वकालं नरैरगम्यानि तपोदरिद्रैः।
महार्णवानामिव दुस्तराणां पाराण्यपाराणि रसायनानाम्॥

**अउ49.410**
रसायनानामुपयोगसम्पदा कृतप्रसादैर्मलदोषधातुभिः।
स्थिरं शरीरं क्रियते शरीरिणां कुलं यथा सत्पुरुषैरधिष्ठितम्॥

**अउ49.411**
दान्तेन्द्रियेण शास्त्रार्थं यथावदनुतिष्ठाता।
कियद्वा दीर्घदर्शित्वं नेन्द्रत्वमपि दुर्लभम्॥

**अउ49.412**
रसायनविधिभ्रंशाज्जायेरन् व्याधयो यदि।
यथास्वमौषधं तेषां कार्यं मुक्त्वा रसायनम्॥

**अउ49.413**
अध्याक्रान्ता येऽम्लपटुक्षारकटूष्णैर्द्रव्यैस्तीक्ष्णैः सन्निहिता तेषु जरत्ता।
सन्धुक्ष्योग्निस्तैरुपजाते च विवर्ज्या योगास्तेग्नौ धातुसमृद्धेः स हि मूलम्॥

**अउ49.414**
आयुर्योगाः साध्वपि युक्ता मृदुवह्नौ नैरर्थक्यं यान्ति कृतघ्नेऽप्युपकाराः।
दीप्ते वह्नौ ते तु गुणौघैरपि तुच्छा विस्तीर्यन्ते पात्रनिसृष्टा इव भोगाः॥

**अउ49.415**
सत्यवादिनमक्रोधमध्यात्मप्रवणेन्द्रियम्।
शान्तं सद्वृत्तनिरतं विद्यान्नित्यरसायनम्॥

**अउ49.416**
गुणैरोभिः समुदितः सेवते यो रसायनम्।
सनिर्वृतात्मा दीर्घायुः परत्रेह च मोदते॥

**अउ49.417**
शास्त्रानुसारिणी चर्या चित्तज्ञाः पार्श्ववर्त्तिनः।
बुद्धिरस्खलितार्थेषु परिपूर्णं रसायनम्॥

**अउ49.418**
गवामृजुत्वेन कृतानुकारैरनन्यवागाशयदेहचेष्टैः।
स्थिरेन्द्रियायुर्ज्वलनैः सुशीलैः सुवृद्ध गोपैः समधिष्ठितेषु॥

**अउ49.419**
प्राज्याज्यदुग्धौषधिपादपेषु हुम्भारवैर्वल्गितवत्सकेषु।
मठप्रवेशेन विनापि सिद्धिं व्रजन्ति गोष्ठेषु रसायनानि॥
॥इति एकोनपच्चाशोध्यायः॥
॥इति सप्तमं रसायनाख्यमङ्गं सम्पूर्णम्॥

॥अथ पञ्चशोऽध्यायः॥

**अउ50.1**
अथातो वाजीकरणविधिं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहु रात्रेयादयो महर्षयः॥

**अउ50.2**
वाजीकरणमन्विच्छेत् सततं विषयी पुमान्।
तुष्टिः पुष्टिरपत्यं च गुणवत्तत्र संश्रितम्।
अपत्यसन्तानकरं यत्सद्यः सम्प्रहर्षणम्॥

**अउ50.3**
वाजीवातिबलो येन यात्यप्रतिहतोऽङ्गनाः।
भवत्यतिप्रियः स्त्रीणां येन येनोपचीयते।

तद्वाजीकरणं तद्धि देहस्यौजस्करं परम्॥

**अउ50.4**
सारो हि जीवलोकस्य स्त्री स्त्रीगुणसमन्विता।
स्त्रियः साद्ध्व्यः प्रसुवते नरान् गुणमयानिव॥

**अउ50.5**
गोत्रवृद्धिकराह्येता गृहिण्यो गृहदेवताः।
गृहं हि जीनमेताभिर्न श्रीमदपि शोभते॥

**अउ50.6**
न तु ता अपि शोभन्ते जरसानुगता इव।
पुंयोगेन विना स्त्रीणां स हि संवननं परम्॥

**अउ50.7**
वाजीकरणनित्यस्य कामं कामं सिषेविषोः।
न शरीरमवाप्नोति न वा रतिरतिः क्षयम्॥

**अउ50.8**
अच्छायः पूतिकुसुमः फलेन रहितो द्रुमः।
यथैकश्चैकशाखश्च निरपत्यस्तथा नरः॥

**अउ50.9**
अदृष्टपुत्रपौत्रस्य कुलतन्त्वन्तवर्त्तिनः।
संसारसुखबाह्यस्य कीदृशं नाम जीवितम्॥

**अउ50.10**
असम्बन्धोह्यपुत्रस्य नित्यमेव परः परः।
सीदत्यस्यावसाने च गृहं सुस्थेप्यनायकम्।
अतो वाजीकरा योगा निषेव्याः शुक्रवर्द्धनाः॥

**अउ50.11**
कल्यस्योदग्रवयसो वाजीकरणसेविनः।
सर्वेष्वृतुष्वहरहर्व्यवायो न निवार्यते॥

**अउ50.12**
चिन्ताजराभ्यां शुक्रं तु व्याधिभिः कर्मकर्शनात्।
क्षयं गच्छत्यनशनात् स्त्रीणां चातिनिषेवणात्॥

**अउ50.13**
शुक्रक्षयात् भयाच्छोकादविस्रम्भादसेवनात्।
अतिहर्षादतिस्थौल्यान्मलोपचयतः श्रमात्॥

**अउ50.14**
स्त्रीणामकौशलाद्दोषदर्शनादभिचारतः।
मेढ्रामयात् सुमहतः क्रोधतोऽधर्मकीर्त्तनात्।
तृप्तस्यापि स्त्रियो गन्तुं न शक्तिरुपजायते॥

**अउ50.15**
नहि जातबलाः सर्वे नराश्चापत्यभागिनः।
बृहच्छरीरा बलिनः केचिन्नारीषु दुर्बलाः॥

**अउ50.16**
सन्ति चाल्पाश्रयाः स्त्रीषु बलवन्तो बहुप्रजाः।
नराश्चटकवत्केचिद्व्रजन्ति बहुशः स्त्रियः॥

**अउ50.17**
गजवच्चप्रसिञ्चन्ति केचिन्न बहुगामिनः।
केचित्प्रयत्नैर्वाह्यन्ते वृषाः केचित्स्वभावतः॥

**अउ50.18**
तस्मात्प्रयोगान् वक्ष्यामि दुर्बलानां बलप्रदान्।
सुखोपभोगान् बलिनां भूयश्च बलवर्द्धनान्॥

**अउ50.19**
अथ स्निग्धविशुद्धानां निरूहान् सानुवासनान्।
घृततैलरसक्षीरशर्कराक्षौद्रसंयुतान्॥

**अउ50.20**
योगविद्योजयेत् पूर्वं क्षीरमांसरसाशिनाम्।
ततो वाजीकरान्योगान् शुक्रापत्यबलप्रदान्॥

**अउ50.21**
शरेक्षुकुशकाशानां विदार्या वीरणस्य च।
मूलानि कण्टकार्याश्च जीवकर्षभकौ बलाम्॥

**अउ50.22**
मेदे द्वे द्वे च काकोल्यौ सूप्यपर्ण्यौ शतावरीम्।
अश्वगन्धामतिबलामात्मगुप्तां पुनर्नवाम्॥

**अउ50.23**
वीरां पयस्यां जीवन्तीमृद्धिं रास्नां त्रिकण्टकम्।
मधुकं शालिपर्णीं च भागांस्त्रिपलिकान् पृथक्॥

**अउ50.24**
माषाणामाढकं चैतत् द्विद्रोणे साधयेदपाम्।
रसेनाढकशेषेण पचेत्तेन घृताढकम्॥

**अउ50.25**
दत्वा विदारीधात्रीक्षुरसानामाढकाढकम्।
घृताच्चतुर्गुणं क्षीरं पेष्याणीमानि चावपेत्॥

**अउ50.26**
वीरां स्वगुप्तां काकोल्यौ यष्टीं फल्गु द्विपिप्पलीम्।
द्राक्षां विदारीं खर्जूरं मधुकानि शतावरीम्॥

**अउ50.27**
तत्सिद्धपूतं चूर्णस्य पृथक्प्रस्थेन योजयेत्।
शर्करायास्तुगायाश्च पिप्पल्याः कुडवेन च॥

**अउ50.28**
मरिचस्य प्रकुञ्चेन पृथगर्द्धपलोन्मितैः।
त्वगेलाकेसरैः श्लक्ष्णैः क्षौद्रद्विकुडवेन च॥

**अउ50.29**
पलमात्रं ततः खादेत् प्रत्यहं रसदुग्धमुक्।
तेनारोहति वाजीव कुलिङ्गैव हृष्यति॥

**अउ50.30**
माषात्मगुप्ताबीजानामाढकं प्रसृतोन्मितम्।
मेदाश्वगन्धर्द्धिवरी वीरा यष्टी द्विजीवकम्॥

**अउ50.31**
शूर्पेऽपां विपचेत्तेन पादशेषेण पाचयेत्।
विदारीक्षुरसप्रस्थद्वयेन सदृशेन च॥

**अउ50.32**
सर्वैः क्षीरेण हविषो नवात् प्रस्थं शृतेऽत्र च।
सिताक्षौद्रसिताख्यानां पृथग्दद्याच्चतुष्पलम्॥

**अउ50.33**
पलं कणात् पुरोभक्तं लिहंस्तत्पलपूर्वकम्।
तरुणीष्ववतृप्तासु प्रसभं रासभायते॥

**अउ50.34**
मेदादिभिश्च कर्षांशैः शृतं बाष्कयणं पयः।
सशर्कराक्षौद्रघृतं शुक्रवृद्धिकरं परम्॥

**अउ50.35**
पयसा पायसस्तेन माषकण्डूकरीफलैः।
वृष्यो वेगकरः सिद्धः सघृतक्षौद्रशर्करः॥

**अउ50.36**
श्वदंष्ट्राया विदार्याश्च रसे क्षीरचतुर्गुणे।
घृताढ्यः साधितो वृष्यो माषषष्टिकपायसः॥

**अउ50.37**
मधूलिका माषपर्णी सिता शृङ्गाटकं यवाः।
स्वगुप्तामूलयष्ट्याह्वविदारीक्षुरकाः समाः॥

**अउ50.38**
सप्रियालाः कृतं चूर्णं पृथङ्मध्वाज्यषड्गुणम्।
पादाभ्यामस्पृशन्भूमिं लिहन्काल्यमतः पिचुम्।
लभते वलमुत्साहं स्त्रीश्च याति कुलिङ्गवत्॥

**अउ50.39**
स्वगुप्ता क्षीरकाकोली विदारी जीवकद्वयम्।
तिलाः सलुञ्चिता भृष्टाः शर्कराज्यमधुप्लुतम्।
तच्चूर्णं प्रसृतं लीढ्वा गच्छति प्रमदाशतम्॥

**अउ50.40**
प्रसृतं माषचूर्णस्य धात्रीस्वरसभावितम्।
विदारीरजसो वापि लिहन् मधुघृतद्रुतम्।
क्षीरानुपश्चटकवद्दशकृत्वो व्रजेत् स्त्रियः॥

**अउ50.41**
चूर्णं विदार्या बहुशः स्वरसेनैव भावितम्।
क्षौद्रसर्पिर्युतं लीढ्वा प्रमदा दश गच्छति॥

**अउ50.42**
कृष्णा धात्रीफलरजः स्वरसेनैवभावितम्।
शर्करामधुसर्पिर्भिर्लीढ्वा योऽनु पयः पिबेत्।
स नरोऽशीतिवर्षोपि युवेव परिहृष्यति॥

**अउ50.43**
कर्षं मधुकचूर्णस्य घृतक्षौद्रसमन्वितम्।
पयोनुपानं यो लिह्यान्नित्यवेगः स ना भवेत्॥

**अउ50.44**
कुलीरशृङ्ग्या यः कल्कमालोड्य पयसा पिबेत्।
सिताघृतपयोन्नाशी स नारीषु वृषायते॥

**अउ50.45**
धान्यमाषरसः क्षीरं क्षौद्रमिक्षुरसो घृतम्।
द्विमेदाजीवकयुगक्वाथश्चैकत्र योजितः।
पीतः करोति पुरुषं प्रमदाशतगामिनम्॥

**अउ50.46**
भल्लातकैश्चतुर्भिस्तु दुग्धस्यार्द्धाढकं पचेत्।
पीतं करोति वृषतां सुजीर्णस्यापि देहिनः॥

**अउ50.47**
स्वयङ्गुप्तेक्षुरकयोर्बीजचूर्णं सशर्करम्।
धारोष्णेन नरः पीत्वा पयसा रासभायते।
उच्चटाचूर्णमप्येवं शतावर्याश्च योजयेत्॥

**अउ50.48**
सूप्यपर्णी द्विकाकोली जीवकर्षभकैः शृतम्।
लघुना पञ्चमूलेन द्विकाकोलीयुतेन वा।
पयोऽतिवृष्यमभ्यस्य वृद्धोऽपि तरुणायते॥

**अउ50.49**
क्षीरिणी च श्वदंष्ट्रा च फाणितं शर्करा मधु।
गृष्टिक्षीरं नवं सर्पिरेतत् पुंसवनं परम्॥

**अउ50.50**
अश्वत्थफलमूलत्वक्शृङ्गसिद्धं पयो नरः।
पीत्वा सशर्करं शीतं कुलिङ्ग इव हृष्यति॥

**अउ50.51**
पयः पयस्यया सिद्धं शुक्रकृत्साज्यमाक्षिकम्॥

**अउ50.52**
शतावरीकत्करसे पयो दशगुणं घृतम्।
शृतं सपिप्पलीक्षौद्रशर्करं वृष्यमुत्तमम्॥

**अउ50.53**
शतावरीरसप्रस्थं क्षीरप्रस्थचतुष्टयम्।
प्रस्थं घृतस्य शुक्त्यंशं द्राक्षामांसीपरूषकम्॥

**अउ50.54**
जीवकर्षभयष्ट्याह्वबलामेदाकशेरुकम्।
प्रियालबीजं काकोलीयुग्मं चैकत्र पाचयेत्॥

**अउ50.55**
पक्वपूते क्षिपेच्चास्मिन् कुडवांशां सितोपलाम्।
गृष्टिक्षीरानुपः प्राश्य तन्नारीषु वृषायते।
विजयेत च वातास्रं पित्तास्रोरःक्षतक्षयान्॥

**अउ50.56**
जीवकक्षीरकाकोलीस्थिराहंसपदीघनः।
शठीक्षुगण्डिकायष्टीमृणालैः कर्षिकैः पचेत्॥

**अउ50.57**
घृतप्रस्थं दशगुणे क्षीरे तत् बलपुष्टिकृत्।
वन्ध्यानां पुत्रजननं शुक्रवर्द्धनशोधनम्॥

**अउ50.58**
जलाढके स्वयंगुप्तामूलात् पञ्चपलं पचेत्।
पादशेषे च संचूर्ण्य कुडवांशाः पृथक् क्षिपेत्॥

**अउ50.59**
स्वगुप्तामूलगोधूममाषेक्षुरकपिप्पलीः।
सप्रियालफलक्षौद्राः प्रस्थार्द्धं नवसर्पिषः॥

**अउ50.60**
सितोपलातुलापादं कुर्यात्तान् मोदकांस्ततः।
मोदकं भक्षयित्वैकं षष्टिं व्रजति योषिताम्॥

**अउ50.61**
पलांशान् बृहतीव्याघ्रीपृश्निपर्णीत्रिकण्टकान्।
द्व्याढकेनाम्भसा पक्त्वा पादशेषे रसे स्थिते॥

**अउ50.62**
पलानि क्षीरकाकोल्याः पञ्च मागधिकापलम्।
स्वगुप्ताफलमूलानां माषाणामिक्षुरस्य च॥

**अउ50.63**
विदार्या मधुनश्चात्र कुडवं कुडवं क्षिपेत्।
पृथक् द्वौ मुद्गतिलयोर्घृते शष्कुलिकास्ततः।
पचेदेकां ततः प्राश्य शतं व्रजति योषिताम्॥

**अउ50.64**
स्वगुप्तामूलचूर्णेन द्रुतेन पयसा कृताः।
घृते सशर्कराक्षौद्रा भक्ष्या वेगशतप्रदाः॥

**अउ50.65**
माषात्मगुप्तागोधूमशालिषष्टिकपैष्टिकान्।
शर्कराया विदार्याश्च चूर्णानीक्षुरकस्य च॥

**अउ50.66**
संयोज्य क्षीरसर्पिर्भ्यां घृते पूपलिकाः पचेत्।
पयोनुपानास्ताः शीघ्रं कुर्वन्ति वृषतां परम्॥

**अउ50.67**
चूर्णं माषात्तिलाच्छालेर्विदार्याश्च ससैन्धवम्।
रसेन पुण्ड्रकस्येक्षोः प्लुतं वाराहमेदसि।
पक्त्वा शष्कुलिक्राः खादन्नारोहेत् षष्टिमङ्गनाः॥

**अउ50.68**
मुखप्रियाणां स्निग्धानां फलानां मधुरात्मनाम्।
फलानामात्मगुप्तायाः शालेर्माषात्तिलात् घृतात्॥

**अउ50.69**
मुद्गात् गोधूमतश्चापि कुडवं कुडवं पृथक्।
चूर्णितैर्निस्तुषैस्तैस्तु क्षीरेणालोड्य मर्दितैः।
पक्वां पूपलिकां खादन् स्त्रीषु हृष्यति वाजिवत्॥

**अउ50.70**
शर्करामाषगोधूमतुगाक्षीरीपयोघृतैः।
पक्वामुत्कारिकां खादेत् कृकवाकुरसानुपः॥

**अउ50.71**
मायुरं तैत्तिरं हांसमेवमेव रसं पिबेत्।
अनेनाश्व इवोदीर्णो बली लिङ्गं समर्पयेत्॥

**अउ50.72**
पिष्ट्वा वराहमांसानि दत्वा मरिचसैन्धवे।
कोलवद्गुटिकाः कृत्वा तप्ते सर्पिषि वर्त्तयेत्॥

**अउ50.73**
वर्त्तनस्तम्भितास्ताश्च प्रक्षेप्याः कौक्कुटे रसे।
घृताढ्ये गन्धपिशुने दधिदाडिमसारिके॥

**अउ50.74**
यथा न भिन्द्याद्गुटिकास्तथा तं साधयेद्रसम्।
तं पिबन्भक्षयंस्ताश्च बली बालेयवद्व्रजेत्।
मांसानि बलयुक्तानि तथान्यान्यपि कल्पयेत्॥

**अउ50.75**
माषानंकुरितान्शुद्धान् निस्तुषान्साजहाफलान्।
घृताढ्ये माहिषरसे दधिदाडिमसारिके॥

**अउ50.76**
प्रक्षिप्य साधयेद्युक्त्या धान्यजीरकनागरैः।
पीतो भुक्तश्च स रसः कुरुते शुक्रमक्षयम्॥

**अउ50.77**
हंसबर्हिणदक्षाण्डान् भृष्टांस्तप्तेन सर्पिषा।
सुरानुपानान् यः खादेत् स तृप्तस्तर्प्पयेत्स्त्रियः॥

**अउ50.78**
आर्द्राणि मत्स्यमांसानिशफरीर्वा सुभर्जिताः।
तप्ते सर्पिषि यः खादेत् स गच्छेत् स्त्रीषु न क्षयम्॥

**अउ50.79**
घृतभृष्टान् रसे छागे रोहितान् फलसारिके।
अनुपीतरसान् सिद्धानपत्यार्थी प्रयोजयेत्॥

**अउ50.80**
घृतं माषान् सबस्ताण्डान् फलाम्ले माहिषे रसे।
स्वादौ वा साधयेत् पूतं तद्रसं भर्जयेत् घृते॥

**अउ50.81**
ईषल्लवणितं युक्तं धान्यजीरकनागरैः।
पीतः स वृष्यो बल्यश्च बृंहणश्च परं रसः॥

**अउ50.82**
चटकांस्तैत्तिरे तद्वत्तित्तिरीन् कौक्कुटे रसे।
कल्पयेच्छिखिनो हांसे हंसान् वा शिखिजे रसे॥

**अउ50.83**
तृप्तिं चटकमांसानां गत्वा योनु पयः पिबेत्।
प्रभूतकालसंरुद्धाः सन्तर्पयति योषितः॥

**अउ50.84**
घृताढ्यं कुक्वुटं शूल्यं शीतं खादेत् समाक्षिकम्।
पिबेच्चानन्तरं क्षीरं य इच्छेच्छुक्रमक्षयम्॥

**अउ50.85**
पिप्पलीलवणैर्युक्तौ बस्ताण्डौ क्षीरसर्पिषा।
साधितौ भक्षयेद्यस्तु स गच्छेत् प्रमदाशतम्॥

**अउ50.86**
बस्ताण्डसिद्धे गोदुग्धे भावितानसकृत्तिलान्।
यः खादेत्ससितान् गच्छेत् स स्त्राशतमपूववत्॥

**अउ50.87**
भुक्त्वा यो माषसूपेन घृताड्यं षष्टिकौदनम्।
पयः पिबति जागर्ति कृत्स्नां रात्रिं स वेगवान्॥

**अउ50.88**
आत्मगुप्ताफलं माषान् खर्जूराणि शतावरीम्।
शृङ्गाटकानि मृद्वीका पचेत्तत् प्रसृतोन्मितम्॥

**अउ50.89**
क्षीरप्रस्थं जलप्रस्थमेतत् क्षीरावशेषितम्।
शुचिना वाससा पूतं योजयेत् प्रसृतैस्त्रिभिः॥

**अउ50.90**
शर्करायास्तुगाक्षीर्याः सर्पिषोऽभिनवस्य च।
तत्पिबेत् क्षौद्रसंयुक्तं भुञ्जानः षष्टिकौदनम्।
तथा जरापरीतोपि पुत्रैः स परिवार्यते॥

**अउ50.91**
द्राक्षाखर्जरखर्जूरीमस्तकान्यजहाफलम्।
पयस्याभीरुमाषांश्च मधुकानि च साधयेत्॥

**अउ50.92**
तोयाढके पलांशानि पादशेषेण तेन च।
क्षीरप्रस्थं पचेत् क्षीरशेषेणाद्यात् घृतान्वितम्।
षष्टिकान्नं सिताज्येन योगोऽयं शुक्रकृत् परम्॥

**अउ50.93**
जीवकर्षभकौ मेदा जीवन्ती श्रावणीद्वयम्।
खर्जूरं मधुकं द्राक्षां विदारीं विश्वभेषजम्॥

**अउ50.94**
शृङ्गाटकानि चपला नवं सर्पिःपयो जलम्।
घृतावशेषितं सिद्धं शर्करामाक्षिकान्वितम्॥

**अउ50.95**
षष्टिकौदनसंयुक्तमुपयोज्यं यथाबलम्।
तद्वृष्यं बलकृद्वर्ण्यं कण्ठ्यं देहस्य बृंहणम्॥

**अउ50.96**
गृष्टिर्बष्कयणी नीरुगूर्ध्वशृङ्गी चतुःस्तनी।
सान्द्रस्वादुबहुक्षीरा रूपशीलसमन्विता॥

**अउ50.97**
इक्षुभिर्माषपर्णेन या सुपुष्टार्जुनेन वा।
तत्क्षीरंससिताक्षौद्रघृतं पुत्र्यं रतिप्रदम्॥

**अउ50.98**
शुक्रलैर्जीवनीयाख्यैर्बृंहणैर्बलवर्द्धनैः।
वयसः स्थापनैश्चेतत् पयः सिद्धं पृथक्पृथक्॥

**अउ50.99**
युक्तं गोधूमचूर्णेन सघृतक्षौद्रशर्करम्।
पर्यायेणोपयोक्तव्यमिच्छता शुक्रमक्षयम्॥

**अउ50.100**
मेदां पयस्यां जीवन्तीं विदारीं कण्टकारिकाम्।
माषान् श्वदंष्ट्रां क्षीरीकां गोधूमान् शालिषष्टिकान्॥

**अउ50.101**
तत्क्षीरेर्द्धोदके सिद्धान् कार्षिकानाढकोन्मिते।
विसर्जयेत्पयश्शेषं तत्पूतं क्षौद्रसर्पिषा।
सितया च युतं पीत्वा वृद्धोपि तरुणायते॥

**अउ50.102**
मण्डलैर्जातरूपस्य सुतप्तैस्तत्पयः शृतम्।
सिद्धं पुंसवनं वृष्यं ससिताघृतमाक्षिकम्।
रूप्यायस्ताम्नसीसानामयमेव पृथग्विधिः॥

**अउ50.103**
चूर्णिताः पिप्पलीस्त्रिंशत् प्रकुञ्चे तैलसर्पिषोः।
भृष्टाः सशर्कराक्षौद्राः क्षीरेणालोडिताः पिबेत्।
अश्नंश्च षष्टिकं क्षीरसर्पिर्भ्यां वाजिवद्भवेत्॥

**अउ50.104**
चन्द्रांशुशुभ्रं पयसा घृताढ्यं षष्टिकौदनम्।
शर्करामधुसंयुक्तं भुञ्जानो ना वृषायते॥

**अउ50.105**
दध्नः सरेण सघृतो भक्षितः षष्टिकौदनः।
सैलातुगोषणक्षौद्रः शर्कराढ्येन शुक्रकृत्॥

**अउ50.106**
अध्यण्डामार्षभींचैव स्वयङ्गुप्ताफलानि च।
पादलेपं नरः कृत्वा निशि वेगैर्न हीयते॥

**अउ50.107**
वर्षाभूमूलमृद्वीकास्वयङ्गुप्ताफलानि च।
सिद्धश्चरणलेपोयं भुवं पद्भ्यां तु न स्पृशेत्॥

**अउ50.108**
घृतक्षीराशनो नित्यं निर्व्याधिर्नित्यगो युवा।
सङ्कल्पप्रवणो इत्यं नरः स्त्रीषु वृषायते॥

**अउ50.109**
आत्मगुप्ताफलं माषा गोधूमः शालिषष्टिकम्।
इक्षुरिक्षुरकः क्षीरं क्षौद्रं द्राक्षा सितोपला॥

**अउ50.110**
उच्चटा शरमूलानि विदारी सशतावरी।
जीवनीयानि स्वर्जूरं मोचचोचफलानि च॥

**अउ50.111**
एभिर्भक्ष्याणि पेयानि लेह्यानि च घृतानि च।
नित्यमासेवमानस्य स्त्रीषु हर्षो विवर्द्धते॥

**अउ50.112**
जीवनीयघृतक्षीरमधुतैलसितारसैः।
रसक्षीराशिनः क्षिप्रं वृषं कुर्वन्ति बस्तयः॥

**अउ50.113**
सिद्धबस्तिविकल्पोक्तान् बलशुक्रसुतप्रदान्।
युञ्जीत बस्तीन् पुत्रार्थी पुत्रकामोदितं च यत्॥

**अउ50.114**
यत्किञ्चिन्मधुरं स्निग्धं बृंहणं बलवर्द्धनम्।
मनसो हर्षणं यच्च तत्सव वृष्यमुच्यते॥

**अउ50.115**
द्रव्यैरेवंविधैस्तस्मात् भावितः प्रमदां व्रजेत्।
आत्मवेगेन चोदीर्णः स्रीगुणैश्च प्रहर्षितः॥

**अउ50.116**
इष्टाह्येकैकशोप्यर्था हर्षप्रीतिकराः परम्।
किं पुनः स्त्रीशरीरे ये सङ्घघातेन प्रतिष्ठिताः॥

**अउ50.117**
रुचिभेदेन लोकस्य दैवयोगाञ्च योषिताम्।
तं तं प्राप्य विवर्द्धन्ते नरं रूपादयो गुणाः॥

**अउ50.118**
तस्माद्या यस्य हृदयं विशतीव वराङ्गना।
तुल्यस्वभावा या हारिमृजारूपगुणान्विता॥

**अउ50.119**
पाशभूतैर्वहन्त्यङ्गैर्लावण्यमिव मूर्तिमत्।
आलपन्त्यमृतेनेव या गात्राणि निषिञ्चति॥

**अउ50.120**
पिबन्तीव च पश्यन्ती स्पृशन्ती लिम्पतीव या।
नित्यमुत्सवभूता या या समानमनःशया॥

**अउ50.121**
नयत्युत्सुकतां चेतो नित्यं सन्निहितापि या।
यया वियुक्तो निःस्त्रीकमरतिर्मन्यते जगत्॥

**अउ50.122**
प्रगल्भा रीतसङ्ग्रामे स्वस्था लज्जामयी च या।
बहुशोपि च यां गत्वा तत्पूर्वमिव गच्छति॥

**अउ50.123**
चरितैर्निर्विकारा या विकारैरिव निर्मिता।
कान्तानुवृत्तिपरमा सा स्त्री वृष्ट्यतमा मता॥

**अउ50.124**
अभ्यञ्जनोद्वर्तनसेकगन्धस्रक्चित्रवस्त्राभरणप्रकाराः।
सुगन्धिपुष्पोत्कररेणुकीर्णा मृदुर्मनोज्ञा विपुला च शय्या॥

**अउ50.125**
प्राज्ञाः कलाज्ञा वशगा विनीताः प्रियंवदाः प्रीतिकरा वयस्याः।
विस्रम्भसत्वप्रकृतिक्रियैक्याच्छरीरमात्रेण पृथक्त्वभूताः॥

**अउ50.126**
कान्ता वनान्ताः परपुष्टघुष्टा रम्याः स्रवन्त्यः सततं स्रवन्त्यः।
मद्यं मदामोदकरं विशेषाध्द्द्या प्रसन्ना सुरभिः प्रसन्ना॥

**अउ50.127**
शकाङ्गनागण्डतलाभिपाण्डुताम्बुलपत्रं परिवारशोभि।
प्रसाधनं स्त्रीमुखपङ्कजानां यदायुधं मूर्तमिवात्मजस्य॥

**अउ50.128**
हिमाचलोद्धूनितदुग्धसिन्धुसमुद्भवत्फेनचयावदातम्।
सौधं सुधाशुभ्रतराः कराश्च चन्द्रस्य कुर्वन्ति परं वृषत्वम्॥

**अउ50.129**
बन्धेन पूर्वोपहितेन पुंसः खिन्नस्य वृत्तिः करणान्तरेण।
संवाहनं स्पर्शसुखैः करैश्च करोत्यपूर्वामिव मन्मथेच्छाम्॥

**अउ50.130**
प्रायोगिकाधिकरणोदिताचित्रचेष्टासंशीलनोद्भवदनल्परसार्द्रचित्तः।
वृष्योपयोगपरिबृंहितदेहधातुर्नारीमनांसि वशमानयति प्रसह्य॥

**अउ50.131**
तस्मान्नित्यं स्त्रीषु वाञ्छन् प्रियत्वं वृष्यैर्योगैर्जातकामोऽपि कामी।
सत्वंअ सात्म्यं देशकालौ च बुध्वा चातुष्षष्टे चेष्टिते व्याप्रियेत॥

**अउ50.132**
वलयस्वनसङ्कुलमुष्टिरवद्विगुणीकृतमेखलिकानिनदः।
चलनूपुरशब्दयुतोऽपि मुहुः शममावहते न रतातिशयः॥

**अउ50.133**
सर्वार्थसिद्धिः प्रथमोनुरागः शृङ्गारगान्धर्वकथाविशेषाः।
सीत्कारगर्भं हसितं सहावं छिन्नाक्षरं विभ्रमवच्च गीतम्॥

**अउ50.134**
सव्याजसन्दीर्शतचारुगात्रं वृत्तं प्रियाणामवलोकितं च।
चूताङ्कुरं पुष्पफलं यथर्तु वियुत्वद्द्योतितगर्जितानि॥

**अउ50.135**
विहङ्गभृङ्गस्तनितानुयातं स्त्रीकूजितं भूषणशिञ्जितानि।
काले यथास्वं वपुषश्च शुद्धिः सङ्कल्पयोनेर्धुरमुद्वहन्ति॥

**अउ50.136**
स्रोतस्सु शुद्वेष्वमले शरीरे वृष्यं यदाद्यं मितमत्ति काले।
वृषायते तेन परं मनुष्यस्तद्बृंहणं देहबलप्रदं च॥

**अउ50.137**
तस्मात् पुरा शोधनमेव कार्यं बलानुरूपं न च वृष्ययोगाः।
सिध्यन्ति देहे कलुषे प्रयुक्ताः क्लिष्टे यथा वाससि रागयोगाः॥

**अउ50.138**
उपदिष्टे विचित्रेऽस्मिन् वक्तव्यार्थानुरोधतः।
कर्तव्यमेवकर्तव्यं प्राणाबाधेऽपि नेतरत्॥

**अउ50.139**
एतत् स्वरूपं शास्त्रस्य यद्व्यापित्वेन वर्ण्यते।
स्पृशति न्यूनतादोषो महानव्यापिनि ध्रुवम्॥

**अउ50.140**
वीर्यहीनैरसम्पूर्णैः प्रयोगैरपि भूषितम्।
अर्थानतन्त्रयत्तन्त्रं तन्त्रतामाप्नुयात् कथम्॥

**अउ50.141**
हंसबर्हिणदक्षाण्डा यद्यप्यत्यर्थशुक्रलाः।
मुनयः सदया ब्रूयुस्तान्योगेष्वन्यथा कथम्॥

**अउ50.142**
कथं वा सर्वएवैते योगा रागाग्निदीपनाः।
क्लिष्टसङ्कल्पजननाः प्रोक्ताः संसारवर्द्धनाः॥

**अउ50.143**
त्रिकालदर्शिभिर्दिव्यैः सत्वदोषविवर्जितैः।
पूर्वाचार्यैः कृतं वर्त्म को लङ्घयित्मुमर्हति॥

**अउ50.144**
प्रक्रान्ते सर्वथा सर्वमुक्तं भवति सूदितम्।
नाहि लेशाभिधानेन लभ्यः सर्वार्थसङ्ग्रहः॥

**अउ50.145**
तथा च गर्दभीक्षीरं मांसमश्वस्य हस्तिनाम्।
मद्यासागरतोयं च प्रोक्तं निरुपयोग्यपि॥

**अउ50.146**
अद्यत्वेऽपि विशेषेण भूरितन्त्रार्थसङ्ग्रहात्।
सङ्ग्रहाद्यन्नबुध्येत तज्ज्ञानमतिदुर्लभम्॥

**अउ50.147**
यथा प्रतिज्ञातमिति क्रमेण वेदोयमष्टाङ्गनिधेर्निबद्धः।
अभ्यस्यतो मार्गमिवार्यसत्यं सञ्जायते स्वार्थपरार्थसिद्धिः॥

**अउ50.148**
पितामहमुखोद्गीर्णमित्यायुर्वेदवाङ्मयम्।
जीवितारोग्यधर्मार्थसुखगौरवकीर्त्तिकृत्॥

**अउ50.149**
अलङ्कृतं युक्तिपदैः सद्रत्नैरिव काञ्चनम्।
षट्त्रिंशतार्थदुर्गेषु भिषजां सङ्क्रमैरिव॥

**अउ50.150**
तत्राधिकरणं योगो हेत्वर्थोर्थः पदस्य च।
प्रदेशोद्देशनिर्देशवाक्यशेषाः प्रयोजनम्॥

**अउ50.151**
उपदेशापदेशातिदेशार्थापत्तिनिर्णयाः।
प्रसङ्गैकान्तनैकान्ताः सापवर्गो विपर्ययः॥

**अउ50.152**
पूर्वपक्षविधानानुमतव्याख्यानसंशयाः।
अतीतानागतापेक्षा स्वसंज्ञोह्य समुच्चयाः॥

**अउ50.153**
निदर्शनं निर्वचनं नियोगोऽथ विकल्पनम्।
प्रत्युत्सारस्तथोद्धारः सम्भवस्तन्त्रयुक्तयः॥

**अउ50.154**
सरसः सुप्तपद्मस्य रविदीधितयो यथा।
यथा गृहस्य दीपाभास्तथा तन्त्रस्य युक्तयः॥

**अउ50.155**
अधीयानोऽपि तन्त्राणि तन्त्रयुक्त्यविचक्षणः।
नाधिगच्छति तन्त्रार्थमर्थं भाग्यक्षये यथा॥

**अउ50.156**
वाक्यार्थयोजनोदता युक्तयस्त्विष्टसिद्धिदाः।
असद्वादिप्रयुक्तानां वाक्यानां प्रतिषेधकाः॥

**अउ50.157**
लीनव्यत्यासलेशोक्तिगदितानां प्रकाशकाः।
वाक्यन्यायोदधेः सारं गृहीत्वैवं व्यवस्थिताः॥

**अउ50.158**
एतदागमसिद्धत्वात् प्रत्यक्षफलदर्शनात्।
प्रयोज्यं मन्त्रवत्तन्त्रं तन्त्रज्ञानविशारदैः॥

**अउ50.159**
पितामहेन लोकस्य स्मृत्वा तदिदमव्ययम्।
अकालमृत्युरक्षार्थमलौहं वर्म निर्मितम्॥

**अउ50.160**
सुज्ञातमेतदमृतं स्वस्थास्वस्थसुखास्पदम्।
यथेप्सितफलाशेषपुरुषार्थप्रसाधनम्॥

**अउ50.161**
इदं शास्त्रमदृष्टीनामेवमालोककार्यपि।
मण्डलं भास्करस्येव न प्रकाशाय जायते॥

**अउ50.162**
ध्रुवं वैद्येषु कल्याणमायुर्वेदानुसारिषु।
इतरेष्वितरच्छत्रविषज्वलनकर्मसु॥

**अउ50.163**
कुर्यात् प्रयुक्तं शस्त्रादि सशेषमपि रोगिणम्।
न त्वेवं भेषजं मोहादनालोचितयोजितम्॥

**अउ50.164**
सदा दोषौषधादीनि वीक्ष्य द्वादश तत्वतः।
कुर्याच्चिकित्सितं प्राज्ञो न योगैरेव केवलैः॥

**अउ50.165**
मात्रादि सम्यगज्ञात्वा यदृच्छाप्रतिपादितः।
हिनस्ति व्याधितं योगो घृतमाक्षिकयोरिव॥

**अउ50.166**
दृष्ट्वा विषेष्यमृततां घृतादौ मारणात्मताम्।
शास्त्रतत्वं न विज्ञाय स दुरात्मा चिकित्सति॥

**अउ50.167**
सुगीतश्चैष कस्यापि महाश्लोको महात्मनः।
वैद्याश्चाश्रुतशास्त्रार्था मूर्खाश्च प्रभाविष्णवः।
अकालमृत्यवो ह्येते विचरन्ति महीतले॥

**अउ50.168**
लोभयन्त्यातुरं मूढा ये चित्रैः कर्मकौशलैः।
तेभ्यो रक्षेत्सदात्मानमात्मा यस्मात् सुदुर्लभः॥

**अउ50.169**
ते घुणाक्षरवत्कञ्चिदुत्तार्य नियतायुषम्।
घ्नन्ति वैद्याभिमानेन शतान्यनियतायुषाम्॥

**अउ50.170**
रोगार्तस्य विषण्णस्य यत्नलभ्यसुखायुषः।
अवैद्यो निर्घृणःक्रूरो यः करोति भिषग्जितम्॥

**अउ50.171**
पापस्य मृत्युदूतस्य दुर्मतेस्त्यक्तधर्मणः।
नरो नरकपाती स्यात्तस्य सम्भाषणादपि॥

**अउ50.172**
अतन्त्रीकृततन्त्रार्थः शास्त्रमात्रोपजीविनः।
राज्ञां प्रमादाद्राष्ट्राणि चरन्ति व्याधवृत्तयः॥

**अउ50.173**
तान् कालपाशसदृशान् वर्जयेच्छास्त्रदूषकान्।
सेवेत शमविज्ञानज्ञानपूर्णान् भिषक्तमान्॥

**अउ50.174**
अन्नपानानि पथ्यानि व्याधिनिर्घातमौषधम्।
रसायनानि वृष्याणि प्राप्यन्ते वैद्यसंश्रयात्॥

**अउ50.175**
अराजका यथा देशा भर्तृहीना यथा गृहाः।
आतुराद्यास्तथा पादाः शोच्या वैद्यानधिष्ठिताः॥

**अउ50.176**
प्राणाचार्यं बुधस्तस्माद्दयालुं विजितेन्द्रियम्।
अश्विनाविव देवेन्द्रः पूजयेदादृतः सदा॥

**अउ50.177**
यज्ञस्य हि शिरश्छिन्नमश्विभ्यां सन्धितं पुनः।
पातिता दशनाः पूष्णो भगस्य च विलोचने॥

**अउ50.178**
राजयक्ष्मार्दितश्चन्द्रस्ताभ्यामेव चिकित्सितः।
सोमान्निपतितो वज्री भुजस्तम्भे च दारुणे॥

**अउ50.179**
भार्गवश्चवनः कामी वृद्धः सन् विकृतिं गतः।
वीर्यवर्णबलोपेतः कृतस्ताभ्यां पुनर्युवा॥

**अउ50.180**
एभिश्चान्यैश्च बहुभिः कर्माभीर्भिषगुत्तमौ।
बभूवतुर्भृशं पूज्याविन्द्रादीनां महात्मनाम्॥

**अउ50.181**
अश्विभ्यां सहितः सोमं प्रातः पिबति वासवः।
सौत्रामण्यां च भगवानश्विभ्यां सह मोदते॥

**अउ50.182**
अश्विनोः कल्प्यते भागो यज्ञेषु ब्राह्मणैरपि।
अश्विनावग्निरिन्द्रश्च वेदेषु सुतरां स्तुताः॥

**अउ50.183**
वैद्यवित्यश्विनौ तस्मात् पूज्येते विबुधैरपि।
अजरैरमरैर्नित्यं सुखितैरेवमादृतैः॥

**अउ50.184**
व्याधिमृत्युजराग्रस्तैर्दुःखप्रायैः सुखार्थिभिः।
किं पुनर्भिषजो मर्त्यैः पूज्याः स्युर्नातिशक्तितः॥

**अउ50.185**
शीलवान् मतिमान् युक्तो द्विजातिर्वेदपारगः।
प्राणिभिः पितृवत्पूज्यः प्राणाचार्यः स हि स्मृतः॥

**अउ50.186**
विद्यासमाप्तौ भिषजां द्वितीया जातिरुच्यते।
न वैद्यो वैद्यशब्दं हि लभते पूर्वजन्मना॥

**अउ50.187**
विद्यासमाप्तावाष वा ब्रह्मं वा भिषजं ध्रुवम्।
तस्वमाविशति ज्ञानात्तेन वैद्यो द्विजः स्मृतः॥

**अउ50.188**
नावध्यायेन्न चाक्रोशेदहितं न समाचरेत्।
प्राणाचार्यं बुधः कच्छिदिच्छन्नायुरनश्वरम्॥

**अउ50.189**
भिषगप्यातुरान् सर्वान् स्वसुतानिव यत्नवान्।
आबाधेभ्योऽभिसंरक्षेत् ज्ञानं धर्मनुस्मरन्॥

**अउ50.190**
कुर्वते ये तु वृत्यर्थं चिकित्सापण्यविक्रयम्।
ते हित्वा काञ्चनं राशिं पांसुराशिमुपासते॥

**अउ50.191**
रोगाख्यान्दारुणान्पाशानन्तकान्तिककर्षिणः।
यश्छित्वा यच्छति प्राणान्दाता नास्त्येव तत्समः॥

**अउ50.192**
न जीवितप्रदानाद्धि दानमन्यद्विशिष्यते।
तस्मादुपाचरेत् स्वेन स्वेन निःस्वतपस्विनः॥

**अउ50.193**
सत्वार्थमीहमानस्य वैद्यस्यैवं महामतेः।
वर्तन्ते सन्निधानेन नियतं सिद्धिदेवताः॥

**अउ50.194**
क्वचिद्धर्मः क्वचिन्मित्रं क्वचिदर्थः क्वचिद्यशः।
कर्माभ्यासः क्वचिच्चेति चिकित्सा नास्ति निष्फला॥

**अउ50.195**
नित्यमादरवान् वैद्यस्तस्मादार्तानुपाचरेत्।
प्राणान्सहात्मनः कीर्त्या निहन्त्येषामनादरात॥

**अउ50.196**
सर्वत्र मैत्री करुणातुरेषु निरामदेहेषु नृषु प्रमोदः।
मनस्युपेक्षापकृतिं व्रजत्सु वैद्यस्य सद्वृत्तमलं तनोति॥

**अउ50.197**
सामिषेणापि चित्तेन जीवितोच्छेदकारिणः।
यो निहन्त्यामयान् वैद्यः सोपि केनोपमीयताम्॥

**अउ50.198**
किमुत निरामिषेण मनसा करुणामृदुना कृपणविशिष्टयोः सदृशमादरमुद्वहता।
अतिगुरु बोधिसत्वचरितं सततं विदधच्छमयति रोगजालमपि योतिविरोधि मिथः॥

**अउ50.199**
दाहः शूलं तृडाध्मानं क्षुत्क्षामत्वमरोचकम्।
कः प्राकृतो जयेद्रोगान् नित्यमन्योन्यरोधिनः॥

**अउ50.200**
मारुतामग्रहोन्भादमदान् सुसदृशाकृतीन्।
को जानीयाच्चिकित्सेद्वादूरभिन्नक्रियाक्रमान्॥

**अउ50.201**
प्राणाचार्थं वेदपारं प्रयातं बुध्या युक्तं पूजयेन्नित्यमस्मात्।
यस्मिन्यस्य प्राणयात्रा निबद्धा तस्मै यच्छन् को धनानां धनायेत्॥

**अउ50.202**
आयुर्वेदं श्लोकलक्षेण पूर्व ब्रह्माम्नासीदग्निवेशादयस्तु।
कृत्स्नज्ञेयप्राप्तसाराः स्वतन्त्रास्तस्यैकैकं नैकधाङ्गं वितेनुः॥

**अउ50.203**
भिषग्वरो वाग्भट इत्यभून्मे पितामहो नामधरोऽस्मि यस्य।
सुतोभवत्तस्य च सिंहगुप्तस्तस्याप्यहं सिन्धुषु लब्धजन्मा॥

**अउ50.204**
समधिगम्य गुरोरवलोकितात् गुरुतराच्च पितुः प्रतिभा मया।
सुबहुभेषजशास्त्रविलोचनात् सुविहितोऽङ्गविभागविनिर्णयः॥

**अउ50.205**
पूर्वोक्तमेव वदता किमिवोदितं स्याच्छ्रद्धालुतुष्टिजननं न भवत्यपूर्वम्।
सङ्क्षिप्तसंशयितविस्तृतविप्रकीर्णः कृत्स्नोर्थराशिरिति साधु स एव दृष्टः॥

**अउ50.206**
आयुर्वेदोदधेः पारमपारस्य प्रयाति कः।
विश्वव्याध्यौषधिज्ञानसारस्त्वेष समुच्चितः॥

**अउ50.207**
स्मृत्वेदमुदितं पूर्वं श्रुत्वेदानीं द्वयोः पुनः।
स्मर्तुः श्रोतुश्च सुतरां श्रद्धातुं कस्य युज्यते॥

**अउ50.208**
अथवा श्रुतमप्येतत् स्मर्तुरेव क्रमागतम्।
अभिधातृविशेषेण किं तथापि प्रयोजनम्॥

**अउ50.209**
ऊर्ध्वमेति मदनं त्रिवृताधो वस्तुमात्रक इति प्रतिपाद्ये।
मद्विधो यदि वदेदथवात्रिः कथ्यतां क इव कर्मणि भेदः॥

**अउ50.210**
साध्वसाध्विति विवेकवियुक्तो लोकपङ्क्तिकृतभक्तिविशेषः।
बालिशो भवति नो खलु विद्वान् सूक्त एव रमते मतिरस्य॥

**अउ50.211**
इति मुनिवचनानां जीवितोपाश्रयाणामभिलषितसमृद्धौ कल्पवृक्षोपमानाम्।
यदुदितमिह पुण्यं कुर्वतो मेनुवादं भवतु विगतरोगो निर्वृतस्तेन लोकः॥

*॥इति पञ्चशोऽध्यायः समाप्तः॥*

**॥इति श्रीसिंहगुप्तसूनुश्रीमद्वाग्भटाचार्यविरचिताष्टाङ्गसङ्ग्रहे षष्ठमुत्तरस्थानं सम्पूर्णम्॥**